# सागरिका

त्रैमासिकी

## कालिदासविशेषाङ्क (१२।१-२) परिशिष्टम्

त्रयोदशे वर्षे प्रथमोऽङ्कः

प्रकाशिका

**संस्कृतपरिषद्, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )

# सागरिका

त्रैमासिकी

त्रयोदशे वर्षे प्रथमोऽङ्कः

२०३१

## कालिदासविशेषाङ्क (१२।१-२) परिशिष्टम्

संपादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः

**संस्कृतपरिषद्, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )

मूल्यं रु० १०—०० वार्षिकम् ]  [ मू० रु० ३—०० प्रत्यङ्कम्

प्रकाशिका

संस्कृतपरिषद्

सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३–०० रूप्यकाणि |
| वार्षिकम् | १०–०० रूप्यकाणि |
| आजीवनग्राहकस्य | १५०–०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढा-श्विन-पौष-चैत्र-<br>[ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

**सूच्यम् :** आजीवनग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्का सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रक

विद्याविलास प्रेस

के. ३७/१०८, गोपाल मन्दिर लेन

वाराणसी–२२१००१ ( उ० प्र० )

फोन ५२९३९

# विषय-सूची





## विषय-सूची





## विषय-सूची





---

लेखकानां संकेताः—


१. संस्कृतविभागः दिल्लीविश्वविद्यालयः

२. दिल्ली

३. सागरविश्वविद्यालये संस्कृतप्राध्यापकः

४. डॉ० रसिकबिहारी जोशी, जोधपुर विश्वविद्यालये संस्कृतप्राध्यापकः

५. शार्दूलसंस्कृतविद्यापीठम्, बीकानेरम्, राजस्थानम्

६. सागरविश्वविद्यालये संस्कृत-व्याख्याता

७. आयुर्वेदप्राध्यापकः, चिकित्सासंकायः, काशी हि० विश्वविद्यालयः

८–१२. संस्कृतमहाविद्यालयः, काशीहिन्दूविश्वविद्यालयः वाराणसी–५

# विषय-सूची





# विषय-सूची

## त्रयोदशे वर्षे सागरिकायां प्रकाशिता सामग्री

### प्रथमोऽङ्कः [ १-१२० ]



### द्वितीयोऽङ्कः [ १२१-२३२ ]

तृतीयोऽङ्कः [ पृ० २३३–३४८ ]



चतुर्थोऽङ्कः [ ३४६–४५८ ]

# विषय-सूची

## त्रयोदशे वर्षे सागरिकायां प्रकाशिता सामग्री

### प्रथमोऽङ्कः [ १-१२० ]



### द्वितीयोऽङ्कः [ १२१-२३२ ]

तृतीयोऽङ्कः [ पृ० २३३–३५८ ]



चतुर्थोऽङ्कः [ ३४९–४५८ ]

# सौन्दर्यशास्त्री महाकविः कालिदासः

*रसिकविहारी जोशी*

इह खलु सौन्दर्यशास्त्रिणं कालिदासमुपस्थापयामि। अत्यन्तमेव गभीरोऽयं विषयः। अहं तु सम्यग् जानामि यदङ्गुलिमात्रगणनीयैः कर्गद-पृष्ठैः कथमपि अयं विषयः पूर्णरूपेण प्रतिपादयितुं न शक्यते। किं तु भवतां सम्यगालोडितकालिदासग्रन्थानां विनोदार्थं द्वित्राणि त्रिचतुराणि वा वाक्यानि कालिदासीयं सौन्दर्यमधिकृत्य ब्रवीमि।

इदानीन्तनेऽस्मिन् वैज्ञानिके युगे भूयांसः सौन्दर्यशास्त्रिणः सौन्दर्यं सौन्दर्यशास्त्रञ्च मीमांसन्ते। न खलु तस्य सर्वस्य चर्चा अद्यतनीयस्य लेखस्यास्ते क्षेत्रम्। केवलं कालिदासेन मानवसौन्दर्यं, तत्रापि विशिष्य नारीसौन्दर्यं—तत्प्रतिपादकञ्च मण्डनं कीदृशं संवर्णितमित्येव केवलं प्रतिपिपादयिषामः।

केचन कथयन्ति

कविकुलकोकिलः कालिदासः, केचन अभिमन्यन्ते राष्ट्रकविः कालिदासः, केचन कथयन्ति अभिव्यञ्जनाशिल्पी कालिदासः, वयं तु अभिमन्यामहे सौन्दर्यशास्त्रपारावारपारदृश्वा कालिदासः। यदि केचन मां पृच्छेयुः को वा कालिदासस्य ऐकान्तिको गुणः, किंवा कालि-दासस्य ऐकान्तिकं वैशिष्ट्यम्, तदा अहं तु एतदेव समुद्घोषयेयम् यत् कालिदासस्य परं लावण्यं पश्यन्ती, परं लालित्यं निर्वर्णयन्ती, परमानन्दं च वर्षयन्ती सौन्दर्यमयी तालस्वरविशिष्टा दृक्शक्तिरेव सर्वोत्कर्षेण वर्त्तमानं वैशिष्ट्यमास्ते।

महाकवेः कालिदासस्य सौन्दर्यसिद्धान्तं प्रतिपादयितुकामोऽहं सर्वप्रथमं कालिदासस्य कलासौन्दर्यदृष्टिं निर्वर्णयितुमुपक्रमे। को वा सौन्दर्यशास्त्रज्ञः सहृदयः कालिदासीयं सौन्दर्यम् आलयं पायं पायं नानन्दाम्भोनिधौ निमज्जेत्? को वा सौन्दर्यानुरञ्जितचेताः सचेताः कालिदासेन संवर्णितं सौन्दर्यकुवलयदलं दर्शं दर्शं नान्दोलयेत् स्वकीयं मूर्धानं आनन्दस्य प्रकर्षेण हेतुना।

तत्रादौ एतदेव विचारयामः किं नाम सौन्दर्यं, किं च सौन्दर्यशास्त्रम्? अस्यां पापृच्छायामनेकेषां पाश्चात्त्यानां पौरस्त्यानाञ्च सौन्दर्याचार्याणां शोश्रूयन्ते नानाविधा विचारपरम्पराः, नानाविधाश्च सौन्दर्यस्वरूपलक्षणोपन्यासात्मकाः सार्वत्रिकाः वचनविन्यासाः। "प्रधानाप्रधानयोः प्रधानस्यैव परामर्शः" इति न्यायेन एतेषां केवलं द्वित्रान् त्रिचतुरानेव लक्षणोपन्यासान् उपस्थापयितुमिच्छामि।

(१) पाश्चात्त्येषु सौन्दर्यशास्त्रप्रतिष्ठापकेषु विद्वत्तल्लजेषु भूयांसो विद्वांसः स्वकीयं मतं प्रातिष्ठिपन् यदस्माकमान्तरः काम एव सौन्दर्यम्, अस्माकमान्तरा रुचिरेव सौन्दर्यम्। तत्र सर्वतः सुप्रसिद्धानां श्रीमतां स्पिनोजामहाभागानामिदं मतं यत् 'न खलु वयं कमपि तादृशं पदार्थं सुन्दरमाकलयामः यो हि नाम स्वात्मनि सौन्दर्यं सन्निधत्ते। अपि तु तमेव पदार्थं सुन्दरं गणयामः यं यमेव किलाभिलष्यति मनः। स्पिनोजामहाभागानाम् अयं सौन्दर्यसिद्धान्तः बृहदारण्यकोपनिषदः प्रियतासिद्धान्तं सर्वांशतः अनुकरोतीति आश्चर्यमावहति चेतः। बृहदारण्यकोपनिषदि वयं पठामः—

न वा अरे पत्युः कामाय पतिः प्रियो भवति,
आत्मनस्तु कामाय पतिः प्रियो भवति।
न वा अरे जायायै कामाय जाया प्रिया भवति
आत्मनस्तु कामाय जाया प्रिया भवति॥ (२, ४, ५)

अयमाशयः—न खलु कश्चित् पतिः पतित्वमात्रेण पत्न्यै रोचते, अपि तु आत्मनस्तु कामाय रोचते। तावदेव काचित् पत्नी पत्यौ स्निह्यति

यावत्तस्याः तस्मात् कापि स्वार्थपूर्त्तिः सम्पद्यते। यस्मिन्नेव क्षणे अस्माकं स्वार्थः व्याहन्यते, तस्मिन्नेव क्षणे प्रेमरज्जुरपि छिन्नभिन्ना सम्पद्यते। मनोवैज्ञानिकदृष्ट्या चिरन्तनसत्यानुस्यूतोऽयं सिद्धान्तः यत् यं कमपि पदार्थं वयं कामयामहे, तं तमेव प्रति अस्माकं कामः प्रवहति।

( २ ) अस्य युगस्य महान्तश्चिन्तकाः श्रीनीत्त्शेमहाभागाः निरदीधरन् यत् वस्तुगतं सौन्दर्यम् असौन्दर्यं वा केवलं प्राणप्राणयितृ तत्त्वमेवावलम्ब्य सुप्रतिष्ठितं संजायते। तदेव खलु प्राणप्राणयितृ तत्त्वं यदस्माकं जीवनशक्तिं संवर्धयति। यथाहि, न खलु वयं शर्करां शर्करायाः माधुर्यवशात् कामयामहे, अपि तु केवलमेतस्मादेव कारणात् कामयामहे यत् शर्करा अस्मान् मधुरा प्रतीयते, अस्मभ्यं भृशं रोचते, अस्माकं तत्प्राणतत्त्वं परिपोषयति यदस्माकं जीवनाय अलम्। अतएव वयं शर्करां मधुराम् आनन्दप्रदायिनीं मन्यामहे; अतएव वयं शर्करायां सौन्दर्यं दिदृक्षामहे। अन्यत् तत्तत् सर्वं वस्तुजातम् असौन्दर्यावहं कथ्यते यत् यत् अस्मत्प्रतिकूलवेदनीयतां भजते। यत् यच्च अस्मज्जीवनं समापयितुं प्रभवति, यथा विषम्।

विचारयामस्तावत् किं नाम सौन्दर्यशास्त्रमिति? अस्यां पापृच्छायां एतदेव ब्रूमहे यत् मानवसभ्यताया मानवसंस्कृतेश्च परम्परायां पाश्चात्त्यः पन्था एव सौन्दर्यशास्त्रम्। सभ्यतायाः पूर्वस्मिन् काले आदिकला तु सर्वथा निसर्गगता सती स्वतः प्रवृत्ता यादृच्छिकीं अन्तःप्रवृत्तिं प्राकाशयत। शनैः शनैः कालक्रमेण मानवीयायां सभ्यतायां विकसितविकसितायां सत्यां कलाकारस्य सौन्दर्यं प्रमार्जितं सत् उत्तरोत्तरमुपचीयमानेन काव्यकलारचनाविन्यासेन हेतुना पल्लवितं बभूव। केचन कथयन्ति यत् संगीतस्य नादलहरी एव सौन्दर्यम्। केचन कथयन्ति यत् नृत्यस्य तालभङ्कृतिरेव सौन्दर्यम्। केचन कथयन्ति चित्रकलायां नैकविधवर्णविन्यासमयरेखासमन्वितिरेव सौन्दर्यम्। केचन कथयन्ति गीतिकाव्ये करुणरसप्रधानेषु च काव्येषु काव्यसौन्दर्यमेव परे प्राणाः सौन्दर्यशास्त्रस्य। *वस्तुतः सर्वत्र सर्वैरपि सौन्दर्यत्वेन अनुभूयमानं सौन्दर्यमेव सौन्दर्यम्। वस्तुतः तदेव सौन्दर्यं यत् देशतः कालतः वस्तुतोऽपरिच्छिन्नमास्ते।*

अस्मिन् प्रसङ्गे एतदपि स्मरणीयमास्ते यदेतदेव सौन्दर्यं यदा परम्परातः परिच्छिन्नं सम्पद्यते तदा बुद्धिग्राह्यतां भजते । एतदपि सत्यं यत् न खलु सौन्दर्यग्रहः केवलं बौद्धिको व्यायामः । अयं तु कश्चिद् घनीकृतः सविशेषपरिमण्डितः सश्रीकः सहृदयानां मनोवेगान् तरङ्गयन्निव परिपूर्णः सारभूतः पन्थाः कलायाः । "नैषा मतिस्तर्केणोपलभ्यते" इति वचनमनुसृत्य को वा न विजानीयात् यत् यथा भगवत्साक्षात्कारः दैवी सम्पच्च न प्रवर्त्तते केवलं तर्कमूला, तथैव काव्यसौन्दर्याङ्कुरोऽपि न प्ररोहति बुद्धिवारिणा । यथा महतां सम्मुखे न प्रवर्त्तते वाणी, तथैव प्रवहति तर्कवादझंझावाते नानुभूयते सौन्दर्यम् ।

ननु

नास्ति कोऽपि सौन्दर्यग्रह इति चेन्न, प्राणिमात्रहृदयान्तःप्रविष्टत्वात् । सर्वेषां मनुष्याणामन्तःकरणेषु *प्रगाढतरं* प्रविष्टोऽयं सौन्दर्यग्रहः प्रथमे वयसि वर्त्तमानं बालम् , अन्तिमे वयसि परिपक्वं स्थविरं वा; सर्वाङ्गमनोरमां रममाणां रमणीं, तपस्तपन्तं तपस्विनं वा; निर्धनं वा सधनं वा; मूकं वा वावदूकं वा, गोवाहीकं पुमांसं वा अधिगतवाग्देवीकं विद्वांसं वा; समत्वेनावर्जयति । अस्मिन् सौन्दर्यग्रहे अलौकिकस्य आलोकस्य कोऽप्यनिर्वचनीय आनन्दः समन्तात् प्रसर्पति ।

सौन्दर्यविषयिण्य इमा विविधा विचारधारा महान्तं वागाडम्बरं उत्थाप्य सौन्दर्यशास्त्रमेव समूलमुन्मूलयितुमेव बद्धपरिकराः परिलक्ष्यन्ते । प्रत्येकंव्यक्तिविशेषस्य, प्रत्येकं सम्प्रदायविशेषस्य, प्रत्येकं समाजविशेषस्य, प्रत्येकं राष्ट्रविशेषस्य वा पक्षत एकस्मिन्नेव कस्मिंश्चिद् वस्तुनि कदाचित् सौन्दर्यं, कदाचित् असौन्दर्यमनुमन्यते, इति आनन्त्यात् व्यभिचारात् अनवस्थादोषप्रसङ्गाच्च नेमे सिद्धान्ताः कालिदासमतसमस्ताः ।

सौन्दर्यशास्त्रधिया काव्यसौन्दर्यमधिकृत्य कालिदासस्य किं तात्पर्यमासीत् कालिदासस्य कोऽभिप्रायः समवर्तत, इत्येतस्मिन् विचार्यमाणे प्रश्ने चत्वारः प्रश्ना अस्माकं बुद्धिपथमारोहन्ति ।

(१) किं कालिदासः सौन्दर्यं सहृदयस्य रागात्मके अन्तःकरणे स्वीकरोति ? आहोस्वित् सहृदयाभावेऽपि निसर्गसुन्दरं वस्तु सुन्दरमेवास्ते इत्यङ्गीकरोतीति प्रथमः प्रश्नः ?

(२) अलङ्काराः चारुतायाः कारणीभूता वा धर्माः संवर्धका वा धर्मा इति द्वितीयः प्रश्नः।

(३) चेतनाचेतनसौन्दर्ययोः कः परस्परः सम्बन्धः ? अनयोः प्रधानाप्रधानत्वमास्ते, आश्रयाश्रयीभावविषयत्वं वा इति तृतीयः प्रश्नः।

(४) प्राकृतिकसौन्दर्यस्य कृत्रिमेण सौन्दर्येण सह कियान् सम्बन्धः ? इति चतुर्थः प्रश्नः।

चतुर्णामेतेषां प्रश्नानां, अपरेषाञ्चैतादृशानां केषाञ्चन प्रश्नानां समीचीनान्युत्तराण्यन्विष्यन्तः *'तत्त्वान्वेषिणो'* विदग्धास्तूष्णींभावमवलम्बन्ते किन्तु *'कृतिनः'* रसलोलुपा रसिका आलयं सौन्दर्यरसं पायं पायं ब्रह्मानन्दसहोदरं कमप्यनिर्वचनीयमानन्दमनुभवन्तो दृश्यन्ते। इयमेव महाकवेः कालिदासस्य सौन्दर्यसिद्धान्तविषयिणी दृढभूमिर्मतिः।

महाकवेः कालिदासस्य सौन्दर्यशास्त्रपारङ्गमत्वं प्रमाणयितुं द्वित्राणि उदाहरणानि अत्र भवतां भवतामास्वादनार्थमुपस्थापयामि। तत्र प्रथमं अभिज्ञानशाकुन्तले एव सञ्चारयन्तु भवन्तः स्वकीयां लोचनसरणिम्। तत्र सुप्रसिद्धम् इदं पद्यमस्माकं नयनगोचरतामागच्छति—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकी भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥
(अभि० शा० ५,२)

अस्मिन् श्लोके महाकविः कालिदासः प्रतिपिपादयिषति यत् आनन्दानुभूतिः विषयिनिष्ठा सम्पद्यते, न तु विषयनिष्ठा। कदा खलु कश्चित्

प्रसन्नः प्रमुदितान्तःकरणो जन आनन्दमनुभवतीति चेत्, कदा खलु कश्चित् सुखितोऽपि जनः आनन्दमनुभवन् आत्मनः पुण्योदयमिवाकलयतीति चेत्, कालिदासः कथयति यत् यदा यदा रसज्ञः पुरुषः रमणीयानि वस्तूनि वीक्षते, मधुरातिमधुरांश्च शब्दान् शृणोति, सर्वथा च पर्युत्सुकी भवति, यदा यदा जननान्तरसौहृदानि संस्मरति, तदा तदैव तादृशी आनन्दानुभूतिः प्रादुर्भवति । एतादृशस्य आनन्दानुभवस्य अयमेव हेतुः यत् यदा यदा वयं आनन्दमनुभवामः केनापि सुन्दरस्य पदार्थस्य हेतुना, तदा वस्तुतः वयं स्वकीये मनसि प्रसुप्तान् पूर्वानुभूतानां पदार्थानां संस्कारान् संस्मरामः, तदा ते संस्काराः विच्छित्तेश्छटायाः उपरितले उद्बुद्धाः संपद्यन्ते ।

समास्वादयन्तु भवन्तः साम्प्रतं कालिदासस्य परां प्रसिद्धिं गतां श्लोकद्वयीम्, यत्र सौन्दर्यस्य कलायाश्च अत्यन्तमेव रमणीयं उत्कृष्टञ्च दर्शनं संजायते । को वा कालिदासकाव्यमञ्जरीरसज्ञः सचेताः न परिचिनुयात् अमुं श्लोकम्—

(१) स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥

(कुमा० ४,२४)

नैकधा चर्चितोऽयं श्लोकः सौन्दर्यशास्त्रपटिष्ठैः पण्डितोत्तंसैः । अपरमपि पद्यं संस्मरन्तु भवन्तः—

(२) मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥

(अभि० शा० १,२६)

इयं पद्यद्वयी प्रमाणयति यत् काव्यसौन्दर्यं निसर्गरूपसौन्दर्यस्य वर्णनेन प्रमार्जितं भवति । अतएव रसवादी कालिदासो रसराजवर्णने विजयते । करुणवीर-शान्त्यद्भुतरसवर्णनेऽपि सर्वानतिशेते । तत्र कालिदासस्य

सौन्दर्यशास्त्रनिष्णाता सौन्दर्यं पश्यन्ती दृष्टिरेव परमो हेतुः। अतएव रसध्वनिचित्रणे कालिदासस्य अपूर्वैव काचित् शक्तिः ।

एकमपरं पद्यं सौन्दर्यशास्त्रस्य प्रतिनिधिभूतमिव प्रतिभाति कालिदासस्य रचनासु । तद्यथा—

चलापांगां दृष्टिं स्पृशसि बहुलां वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकरहतास्त्वं खलु कृती ॥
( अभि० शा० १, २४ )

अस्मिन् श्लोके कालिदासो अभिप्रैति यत् वैज्ञानिकस्य कलाकारस्य च भिन्नभिन्नः पन्थाः । वैज्ञानिकः सर्वदा तत्त्वमन्विष्यति अतः 'तत्त्वान्वेषी' कथ्यते । कलाकारः सर्वथा सौन्दर्यं दिदृक्षते । अतः कलाकारः सौन्दर्यक्षुधावसन्नस्तिष्ठति । कलाकारस्य कृतिः कदापि तर्केण तत्त्वं नान्विष्यति । न खलु कदापि कलाकारस्य मतिस्तर्कोपहता संदृश्यते । कलाकारस्तु कमनीयायाः कल्पनाशक्तेः कोमलकोमलाभ्यां करतलाभ्यां सौन्दर्यसुन्दर्याः विच्छित्तेश्छटां चित्रयितुमारभते, प्रातिभेन वा चक्षुषा सौन्दर्यसुन्दर्याः सौन्दर्यदर्शनं चिकारयिषति । एवं तत्त्वान्वेषणविधौ कलाकारस्य विधिर्वैज्ञानिकस्य विधेरपेक्षया सर्वथा भिन्न एवेति सत्यम् ।

वस्तुतो

यादृशो ब्रह्मानन्दसहोदरः परानन्दः काव्यसौन्दर्यस्य मधुरिम्णोऽन्तस्तले निमज्जनोन्मज्जनाभ्यामुपलभ्यते, न खलु तस्य सहस्रांशोपि बुद्धिकौशलेन तर्केण वा तत्त्वान्वेषणे सति जायमाने जडीभूते आनन्दे संप्राप्यते । क्षणमपि निपुणं निरीक्षमाणायां कालिदासकृतौ वयं प्रतिपद्यामहे यत् सौन्दर्यसंवलितानां भावानां रसध्वनीनाञ्च असमः प्रवर्त्तकोऽस्माकं कालिदासो गुणालङ्काराणामक्षय्यरत्नाकर इव, वैदर्भी रीतिमालम्बमानः कचिद् दीर्घेष्वपि समासेषु ध्वनेश्चारुतामर्थस्य च

सुबोधतामपरित्यजन् शब्दानां योजने सर्वत्रापि लालित्यमयीं पदशय्यां प्रयुङ्क्ते । कैशिकीं वृत्तिमाश्रयमाणः कालिदासस्तत्तादृशान् शब्दान् समायुयोज येषामुच्चारणेन कदापि वर्णानां कोमलता स्निग्धता च न व्याहन्यते । अतएव कालिदासस्य बहिरन्तःस्फुरद्रसवती कविताकामिनी द्राक्षापाक इव मोचारसास्वाद इव चेतश्चमत्करोति काव्यसौन्दर्यवासनापरिपक्वमानसानां सचेतसामित्यत्र नास्ति नः सन्देहकणिकापि । रमणीलावण्यस्य काव्यसौन्दर्यस्य प्रकृतिसौन्दर्यस्य अनुरागसौभाग्यसौन्दर्ययोर्वा एतादृशोऽनुपम उद्गाता नान्यत्रोपलभ्यते, इति ध्रुवोऽस्माकं विश्वासः । अनेनैव हेतुना कालिदासः स्वयमुद्घोषयामास—

"वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती"—इति ।

यदा महाराजो दुष्यन्त आश्रमवासिनीमनिन्द्यसुन्दरीं निर्व्याजमनोहरां शकुन्तलां प्रति दृष्टिपातमात्रसमकालमेव हठादावर्जितः समपद्यत, तस्मिन्नेव क्षणे दुष्यन्तो धर्माधर्म-ग्राह्याग्राह्यकर्त्तव्याकर्त्तव्यबुद्धिविचिकित्सादोलायितान्तःकरणः समजायत, तदैव कुतश्चित् कश्चित् कृती मधुकरः समाजगाम, प्रकम्पमानायाश्च शकुन्तलायाः कर्णान्तिकचरः सन् तस्या रतिसर्वस्वभूतमधरं निर्भरं पपौ । अनेन सर्वथा स्पष्टं सम्पद्यते कालिदासस्य सौन्दर्यविषयकं मतं यत् ये केचन तत्त्वान्वेषिणः विचारकास्त एव हताः, ये चाविचारका भ्रमरास्ते तु कृतिनो भवन्ति ।

विदितमेव समेषां विदुषां यन्नारीसौन्दर्यचित्रणं कालिदासाय भृशं रोचते । कालिदासस्य द्विविधा नायिका—( १ ) तपस्विन्यः, ( २ ) विलासिन्यश्च । तत्रादौ नारीसौन्दर्यदृष्ट्या कालिदासस्य प्रमुखा नायिकास्तपस्विन्य एव आसन् । एतासां तपस्विनीनां नायिकानां सौन्दर्यं तपोवनेषु अंकुरितं विकसितं कुसुमितं सर्वतः सुरभितं सञ्जातम्—यथा पार्वती-सुदक्षिणा-सीता-शकुन्तलानाम् । एतासां वास्तविकं मण्डनं तपःसंयमसदाचाराः समवर्त्तन्त, एतासां यथार्थं मण्डनं निर्व्याजः प्रेमा एवासीत् । एतासामलङ्करणाय कालिदासः कदाचित् पुष्पाणि, कदाचित् पल्लवान् , कदाचित् दूर्वाङ्कुरानेव परिजग्राह । चारित्र्याग्नौ परितप्तानां तपस्विनीनां नायिकानां यमनियमपरिपालनात्मकेन तेजसा विशुद्धं

मनः, अग्नौ परितापितस्य हेम्नो विशुद्धिरिव पतिप्रेमाप्लुतं परिपूतं सत् परिनिष्ठितमालोक्यते।

अपरतश्च कालिदासस्य द्वितीयश्रेणीका विलासिन्यो नायिका *उर्वशी-मालविका-रतीन्दुमतीरावती*प्रभृतयोऽपि दुःखात्मकेष्वेवावसरेषु स्वकीयं सौन्दर्यस्य परिपूर्णत्वं प्रख्यापितवत्यः, न तु विलासेषु। यथाहि मालविकाग्निमित्रे युक्तमदा इरावती पृच्छति—

"हञ्जे निपुणिके! श्रृणोमि बहुशः, मदः किल स्त्रीजनस्य विशेषमण्डनमिति। अपि सत्यो लोकवादोऽयम्। तत्र निपुणिका कथयति—

"प्रथमं लोकवाद एव। अद्य सत्यः संवृत्तः"।[1]

वस्तुतः

स्त्रीपुंसयोः सौन्दर्यवर्णनविधौ कालिदासस्य निसर्गजान् गुणान् प्रत्येव समुन्मिमेष अनन्यसाधारणः प्रेमा। केन वा न ज्ञायते यत् भरतनाट्यशास्त्रे नायिकानामलंकारेषु *हाव-भाव-हेलाः* इति त्रिविधाः अंगजाः अलंकाराः अनुमताः; कान्ति-दीप्ति-शोभा-धैर्य-माधुर्य-प्रगल्भतौदार्याणीति सप्तधा अयत्नजा अलंकाराः संवर्णिताः। एतेषु सहजेषु अयत्नजेषु नारीगुणेषु विमुग्धमपि मनः कालिदासस्य वस्तुतः रमते निसर्गमधुरे नारीसौन्दर्ये। अतएव तपस्विन्याः शकुन्तलायाः निसर्गमधुराकृतिरलंकारान्तरं नापेक्षते। नहि कोऽपि एतादृशः पदार्थो जगतीतले संदृश्यते, यो मधुराणामाकृतीनां मण्डनं कर्त्तुं न प्रभवेत्। यथोक्तम्—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥
(अभि० शा० १, २०)

---

१. मालविकाग्निमित्र, ( Ed. ) P. S. sane, G. H. Godbole, Bombay, 1950 p 58.

यौवनवतीषु अंगनासु प्रचकाशत् लावण्यानुप्राणितं यौवनमेव नारीसौन्दर्यस्य प्राणप्रदो धर्मः, इत्ययमपि कालिदासस्य सौन्दर्यसिद्धान्तः सर्वथा स्फुटीभवति तपस्विन्या भगवत्याः पार्वत्याः सौन्दर्यवर्णनप्रसंगे। तत्र वयं स्फुटं प्रतिपद्यामहे यदयत्नजमसंभृतं यौवनमेव अङ्गयष्टेर्मण्डनम्, यौवनमेवानासवं मदस्य करणम्, यौवनमेव कन्दर्पस्य पुष्पव्यतिरिक्तमस्त्रम्।[१] कुमारसंभवे स्वकीयां स्वभावमधुरप्रियां अनलङ्कृतिमपि यौवनमात्रालङ्कृतिं दृष्टिं समर्थयितुकामः कालिदासः पप्रच्छ—"अतः परं किं तपःफलम्? यदि सत्कुले जन्म, सुन्दरं वपुः, अमृग्यमैश्वर्यं, नवं च वयः उपलभ्येत"।[२]

अनेनोदाहरणद्वयेन स्फुटं प्रतिपादयितुं शक्यते यत् सौन्दर्याचार्यस्य कालिदासस्य नारीसौन्दर्यचित्रणविधौ यौवनमेव विजयते सौन्दर्यसिद्धान्तशिरोमणिः।

निसर्गरमणीयं यौवनमेव नारीणां प्रथमोऽलङ्कारः। अन्ये अलङ्कारा भवन्तु न वा, इति विचिकित्सायां औदासीन्यमालम्बते कालिदासः। नास्ति चेत् यौवनं नाम मूलभूतोऽलङ्कारः, तदा केवलं बाह्यैरलङ्कारैः श्वित्रायाः छिन्ननासायाः कस्याश्चिन्नमाया नायिकायाः सौन्दर्यं मण्डयितुं न शक्यते। अपरतः यद्येकोऽपि बाह्योऽलङ्कारो नास्ति, किन्तु विद्यते

---

१. असंभृतं मण्डनमङ्गयष्टेः अनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे॥

(कुमारसंभवम् १, ३१.)

२. Ibid 5. 11.

कुले प्रसूतिः प्रथमस्य वेधसः
त्रिलोकसौन्दर्यमिवोदितं वपुः।
अमृग्यमैश्वर्यसुखं नवं वयः
तपःफलं स्यात् किमतः परं वद॥

नवयौवनपरिमण्डिता कामिनी तर्हि भृशं रोचते या सौन्दर्यशास्त्रिणे कालिदासाय। अलङ्कारास्तु केवलं शोभाया आधायका धर्माः—केवलं चारुतायाः संवर्धकाः गुणाः। यदि नाम कुत्रापि चारुताया एव अभावः, तर्हि अलङ्कारैः किं सेत्स्यति ?

जानन्त्येव भवन्तो यत् यौवनस्य अधिष्ठाता रतिपतिः कामदेवः कालिदासेन चित्रितासु नारीषु समाविष्टः सन् तासां सौन्दर्यकान्तिं, तासां लावण्यशोभां, किमधिकं तासां यौवनमेव संवर्धयति। अयं पुष्पसायकः कामः कुत्रापि मदिरालसेषु लोचनेषु चञ्चलतया, कुत्रापि गण्डस्थलेषु पाण्डुवर्णतया, कुत्रापि स्तनमण्डलेषु कठिनतया, कटिप्रदेशे क्षीणतया, जघनस्थलेषु च पीनतया संप्रविष्टो यौवनोन्मादं मदयति।[1] यौवनं विवर्धयिषुरेव कालिदासो बाह्यालङ्कारैर्नारीसौन्दर्यं परिमण्डयति। यथाहि, कुचयोश्चलन्तो मृणालमयाः शरच्चन्द्रवद् धवला मुक्ताहारा वा हाराः, कलहंसकलरवानुकारिणो नूपुराः, तरङ्गितमुत्तरीयम्, मदिरालसानि घूर्णन्ति चञ्चलचञ्चलानि लोचनानि, लाक्षारसद्रवः, ताम्बूलसिन्दूररागः, धम्मिल्लकेशरचनाविन्यासश्चैतानि सर्वाण्यप्युपकरणानि केवलमनेनैव हेतुना प्रायुज्यन्त महाकविना कालिदासेन, येन हि निसर्गमधुरस्य यौवनस्य सौन्दर्यश्रीरभिवर्धेत, इति यत्सत्यं नातिशयोक्तिपथमवगाहते वचनमस्माकम्।

कालिदासस्य रचनानां सावहितेन मनसा सूक्ष्मेक्षिकया निरीक्षणेन वयं विजानीमहे यन्महाकविः कालिदासः द्विविधं नारीसौन्दर्यं प्रत्यतिष्ठिपत्—(१) रूपसौन्दर्यम् (२) सौभाग्यसौन्दर्यञ्चेति भेदात्। तत्र रूपसौन्दर्यं सौभाग्यसौन्दर्याय स्वात्मानं समर्पयति। एतत्प्रतीयते यत् कालिदासस्य काले तदानीन्तने समये "यत्राकृतिस्तत्र गुणा वसन्ति" इत्येतादृशि वचांसि सर्वेषां सामाजिकानां सहृदयाणां हृदयेषु परम्परया

---

१. नेत्रेषु लोलो मदिरालसेषु गण्डेषु पाण्डुः कठिनः स्तनेषु।
मध्येषु निम्नः जघनेषु पीनः क्षीणाऽमनङ्गो बहुधा स्थितोऽद्य॥

बद्धमूलान्यासन्। यत्र क्वापि रूपसौन्दर्यं तत्रावश्यमेव कैश्चिद् विशिष्टैर्गुणैर्भाव्यमित्यासीत् सार्वजनीनो विश्वासः। इमे गुणा रूपसौन्दर्यवतीं नारीं तद्वन्तं वा नरं पापादपवर्जयामासुः। अतो यत् रूपसौन्दर्यं पापे प्रवर्त्तयति, यत् रूपसौन्दर्यं पापात्मिकां चित्तवृत्तिमुद्रेचयति, तद्रूपमेव नास्तीत्यभिमन्यमानः कालिदासः उवाच—"यदुच्यते पार्वति पापवृत्तये, न रूपमित्यव्यभिचारि तद्वचः" (कुमारसंभवम् ५, ३६)।

पापपुण्यनौकारूढः कालिदासः सर्वथा पापमाक्रोशन् पुण्यपथमेवावलम्बते। अतएव

निनिन्द रूपं हृदयेन पार्वती,
प्रियेषु सौभाग्यफला हि चारुता॥

इति ब्रुवाणः कालिदासः रूपसौन्दर्यं सौभाग्यसौन्दर्याय समर्पयामास। किं नाम सौभाग्यमिति चेच्छ्रूयताम्—"स एव सुभगो जनो यः प्रकृत्या अनुरञ्जकः। यस्य निसर्गमधुरैर्गुणैः सहृदयानां हृदयानि तथैव बलादावर्जितानि सम्पद्यन्ते, यथा पुष्पाणां परिमलेन मधुकराः।" एतादृशस्य सुभगस्य जनस्य वशीकारात्मको धर्म एव सौभाग्यम्।[1] अस्मिन् प्रसंगे एतत् स्मरणीयमास्ते यत् सौभाग्यसौन्दर्यं कालिदासेन विप्रलम्भशृङ्गारवर्णनप्रसंग एव सर्वदा संवर्णितम्। रूपसौन्दर्यं तु क्षणिकम्, सौभाग्यसौन्दर्यमेव शाश्वतम्। रूपसौन्दर्यं तु सर्वदा बाह्यं शारीरिकमाकर्षणमवलम्ब्य प्रसरति, सौभाग्यसौन्दर्यमाभ्यन्तरमानन्दमास्वादयति। अतएव भगवती हैमवती पार्वती स्वकीयं रूपसौन्दर्यं निरर्थकं मन्वाना "व्यर्थं समर्थ्य ललितं वपुरात्मनश्च" इत्येवं रूपसौन्दर्यस्यावन्ध्यतां कर्तुकामा तपस्तप्तुमारेभे। नो चेत् कथङ्कारं तथा-

१. हजारीप्रसाद द्विवेदी, कालिदास की लालित्ययोजना, दिल्ली, १९७० पृ० ७६–७७.

विधं प्रेम, तादृशश्च लोकोत्तरः पतिः उपलभ्येत ।[1] तपसस्तापेन परितप्तं रूपसौन्दर्यं सौभाग्यसौन्दर्याय परामर्जितं सत् अनन्यसाधारणां काञ्चित् तादृशीं सुदृढां भावभूमिमारोहति, यस्यां भूमौ तपस्तप्तः कामः तथा प्रज्वलति, भावभावितं मनस्तथानुप्राणिति, यथा सौभाग्यसौन्दर्यात् मनागपि न प्रचलति । अस्मादेव कारणात् कुमारसंभवे यदा धृतबटुवेशो भगवान् पिनाकपाणिश्चन्द्रमौलिः शङ्करः आत्मनः व्याजनिन्दया तपःपरायणां पार्वतीं सौभाग्यसौन्दर्यात् परावर्त्तयितुमियेष, तथा पार्वतीं प्रोवाच—

अलं विवादेन यथाश्रुतं त्वया
तथाविधस्तावदशेषमस्तु वः ।
ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते ॥
( कुमार० ५, ८२ )

अनेन विवेचनेन नास्ति नः स्तोकोऽपि सन्देहः यत् सौन्दर्याचार्यस्य कालिदासस्य मतेन तपःपरिपूतः विशुद्धः प्रेमा एव सौन्दर्यस्य अन्यतमो निकषोपलः ।

अनेन प्रकारेण एतत्सर्वथा स्पष्टं संपद्यते यन्महाकविः कालिदासः सौन्दर्यशास्त्रीयं महान्तं सांस्कृतिकं प्रयोगं सम्पादितवान् । नारीसौन्दर्यं चित्रयन् कालिदासः सर्वानपि कामव्यापारान् विवाहकर्मण्येव पर्यवसितान् सम्पाद्य कृतकृत्यमिवात्मानमाकलयति । अतएव कालिदासो नारीणां मातृत्वे पर्यवसानमेव सौन्दर्यं मनुते । अथ च पुनः तावदवधि सौभाग्य-

---

१. इयेष सा कर्त्तुमवन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा
द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥
( कुमार० ५.२ )

सौन्दर्यमपि मोघमभिमन्यते, यावदवधि सौभाग्यसौन्दर्यं पुत्रोत्पत्तौ न पर्यवस्यति। एवं प्रत्येकं प्रेमव्यापारस्य आदौ अन्ते च वात्सल्यमेव विलसति। प्रथमे वयसि मातापित्रोर्वात्सल्येन सस्नेहं सिञ्चिताः, बाल्यात्परे वयसि मातृत्वेनानुप्राणिताः नूनं सर्वतो धन्याः कालिदासस्य सर्वाङ्गमनोरमाः सौन्दर्यप्रतिमूर्त्तयो नायिकाः। अतएव कालिदासः कथयति यत् स्त्रीणां सौन्दर्यं तदैव साफल्यं भजते, यदा प्रियतमस्य आलोकनस्य विषयतामापद्यते। यथाहि,

आत्मानमालोक्य च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी।
हरोपयाने त्वरिता बभूव,
स्त्रीणां प्रियालोकफलो हि वेषः॥

कलासौन्दर्यं यथा त्यागेन परिभाव्यते, यथा वानन्देनालङ्क्रियते, न तथा केनाप्यन्येन पथेति ब्रुवाणः कालिदासः यथा सौन्दर्यग्रहे न्दीष्णः, न तथा अपरः कोऽपि संस्कृतकविरिति सत्यमेवान्वभावि अस्माभिः सर्वैः। कालिदासस्य सौन्दर्यमधिकृत्यायमेवाभिसन्धिर्यत् यस्मिन् कामप्रकर्षे अविद्यान्धकारः प्रसरति, यस्मिन् कामोत्कर्षे बुद्धिर्विमुह्यति, यस्मिन् कामविभ्रमे पापात्मिका रागवृत्तिर्विलसति, यस्मिंश्च कामविलासे मोहान्धकारः आवरणात्मकं तमः समुद्रेचयन् कर्त्तव्याकर्त्तव्यविवेकशून्यान् सानुरागान् जनान् विमूढानिव विदधाति, न खलु तत्तादृशे कामविकारे सौन्दर्यलेशावसरोऽपि स्वीकर्तुं शक्यते। वास्तविकं रूपसौन्दर्यं तु कदापि पापवृत्तिं न प्रादुर्भावयति। कदाचित् प्रादुर्भावयेन्नाम, नेदं सौन्दर्यमिति सौन्दर्यशास्त्रिणः कालिदासस्याभिमतं मतम्। अतएव तेनोक्तम्—"यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः।" एवं निष्पद्यते यत् कालिदासः प्रेम्णस्तपसश्च समन्वये विश्वसितिस्म। सर्वत्रैव कालिदासस्य रचनासु वयमवलोकयामो यत् रूपसौन्दर्यस्य बाह्याकर्षणमस्थिरं भवति, रूपसौन्दर्यं वासनापरिसमाप्तौ समाप्तिमश्नुते; तपःसंयमसदाचाराणामग्नौ परितप्तमेव रूपसौन्दर्यं परिशुद्धं सत् सौभाग्य-

सौन्दर्याय परिकल्पते। तदेव सौन्दर्यम्। एतादृशं भारतीयं सौन्दर्यं प्रतिष्ठापयन्तं महाकविं कालिदासं प्रति सौन्दर्यशास्त्रं नानृण्यमवगाहते, इति बलवान् नः प्रत्ययः।

अन्ततः, कल्हणस्य वाग्देवतां प्रणम्य अहं विरमामि—

श्लाघ्यः स एव गुणवान् रागद्वेषबहिष्कृता।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती॥[1]



१. लेख एष U. G. C. व्याख्यानात्मना का० हि० वि० विद्यालयस्य साहित्यविभागे पठितचरः १९७३–दिसम्बरे।

# शाकुन्तलस्य नाट्यशास्त्रीयमनुशीलनम्

## [ अर्थद्योतनिकां कुमारराजीयं चानुसृत्य ]

*डा० श्रीमती वनमाला भवालकरः*

कविकुलगुरुकालिदासप्रणीतमभिज्ञानशाकुन्तलं नाटकं चतसृषु सरणीषूपलभ्यते। तासु-प्रथमा देवनागरी या काश्यामितरपाश्चात्त्य-प्रान्तेषु चाद्रियते। अत एषा पाठसरणिः पाश्चात्त्येत्यभिधीयते। द्वितीया वङ्गलापरिसरमुपलब्धा गौडीति प्रसिद्धा। तृतीया काश्मीरी तुरीया च दाक्षिणात्या। एतासु पाठवैचित्र्यं सुस्थमेव। परं तत्र पाश्चात्त्यपाठ एव कविप्रणीतो ललिततरः शुद्धो विद्वत्सम्मतश्चेति प्रतिभाति। दाक्षिणात्य-पाठोऽस्य देवनागरीपाठस्य निकटतमोऽस्ति।

नाटकस्यास्य टीका दशभिः प्राचीनव्याख्याकारैर्विरचिताः। तासु श्रीमद्राघवभट्टेन देवनागरीपाठानुसारिण्यर्थद्योतनिका नाम व्याख्या कृता। दाक्षिणात्यपाठानुकूला कुमारराजीयाख्या व्याख्या कोण्डविड्डराज्या-धिपतेः कुमारगिरेर्वसन्तराज इत्यपरनाम्नो मन्त्रिणा काट्यवेमेन पञ्च-दशेसाशतकात् प्राग्विरचिता। एतद्व्याख्याद्वयस्यानुशीलनं न केवलमस्य नाटकस्यानुसन्धानाय नाट्यशास्त्रविषयजिज्ञासूनां व्युत्पत्तये चापि तु सहृदयानां रसास्वादायापि भवेत्।

राघवभट्टविरचिता व्याख्या व्याकरणकोशपुराणसाहित्यादिष्विव नाट्यशास्त्रेऽपि प्रणेतुर्नैपुण्यं प्रमाणयति। व्याख्याकारेणानेन शाकुन्तले-ऽर्थप्रकृत्यवस्थासन्धिसन्ध्यङ्गानि, पताकास्थानार्थोपक्षेपकाः, भारतीरीति-र्वीथ्यङ्गसहितामुखं, प्रस्तावना-विष्कम्भकादिसमस्तविशेषविषया रसो, नाट्यभूषणान्यन्तरसन्धिसन्ध्यन्तराणि, नायकनायिके, तयोरलङ्कारा कामा-वस्थाश्च, नाट्यालङ्काराः संस्कृतप्राकृतभाषाप्रयोगः कविसूचनानुसारम-भिनयो वेषभूषेत्यादिसकलनाट्यशास्त्रनिबद्धविषयाणां विवेचनं यत्र तत्र तत्तल्लक्षणनिर्देशपूर्वकं कृतमस्ति। लक्षणोद्धरणे विपश्चिद्व्याख्या-

कारेणानेनादिभरतमातृगुप्ताचार्याभिनवगुप्तधनञ्जयधनिकवामनभामह-भोजादीनां मतानां रसार्णवसुधाकरनाट्यदर्पणनाट्यलोचननाट्यप्रदीप-भावप्रकाशिकासंगीतसुधानिधिसङ्गीतरत्नाकररत्नसारसमुच्चयरतिविलास नागरसर्वस्वसामुद्रभृगुसंहितादिग्रन्थानां चावलम्बनं कृतमस्ति। एतेषु भरतमातृगुप्ताचार्य-सुधाकर-दशरूपकेभ्य उद्धरणानि प्रामुख्येण सन्ति।

काट्यवेमकृतटीकायामभिज्ञानशाकुन्तलनाटकस्थ कार्यावस्थार्थप्रकृति-सन्धिसन्ध्यङ्गानि लक्षणसहितं प्रस्तुतानि। यथावसरं च प्रस्तावना-वीथ्यङ्गपताकास्थानकचूलिकादीनामपि निरूपणं कृतम्। वसन्तराज-भूपालेन विरचिताद् वसन्तराजीयनामकनाट्यशास्त्रग्रन्थादेव लक्षणान्युद्-धृतानि। न कोप्यन्यो नाट्यशास्त्रकारो नाट्यशास्त्रग्रन्थो वा तेन निर्दिष्टः।

परिशीलनेऽस्मिन् वस्तुप्रपञ्चनं नाट्यभूषणनाट्यालङ्कार-सन्ध्यन्त-राणि रसो नायकनायिके चाभिनय इत्यादिविषयान् आश्रित्य राघवभट्ट-प्रणीता व्याख्या प्रस्तूयते। तत्र काटयवेमटीकानुसारं यदुपलभ्यते तस्य विवेचनस्यापि समावेशः क्रियते। व्याख्याकारनिर्दिष्टानि लक्षणानि तु नात्रोद्धृतानि तेषां सर्वप्रसिद्धेः।

प्रथमाङ्के 'या सृष्टि'रिति प्रथमश्लोकं प्रकृत्य राघवभट्टो निरूपयति—

"अथ नाटकादौ पूर्वरङ्गाङ्गभूतां चतुरस्रतालानुसारिणीमष्टपदां सूत्रधारो नान्दीं पठति—या सृष्टिरिति। अनेन चात्र कविना रीतीनां मुख्यतमा सर्वगुणाश्रया वैदर्भीरीतिरुपक्षिप्ता। यदाह वामनः—"अस्पृष्टा दोषमात्राभिः···वैदर्भीरीतिरिष्यते" इति। तदुपक्रमेणौज···आद्यर्थ-गुणाः। "या सृष्टिः स्रष्टुराद्या" इति गाढत्वं 'वहति विधिहुतं' इति शैथि-ल्यं प्रसादः।···एवमन्येऽपि बन्धगुणा अनुसर्तव्याः।···एवमर्थगुणा अप्यनुसन्धेयाः।

या सृष्टिरित्यादिना सर्वत्र स्त्रीलिङ्गनिर्देशात् तनुभिः कृशाभिरिति समासोक्त्याऽष्टनायिकायुक्तनायकसमारोपाच्च शृङ्गाररसोऽपि व्यज्यते। तत्प्रधानत्वादस्य रूपकस्य। स्रग्धराच्छन्दसा सप्ताङ्कत्वं सूचितम्। नान्दीश्लोकत्वादेव। अस्यादौ मगणः। "क्षेमं सर्वगुरुर्दत्ते। मगणो भूमि-दैवतः" इति भामहोक्तेः।

श्लोकैः काव्यार्थसूचकैरित्युक्तत्वादस्य तत्सूचकत्वमुच्यते। ईशः प्रभुर्दुष्यन्तः सोऽव्यादिति। ताभिः शरीरित्वात्पञ्चमहाभूतरूपाभिर्यज्ञकरणत्वाद्धोतृरूपाभिर्लोकपालांशत्वाद्विशिष्टतेजस्वित्वाद् राज्ञश्चन्द्रसूर्यरूपाभिरष्टाभिः प्रपन्नः। अथवा सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता। एतावत्कालपर्यन्तं तादृशस्सृष्टेरजातत्वादाद्यत्वम्। या विधिना सुरतविधिना हुतं निषिक्तं रेतो वहतीति तस्या गर्भः। होत्रीत्यनेन कण्वः। 'ये द्वे' इत्यनेनानसूया-प्रियंवदे सख्यौ कालं शापान्तकालं विधत्ते बोधयतः। पातिव्रत्यादिगुणैर्विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभिः शार्ङ्गरवशारद्वतगौतमीभिरयत एतादृशी स्थिता। एतेन सगर्भायास्तस्या दुष्यन्तद्वारदेशगमनम्। सर्वेषां बीजं मूलभूतचक्रवर्तित्वाद् भरतः। तस्य प्रकृतिरुत्पत्तिरिति भरतोत्पत्तिः। 'यया प्राणिनः प्राणवन्त' इत्यनेन शकुन्तलया सह भरतस्य स्वपुरागमनम्। अष्टाभिः प्रकृत्यादिभिः प्रत्यक्षाभिः प्रपन्न इत्यनेन निर्वहणसन्धिसमाप्तौ 'प्रवर्ततां प्रकृतिहिताय पार्थिव' इत्यादिका सूचिता।"—इति।

अतः परं मातृगुप्ताचार्योक्तं सूत्रधारलक्षणमादिभरतानुसारं च नान्दीलक्षणं प्रस्तुत्य त्र्यस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति चतुरस्रतालानुगा चतुष्पदाष्टपदा षोडशपदेति पृथक् त्रिविधेति सोदाहरणं प्रदर्श्य 'येषां मते श्लोकतुरीयांशः पदं तेषां मते चतुष्पदेयं नान्दीति राघवभट्टः समालोचयति। इयं *पत्रावली*संज्ञा नान्दीति नाट्यदर्पणोक्तं पत्रावली लक्षणमुद्धृतमत्र।

काट्यवेमस्य व्याख्यायां वसन्तराजीयनाम्नो नाट्यशास्त्रग्रन्थात् पूर्वरङ्ग-प्रस्तावना-नान्दीलक्षणश्लोकानुद्धृत्योक्तम्—अत्र यद्यपि पदनियमो न कृतः कैश्चिद् वाक्यनियमस्याप्यङ्गीकृतत्वात्। अष्टाभिस्तनुभिः प्रपन्न ईश इत्यनेन बहुवल्लभः कश्चिद् राजा सूच्यते—'काव्यार्थसूचनं कैश्चिन्नान्द्यामेव निरूप्यत' इत्युक्तेः।

राघवभट्टव्याख्यानुसारेण—एतादृश्या नान्द्या अन्ते सूत्रधारः स्थापकनामा नटः प्रविशतीति शेषः। उक्तं दशरूपके–'पूर्वरङ्गं विधाय···सूचयेद् वस्तुबीजम्' इति। नन्वादौ 'पूर्वरङ्गाङ्गभूता नान्दी'– त्युक्तम्। अत्र 'पूर्वरङ्गं विधायादावित्युच्यत इति कथं पूर्वापरसङ्गतिः···'इति चेदुच्यते। अत्र

पूर्वरङ्गशब्दो गौणः। 'पूर्वं रज्यन्त अस्मिन्निति पूर्वरङ्गो नाट्यशाला। तात्स्थ्यात् 'प्रथमप्रयोग उत्थापनादौ पूर्वरङ्गता' इति। तेन द्वाविंशत्यङ्गस्य द्वादशोत्थापनादिना नान्द्यन्तान्यङ्गानि पूर्वरङ्गशब्देनोक्तानीत्यर्थः। अत एवादिभरते—

त्र्यस्रं वा चतुरस्रं वा चित्रं शुक्लमथापि वा।
प्रयुज्य रङ्गान्निष्क्रामेत् सूत्रधारः सहानुगः।
स्थापकः प्रविशेत् तत्र सूत्रधारगुणाकृतिः॥ इति।

वस्तुतस्त्वामुखपर्यन्तं पूर्वरङ्ग एव। यतोऽस्यैव नान्दीतोऽग्रे प्ररोचनादीनि दशाङ्गान्युक्तानि।

'रङ्गं प्रसाध्य···प्रहसनामुखै' रिति धनिकोक्तेर्भारतीवृत्तेः प्ररोचनालक्षणमङ्गमुपक्षिपति—आर्ये, अभिरूपभूयिष्ठा···'इत्यादिना'···रमणीया' इत्यन्तेन। 'विस्तरादुत संक्षेपाद् विदधीत प्ररोचनाम्' इति रसार्णवसुधाकरोक्तेरियं विस्तीर्णा प्ररोचना। दशरूपके 'उन्मुखीकरणं···' इत्यादि तल्लक्षणम्। तस्य भेदा उक्ताः सुधाकरे—'प्रशंसा तु द्विधा···मधुशरन्मुखाः' इति। 'अभिरूप··परिषद्' अनेन सभ्यप्रशंसा। 'अद्य खलु कालिदास···' इति कविप्रशंसा। जगद्विलक्षणस्याप्रतीतस्य नामान्तरेण सरस्वतीवत्पुरुषस्तस्य नामसंकीर्तनमेव स्तुतिः। 'अभिज्ञानशाकुन्तले'ति स्वरूपत एवेतिवृत्तं रमणीयमित्यर्थः। तद्ग्रथितवस्तुर्नोति नवनवेति च रूपकप्रशंसा। उक्तं च भावप्रकाशिकायां—'इत्थं रङ्गविधानस्य···' इत्यादि।

दशरूपकेषु केन रूपकेणेत्याशङ्कायामाह—नाटकेनेति। मातृगुप्ताचार्यैरुक्तं लक्षणं—'प्रख्यातवस्तु···' इत्यादि। 'सुविहितप्रयोगतया' इति नटस्तुतिः।

नटी 'तत' इति गायतीति। भारत्या वृत्तेरामुखापरपर्यायं प्रस्तावनालक्षणं द्वितीयमङ्गमुपक्षिपति। इयं च गीतिः। अत्र च प्रमदाशब्देन शकुन्तला गृहीता। सा च शिरीषकुसुमान्यवतंसयन्तीत्युक्तम्। बहुवचनं पूजार्थम्। विमर्शसन्धिसमाप्त्यवसरे च राज्ञा 'कृतं न कर्णार्पितबन्धनं···' इत्याद्युक्तम्।

'सूत्रधारः—अहो रागबद्ध···रङ्गः' । अत्र 'स्वैरङ्गैश्चापि वीथ्यङ्गैः प्रकुर्यादामुखं बुधः' इति मातृगुप्ताचार्योक्तेः, 'वीथ्यङ्गान्यामुखान्तत्वाद्···' इत्यादिधनिकोक्तेश्चावगलितं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं सुधाकरे 'द्विधावगलितं···' इत्यादि ।

प्रस्तावनाङ्गं प्रयोगातिशयं—'तवास्मि गीतरागेण···' इत्यादि । 'एष' इति प्रयोगातिशयाङ्गार्थं, 'राजे'ति प्रवेशानुगुणं, 'दुष्यन्त' इत्यस्य नामग्रहणमन्यराजव्यावर्तकत्वेनेति नैकस्यावकरत्वम् । प्रयोगातिशयलक्षणं दशरूपके—'एषोऽयं···' इत्यादि । प्रस्तावनेति । तल्लक्षणं सुधाकरे—'विधेर्यथैव संकल्पः···' इत्यादि । दशरूपके तु-'सूत्रधारो नटीं ब्रूते···' इत्यादि ।···प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत् ।' इति ।

प्रस्तावनाया अस्या विषये काटयवेम-व्याख्या—अथ प्रस्तावनाङ्गं प्ररोचनां प्रस्तौति—'नान्द्यन्ते' इति ।

नियोजनं प्रयोज्यस्य निर्देशो देशकालयोः ।
काव्यार्थसूचकैः सूक्तैः सभायाश्चित्तरञ्जनम् ।
कविकाव्यनटादीनां प्रशंसा तु प्ररोचना ॥ इति ।

आदिशब्देन नायकादीनां ग्रहणम् । 'अभिरूप······परिषद्' अनेन सभाप्रशंसा । 'कालिदास···नवेन नाटकेन' इति काव्यप्रशंसा । 'सुविहितप्रयोगस्य···' इत्यादिना नटप्रशंसा । नाटकं नाम मार्गरूपविशेषः कथ्यते । दशधा मार्गरूपाणि । 'तत्र नाटके···'इत्यादिलक्षणम् । 'सूत्रधारो नटीं···' इत्यादि । आमुखलक्षणम ।

'अहो रागबद्ध ' इत्यद्भुतकथनेन *प्रपञ्चो* नाम वीथ्यङ्गमुक्तम् ।

'सूत्रधारः—तदिदानीं कतमत्प्रकरणेन' इत्यारभ्य 'विस्मृतं खलु मया तद्' इत्यन्तेन प्रश्नोत्तररूपेण वाक्यसमुदायेनो*द्घात्यकं* नाम वीथ्यङ्गमुक्तं भवति । 'तवास्मि गीतरागेण···( १.५ )' अनेन पात्रोपक्षेपकहेतुः *प्रयोगातिशयो* नामामुखाङ्गमुक्तम् । "एषोऽयं···" प्रयोगातिशयो हि सः । इति । एषा प्रस्तावना । इति ।

अत्र राघवभट्टेन निर्दिष्टमवगलितं नाम वीथ्यङ्गं काटयवेमेन प्रपञ्चनाम्ना प्रस्तुतम् । उद्घात्यकं केवलं काटयवेमव्याख्यायामुक्तम् ।

**वस्तुप्रपञ्चः—**

*राघवभट्टव्याख्या*—वस्तुप्रपञ्चने विशेषो दशरूपके—'आद्यन्तमेव निश्चित्य···स्युरङ्गानि' इति। तत्र विभागप्रकारः—'अवस्था पञ्च··· संहृतिः' इति।

अत्र 'ततः प्रविशति···राजा' इत्यारभ्य द्वितीयाङ्के 'उभौ परिक्रम्योपविष्टौ' इत्यन्तेन सार्धाङ्केन मुखसन्धिः। बीजसमुत्पत्तेः। अस्य बीजारम्भयोः समवायादङ्गानि। उपक्षेपः परिकरः··· करणानि' इति दशरूपके। आरम्भबीजयोर्लक्षणे चादिभरते—औत्सुक्यमात्रसम्बन्धो'··· इत्यादि। यथात्र—'राजा—भवतु तां द्रक्ष्यामि' इति। 'अल्पमात्रं समुद्दिष्टं···बीजं तदभिधीयते' इति। तत्र विशेषो मातृगुप्ताचार्यैरुक्तः—

> क्वचित्कारणमात्रं तु क्वचित् तु फलदर्शनम्।
> क्वचिदारम्भमात्रं तु फलमुक्त्वा क्रिया क्वचित्॥
> व्यापारश्च विशेषोक्तेः क्वचिद् वा फलसाधकः।
> बहुधा रूपकेष्वेवं बीजरूपेण दृश्यते॥
> फले यस्य हि संहारः फलबीजं तु तद् भवेत्।
> वस्तुबीजं कथा ज्ञेयाऽर्थबीजं तु नायकः॥ इति।

यथात्र 'पुत्रमेवं गुणोपेतं···आप्नुहि' (१.१२) इति। यथा च 'वैखानसः—इदानीमेव दुहितरं···नियुज्य···' इति।

काटयवेमव्याख्या—अथाङ्कः प्रस्तूयते।' ततः प्रविशति' इत्यादि। तल्लक्षणं—'प्रत्यक्षनेतृचरितं···' इत्यादि। 'राजा—विस्रब्धं तावदेनां पश्यामि' इत्यनेन गम्यमानः शकुन्तलागोचरो दुष्यन्तस्याभिलापोऽस्मिन्नाटके बीजम्। 'स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा' इत्युक्तत्वात्। 'राजा—अस्याः खलु—अधरः किसलयरागः···(१.१८)' इत्यत्र लोभनीयमित्यनौत्सुक्यस्य गम्यत्वादारम्भो नाम प्रथमावस्था निवेशिता। अत्र बीजारम्भयोः समन्वयोन्मुखसन्धिः। इति।

राघवभट्टव्याख्या—'(नेपथ्ये)—भो भो राजन्! आश्रममृगोऽयं न हन्तव्यः···' इत्ययमन्तरसन्धिरुक्तः। प्रकृतार्थसूचकत्वेनोक्तो मातृगुप्ताचार्यैः।

स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिस्तथैव हि।
आकाशभाषितं चेति ज्ञेया ह्यन्तरसन्धयः॥ इति'

काट्यवेमानुसारं—'अन्तरे तपस्विन उपस्थिताः' इत्यनेन पताकास्थानकम्। यथोक्तं वसन्तराजीये—

पताकास्थानकं प्राहुर्भाविनोऽर्थस्य सूचकम्।
चतुर्भिः करणैरेव चतुर्धा परिकीर्तितः॥
सहसैवार्थसम्पत्त्या विमर्शादनुनिर्णयात्।
तुल्येन संविधानेन तथा तुल्यविशेषणात्॥ इति।

अत्र सूचनानन्तरमेवाविलम्बितमेव तपस्विनां प्रवेशात् सहसैवार्थसम्पत्त्या कृतमित्यनुसन्धेयम्।

राघवभट्टव्याख्यायां बीजवाक्यमुपक्षिप्य तदनन्तरं मुखसन्ध्यङ्गान्युपक्षिप्तानि। यथा—'इदानीमेव दुहितरं...नियुज्य...सोमतीर्थं गतः'। पुंव्यक्तिशिष्यादिसाध्ये कर्मणि यद् दुहितरमित्युक्तेस्तथानन्ययोरपि सत्त्वे शकुन्तलामित्युक्तेश्च तस्यां मुनेर्जीवितसर्वस्वत्वं ध्वन्यते। गान्धर्वादिविवाहस्यानायासेन सम्पादनं च। अतएव वक्ष्यति—'ममाप्यस्या अनुरूपवरप्रदाने सङ्कल्पः' इति। अथ च प्रतिकूलदैवं शापं तस्योपशमनेन सपुत्रायास्तस्या राज्ञा स्वगृहानयनमपि सूचितम्। अतोऽस्य बीजवाक्यत्वमुपपन्नम्।

'जन्म यस्य...' इत्यादिना 'राजा—भवतु तामेव द्रक्ष्यामि' इत्यनेन मुखसन्धेरुपक्षेप इति प्रथममङ्गम्। काव्यस्यार्थसमुत्पत्तेः।

'शुद्धान्तदुर्लभमिदं...(१.१७)' इत्यनयार्यया *परिकर* इति द्वितीयाङ्गम्। उत्पन्नार्थबाहुल्यात्। 'राजा—कथमियं सा कण्वदुहिता' इत्यारभ्य 'शकुन्तला—एष नूनं तवात्मगतो मनोरथः' इत्यन्तेन *विलोभनं* नामाङ्गम्। गुणानां वर्णनात्। 'असंशयं क्षत्रपरिग्रहक्षमा...(१.२०)' इत्यनेन *परिन्यास* इत्यङ्गम्। तन्निष्पत्तेः कथनात्।

अत्रैव सन्ध्यङ्गानां क्रमाभावं विवक्षुर्व्याख्याकारः प्रस्तौति—नन्वङ्गोद्देशवाक्ये 'उपक्षेपः परिकरः परिन्यासो विलोभनमित्यु'द्दिष्टम्। उदाहरणे च कथं व्यत्यय' इति चेन्नैष दोषः। यत उक्तं च सुधाकरे—

मुखादिसन्धिष्वङ्गानां क्रमो नायं विवक्षितः ।
क्रमस्यानादृतत्वेन भरतादिभिरादिमैः ।
लक्ष्येषु व्युत्क्रमेणापि कथनेन विचक्षणैः ॥ इति ।

'वयं तत्त्वान्वेषी···कृती ( १.२१ )' अत्र यद्यपि 'हता' इत्युक्तं तथाप्यभिलाषचाटुकप्रवणत्वेन तत् सुखागमस्य भावात् *प्राप्तिरित्यङ्गमुपक्षिप्तम्* । सुखार्थस्योपगमात् । यतो धनिकेनोक्तं 'साक्षात् पारम्पर्येण वा विधेयानि' इति ।

'सख्यौ—इमं जीवितसर्वस्वेनापि···करिष्यति ।' अत्र जीवितसर्वस्वशब्देन निगरणात् शकुन्तलाया उक्ते *पताकास्थानकम*नेनोक्तम् । आदिभरते—

सहसैवार्थसम्पत्तिर्नायकस्योपकारिका ।
पताकास्थानकं सन्धौ प्रथमे ( ? ) तन्मतम् ॥ इति ।

'राजा—वयमपि···सखीगतं पृच्छामः' इत्यादिना 'प्रियंवदा—गुरोः पुनरस्याः···प्रदाने सङ्कल्पः' एतदन्तं *युक्तिर्नामाङ्गम्* । अर्थानां सम्प्रधारणात् । 'भव हृदय साभिलाषं···( १.२५ )' इति नायकौत्सुक्यं ध्वनितम् । अनेन *समाधान*नामकमङ्गम् । बीजार्थस्योपगमनात् ।

'अनुयास्यन् मुनितनयां···( १.२६ )' अनेन *परिभावनेत्यङ्गम्* । कुतूहलोत्तरावेशात् ।

'प्रियंवदा—हला, न ते युक्तं गन्तुम्' इत्यादिना 'राजा—तदहमेनामनृणां करोमि ( इत्यङ्गुलीयं दातुमिच्छति )' इत्यन्तेन करणं नामाङ्गम् । प्रकृतार्थस्यारम्भात् ।

'प्रियंवदा—मोचितासि···' इत्यादिना 'शकुन्तला—यदि···प्रभविष्यामि' इत्यन्तेनोद्भेदो नामाङ्गम् । बीजार्थस्य प्ररोहात् । दशरूपके तु 'उद्भेदो गूढभेदनम्' इति । अत्र राजभावस्य गूढस्योद्भेदनात् ।

'वाचं न मिश्रयति···( १.२७ )' इत्यनेन पूर्वोक्तं *प्राप्तिलक्षणमङ्गम्* ।
प्रकृतकथाविच्छेदार्थमन्तरसन्धिमुपक्षिपति—'( नेपथ्ये ) भो भो तपस्विन···' इति ।

'प्रत्यासन्नः···दुष्यन्तः' इत्यनेन दुष्यन्त इति राजनामश्रवणात् शकुन्तलायाः प्रोत्साहनाद् भेदलक्षणमङ्गम्।

'शकुन्तला ( राजानमवलोक्य )—···( निष्क्रान्ता )' इत्यनेन प्रतिमुखसन्धावुच्यमानं 'दर्भाङ्कुरेण ··' इति समर्थितं भवति।

द्वितीयाङ्के—'विदूषकः—अद्यापि तस्य······प्रभातमासीत्' इति। चिन्तनेन सुखं निद्राच्छेदेन दुःखम्। अनेन *विधानं* नामाङ्गम्। सुखदुःखकृतादर्थात्।

'अनवरतधनुर्ज्या···( २.४ )' अनेन 'मेदच्छेद···( २.५ )' इत्यादिना च वीथ्यङ्गं *मृदवं* नामोपक्षिप्तम्। यतोऽत्र दोषा गुणा गुणा दोषाः।

यद्यप्येषामानु···षङ्गत्वमुक्तं तथाप्यभिनवभारत्यामाचार्याभिनवगुप्तपादैः प्रथमसन्ध्युपलक्षणत्वं द्वादशानामुक्तम्। तथैवोदाहृतं धनिकेन। अतएव त्रिगतलक्षणे धनिकः—

'नटादित्रितयालापः पूर्वरङ्गे तदिष्यते' इति योज्यम्।

इत्थं राघवभट्टेन मुखसन्धेर्द्वादशाङ्गान्युपक्षेप-परिकर-विलोभन-परिन्यास-प्राप्ति-युक्ति-समाधान-परिभावनाकरणोद्भेदप्राप्तिभेदविधानेत्यङ्गानि क्रमेणानेनोपक्षिप्तानि प्राप्तिर्नामाङ्गं द्विवारमुक्तम्। मृदवं नाम वीथ्यङ्गं द्वौ अन्तरसन्धी प्रथमं पताकास्थानकं चाप्युपक्षिप्तानि।

काट्यवेमटीकायां मुखसन्धेरङ्गानां निर्देशो भिन्नतया कृतः। यथा—'असंशयं क्षत्रपरिग्रहक्षमा···( १.१७ )' अत्र शकुन्तलागतस्य दुष्यन्ताभिलाषबीजरूपस्य विन्यासादु*पक्षेपो* नाम मुखसन्धेः प्रथमाङ्गम्। 'चलापाङ्गां दृष्टिं···( १.२० )' तत्र 'तत्त्वान्वेषाद्वयं हता' इति बीजस्य बहुलीकरणात् *परिकरो* नाम सन्ध्यङ्गम्। 'वयमपि··सखीगतं पृच्छामः' अत्र शकुन्तलावृत्तजिज्ञासया बीजस्य दृढीकरणात् *परिन्यासो* नाम सन्ध्यङ्गम्।

'राजा—भगवान् काश्यपः···तदात्मजेति कथमेतत्'। अत्रात्मजशब्देनाद्भुतस्य गम्यमानत्वात् *परिभव* इति सन्ध्यङ्गम्।

क्रमं विहाय व्युत्क्रमेणाङ्गकथनं कथमिति नाशङ्कनीयम्। 'यथोचितं प्रयोगः स्यादङ्गानां न क्रमो मतः' । इति ।

'राजा—लब्धावकाशो···कातरं मे मनः' अनेन वाक्यद्वयेन सुखदुःखयोर्गम्यमानत्वाद् *विधानं* नाम सन्ध्यङ्गम्। 'वैखानसं किमनया···(१.२३) इत्यादिना 'अनुरूपवरप्रदाने सङ्कल्पः' इत्यन्तेनानुरूपवरप्रदानरूपस्य गूढार्थस्य प्रकाशनाद् उद्भेदो नाम सन्ध्यङ्गम्। 'भव हृदय साभिलाषं···(१.२४)' अत्र युक्तिर्नाम सन्ध्यङ्गम्। संशयितार्थस्य निर्णयात्। 'प्रियंवदा···(बलान्निवर्तयति)' अत्र वृक्षसेचनकारण-कथनव्याजेन बलात् सख्या कृतान्निवर्तनात् प्रोत्साहनाया गम्यमानत्वाद् भेदो नाम सन्ध्यङ्गम्। 'स्रस्तांसा ···(१.२६)' अत्र पूर्वं शकुन्तलायां प्रस्थितायां तद्गौरवप्रसङ्गे विच्छिन्ने सति तन्निवृत्तौ सत्यां पुनस्तत्प्रसङ्गस्य प्रवर्तनात् *करणं* नाम सन्ध्यङ्गम्। 'करणं प्रकृतारम्भः' इति। 'अथवा लब्धावकाशो···, वाचं न मिश्रयति··· (१.२७)'। अत्रेप्सितानुकूल्येन राज्ञः सुखप्राप्तेः *प्राप्तिर्नाम* सन्ध्यङ्गम्।

'(नेपथ्ये) भो भो तपस्विनः' इत्यारभ्य 'तुरगखुर···(१.२८)' 'तीव्राघातः···(१.२९)' एतदन्तेन नेपथ्यान्तर्गतैः पात्रै राजागमनचरितसंरोधस्य सूचितत्वात् *चूलिका* नाम अर्थोपक्षेपकमुक्तं भवति। यथोक्तं—'द्वेधा वस्तुविभागः स्यात् प्रकाशः सूच्य···' इत्यादि। तत्र चूलिका—'नेपथ्यान्तःस्थितैः पात्रैः······'। इति। अत्रेयमङ्के प्रस्तुता। अत्र संरोधस्य निरस्तत्वादनुचितत्वाच्च सूचिकानुसन्धेया।

'मन्दौत्सुक्योऽस्मि नगरगमनं प्रति' अत्र शकुन्तलाभावदर्शनेनात्माभिलापस्योत्थितत्वादनेन वाक्येनाभिलाषरूपस्य बीजस्य पुनरावर्तनात् *समाधानं* नाम सन्ध्यङ्गम्। बीजस्यानुसन्धानात्।

'भो भो तपस्विनः' इत्याद्यवान्तरप्रसङ्गेन शकुन्तलादुष्यन्तयोरन्योन्यदर्शनादिव्यापाररूपस्य वस्तुनो विच्छेदे सति पुनर्दर्शनहेतुत्वाद् दुष्यन्तस्य चित्तासङ्गे *बिन्दुरित्यवगन्तव्यम्*।

इत्थं कात्यवेमेन प्रथमाङ्क एव मुखसन्धिः प्रस्तुतः। तस्याङ्गानि—उपक्षेपपरिकरपरिन्यासपरिभावविधानोद्भेदयुक्तिभेदकरणप्राप्तिसमाधाना-

नीत्येकादशात्र प्रदर्श्याङ्कान्ते बिन्दुः स्थापितः । राघवभट्टेनोक्तो द्वितीयोऽन्तरसन्धिः काट्यवेमेन चूलिकेत्युक्तः प्रथम च पताकास्थानकमिति । सन्ध्यङ्गानां योजनेऽपि द्वयोर्व्याख्याकारयोर्न संवदतः ।

द्वितीयाङ्के राघवभट्टानुसारं 'राजा—माढव्य, अनवाप्तचक्षुःफलोऽसि' इत्यारभ्य तृतीयाङ्कसमाप्तिपर्यन्तं प्रतिमुखसन्धिरस्ति । तल्लक्षणं तु सुधाकरे—'बीजप्रकाशनं यत्र दृश्यादृश्यतया भवेत् । तस्मात्प्रतिमुखं— इति । तत्र 'अद्यापि तस्य तामेव चिन्तयता···" "विश्रान्तेन भवता··· सहायेन भवितव्यम्" इत्यनेन च विदूषकेण दृश्यस्य तत्सखीभ्यामदृश्यस्य च । दशरूपके—'बिन्दुप्रयत्नानुगमात्···वर्णसंहार इत्यपि' । इति तल्लक्षणमङ्गानि च । बिन्दुप्रयत्नयोर्लक्षणे यथादिभरते 'प्रयोजनानां विच्छेदे····' इत्यादि । यथात्र मृगयावृत्तान्तेन विच्छेदे सति 'राजा— माढव्य, अनवाप्तचक्षुःफलोऽसि' 'तां···शकुन्तलामधिकृत्य ब्रवीमि' इत्यादिना ।

'अपश्यतः फलप्राप्तिं यो व्यापार······चौत्सुक्यागमनं प्रयत्नः···' इति । यथात्र 'राजा—तपस्विभिः कैश्चित् परिज्ञातोऽस्मि । चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे वसामः' इति ।

'चिन्तय तावत्···वसामः' इत्यादिना 'तपःषड्भाग····नः ( २.१३ )' एतदन्तेन *विलासो* नामाङ्गम् । सङ्गमार्थव्यापारात् । 'राजा-( स्वगतम् ) चपलोऽयं वटुः' इत्यादिना परमार्थेन न गृह्यतां वचः' एतदन्तेन *संवृत्ति*-र्नाम सन्ध्यङ्गम् । स्वयमुक्तस्य स्वेन प्रच्छादनात् ।

प्रतिमुखसन्धेरन्यान्यङ्गानि तृतीयाङ्के व्याख्याकार उपक्षिपति । 'यावदेनामन्विष्यामि' इत्यादिना 'तत्रैव तावद् गच्छामि' इत्यन्तेन *परिसर्पो* नामाङ्गम् । इष्टनष्टानुसरणात् ।

'किं वीजयतो मां सख्यौ' इत्यत्रारतेः *विधूतं* नामाङ्गम् । 'तथा वर्तेथायथा···सिञ्चत मे तिलोदकम्' इत्यनेन *शमो* नामाङ्गम् । अरतेरुपशमनात् । 'तव न जाने···निघृण तपति ( ३.११ )' इत्यनेन *वज्रं* नामाङ्गम् । 'निघृण' इति विरूक्षवचनात् । अत्रैव लेखनामकं सन्ध्यङ्गमप्युपक्षिप्तम् ।

'विवक्षितार्थकलिता पत्रिका लेख उच्यते' इति[1]। 'सख्यौ ( सहर्षम् )—स्वागतम्···' इत्यादिना। 'राजा—परिग्रहबहुलेऽपि···( ३.१७ )' इति श्लोकान्तेन *प्रगणनं* नामाङ्गमुपक्षिप्तम्। 'उत्तरोत्तरवाक्यं तु प्रगणनं···' इति। 'राजा—किं शीतलैः···संवाहयामि चरणावुत पद्मताम्रौ ( ३.१८ )' इत्यनेनोपन्यासो नामाङ्गम्। प्रसादनात्। 'राजा—उत्सृज्य कुसुमशयनं··· ( ३.१९ )' अनेनोपन्यासो नामाङ्गम्। आदिभरते 'उपपत्तिकृतो योऽर्थ उपन्यासस्तु स' इति। दशरूपके तु 'प्रसादनमुपन्यासः'। 'चक्रवाकवधु, आमन्त्रयस्व सहचरम्। उपस्थिता रजनी' अनेन द्वितीयं पताकास्थानकम्। दशरूपके—'प्रस्तुतागन्तुभावस्य···' इत्यादि। वृत्तिकारेण व्याख्यातमन्योक्तिसमासोक्तिभेदाविति। तत्रान्योक्त्येदम्। अन्योक्तिलक्षणमुद्भटे—'असमानविशेषणमपि यत्र समाने निवृत्तमुपमेयम्। उक्तेन गम्यते परमुपमानेनेति सान्योक्तिः। इति। एषां स्थानमप्युक्तं मातृगुप्ताचार्यैः—

> मुखे प्रतिमुखे गर्भे विमर्शे च चतुर्ष्वपि।
> भेदाः सन्धिषु कर्तव्या पताकास्थानकस्य तु॥

'शकुन्तला—असंशयं···गौतम्येवागच्छति। यावद् विटपान्तरितं भव।' अनेन *विरोधो* नामाङ्गम्। व्यसनप्राप्तेः। निर्गन्तुं सहसा··· ( ३.२३ )' अनेन तुर्यचरणेन *पुष्पं* नामाङ्गम्। विशेषवद् वाक्यात्।

अत्र प्रतिमुखसन्धौ नर्मनर्मद्युत्युपासनान्यङ्गानि नोक्तानि। कानिचिद् व्यत्यासेनाप्युक्तानि तत्कथमिति न वक्तव्यम्।

भरतादिभिरेव तथोक्तेः। तत्रादिभरते—

कविभिः काव्यकुशलै रसभावमपेक्ष्य तु। सर्वाङ्गानि कदाचित्तु द्वित्रिहीनानि वा पुनः। व्युत्क्रमेणापि कार्याणि॥ इति। रसार्णवसुधाकरेऽपि—'केषांचिदेषामङ्गानां वैकल्यं केचिदूचिरे' इति।

इत्थं राघवभट्टेन द्वितीयाङ्कांशे तृतीयाङ्के च प्रतिमुखसन्धिमुक्त्वा तस्याङ्गानि विलाससंवृत्तिपरिसर्पविधूतसमवज्रप्रगणनोपन्यासनिरोधपुष्पाण्यनेन क्रमेणोपक्षिप्तानि। लेखनामकं यत् सन्ध्यङ्गमित्युक्तम् तत् तु

---

१. वस्तुत इदं तु सन्ध्यन्तरम्। सुधाकरे लक्षणमपीदृशमेवोपलभ्यते।

वस्तुतः सन्ध्यन्तरम्। तल्लक्षणमप्येतत्प्रमाणयति। उपन्यासो नामाङ्गं द्विवारं द्विप्रकारेणोक्तम्। पताकास्थानकमेकं चोपक्षिप्तम्।

काट्यवेमस्य टीका—द्वितीयाङ्कारम्भे कविरिदानीं कथासंघटनार्थोपक्षेपकं प्रवेशकं प्रस्तौति। ततः परमङ्कम्।

'राजा—प्रार्थयिता विडम्ब्यते।' अत्रोभयोः स्त्रीपुरुषयोः प्रार्थनाऽन्योन्याभिलाषः। अनेन गम्यमानोऽभिलाषोऽत्राङ्के बीजमित्यनुसन्धेयम्। अङ्के 'बीजबिन्दुसमन्वितम्' इत्युक्तेः।

'राजा—विश्रान्तेन भवता सहायेन भवितव्यम्' अत्र शकुन्तलायाः प्रति राज्ञ उपायेन प्रवर्तनात् प्रयत्न इति द्वितीयावस्था। अत्र बिन्दुप्रयत्नानुगमनं प्रतिमुखसन्धिः। 'लक्ष्यालक्ष्य ' इति लक्षणम्। अस्याङ्गानि विलासादि त्रयोदश।

'अनाघ्रातं पुष्पं…(२.१०)' अत्र राज्ञ इष्टार्थविषयकमनोहरस्य गम्यमानत्वाद् *विलासो* नामाङ्गम्। 'सा कस्यापि…चिक्कणशीर्षस्य हस्ते पतिष्यति।' अत्र परिहासस्य गम्यमानत्वान्नर्म इति सन्ध्यङ्गम्।

'करभकः—जयतु भर्ता…।' अत्र करभकागमनेन वस्तुविच्छेदे सति 'चपलोऽयं वटुः कदाचिदस्मत्प्रार्थनां…कथयेत्' इति प्रसञ्जितेयं प्रार्थनोत्तराङ्कवस्तुहेतुत्वाद् बिन्दुरित्यनुसन्धेयम्।

'क्व वयं…परमार्थेन न गृह्यतां वचः (२.१८)' अत्र नर्मद्युतिर्नाम सन्ध्यङ्गम्। दोषप्रच्छादनार्थं वचो नर्मद्युतिरिति। अत्र देवीव्रतरूपस्यान्तरार्थस्य कथनं राज्ञः सकाशाद् विदूषकापकर्षणार्थम्। अपकर्षणं च शकुन्तलां विस्मारयिष्यतो राज्ञः प्रतिबोधो मा भूदिति कविना प्रयुक्तम्।

अथ तृतीयाङ्कारम्भात् पूर्वं कविर्विष्कम्भकं नामार्थोपक्षेपकं प्रस्तौति।

'राजा—जाने तपसो वीर्यं…(३.२)।' अत्र परवतीति' 'तपसो वीर्यं जाने' इत्यनेन तस्या अभिसरणं न सिध्यति स्वयंग्रहो न शक्य इति गम्यते। अनेन गम्यमानोऽभिलाषः अत्राङ्के बीजम्।

'भगवन् कुसुमायुध, तव कुसुम…(३.३)' इति निष्ठुरभाषणेन *वज्रमिति* सन्ध्यङ्गम्। 'क्व नु खलु…तत्रैव तावद् गमिष्यामि' इति पूर्व-

दृष्टायाः पश्चाददृष्टायाः शकुन्तलाया अन्वेषणात् *परिसर्पो* नाम सन्ध्यङ्गम् । 'शक्यमरविन्द'''( ३.४ )' इति तत्र परितापस्य प्रतीतेर्*विधूतं* नाम सन्ध्यङ्गम् । विधूतमार्तिरिति । 'स्तनन्यस्त'''( ३.६ )' अनेनोत्कर्षस्य गम्यत्वात् पुष्पं नाम सन्ध्यङ्गम् । पुष्पं विशेषवद् वाक्यमिति । 'स्मर एव'''( ३.६ )' अत्रार्तेः शान्तत्वात् 'शमः' इति सन्ध्यङ्गम् । 'तव न जाने हृदयं'''( ३.१३ )' अनेनोप*न्यासः* सन्ध्यङ्गम् । 'उपपत्तियुक्तं वाक्यमुपन्यासः' इति ।

'सन्दष्टकुसुमशयन'''( ३.१७ )' अनेन सान्त्वनस्य गम्यमानत्वात् *पर्युपासन*मिति सन्ध्यङ्गम् । 'किं शीतलैः'''संवाहयामि ( ३.१८ )' अत्र प्रगमनं नाम सन्ध्यङ्गम् । 'यथोत्तरकृतां वाचमाहुः प्रगमनं''' इति । 'पौरव, रक्ष विनयम्' अत्र पौरवग्रहणस्य निरोधाद् *विरोधो* नाम सन्ध्यङ्गम् । 'चक्रवाकवधु' आमन्त्रस्व सहचरं''' इयं शकुन्तलायां गौतम्या-गमनसूचकत्वात् चूलिका ।

'ततः प्रविशति'''गौतमी सख्यौ च' इत्यादिना बहुपात्रसमुच्चयाद् वर्णसंग्रहो नाम सन्ध्यङ्गम् । अत्र गौतमीकृतेन शकुन्तलानिवर्तनेन वस्तुनो विच्छेदे सति, अनन्तरं शकुन्तलाकृतप्रत्यक्षावेक्षामन्त्रणपुनः-समागमरूपस्य वस्तुनो गम्यमानत्वाद् बिन्दुनिर्देश इत्यभिप्रायः ।

इत्थं काट्यवेमेन द्वितीयतृतीयाङ्कयोः प्रतिमुखसन्धिरुक्तः । अत्रापि बीजस्य बिन्दोश्च निर्देशः कृतः । विलासनर्मनर्मद्युतिवज्रपरिसर्पविधूत-पुष्पशमोपन्यासपर्युपासनप्रगमनविरोधवर्णसंग्रहा इति त्रयोदशसन्ध्यङ्गानि प्रस्तुतानि । राघवभट्टकाट्यवेमयोर्व्याख्ययोः सन्ध्यङ्गोदाहरणानि भिन्नानि । तथैव 'तव न जाने' ( ३. १३ ) इत्यत्र राघवभट्टमते वज्रं नाम सन्ध्यङ्गं तत्रैव तु काट्यवेमानुसारमुपन्यासो नाम । प्रगणनं—प्रगमनं इति सन्ध्यङ्गनाम्नोरपि द्वयोर्भेदोऽस्ति । तथैव राघवभट्टोक्तपताकास्थानकं काट्यवेमेन चूलिकेत्युक्तम् । प्रवेशकविष्कम्भकाकाशभाषितादीनां लक्षणानि द्वाभ्यामपि प्रस्तुतानि ।

अथ राघवभट्टव्याख्यायामुक्तं—चतुर्थाङ्कादिपञ्चममध्ये 'यथोक्तं करोति' इत्यन्तेन गर्भसन्धिरुक्तः । आदिभरते—'उद्भेद'''गर्भः परि-

कीर्तितः' इति। पूर्वसन्ध्युपक्षिप्तप्राप्तिः। दुर्वाससः शापादप्राप्तिः। पुनस्तस्य प्रसादेनाभिज्ञानदर्शनेन पुनः प्राप्तिरिति। अत्राप्त्याशापताकानुरोधादङ्गानि कल्पयेत्। 'अभूताहरणं···सम्भ्रमाक्षेपा द्वादश' इत्यङ्गानि।

तत्र पताकाया अनित्यत्वादत्र पताका नास्ति। तदुक्तं धनिकेन—'पताका स्यान्नवा···इत्यादि। प्राप्त्याशाया नियतत्वमुक्तं सुधाकरेऽपि—'पताकायास्त्ववस्थानं क्वचिदिति'। 'प्राप्त्याशा तु महार्थस्य सिद्धिसद्भावभावना' इति प्राप्त्याशालक्षणम्। अत्रापि दुर्वाससः प्रसादेन महार्थस्य शकुन्तलारूपस्य राज्ञः प्राप्तिसद्भावनेति ज्ञेयम्।

'अन्तःपुरसमागतः···स्मरति वा न वेति' अनेन वक्ष्यमाणेन दुर्वाससः शापेन राज्ञो नायिकाविस्मरणं सूचितम्। 'अनसूया—प्रभ्रष्टं पुष्पभाजनं' अनेनापशकुनेन दुर्वाससोऽनिवृत्तिः सूचिता।

'द्वयोरेव मुखे वृत्तान्तस्तिष्ठतु' इत्यादिना '···नवमल्लिकां सिञ्चति' एतदन्तेन शकुन्तलां प्रति शापाकथनच्छद्मनाऽ*भूताहरणं* नामाङ्गम्। कपटाश्रयवाक्यत्वात्। अयमपि शुद्धविष्कम्भकः प्राकृतेन कृतत्वात्।

'अन्तर्हिते शशिनि···( ४.२ )' अत्र पूर्वार्धे नायकेऽन्तर्हिते नायिका दृष्टिं न नन्दयतीति। 'शशिनि' इति दुष्यन्ते, 'असन्निहिते' इत्यादि पूर्वार्धं योज्यम्। अनेनास्या राजगृहं प्रति प्रस्थानसूचकं तृतीयं पताकास्थानकमुपक्षिप्तम्। तल्लक्षणं मातृगुप्ताचार्यैः—

अर्थोपक्षेपणं गूढं सविनं' ( ? ) भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयं तन्मतं मम॥ इति

'दुष्यन्तेनाहितं तेजः···( ४.३ )'। 'अग्निगर्भां शमीमिव' इति सहजपूतत्वं ध्वनितम्। अनेन *मार्ग*लक्षणमङ्गम्। भूतार्थवचनात्। 'शिष्यौ प्रविश्योपायनहस्तौ···' इत्यादि 'सूचिता···राजलक्ष्मीः' इत्यन्तेनो*दाहरणं* नामाङ्गम्। सातिशयवाक्यत्वात्। अत्र वृक्षाणां चेतनवद् वनदेवताहस्तैरलङ्कारदानवचनात् सातिशयत्वं प्राप्त्याशानुगमत्वं प्रकटमेव। 'ययातेरिव शर्मिष्ठा···( ४.६ )' अनेन *क्रम*लक्षणमङ्गम्। इष्टस्य तत्त्वोपलब्धेः। 'अभिजनवतः···( ४.१८ )' अनेन *संग्रह*लक्षणमङ्गम्। सामदानार्थसंयोगात्। 'यदि नाम राजा···अङ्गुलीयकं दर्शय' अत्र रूपलक्षणमङ्गम्।

यदीति वितर्कोक्तेः। 'अनेन···कम्पितास्मि' अनेन *सम्भ्रम*मित्यङ्गम्। शङ्कात्रासतः। 'मा भैषीः···पापशङ्की' अनेनाऽ*धिबल*लक्षणमङ्गम्। कपटेनाभिसन्धानात्।

पञ्चमाङ्के 'अभिनवमधुलोलुपो···(५.१)' अत्र सारूप्यनिमित्तया प्रशंसया दुष्यन्तस्य शकुन्तलाविस्मरणस्य गम्यत्वाद् *आक्षेप* इत्यङ्गम्। गर्भबीजसमुद्भेदात्। अथ चानेन तृतीयं पताकास्थानकम्। लक्षणं पूर्वोक्तमेव।

'मूर्च्छन्त्यमी विकारा···(५.१८)' अनेन *तोटकं* नामाङ्गम्। संरम्भवचनात्।

राघवभट्टेनात्र गर्भसन्धेः समाप्तिः कृता। चतुर्थाङ्के पञ्चमाङ्कांशे च गर्भसन्धिमुक्त्वा तस्याङ्गानि—अभूताहरणमार्गोदाहरणक्रमसंग्रहरूपसम्भ्रमाधिबलाक्षेपतोटकानीत्येकादशान्युक्तानि। पताकाया अभावं प्राप्त्याशायाश्च नियत्वमुक्त्वा द्वे तृतीयपताकास्थानके उपक्षिप्ते। प्रवेशकः शुद्धविष्कम्भकनाम्ना प्रस्तुतः।

काट्यवेमस्य टीका—चतुर्थाङ्कारम्भे अथ कथासंघटनार्थं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति।

अत्र निवृत्तेन गान्धर्वविवाहविधिरूपेणोपायेनान्तःपुरासक्तो राजा शकुन्तलां स्मरति न वेत्येवंरूपयापायशङ्कया च शकुन्तलादुष्यन्तयोः प्राप्तभोगसम्भावनायाः प्रसञ्जितत्वात् प्राप्त्याशा नाम तृतीयावस्था निवेशिता।

'विचिन्तयन्ती···(४.१)' इत्यनेन गम्यमानस्य शकुन्तलाभिभवरूपस्य बीजस्य प्राप्त्याशासमन्वयाद् गर्भसन्धिः। दृष्टनष्टस्य बीजस्य मार्गणात्। ननु बीजप्राप्त्याशासमन्वयाद् गर्भसन्धिरिति कथं, पताका सापेक्षत्वादिति चेन्न। तदभावे बीजं वा भवतीति विद्यमानत्वात्। तदुक्तं—'पताकाऽसम्भवे बीजं बिन्दुं वा विन्यसेत् सुधीः' इति।

अस्याङ्गानि—'अभूताहरण······द्वादश।'

'अत्र पूर्वमारम्भयत्नौ दुष्यन्तसम्बन्धिनो वृत्तान्ताः। कथमिदानीं

प्राप्त्याशा शकुन्तलासम्बन्धिनीत्युच्यते' इति नाशङ्कनीयम् । उभयोरपि शृङ्गाराश्रयत्वाद् नायकनायिकयोरन्यतरसम्बन्धेनापि कार्यसिद्धेः ।

'अनसूया—न पारयामि···निवेदयितुम्' । अत्र सख्या महर्षये कथनीयस्य शकुन्तलावृत्तान्तस्य कपटेनाकथनाद् *अभूताहरण*मिति गर्भसन्धेः प्रथमाङ्गम् । 'दुष्यन्तेनाहितं तेजः···( ४.४ )' अत्र यथार्थकथनान्मार्ग इति सन्ध्यङ्गम् । 'क्षौमं केनचिद्···(४.५ )' अत्र सखीभ्यामाभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विकीर्यते' इत्याभरणेष्वाकाङ्क्षितेषु सत्सु शिष्यैस्तरुभ्यो लब्धानां क्षौमादीनां समर्पणात् *क्रमो* नाम सन्ध्यङ्गम् । चिन्त्यमानार्थसम्पत्तेः । 'रम्यान्तरा···( ४.११ )' अत्र 'सेयं याति शकुन्तला···अनुज्ञायताम्' इत्युक्तेः समनन्तरं कोकिलरुतं तेन शकुन्तलागमनानुमितिस्तरुभिः कृतेत्यनुमानेन अनुमानमिति सन्ध्यङ्गम् ।

'शकुन्तला—दक्षिणतो···दुष्करं खल्वहं करोमि' । अनेन शापतिरोहितं दुष्यन्तमप्राप्स्यमानायाः शकुन्तलाया भाविदुःखं तुल्यसंविधानतया सूचितम् । तस्मादिदं तुल्येन संविधानेन कृतं पताकास्थानकम् 'पताकास्थानकं प्राहुर्भाविनोऽर्थस्य सूचकम् । चतुर्भिः करणैरेतच्चतुर्धा···'इत्यादि ।

'अस्मान् साधु···( ४.१७ )' वाक्यपर्यालोचनयेयं शकुन्तला विशेषप्रतिपत्यर्हेति सूचितम् । अनेनानुसान्त्वनस्य गम्यमानत्वात् *संग्रहो* नाम सन्ध्यङ्गम् । 'अर्थो हि कन्या···( ४.२२ )' अत्र 'परिग्रहीतुः सम्प्रेष्येति' उत्तराङ्कादौ प्रवेक्ष्यतो राजपात्रस्य सूचितत्वाद् अङ्कास्यनामार्थोपक्षेपकम् ।

पञ्चमाङ्के 'अभिनवमधु···( ५.१ )' अनया ध्रुवागीत्या हंसपदिका मधुकरव्याजेनात्मानं विस्मृतवन्तं राजानमुपालभत इति गम्यते । अनेन गम्यमानार्थेन राज्ञ आगामिन्याः शकुन्तलाया विस्मरणं गम्यते । तदेषा विस्मृतान्तरी ध्रुवा । यथोक्तम्—

> सूच्ये पात्रे भेदानां रसभावप्रकाशिनी ।
> या गीतिः सा ध्रुवा तुल्यसंविधानविशेषणा ॥
> प्रावेशिक्याक्षेपिकी च तथा प्रासादकीति च ।
> नैष्क्रामिक्यान्तरी चेति तासां लक्षणमुच्यते ॥

प्रवेशकसूचिकाङ्कादौ ध्रुवा प्रावेशिकी मता।
प्रासादकीति पात्राणां व्याकुलानां प्रसादनात् ॥
निष्कामसूचिकान्ते च ध्रुवा नैष्क्रामिकी भवेत्।
विदिते विस्मृते कोपे प्रसादे सङ्क्रमे मदे।
दोषप्रच्छादनादौ च गीयते या तु सान्तरी ॥ इति।

'किं तावद् ब्रूत…( ५.६ )' अनेन वितर्केण रूपमिति सन्ध्यङ्गम्। 'कुतो धर्मक्रियाविघ्नः…( ५.१४ )' अत्र वाक्यस्योत्कर्षाश्रयत्वाद् उदाहरणं नाम सन्ध्यङ्गम्। 'शकुन्तला—परिणय एव सन्देहः…अधिरोहिण्याशा'। शङ्काया गम्यमानत्वात् सम्भ्रमो नाम सन्ध्यङ्गम्।

'कृताभिमर्शात्…( ५.२० )' अत्रानेन शाङ्गरवसंरम्भात् तोटकमित्यङ्गम्। 'राजा—एवमादिभिरात्मकार्य…' अत्र नष्टस्मृतेर्दुष्यन्तस्य शकुन्तलावचनं वञ्चनारूपेण प्रतीयमानत्वाद् 'अधिबलं नाम सन्ध्यङ्गम्। 'हे पुरोभागिनि,…( शकुन्तला भीता वेपते )'। अनेन उद्वेगो नामाङ्गम्। भीतेः। 'कामं प्रत्यादिष्टा…( ५.३१ )'। अत्र मुहुरन्वेषितस्य बीजस्य योजनाद् आक्षेपो नामाङ्गम्।

अत्र शकुन्तलानिर्गमनेन बिन्दुविच्छेदे सति राज्ञो दूयमानहृदयत्वमुत्तराङ्कवस्तुहेतुत्वाद् बिन्दुरित्यनुसन्धेयम्।

इत्थं काटयवेमः सम्पूर्णचतुर्थपञ्चमाङ्कयोर्गर्भसन्धिमेवोपक्षिपति। अभूताहरणमार्गक्रमानुमानसंग्रहाः सन्ध्यङ्गानि चतुर्थाङ्के तथा रूपोदाहरणसम्भ्रमतोटकाधिबलोद्वेगाक्षेपा इति च पञ्चमाङ्के उपक्षिपति। पताकास्थानकमङ्कास्यं ध्रुवा च प्रस्तुतानि।

राघवभट्टोक्तोद्भेदनामकसन्ध्यङ्गं काटयवेमानुसारमुद्वेग इति। द्वयोर्लक्षणेऽपि भिन्ने। अन्याङ्गानां लक्षणसादृश्येऽप्युदाहरणान्यसदृशानि।

राघवभट्टव्याख्यायां पञ्चमाङ्के 'यथोक्तमवगुण्ठनापचयम्' इत आरभ्य षष्ठाङ्कसमाप्तिपर्यन्तमवमर्शसन्धिरुक्तः। तल्लक्षणं सुधाकरे—'यत्र प्रलोभनक्रोध…' इति। अत्र शापलक्षणव्यसनेनावमर्शो यथा—'इदमुपनतम्' इत्यादि। प्रकरी नियताप्त्यानुगुण्यादत्राङ्गकल्पना। 'अपवादोऽर्थसम्फेटो…आदानं च त्रयोदश'। इत्यङ्गानि।

प्रकरीलक्षणं भावप्रकाशिकायां—

शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः।
अथर्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत्॥ इति।

यथात्रैव षष्ठेऽङ्के 'ततः प्रविशति चूताङ्कुर···' इत्यादिना 'नेपथ्ये' इत्यन्तेन। अनेन तु—

फलं तु कल्प्यते यस्याः परार्थायैव केवलम्।
अनुबन्धविहीनानां प्रकरी श्रूयते यथा॥

इति लक्षणानुसारेण मातलिवृत्तं प्रकरीत्याहुस्तन्न। सन्धिसमाप्तिविषये तस्योद्देशादङ्गानां तदनुगामित्वं नायाति। नियताप्तिलक्षणमादिभरते—'नियतां तु···' इति।

'शकुन्तलाया (सरोषं) अनार्य···' इत्यादिना *सम्फेटो* नामाङ्गम्। रोषग्रथितवाक्यत्वात्।

'शकुन्तला—सुष्ठु तावत् स्वच्छन्दचारिणी···इत्यादिना 'राजा—आजन्मनः शाठ्य···(५. २५)' इत्यन्तेन *द्रवो* नामाङ्गम्। 'गुरुव्यतिक्रमो वस्तु द्रवः।' इति। 'राजा—भो सत्यवादिन्···' इत्यादिना 'मूढः स्यामहमेषा···(५. २६)' इत्यन्तेन *विरोधनामाङ्गम्*। उत्तरोत्तरवाक्यत्वात्। '(नेपथ्ये) आश्चर्यमाश्चर्यम्' इत्यादिना 'सा निन्दन्ती···(५.३०)' इत्यन्तेन *शक्तिर्नामाङ्गम्*। विरोधप्रशमात्। 'राजा—कामं प्रत्यादिष्टां··· (५.३१)' अनेन *प्रसङ्गनामाङ्गम्*। गुरूणां कीर्तनात्। अत्र मुनेस्तनयेति गुरुकीर्त्तनम्।

षष्ठाङ्केऽवमर्शसन्धेरन्याङ्गान्युपक्षिपति। यथा—'ततः प्रविशति नागरिकः' इत्यादिना 'नार्हति भावोऽकारणमारणं भावितुम्' इत्यन्तेन *विद्रवो* नामाङ्गम्। वधबन्धनादिकोपात्। 'सानुमती—निवर्तितं मया···' इत्यादिना 'नाट्येनावतीर्य स्थिता' इत्यन्तेन सानुमत्यात्मश्लाघायाः कृतत्वाद् *विचलनं* नामाङ्गम् विकत्थनायाः। '(प्रविश्यापटीक्षेपेण कञ्चुकी) इत्यादिना 'उत्सवः प्रत्याख्यातः' इत्यन्तेन *द्युतिर्नामाङ्गम्*। 'तर्जनोद्वेजने द्युतिः' इति। 'विदूषकः—यद्येवमस्ति खलु समागमः' इत्यादिना 'मैवम्। नन्वङ्गुलीयकमेव निदर्शनम्' इत्यन्तेन *रोचना* नामाङ्गम्।

सिद्धामन्त्रणतो भाविदर्शिका प्ररोचनेति । 'राजा—( दीर्घमुष्णं च निःश्वस्य )' इत्यादिना 'अस्मात्परं···( ६.२५ )' इत्यन्तेन छलनं नामाङ्गम् । आत्मावसादनात् । 'सानुमती—श्रुतं मया···प्रियसखीं समाश्वासयामि' इत्यनेन '*आदानं*' नामाङ्गम् । बीजकार्योपगमनात् ।

'राजा—भो···' इत्यादिना '···यो हनिष्यति···( ६.२८ )' इत्यन्तेन *व्यवसायो* नामाङ्गम् । स्वशक्त्युक्तेः ।

इत्थं पञ्चमाङ्कांशे षष्ठाङ्के चावमर्शसन्धिं विवृण्वन् राघवभट्टः सम्फेटद्रवविरोधशक्तिप्रसङ्गविद्रवविचलनद्युतिरोचनाछलनादानव्यवसायाख्यानि द्वादशाङ्गान्युपक्षिपति । प्रकरीमपि निरूपयति ।

कात्यवेमेन तु षष्ठाङ्क एव विमर्शसन्धिरुक्तः । षष्ठाङ्कस्य व्याख्यायां निरूपयति—कथासङ्घटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं मुख्यतया प्रदर्शितमिति प्रकरी नाम चतुर्थ्यर्थप्रकृतिरित्यनुसन्धेयम् । उक्तं—'कथान्तरप्रसङ्गे प्रकरी स्यात् प्रवेशभाग्' इति ।

'इतः प्रत्यादेशाद्···( ६.९ )' अत्र दृष्टान्तेनात्मनो प्रत्याख्यानाद् *अपवादो* नामाङ्गम् । दोषाणामुद्घाटनात् । 'विदूषकः—न खलु मातापितरौ···द्रष्टुं पारयतः ।' अत्र शकुन्तलाप्राप्तेरवश्यंभावित्वस्य गम्यमानत्वान्नियताप्तिर्नाम चतुर्थावस्था । अत्र च प्रकरीनियताप्त्योः समन्वयाद् विमर्शसन्धिः । 'यत्रावमृश्यते मोहाद् व्यसनाद्वा···आधानमिति त्रयोदश । इति ।

'अक्लिष्ट···( ६.२० ) एवं भोः···' इत्यादि 'कमलोदरबन्धनस्थम्' इत्यन्तेन तर्जनस्य गम्यमानत्वाद् द्युतिर्नाम सन्ध्यङ्गम् । 'सानुमती—हा धिक्···भर्ताऽभिनन्दिष्यति' अत्राप्तवचनेन भाविकार्यस्य ज्ञातत्वात् *प्ररोचनं* नामाङ्गम् । 'राजा—मा तावत्···अभिभूयन्ते गृहाः' अत्र संरम्भस्य गम्यमानत्वाद् विरोधनं नामाङ्गम् । '( नेपथ्ये )—एष त्वां···( ६.२७ )' अत्र महाधीरस्य दुष्यन्तस्य नामग्रहणाद् *विद्रवो* नामाङ्गम् । महात्मनस्तिरस्कारात् । अत्रैव महान्तं दुष्यन्तमधिक्षिपता मातलिनात्मश्लाघाकरणाद् *विचलनं* नामाङ्गम् । अत्रैकस्मिन्नुदाहरणे कथमङ्गद्वय-

विधानमिति न शङ्कनीयम्। 'एकस्य बहुशो वा स्यादनेकस्य सहाऽपि वा' इति वचनात्।

'राजा—कथं मामेवोद्दिश्य' इत्यारभ्य 'न त्वमिदानीं भविष्यसि' इत्यन्तेन दोषकथनात् *सम्फेटो* नामाङ्गम्। दोषपरुषवचनात्। 'दुष्यन्तः—भो तिरस्करिणीगर्वित···यो हनिष्यति···(६.२८)' अत्र दुष्यन्तेन स्वशक्तिकथनाद् *व्यवसाय* इति सन्ध्यङ्गम्। 'मातलिः—कृत्वा शरव्या···(६.२९)'। अत्र 'दारुणाः शराः न पतन्ति' इत्यनेन सान्त्वनेन दुष्यन्तविरोधशमनात् *शक्तिरि*त्यङ्गम्। 'मातलिः—सख्युस्ते···(६.३०)' अनेन दुष्यन्तशौर्यमहत्त्वस्य कीर्तितत्वात् *प्रसङ्गो* नामाङ्गम्। अत्रैवासुरविजयप्रयाणस्य क्रमेण स्वपुत्रशाकुन्तलाप्तिहेतुत्वाद् *आधानं* नाम सन्ध्यङ्गम्। कार्यसंग्रहात्। 'राजा—अथ माढव्यं प्रति भवता···' इत्यादिना 'ज्वलति चलितेन्धनो···(६.३१)' इत्यन्तेन दुष्यन्तवैक्लव्यशमनार्थं मातलिकल्पितस्य विदूषकग्रहणरूपव्याजस्य प्रतीतेश्छ*न्नं* नाम सन्ध्यङ्गम्।

इत्थं काट्यवेमेन षष्ठाङ्के प्रवेशकमेव प्रकरीमुक्त्वा विमर्शसन्धेरङ्गानि 'अपवादद्युतिप्ररोचनविरोधनविचलनसंफेटव्यवसायशक्तिप्रसङ्गाधानछन्नान्येकादशसन्ध्यङ्गानि क्रमेण निदर्शितानि। एतेषु विरोधशक्तिप्रसङ्गानि तु राघवभट्टेन पञ्चमाङ्क एवोपक्षिप्तानि। द्वयोर्व्याख्ययोर्व्यवसायनामकमङ्गं सादृश्यं भजते। अन्यान्यङ्गानि तु क्रमभेदेन स्थानभेदेन च द्वाभ्यां स्थापितानि।

सप्तमाङ्कारम्भे राघवभट्टो व्याख्याति—इतो निर्वहणसन्धिः समाप्ति यावत्।

तल्लक्षणं सुधाकरे—

मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुता।
महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते॥

कार्यफलप्रयोगेणास्य सान्धित्वम्। यथा मातृगुप्ताचार्यैः—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते।
तदर्थो यः समारम्भस्तत्कार्यं कथ्यते···॥

अभिप्रेतं समर्थं च प्रतिरूपं क्रियाफलम् ।
इतिवृत्तं भवेद् यस्मिन् फलयोगः स उच्यते ॥

अङ्गानि तु 'सन्धिर्निबोधो…प्रशस्तिश्च चतुर्दश ।' इति ।

अत्र दानवयुद्धं युद्धत्वेन साक्षान्निषिद्धमित्यङ्के नैव सूचितम् । प्रकृते प्रयोजनाभावादन्यद्वारा वाचिकाभिनयेनापि नोक्तम् । अनङ्गस्याभिधानमिति रसदोषापत्तेः । अतः कृतकार्ययोः । सूतरथिनोः प्रवेशः । तत् संवादेनैव कार्यमुन्नेयम् । इत्यत्रार्थोपक्षेपकस्याभावः समर्थितो राघवभट्टेन ।

'अस्त्येतत्पौरवाणां…भवनेषु (७.२०)' इत्यारभ्य 'अथवानार्यः परदारव्यवहारः' इत्यन्तेन *विबोधो* नामाङ्गम् । युक्त्या कार्यस्यान्वेषणात् । 'उभे—कथं गृहीतमनेन ( इति…अवलोकयतः )' अनेनोपगूहनलक्षणमङ्गम् । अद्भुतस्य प्राप्तेः । 'प्रथमा—शृणोतु महाराजः…' इत्यादिना 'उभे—अनेकशः' इत्यन्तेन *पूर्वभाव*नामकमङ्गम् । यथार्थोक्तोपदेशकत्वात् । शकुन्तला—विकारभावेऽपि…सम्भाव्यत एतत्' अनेन *समया*ख्याङ्गम् । दुःखस्यापगमात् ।

'राजा—( शकुन्तलां विलोक्य ) अये, सेयं तत्रभवती शकुन्तला' इत्यादिना 'मम विरहव्रतं बिभर्ति ( ७.२१ )' इत्यन्तेन *सन्धि*र्नामाङ्गम् । मुखबीजोपगमात् । 'शकुन्तला—आर्यपुत्रः खल्वेष' इत्यनेनानन्दनामाङ्गम् । अर्थसमागमात् । 'राजा—प्रिये, स्मृतिभिन्न…' इत्यादिना 'आर्यपुत्रैवैतद् धारयतु' इत्यन्तेन *परिभाषणं* नामाङ्गम् । मिथः सम्भाषणात् । '( ततः प्रविशति मातलिः )' इत्यादिना *ग्रथनं* नामाङ्गम् । कार्याणामुपक्षेपात् ।

'मारीचः—वत्स, अलमात्मानं…' इत्यादिना '…दर्शनावसानः' इत्यन्तेन *निर्णयो* नामाङ्गम् । अनुभूतार्थकथनात् । 'मारीचः—वत्से चरितार्थासि…' इत्यादिना '…आशास्महे' इत्यन्तेन *प्रसाद*लक्षणमङ्गम् । शुश्रूषाद्युपसम्पन्नायाः प्रसन्नतायाः । 'मनोरथः खलु मे भणितो भगवत्या' अत्र *कृति*र्नामाङ्गम् । लब्धार्थस्य शमनात् । 'किं ते भूयः प्रियमुपकरोमि' इत्यनेन *काव्यसंहार*लक्षणमङ्गम् । वरदानसम्प्राप्तेः । 'राजा—प्रवर्तताम्

प्रकृतिहिताय…( ७.३४ )' अनेन *प्रशस्ति*र्नामाङ्गम् । देवद्विजनृपादीनां प्रशंसातः ।

इत्थं राघवभट्टेन सप्तमाङ्के निर्वहणसन्धिमुक्त्वा विबोधोपगूहनपूर्वभावसमयसन्ध्यानन्दपरिभाषणग्रथननिर्णयप्रसादकृतिकाव्यसंहारप्रशस्तिनामानि त्रयोदशाङ्गान्युपक्षिप्तानि । भावनामकमेकमङ्गं नोक्तम् ।

काट्यवेमेनापि सप्तमाङ्के निर्वहणसन्धिमुक्त्वा तस्य चतुर्दशाङ्गेषु भावनामकाङ्गस्य स्थाने बाष्पनाम निर्दिष्टम् । विबोधस्थाने च विरोधः । अत्र सन्धिस्तु बीजोपगमनं भवेदिति ।

'राजा—मनोरथाय नाशंसे…( ७.१३ )' अत्र पूर्वावधीरितं श्रेय' इत्यनेन शकुन्तलारूपबीजश्रवणेन निर्वहणसन्धेः *सन्धि*र्नाम प्रथमाङ्गमुक्तम् । 'राजा—न चेन्मुनिकुमारो…व्यपदेशः' अत्र कुमारवंशज्ञानरूपस्य कार्यस्याक्षेपणाद् *विरोधो* ( विबोधो ? ) नामाङ्गम् । 'कार्यान्वेषी विरोधः' इति । 'तापसी—यथा भद्रमुखो…जनन्यस्य देवगुरोस्तपोवने प्रसूता' अत्र जिज्ञासितस्य कार्यस्य निबन्धनाद् *ग्रथनं* नामाङ्गम् ।

'राजा—इयं खलु मामेव…।' अनेन पूर्वज्ञानार्थकथनाद् *निर्णयो* नामाङ्गम् । प्रथमा—अहो 'रक्षाकरण्डकं…न दृश्यते' इत्यारभ्य 'उभे—कथं गृहीतममेन' इत्यन्तेनाद्भुतार्थप्राप्तेरु*पगूहनं* नामाङ्गम् । अद्भुतार्थस्य सम्प्राप्तेः । 'राजा—किमथ प्रतिषिद्धा…' इत्यादिना 'प्रथमा…सर्पो भूत्वा दशति' इत्यन्तेनायोग्यदुरापस्य प्रतिपादितत्वात् *परिभाषा* नामाङ्गम् । मिथो जल्पत्वात् । '( शकुन्तलायाः पादयोः पतति )' इत्यादि 'धुनोत्यहिशङ्कया ( ७.२४ )' इत्यन्तेन पर्युपासनस्य गम्यत्वात् *प्रसादो* नामाङ्गम् । 'राजा—उद्धृतविषादशल्यस्य…' इत्यादिना '…विगतानुशयो भवामि ( ७.२५ )' इत्यन्तेन *समयो* नामाङ्गम् । दुःखनिर्गमात् । 'मातलिः—दिष्ट्या धर्मपत्नीसमागमेन …वर्धते ।' अत्र पुत्रलाभरूपेण धर्मेणोपसृष्टस्य शकुन्तलालाभरूपस्य कार्यस्य प्रतीतेः कार्यो नाम पञ्चम्यर्थप्रकृतिरुक्ता । 'कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च' इति । अत एवेष्टार्थसिद्धेर्गम्यमानत्वाद् *आनन्दो* नाम सन्ध्यङ्गम् । 'मारीचः—वत्से चरितार्थासि…' इत्यादिना 'सुलभावकाशाः ( ७.३२ )' इत्यन्तेन

लब्धस्यार्थस्य स्थिरीकरणात् *कृतिर्नाम* सन्ध्यङ्गम् । 'मारीचः—तथा भाविनमेनं चक्रवर्तिनं····' इत्यादिना '····लोकस्य भरणात् ( ७.३३ )' । इत्यन्तेन बहुमानस्य गम्यत्वाद् *भाषेति* सन्ध्यङ्गम् । 'मारीचः—वत्स त्वमपि स्वापत्यदारसहितः····' इत्यादिना 'राजा—यदाज्ञापयति भगवान्' इत्यन्तेन सपुत्रशकुन्तलारूपफलप्राप्तेः प्रतीयमानत्वात् फलागमो नाम पञ्चम्यवस्थेत्यनुसन्धेयम् । अत्राङ्के कार्यफलागमयोः समन्वयान्निर्वहणं नाम पञ्चमः सन्धिः प्रतिपादितः । 'राजा—भगवन्, यथाशक्ति श्रेयसि प्रयतिष्ये' अत्र वरणीयार्थलाभाद् *उपसंहारो* नामाङ्गम् । भरतवाक्यं नटस्य वाक्यं 'प्रवर्ततां····( ७.३५ )' अत्र शुभाशंसनात् *प्रशस्ति*नाम सन्ध्यङ्गम् ।

इत्थं काटयवेमेन सप्तमाङ्के निर्वहणसन्धौ फलागमावस्थां कार्यनाम-कार्थप्रकृतिं प्रदर्श्य सन्धिविरोधग्रथननिर्णयोपगूहनपरिभाषाप्रसादसमया-नन्दकृतिभाषोपसंहारप्रशस्तिनामानि त्रयोदश सन्ध्यङ्गान्युक्तानि । सन्ध्यङ्गसूच्यामुद्दिष्टं वाल्पनामकसन्ध्यङ्गस्थाने भाषेत्यङ्गमुदाहरणं प्रस्तु-तम् । पूर्वभावो नोक्तः । सन्ध्यङ्गानां स्थानानि राघवभट्टनिर्दिष्टस्थानेभ्यो भिन्नानि वर्तन्ते ।

एवं राघवभट्टकाटयवेमव्याख्ययोश्चतुःषष्टिसन्ध्यङ्गानि समानमेवो-द्दिष्टानि । क्वचिन्नामभेदः क्वचिच्च लक्षणभेदोऽपि दृश्यते । सन्ध्यङ्गाना-मुदाहरणेषु तु द्वयोः संवादः क्वचिदेव लभ्यते । द्वयोः क्रमोऽपि भिन्नः । अपि च 'एकस्याङ्गस्य बहुशो वा अनेकस्य सहापि वा' इत्यपि समर्थ्य द्वे सन्ध्यङ्गे एकस्मिन् स्थाने प्रस्तुते एकमेव वा स्थानद्वय प्रस्तुतम् । 'रसभावमपेक्ष्य सर्वाङ्गाणि कदाचित्तु द्वित्रिहीनानि वा पुनः व्युत्क्रमेणापि कार्याणि' इत्यादि भरतमतम् । अतः केनापि क्रमेण यावत् शक्यं यत्र रोचते तत्र लक्षणानुसारं सन्ध्यङ्गानि वक्तुं शक्यमिति प्रतीयते । सन्ध्यङ्ग-विषये नास्ति कोऽपि दृढो नियमः । पञ्चसन्धीनामारम्भसमाप्तिविषयेऽपि द्वयोर्व्याख्ययोर्विप्रतिपत्तिः । अतः सन्धीनामुपक्षेपोऽपि स्वधारणानुसारं करणीय इति स्पष्टमेव ।

राघवभट्टेन कार्यावस्थार्थप्रकृतिसन्धिसन्ध्यङ्गेभ्यो व्यतिरिक्तानि नाट्यलक्षणानि नाट्यालङ्काराः सन्ध्यन्तराणि चोपक्षिप्तानि येषां निर्देशः

कात्स्न्येनेमेन न कृतः। राघवभट्टेनैतेषां पृथगुनिर्देशार्थं प्रमाणमुक्तम्। यथा—

ननु धनिकेन 'षट्त्रिंशद् भूषणादीनि'[1] इत्यादि चतुर्थपरिच्छेदोपान्त्यकारिकायां ( दशरूपके कारिका ८४ ) एषामन्तर्भावः काव्यालङ्कारभावादिष्वेवोक्तः। इति चेन्मैवम्। भरतादिभिर्भिन्नतयोद्देशलक्षणयोः कृतत्वात्। यथा च षोडशेऽध्याये भरतः—'''विभूषणं'''परिदेवनं च। षट्त्रिंशदेतानि सलक्षाणि प्रोक्तानि निर्भूषणसम्मितानि। इति। अभिनवभारत्यामभिनवगुप्ताचार्येण महता प्रबन्धेन भिन्नतया स्थापितानि। तथा चैकादशाध्याये नाटकलक्षणे 'षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभित'-मित्युक्तम्। तेन त्रयस्त्रिंशन्नाट्यालङ्कारा अपि संगृहीताः।

*नाट्यलक्षणानि* ( भूषणानि वा )—

प्रथमाङ्के—'कृष्णसारे'''( १.६ )' इत्यादि 'यदालोके'''( १.९ )' इत्यन्तेन षट्त्रिंशद्भूषणमध्ये आद्यं *विभूषणं* नाम भूषणम्। 'गुणालङ्कारबहुलं भाषणं भूषणम्।' 'इदं किलाव्याज'''( १.१८ )' अनेना-*भिप्रायं* नाम भूषणम्। 'सादृश्यादभूतार्थप्रकल्पनातः'। 'सरसिजमनुविद्धं'''( १.१९ )' अनेन *प्रसिद्धिर्नाम* भूषणम्। लोकविख्यातैर्वाक्यैरर्थप्रसाधनात्। 'हला शकुन्तले, अत्रैव तावन्मुहूर्तं तिष्ठ' इत्यादिना 'अतः खलु प्रियंवदासि त्वम्' इत्यन्तेन प्रियंवदाशकुन्तलावचनाभ्यां *निरुक्तमिति* भूषणम्। अन्यार्थप्रसिद्धये निरवद्योक्तेः। 'अधरः किसलयरागः''' ( १.१९ )' अनेन *पदोच्चयो* नाम भूषणम्। सम्बन्धार्थानुरूपपदौघात्। 'राजा—कथमिदानीमात्मानं' इत्यादिना 'शकुन्तला—न युवयोर्वचनं श्रोष्यामि' इत्यन्तेनो*दाहरणं* नाम भूषणम्। गूढतुल्यार्थवाक्यत्वात्। 'मानुषीषु कथं वा'''( १.२२ )' अनेन *निदर्शनं* नाम भूषणम्। प्रसि-

---

१. नाट्यभूषणानीति नाट्यलक्षणानामेवापरं नाम। रसार्णव-सुधाकरे षट्त्रिंशन्नाट्यभूषणान्युक्तानि तान्येव धनिकेन भरतमनुसृत्य राघवभट्टेन च नाट्यभूषणनाम्ना निर्दिष्टानि। त्रयस्त्रिंशन्नाट्यालङ्कारास्तु नाट्यभूषणेभ्यो भिन्नाः। साहित्यदर्पणे षट्त्रिंशन्नाट्यलक्षणानि त्रयस्त्रिंशन्नाट्यालङ्काराः पृथगुक्तानि। एतानि लक्षणानि प्रायः सुधाकरोक्तभूषणेभ्योऽभिन्नानि।

द्धानां यथार्थानां परिकीर्तनात् पराक्षेपव्युदासार्थम्। 'स्रस्तांसा'''(१.२६)'''गमनम् अनेनेष्टमिति भूषणम्। प्रत्यक्षस्य (परोक्षस्य वा) यथारूपं यथाकालं यथादेशं दृष्टवद् वर्णनात्।

'सेनापतिः—जयतु स्वामी''' इत्यादिना 'मेदश्छेद'''(२.५)' इत्यन्तेन *दाक्षिण्य*मिति भूषणम्। चित्तानुवर्तनात्।

'किं शीतलै'''(३.१८)' अनेन *माला* नाम भूषणम्। अभीष्टार्थ-प्रकाशनात्। 'राजा—गान्धर्वेण'''(३.२०)' अनेनो*पदिष्टं* नाम भूषणम्। शास्त्रार्थं परिगृह्य विद्वन्मनोहरस्वन्तवाक्याभिधानात्। '(साहित्यदर्पणे—शुश्रूषस्य'' (४.१७)' इत्युपदिष्टस्योदाहरणम्)। 'लतावलय'''आमन्त्रये त्वां भूयोऽपि परिभोगाय' अनेन *मनोरथो* नाम भूषणम्। व्याजेन विवक्षितनिवेदनात्। 'इदमुपनतं'''(५.१९)' एतेन *संशय*नाम भूषणम्। अनिश्चयान्तवाक्यत्वात्। 'स्विन्नाङ्गुलि'''(६.१५)' अनेन *हेतु*र्नाम भूषणम्। साध्यार्थप्रसाधकत्वात्। 'राजा—यदि तावत्' इत्यादिना 'मातुराख्य''' इत्यन्तेन सप्तमाङ्केऽ*क्षरसंघात* इति भूषणम्। भिन्नार्थश्लिष्ट-वर्णकवाक्यत्वात्। (साहित्यदर्पणे—'राजा—कच्चित् सखी वो नातिबाधते शरीरसंतापः। प्रियंवदा—संपदं''' इत्यनेनाक्षरसंघात उदाहृतः) 'राजा—शकुन्तलायाः पादयोः प्रणिपत्य' इत्यादिनाऽ*नुनयो* नाम भूषणम्। अभ्यर्थनापरवाक्यत्वात्।

'राजा—उदेति कुसुमं'''(७.३०)' अनेन *मधुरं* नाम भूषणम्। 'यत्प्रत्ययेन मनसा पूज्यपूजयितुर्वचःस्मृतिप्रकाशनं'''। (साहित्यदर्पणे इदं प्रियवचो नाम।)

*नाट्यालङ्काराः—*

'वैखानसः—राजन्, आश्रममृगो''' इत्यादिना '(प्रविश्य) प्रतिगृह्यतामतिथिसत्कारः' इत्यन्तेन, *उल्लेख*नामनाट्यालङ्कारः। कार्यदर्शकत्वात्।

'राजा—विनीतवेषेण'''तपोवनानि' अत्र *'नीतिः'*। शास्त्रेण वर्तनात्। 'अनसूया—सखि न युक्तमकृतसत्कार'''गमनम्' अनेनो*पदेशः*। शिक्षायाः। 'ययातेरिव'' (४.६)' इत्याशीर्वादव्याजेन तस्य वरत्वेन

कथनाद् *आशीः*। इष्टजनाशंसायाः। 'सतीमपि ज्ञाति...(५.१७)' अनेनार्थ*विशेषणम्*। उपालम्भस्वरूपेणोक्तस्यार्थस्यानेकधोत्कीर्तनात्। 'राजा—भोः सत्यवादिन्...' इत्यादिना 'विनिपातः पौरवैः...न श्रद्धेयम्' इत्यन्तेना*क्षमा*। अल्पस्यापि परिभवस्यासह्यत्वात्। 'शार्ङ्गरवः—यदा तु पूर्ववृत्तं...विस्मृतो...'। अनेनो*त्प्रासः*। स साधुमानिन्यसाधौ रूपहासः। 'राजा—अभूतसम्पादितफलो मे मनोरथः' अनेन *प्रहर्षः*। स प्रमदाद् वाक्यम्। (साहित्यदर्पणे—'राजा—ममापि नाम सत्त्वैरभिभूयन्ते गृहाः' इत्यत्र *गर्व*नामा नाट्यालङ्कारः। 'राजा—चारुणा...अधरः' इत्यत्रा*कांक्षा* नाम नाट्यालङ्कारः। इति द्वावन्यावप्यलङ्कारौ प्रस्तुतौ राघवभट्टेनानुक्तौ)।

*सन्ध्यन्तराणि*[1]—

'तव न जाने...(३.१३)' अत्र *लेखो* नाम सन्ध्यन्तरम्। विवक्षितार्थकलिता पत्रिका लेख इति। 'इदमनन्य...(३.१६)' अनेन *साम*ेति सन्ध्यन्तराङ्गम्। 'स्त्रीणामशिक्षित...(५.१२)' अनेन *हेत्ववधारणम्*। हेतुनाऽर्थस्य निश्चयात्। अत्र परभृतादिदृष्टान्तेन स्त्रीत्वेन हेतुना मृषाभाषणलक्षणस्यार्थस्य यावद् हेत्ववधारणम्। 'राजा—युज्यते...' इत्यादिना 'भोश्चित्रं खल्वेतद्' इत्यन्तेन षष्ठाङ्के *भ्रान्ति*र्नाम सन्ध्यन्तराङ्गम्। प्रसङ्गस्याविनिश्चयाद् विपर्ययज्ञानं भ्रान्तिरिति। 'अकारणपरित्याग...' इत्यादिना 'चित्रीकृता कान्ता' इत्यन्तेन *चित्रं* नाम सन्ध्यन्तराङ्गम्। आकारस्य विलेखनात्। 'परित्रायतां देवः...संशयगतं वयस्यं...' अनेन *भय*नामकं सन्ध्यन्तराङ्गम्। आकस्मिकत्रासात्। 'आर्तानां भयमुपेतानां...(६.२७)' अत्रात्तधन्वेति स्वाभाविकक्रोधावेगसूचनम्। अनेनौ*जो* नामकम्...। निजशक्तिप्रकाशकवागुपन्यासात्। 'राजा—...त्वमिदानीं न भविष्यसि' अनेन *क्रोधो* नाम...। चेतसो दीप्तेः।

इत्थं राघवभट्टेन षट्त्रिंशन्नाट्यलक्षणेषु नाट्यभूषणानीत्यपरनामसु सप्तदश भूषणान्यभिज्ञानशाकुन्तले उक्तानि। त्रयस्त्रिंशन्नाट्यालङ्काराणां

---

१. रसार्णवसुधाकरे—

मुखादिसन्धिष्वङ्गानामशैथिल्यं प्रतीयते।
सन्ध्यन्तराणि योग्यानि तत्र तत्रैकविंशतिः॥

नव तेनात्रोदाहृतानि। एकविंशति सन्ध्यन्तराङ्गेषु चास्मिन्नाटके अष्टानां निर्देशः कृतः।

नाट्यभूषणनाट्यालङ्कारसन्ध्यन्तराणां लक्षणानि मिथो भेदश्च न स्पष्टीकृतानि। धनिकेन तूक्तं यत् षट्त्रिंशत्काव्यलक्षणानि सन्ध्यन्तराण्येकविंशतिरुपमादिष्वलङ्कारेषु हर्षोत्साहादिषु चान्तर्भावान्न पृथगुक्तानि। विश्वनाथेन साहित्यदर्पणे नाट्यलक्षणानि नाट्यालङ्कारांश्च पृथङ्निर्दिश्याप्युक्तं—एषां नाट्यलक्षणानां नाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण। एषु च केषांचिद् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्तव्यत्वाद् विशेषोक्तिः' इति। साहित्यदर्पणे सन्ध्यन्तराणां निर्देशो नास्ति। रसार्णवसुधाकरे एकविंशतिसन्ध्यन्तराणि षट्त्रिंशद्भूषणान्युक्तानि नाट्यालङ्कारास्तु न निर्दिष्टाः। काट्यवेमव्याख्यायामेतेषां त्रयाणामपि निर्देशो नास्ति।

राघवभट्टव्याख्यायामुद्धृताया मातृगुप्ताचार्योक्तेरन्तरसन्धयः 'स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिराकाशभाषितं च' इति। रसार्णवसुधाकरे स्वप्नलेखौ तु सन्ध्यन्तरे। नेपथ्योक्तिस्तु चूलिकेत्यर्थोपक्षेपकः। काट्यवेमेन वसन्तराजीयानुसारं ध्रुवालक्षणमुक्तम्। तत्र—प्रवेशसूचिका निष्काम-सूचिका प्रासादिकी विस्मृतान्तरीति चतुर्विधा ध्रुवा कथिता। ध्रुवा तु तुल्यसंविधानविशेषणा गीतिः। पताकास्थानकेऽपि तुल्यसंविधानविशेषणत्वमस्ति। ध्रुवाऽपि किमप्यर्थोपक्षेपकवत् वर्णिता। अतोऽर्थोपक्षेपकाणां स्वरूपं शनैः शनैर्विकसितमिति प्रतिभाति।

*रसभावादयः*

राघवभट्टव्याख्यायां—*शृङ्गारः*—'या सृष्टिः…(१.१)' इत्यादि सर्वत्र स्त्रीलिङ्गनिर्देशात् तनुभिः कृशाभिरिति समासोक्त्याष्टनायिकायुक्त-नायकव्यवहारसमारोपादस्मिन्नाटके शृंगाररसो व्यज्यते।

भयानकः—'ग्रीवाभङ्गाभिरामं…(१.७) इत्यत्र भयानको रसो व्यङ्ग्यः। तस्य मृगगतं भयं स्थायीभावः। दुष्यन्ताधिष्ठितस्यन्दनावलोकनमालम्बनविभावः। तदुपनतशरपतनौत्सुक्यादीन्युद्दीपनविभावाः। ग्रीवाभङ्गार्धभक्षिततृणस्खलनशुष्कौष्ठकण्ठमुखवैवर्ण्यशरीरसंकोचाश्रुस्खला-

दयोऽनुभावाः । त्रासश्रमशङ्काऽऽवेगादयो व्यभिचारिणः । कम्पादयः सात्त्विकाः । एतै रसो व्यज्यते । तदुक्तं—

रक्षःपिशाचादिधनुष्पाण्यादेर्भीषणाकृतेः ।
दर्शनं श्रवणं शून्यागारारण्यप्रवेशयोः ॥

श्रवणं चानुसन्धानं बन्धूनां वधबन्धयोः ।
एवमाद्या विभावाः स्यु रथनेत्रकराङ्घ्रिणः ॥

मध्ये मध्ये स्तम्भकम्पौ रोमाञ्चानां चयस्तथा ।
शुष्कौष्ठतालुता कम्पहृदयत्वं विवर्णता ॥

मुखस्याथ परावृत्य वीक्षणं स्वाङ्गगोपनम् ।
पलायनं स्वरे भेदो गात्रस्तम्भो विलक्षता ॥

कांदिशीकत्वयुग्दृष्टिरनुभावा भवन्त्यमी ।
स्तम्भादयोऽश्रुतत्यक्ता दैन्यमावेगचापले ॥

शङ्कामोहावपि त्रासापस्मारमरणादयः ।
यत्र सञ्चारिणः स्थायि भयं स्यात् स भयानकः ॥ इति ।

'तीव्राघातप्रतिहत…( १.१० )' इत्यस्मिन् भयानको रसः । गजगत-भयं स्थायिभावः । दुष्यन्तसेनारथावलोकनं विभावः । पार्श्वावलोकन-पलायनादयो व्यभिचारिणः ।

'सायंतने…( ३.२४ )' अत्रापि भयानको रसः । उक्तं च—

भये तु मन्तुना घोरदर्शनश्रवणादिभिः ।
चेतस्यतीव चाञ्चल्यं तत्प्रायो नीचमध्ययोः ॥ इति ।

तद्भयं स्थायीभावः । पिशिताशनच्छायावलोकनं विभावः । पद्यस्थ-भयशब्देन त्रासलक्षणो व्यभिचारी । उद्दीपनभावादिकं स्वयमूह्यम् ।

करुणः

चतुर्थाङ्के कण्वप्रवेशानन्तरं 'तात…तपोवनं कथं प्रविशावः' इत्येत-दन्तेन करुणो रसो ध्वनितः । तल्लक्षणम्—

इष्टबन्धुवियोगश्च…इत्यादि ।

*अद्‌भुतः*

पञ्चमाङ्के—'( नेपथ्ये ) आश्चर्यं······' इत्यादिना 'या निन्दन्ती··· ( ५.३० )' इत्येतेनाद्‌भुतो रसो ध्वनितः। तल्लक्षणं—दुर्लभाभीष्ट-सम्प्राप्तिः···इत्यादि।

सप्तमाङ्के—'उभे—कथं गृहीतमनेन। ( इति विस्मया···अवलोक-यतः )' अनेनैतत् स्थायी अद्‌भुतरसो व्यज्यते। उक्तं च धनिकेन—'कुर्यान्निर्वहणेऽद्‌भुतम्' इति। आदिभरतेनापि 'निर्वहणे कर्तव्यो नित्यं हि रसोऽद्‌भुतः कविभिः'। इति।

*हास्यः*

द्वितीयाङ्के 'त्रिशङ्कुरिवान्तराले···' इत्यादिषु विदूषकवचनेषु हास्य-प्रतीतिः स्फुटैव। उक्तं च—विदूषकस्य हास्यं तु नायके हास्यकारणम्। इति। तल्लक्षणं—भाषणाकृतिवेषाणां···इत्यादि।

*बीभत्सः*

षष्ठाङ्के—'( नेपथ्ये ) एष त्वामभिनवः···( ६.२७ )' अनेन बीभत्स-रसो ध्वनितः। तल्लक्षणं—'हृद्यानां तु पदार्थानां दर्शन···'इत्यादि। 'बीभत्सस्तु त्रिधा मतः। आद्यौ रुधिरविष्ठादि शुद्धाशुद्धविभावजौ'। इति। दशरूपकेऽपि—'रुधिरान्त्रकीकसवसास्नाय्वादिभिः क्षोभणः' इति द्वितीयो भेदः। इति।

*रौद्रः*

'( नेपथ्ये )—अविधा···' इत्यादिना 'यो हनिष्यति···( ६.२८ )' एतदन्तेन रौद्रो रसो ध्वनितः। तल्लक्षणं—हन्तृप्रकृतयो रक्षोदैत्याद्यनय-कारिणः···' इत्यादि।

*उद्दीपनविभावाः*

'कार्या सैकतली···( ६.१७ )' अनेन पद्येनाश्रमस्थं पूर्वानुभूतं तदा-नीन्तनमुद्दीपनं विभावगणं स्मरति। ते च स्मृताः सम्भ्रमप्रवासहेतुकं विरहमेव पोषयन्ति। 'अहो प्रवाससुभगोऽयमुद्देशः। शक्यमरविन्द··· ( ३.४ )।' ननु पवनस्य सर्वतोऽप्युद्दीपकत्वाद् दुष्यन्तस्य च विरहित्वात् 'पवन आलिङ्गितुं शक्य' इति तस्य मनोविनोदहेतुत्वं कथमिति चेत्।

'इमामुग्रातपवेलां मालिनीतीरेषु शकुन्तला गमयति' इति पूर्वमुक्तेरत्र च मालिनीतरङ्गाणां कणवाहीत्युक्तेर्नायिकासंस्पृष्टत्वं व्यज्यते। तेन विनोदकारित्वमुक्तम्।

*व्यभिचारिभावाः*

प्रथमाङ्के 'मानुषीषु कथं वा स्यात्…(१.२२)' इत्यन्तेन '(शकुन्तलाऽधोमुखी तिष्ठति)' इति। स्वस्तुत्याकर्णनेन। अत्र शृङ्गारलज्जाख्यो व्यभिचारी ध्वनितः। उभयानुभावत्वादधोमुखत्वस्य।

'(शकुन्तला राजानमवलोक्य सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता)' इत्यनेन दर्भाङ्कुरेणेत्यादि समर्थितं भवति। सहैवेति लज्जा ध्वनिता। 'अभिमुखे मयि…(२.११)' अनेन शृङ्गारलज्जा ध्वन्यते। तत्रैव 'हसितमन्यनिमित्त…' अनेनापि सैव व्यज्यते। '…पर्युत्सुकीभवति—(५.३)' अत्रौत्सुक्यम्। नन्वौत्सुक्यलक्षणस्य भावस्य शब्दवाच्यत्वं दोष इति चेन्न। अत्र न तथा विभावादेरौत्सुक्यप्रतीतिर्यथा पुनरौत्सुक्यग्रहणात्। एतदभिप्रायेणैव 'न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचिद्' इत्युक्तम्। 'स्वप्नो नु…(६.१०)' इत्यनेनोत्कण्ठातिशयो व्यज्यते। 'राजा—बाष्पेण…(७.२३)' अनेन चातिविरहक्लान्तत्वं व्यज्यते। 'राजा—उद्धृतविषादशल्यः…(७.२५)' इह श्लोके शोकस्य वक्ष्यमाणत्वाद् अतिखेदं व्यङ्ग्यम्। अपराधिनानुशयो हि विषादः।

*स्थायिभावाः*

'राजा—अनुयास्यन् मुनितनयां…(१.२५)' अत्रानुगमनकरणे वेगस्यैव निराकरणात् तात्त्विकानुरागनिषेधाभावाद् रतेः स्थायित्वं ध्वनितम्। 'राजा—(शकुन्तलां दृष्ट्वा) का स्विदवगुण्ठनवती…(५.१३)' एवंभूततदवलोकनेन स्थायिन्या रतेरनुसन्धानम्। 'इदमुपनतं…(५.१९)' इत्यस्मिन् 'भ्रमर इव विभाते…' अत्र 'विभाते (प्रभाते)' इत्युक्तेस्तदनन्तरं रविकिरणैर्हिमे वीते मकरन्दभागोऽवश्यः। एवमिहाप्यभिज्ञानदर्शनेन शापे गते तत्स्वीकारोऽवश्यामेति द्योतयन्त्योपमया रतेः स्थायित्वदार्ढ्यं ध्वनितम्।

'मय्येव विस्मरण…(५.२३)' अत्र 'भेदाद् भ्रुवोः कुटिलयोः' इत्यादिना सानुनीयमाना यावत् कोपं न मुञ्चेत् तावत् कामस्य शरासनं

भग्नमेव व्यर्थत्वमेतदनुनयाभावादिति तात्त्विकः कोप इति वस्तु ध्वन्यते। अनेन स्थायिन्या रतेरनुसन्धानम्।

*विप्रयोगशृङ्गारावस्थाः*

'राजा—कामं प्रिया न सुलभा…(२.१)' अनेन पूर्वरागविप्रलम्भाद्य*भिलाषो* नामावस्थोक्ता।[1] लक्षणं सुधाकरे—'सङ्गमोपायरचिता प्रारब्धाध्यवसायतः। सङ्कल्पेच्छा समुद्भूतिरभिलाष इतीरितः' । इति । 'अद्यापि तस्य तामेव चिन्तयतः…' इत्यादि विदूषकवचसा *चिन्तेत्य*वस्थोपनिबद्धा। 'केनोपायेन संसिद्ध्येत् कदा कुत्र समागमः। का चेयं किंस्वभावा च चिन्तनं तदुदीरितम्' ॥ इति लक्षणम्। अत्र पूर्वापरविपर्ययो न शङ्कनीयः। वाक्यद्वयस्याप्यनुवाद्यत्वात्।

'राजा—एवमात्माभिप्राय…' इत्यादिना 'कृत इव मुग्धविलोकितोपदेशः…( २.३ )' इत्यन्तेना*नुस्मृति*स्तृतीयावस्था सूचिता। यथा—

अर्थानामनुभूतानां देशकालानुवर्तिनाम्।
सातत्येन परामर्शो मानसः स्यादनुस्मृतिः ॥ इति ।

तत्रानुभावा निश्वासः कृत्यनुत्साहचिन्तने।

'गाहन्तां महिषाः…(२.६)' अत्राभिलापविप्रलम्भ एतत्प्रकरणव्यङ्ग्यस्तत्र तृतीयानुस्मृत्यवस्थायाः *कार्यानुत्सादन*लक्षणस्यानुभावस्यातिस्फुटत्वात्। 'चित्रे निवेश्य…( २.८ )', 'अनाघ्रातं पुष्पं…( २.१० )' एताभ्यां *गुणकीर्तनं* नाम चतुर्थावस्था। सौन्दर्यादिगुणश्लाघा गुणकीर्तनमिति। तृतीयाङ्के '( ततः प्रविशति कामयमानो राजा )' इत्यादिना '…आत्मानं विनोदयामि' इत्यन्तेनो*द्वेगो* नाम पञ्चम्यवस्था सूचिता। यथा—

मनसः कम्प उद्वेगः कथितस्तत्र विक्रिया।
चित्तसन्तापनिःश्वासौ द्वेषः शय्यासनादिषु।
स्तम्भचिन्ताश्रुवैवर्ण्यदीनत्वादय ईरिताः ॥ इति ।

'विनोदेन क्लेशमपहरामि' इति भावः। अन्यत्र कचिदपि विनोदाभावान्निःश्वस्येत्युक्तिः। तत्र दीर्घत्वमुष्णत्वं विरहित्वात्। 'रम्यं द्वेष्टि… ( ६.५ )' इत्यरुचिः। अरुचिर्वस्तुवैराग्यमिति। 'प्रत्यादिष्ट…( ६.६ )' अत्र चिन्तेति *सङ्कल्पः*, जागरेति *निद्राच्छेदः*, क्षीण इति *तनुता*, प्रत्यादि-

[1] दशरूपके तु 'असंशयं क्षत्रपरिग्रहक्षमा…(१.१९)' इत्यत्राभिलाष उक्तः।

ष्टेति *विषयनिवृत्तिः*, इति कामावस्थाः सूचिताः। अन्ये आचार्याः प्रवास-विप्रलम्भेऽन्याः कामदशा आहुः। यथा—

अङ्गेष्वसौष्ठवं चैव पाण्डुता कृशताऽरुचिः।
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह॥ इति।

ततः 'प्रत्यादिष्ट' इत्यनेनाङ्गेष्वसौष्ठवं, 'क्षीण' इत्यनेन *कृशता*, 'रम्यं द्वेष्टि' इति चारुचिः। 'राजा—( ध्यानमन्दं परिक्रम्य )...' अत्र ध्यान-मन्दमित्यनेना*नालम्बनतो*क्ता। अनालम्बनता वापि शून्यता मनसः स्मृता। इति। 'अक्लिष्टबालतरुः...( ६.२० )...' विदूषकः—एव ताव-दुन्मत्तः...' इत्यत्रो*न्मादा*वस्था सूचिता। 'राजा—संरोपितेऽप्यात्मनि... ( ६.२४ )' इत्यादिना '( इति मोहमुपगतः )' इत्यन्तेन *मूर्च्छना* नाम कामदशा। इत्थं दशावस्थासु दशमावस्थामरणातिरिक्ता दुष्यन्तस्य नव कामावस्थाः सूचिताः।

*नायिकायाः* कामावस्थाः

'अभिमुखे मयि...( १.११ )' अनेना*नुरागो* ध्वनितः। 'दर्भाङ्कुरेण... ( २.१२ )' अनेनोत्कण्ठातिशयो व्यज्यते। अनुरागेङ्गितं च। तृतीयाङ्के 'दूरगतमन्मथाऽक्षमा कालहरणस्य' इत्यत्राद्यावस्थात्रयं प्रथममेवोक्तम्। यथा—'तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला' इत्यादि। *तनुता*ऽनन्तरमेवोक्ता। यथा—'प्रियंवदा—अनुदिवसं खलु परिहीयते अङ्गैः' इत्यादि। 'किं वीजयतो मां...' अनेन *तापाधिक्यं* तेनान्य-विषयासंवेद्यत्वं सूचितम्। *विषयनिवृत्ति*श्चावस्था द्योतिता। एतयोः सख्योरग्रेऽभिलाषकथनादेव *त्रपानाश* उक्तः। परिहार्यावस्थात्रयमेवा-वशिष्टमिति दूरगतमन्मथत्वम्। 'उन्नमित... ( ३.१२ )' अत्र रतेरेव षष्ठावस्थाऽनुरागः। राग एव स्वयं संवेद्यदशाप्राप्त्या प्रकाशितः। यावदाश्रयवृत्तिश्चेदनुराग उदीरितः। इति।

तथा च—

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽर्थसंकल्पः।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः।
उन्मादो मूर्च्छा मृतिरित्येता स्मरदशा दशैव स्युः॥

ननु पूर्वमभिलापचिन्तनेतिदशावस्था उक्ताः। अधुना तु नयनप्रीत्यादय उक्ता इति पूर्वापरानाकलनादिति चेन्न, आचार्यमतभेदमात्रत्वात्। अत एवोक्तम्—

अभिलाषाद्यवस्थानां चक्षुःप्रीत्यादिकास्वपि।
सम्भवादितरत्रापि तासां स्यादैक्यमेव तत्।
चिरन्तनप्रसिद्ध्या तु विविच्य कथिता इमाः॥ इति।

'ननु स राजर्षिः…प्रजागरकृशो लक्ष्यते'। उक्तस्य पुरुषत्वाद् विशेषतो राजत्वात् तत्रापि स्वयं दुष्यन्त इति विषयनिवृत्तिलज्जानाशलक्षणे अवस्थे न वर्णिते एनं प्रति। अधीरत्वेनानौचित्यप्रसङ्गात्। इति।

काट्यवेमटीकायां रसभावादीनां निरूपणं नास्ति। तथापि नायकनायिकयोः कामावस्थास्तत्रोक्ताः। ता यथा—

प्रथमाङ्के 'राजा—…पादपान्तर्हित एव विस्रब्धं पश्यामि' अत्र 'अभिलाषो' नाम प्रथमावस्था। 'शकुन्तला—किं नु खलु…विकारस्य गमनीयास्मि संवृत्ता।' अत्र प्रतीयमानो दुष्यन्तगोचरः शकुन्तलाभिलाषः प्रथमावस्था। 'शकुन्तला—(सव्याजं विलम्ब्य)…' अत्र शकुन्तलामनःसंयोगो द्वितीयावस्था। अनुरागेण सततं तद्विचिन्तनात्। 'दुष्यन्तः—'गच्छति पुरः…(१.३०)' अत्र दुष्यन्तस्य मनःसंयोगो द्वितीयावस्था। 'राजा—मनस्तु तद्भाव…(२.१)' इत्यत्र भाविसंगमगम्यत्वात् सङ्कल्प इति तृतीयावस्था। तत्समागमगोचरमनोरथत्वात्। 'राजा—चित्रे निवेश्य…(२.९)', 'अनाघ्रातं पुष्पं…(२.१०)' अत्र रूपगुणादीनां वर्णितत्वाद् 'गुणकीर्तनं' नाम चतुर्थावस्था। 'राजा—क्व नु खलु…क्लान्तमात्मानं विनोदयामि।' इत्यनेन तृतीयाङ्के क्रियाद्वेषो नाम पञ्चमावस्था।

'अन्यत्र भोग्यवस्तुषु मनोविद्वेषत्वात्। 'शकुन्तला—किं वीजयन्तो मां…' अत्र तापो नाम षष्ठावस्था। पूर्वमनुक्तोऽपि शकुन्तलायाः सङ्कल्पगुणनुतिक्रियाद्वेषा एवेत्यनुसन्धेयम्। अवस्थानां क्रमाभावात्। 'राजा—इदमशिशिर…(३.१०)' अत्र तापो नाम षष्ठावस्था सूचिता। 'शकुन्तला—तव न जाने हृदयं…( ३.१३)' अत्र दीनोक्त्या मानत्यागो

नाम सप्तमावस्था। 'राजा—भद्रे…सर्वथानुगृहीतोऽस्मि।' अत्रौत्सुक्यापरित्यागो नाम सप्तमावस्था।

इत्थं दुष्यन्तशकुन्तलयोर्गान्धर्वविवाहपर्यन्तमेव कामावस्थाः सूचिताः। अतः सप्तमावस्थावसाना एव कामदशा दर्शिताः।

*पात्रविवेचनम्*

राघवभट्टव्याख्यायां—*नायकः*

प्रथमाङ्के 'ततः प्रविशति…'इत्ययं धीरोदात्तो नायकः। धीरोदात्तत्वमस्य 'स्वसुखनिरभिलाषः…(५७)' इत्यादिना स्फुटमेव दर्शितम्। 'शेषा मन्त्रिस्वायत्तसिद्धयः' इत्युक्तेश्चोभयायत्तसिद्धत्वं चास्य। 'त्वन्मतिः केवला…(६.३२)' इत्यनेन च दर्शितम्। 'भव हृदय…(१.२५)' अनेन राजगतस्वभावस्य स्थैर्यं द्योतितम्। 'विनयेन प्रतिवारितः…(१.२६)' इति। 'इन्द्रियाणां जयं प्राङ् विनयं भरतो मुनिः। 'नीवाराः शुकगर्भ…(१.१४)' अनया स्वस्वचेष्टाविष्टमृगस्थित्याश्रममञ्जुलतया नायकस्य प्रीत्युत्कर्षो व्यज्यते। 'अनवरतधनुर्ज्या…(२.४)' अत्र प्रथमपङ्क्तौ बलं ध्वन्यते। 'रविकिरणसहिष्णु…' अनेन दुःखसहिष्णुत्वं, 'स्वेदलेशैरभिन्नं…' अनेन श्रमजयित्वं, 'अपचितमपि…लक्ष्यं' अनेन महापुरुषचिह्नं शालप्रांशुत्वादिः। 'विश्रामं लभतां…(२.६)' चकारेण चेदमस्मद् धनुरारूढमवतीर्णं वा तदेव संरम्भगोचराणां भयविस्रम्भाविति कोऽपि प्रकर्षो व्यज्यते। अत एवास्मादिति बहुवचनमपि सबीजम्। अन्ये तु वदन्ति राज्ञो नायिकावियोगेन दुःखितस्यान्येषां तद्वियोगदुःखं मा भवत्वित्यभिप्रायेणोक्तिरिति। 'अध्याक्रान्ता वसति…(२.१४)', 'नैतच्चित्रं…(२.१५)' आभ्यां युद्धवीरो ध्वन्यते। तल्लक्षणं—

अविस्मयादसम्मोहादविपादाच्च यः सताम्।
धर्माद्यर्थविशेषेषु कार्यतत्त्वविनिश्चयः॥

तपश्च विनयः कीर्तिः पराक्रमणशक्तिता।
इत्यादयो विभावाः स्युः। इति॥
युद्धवीरे हर्षगर्वामर्षाद्या व्यभिचारिणः।
असहायेऽपि युद्धेच्छा समरादनिवर्तनम्॥

भीताभयप्रदानाद्या अनुभावाः प्रकीर्तिताः ।
उत्साहः स्थायिभावश्च धीरा धीरं बभाषिरे ॥ इति ।

'आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ( २.१६ )' अनेनावश्यकर्तव्यत्वं भयापसरणं च द्योतिते । 'क्व वयं क्व परोक्षमन्मथो…( २.१८ )' 'क्व वयं' इत्यनेनानेकराजोपचारयुक्तत्वं नानावैदग्धीकुशलत्वं च व्यज्यते । 'उन्नमितैक…( ३.१२ )' अत्र 'मयि' इति स्वस्याधिकरणत्वेन सुभगंमन्यतां दर्शयति । 'दुष्यन्तेनाहितं तेजः…( ४.३ )' अत्र दुःष्यन्तेनेति नामानुकीर्तनेन सोमवंशोद्भवत्वेन किमप्याभिजात्यमौदार्यविनयादिगुणसम्पन्नत्वं व्यज्यते । 'अभिजनवतो…( ४.१८ )' अत्राभिजनवत एतद् दयादाक्षिण्यदानधर्मभीरुत्वादिधर्मशतं व्यज्यते । पञ्चमाङ्के 'असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति' अत्र 'मुक्तासन' इत्यनेन विनयातिशयः, प्रतिपालयतीति भक्त्यतिशयो, वर्णाश्रमानां रक्षितेति सर्वदा पालनासक्तत्वम् । षष्ठाङ्के 'महाप्रभावो राजर्षिः' इति चेट्योक्तिः । तयाः स्त्रीत्वाद् यथाश्रुतग्राहितया नायकप्रभावातिशयवर्णनीयतया चैवमुक्तम् । 'प्रत्यादिष्ट…( ६.६ )' अनेन नायकसात्त्विकगुणेषु—माधुर्यं नाम गुणः । आत्मनस्तेजोगुणाद् दीप्तिलक्षणात् क्षीणोऽपि कृशोऽपि क्षीणत्वेन नालक्ष्यते । 'तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता सर्वावस्थासु सर्वत्र' । इति । 'त्वन्मतिः केवला…( ६.३२ )' इत्यत्र 'पूर्वं प्रजापालने उभयमपि व्याप्रृतमासीत् । अधुना मे मतिरेव' इत्यनेनोभयायत्तसिद्धित्वमात्मनः सूचितम् । 'अन्यस्मिन् कर्मणि' इति दानवमारणे । अनेन लोकद्वयरक्षकत्वमस्य ध्वनितम् । सप्तमाङ्के—'राजा—अनुष्ठितनिदेशोऽपि…अनुक्तमिवात्मानं समर्थये' अत्र इन्द्रस्य प्रत्युपकारशीलत्वं विनययुक्तत्वं गुणग्राहित्वं, आत्मनस्तु परमशौर्यशालित्वमिन्द्रेण तथा पूजितत्वादत्यन्तसौभाग्यास्पदत्वंञ्च व्यज्यते । इन्द्रेण मन्दारपुष्पमाला परिधापिता, न दत्ता । अतो गौरवस्याधिक्यम् ।

*नायिका*

'सरसिजमनुविद्धं… ( १.१७ )' अनेव शकुन्तलाया माधुर्यं नामायत्नजोऽलङ्कार उक्तः । सर्वावस्थाविशेषेषु माधुर्यं रमणीयता । 'अधरः किसलयरागः…( १.१६ ) अत्राङ्गेष्विति बहुवचनेन वदने कान्तिमुक्ता नयनयोस्तरलता कण्ठे कम्बुत्रिरेखावत्त्वं वक्षसि स्तनोर्ज्म्भणं नाभौ

गम्भीरता नितम्बे मध्यनिम्नत्वमुभयभागे चतुरस्रत्वं जघनजङ्घाजानुमण्डलोद्देशानां मांसलत्वं गतौ सविलासित्वमित्यादि ध्वनितम्। 'शकुन्तला—अम्भो…वदनं मे मधुकरोऽभिवर्तते' अनेन तस्याः पद्मिनीत्वम्। 'शकुन्तला—किं न खाल्विमं प्रेक्ष्य…' इत्याद्यनेनास्या भावो नामाङ्गजो विकार उक्तः। 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इति। 'शकुन्तला—हृदय मोत्ताम्य…अनसूया मन्त्रयते' अनेन हावलक्षणोऽधिकार उक्तः। 'भावादीषत्प्रकाशो हावः' इति। 'शकुन्तला—(शृङ्गारलज्जां नाटयति)' इत्यनेन हेलालक्षणोऽङ्गजो विकारः। 'अत्यन्तसमालक्ष्यो विकारः हेला' इति। '(अधोमुखी तिष्ठति)' इति स्वस्तुत्याकर्णनेन। अनेन शकुन्तलाया उत्तमत्वं द्योतते। 'अनुयास्यन् मुनितनयां…(१.२४)' अत्रेनामिति वक्तव्ये मुनितनयामित्युक्तस्तस्या मुग्धत्वद्योतनाय। 'स्रस्तांसा…(१.२७)' इत्यत्रापि स्रस्तावसौ बाह्वतिमात्रलोहिततलौ, प्रमाणाधिकः श्वास इत्यादिनातिमृदुता ध्वन्यते। 'वाचं न मिश्रयति…(१.२८)' अनेन मुग्धाया गात्रजविलास इति भावः। नागरसर्वस्वे—

> यो वल्लभासन्नगतो विकारो गत्यासनस्थानविलोकनादौ।
> नानाविधाकूतचमत्कृतिश्च पराङ्मुखं चास्यमयं विकारः॥ इति।

> अत्रानुरागेङ्गितं च। तदुक्तं मदनोदये—
> विकारो नेत्रवक्त्रस्य तद्वाक्यश्रवणादरः। …
> अन्यव्याजेन तद्वीक्षाअनुरागेङ्गितं भवेत्॥ इति।

द्वितीयाङ्के—'आश्रमललामभूतां' इत्यनेन सौन्दर्यातिशयो व्यज्यते। 'चित्रे निवेश्य…मनसा विधिना कृता नु (२.९)' अत एव करतलस्पर्शाद्यभावात्तादृशं कान्तिमत्त्वमेतादृग्लक्षणमादिकमितिभावः। अनेन 'यत् स्पर्शासहत्वाङ्गेषु कोमलस्यापि वस्तुनः। तत्सौकुमार्यम्' इति सौकुमार्यं ध्वनितम्। 'अनाघ्रातं पुष्पं…(२.१०)' अत्रानाघ्रातमित्यनेन मोदसत्ता, 'कररुहैरलूनमित्यक्लान्तत्वं, अनाविद्धमिति निर्दोषत्वं' ध्वन्यते। 'नवं मधु' तादृक्तेनाभूतरसमित्यर्थः। अनेनातिहृद्यत्वं, अखण्डमित्यनेनात्यन्ताभिलषणीयत्वम्। अनाघ्रातमित्यादिकैर्विशेषणैः कन्यात्वेन स्वयोग्यतां सूचयन् पुष्पादिभिरुपमानैः क्रमेण परिभोगयोग्यता कान्तिमत्ता

मुग्धता हृद्यतोत्तमजनाभिलषणीयता च ध्वनिता। अथ पञ्चभिरुपमानैर्घ्राणास्यचक्षूरसनेन्द्रियतर्पकत्वमपि ध्वनितम्। 'अभिमुखे मयि…२.१२' इत्यनेन हसितमन्यनिमित्त…(२.१२)' इत्यनेन च शृङ्गारलज्जा व्यज्यते। अनेनास्या उत्तमनायिकात्वं ध्वन्यते। तदुक्तं मातृगुप्ते 'उत्तमस्य समुद्दिष्टं स्मितं हसितमेव च' इति। अनेनानुरागो ध्वनितः। विनयवारितवृत्ति…(२.१२)' अत्र विनयः। ईक्षणसंहरणेनान्यनिमित्तकृतोदयेन हसितेन च मदनो न विवृतः। हेलामोट्टायितादेर्भावस्य प्रकाशिना च न संवृतः। अनेन मुग्धानायिकात्वम्। 'मुग्धा नववयःकामा' इति।

'नाना विकारैः सुव्यक्तः शृङ्गाराकृतिसूचकैः।
हाव एव भवेद् हेला।' इति।

स्वाभिलाषप्रकटनं मोट्टायितमितीरितम्। इति गात्रजो विलासः। नवकामत्वेन मुग्धत्वं प्रथमं यौवनमपि ध्वनितम्। 'दर्भाङ्कुरेण…(२.१२)' तन्वीत्यादेव गमनासहत्वं नतु दर्भाङ्कुरेण। तस्य सत्त्वे व्याजो न स्यात्। 'मदिरेक्षणे…(३.१६)' (इति मुखमुन्नमयितुमिच्छति शकुन्तला नाट्येन परिहरति)' अनेन मुग्धाव्यवहारोऽप्युक्तः। 'का स्विदवगुण्ठनवती… (५.१३)' अत्र लावण्यमुक्तम्। यथा—

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरं।
प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते॥ इति।

'त्वमर्हतां…(५.१५)' अत्र 'शकुन्तला मूर्तिमती च सत्क्रिया' इत्यनया पङ्क्त्या चाखिलजनपूज्यत्वमस्या ध्वनितम्। 'तव सुचरित… (६.११)' अत्र 'अरुणनखमनोहरा' इत्यनेनाङ्गुलीनां योग्यत्वं व्यनक्ति। यथा सामुद्रे स्त्री-लक्षणेऽङ्गुलीनां वर्णनं—नातिह्रस्वा नातिदीर्घा… तादृगङ्गुलयोर्यस्याः सा भवेद् राजवल्लभा' इति। 'लावण्यरेखया… (६.१४)…' इत्यादिना तस्या लावण्यं ध्वनितम्।

काव्यवेमटीकायां क्वचिदेवोक्ता नायकनायिकयोर्गुणानां चर्चा। यथा—'क्व पौरवे शासति…(१.२१)' तद् राजभावे, सन्देहजनकत्वेन प्रच्छादनरूपं चातुर्यं प्रकटयति। यथा वा 'स्वरूपोद्भयेन…(२.६ श्लोके)'—अनेन करतलस्पर्शक्लेशितेभ्योऽङ्गेभ्यो मनोनिर्मितान्यङ्गानि सुकुमारतराणीति गम्यते। 'अनाघ्रातं पुष्पं…(२.१०)' अनेन सौरभं

कररुहैरलूनमिति सौकुमार्यं, अनाविद्धं रत्नमिति कान्तिमत्वं, अनास्वादितरसमिति चास्वाद्यत्वम्। पुण्याणामनुभवितृसम्बन्धिनामखण्डमन्यूनं फलमित्यत्यन्तं स्पृहणीयत्वम्।

अन्यपात्रविषये 'गौतमी नाम कण्वस्य भगिनी' इति कथितं काट्यवेमेन।

*अभिनयसङ्केताः*

राघवभट्टव्याख्यायामभिनयविषयका सूचनाः अपि यत्र तत्र स्पष्टीकृताः। यथा—'सूत्रधारः—आर्ये यदि नेपथ्यविधानमवसितं…' अत्र नेपथ्यं मषीवेषश्च मषीवेषस्य लक्षणं नाट्यलोचनादुद्धृत्य चतुःस्वभावजान् वर्णान् अन्यान् संयोगजवर्णान् अङ्गवर्तनार्थं च निरूप्य कस्य पात्रस्य को वर्णो भवेदित्यादि व्याख्याकारेण विवेचितम्। 'शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते' इति कथयित्वा कस्य को वेषो भवेदिति वेष्टना बद्धपट्टानि च प्रतिशीर्षाणि कारयेत्' इत्यादि च बहुना ग्रन्थसन्दर्भेण प्रतिपादितम्। प्रथमाङ्के—'( शकुन्तला वृक्षसेचनं रूपयति )' तत्राभिनयः—'नलिनीपद्मकोशौ कृत्वा स्कन्धप्रदेशं नीत्वावधूतेन शिरसा मनाङ्नमितया देहयष्ट्या च सहाधोमुखौ अवनीतौ' इति। तल्लक्षणं[1]—आश्लिष्टस्वस्तिकौ……'नलिनीपद्मकोशौ तौ। इति। 'यदधः सकृदानीतमवनीतं तदुच्यते।' इति।

'शकुन्तला भ्रमरबाधां रूपयति )' स चाभिनयो विधूतेन शिरसा कम्पिताधरेण मुखदेशस्थितेन पराङ्मुखतलेन पताकेनेति। तल्लक्षणं—'तिर्यगगतं द्रुततरं विधुनं तत्प्रयुज्यते। शीतार्ते ज्वरिते भीते'। इति। 'तर्जनीमूलसंलग्ना…' इत्यादि पताकालक्षणम्।

'( जनान्तिकम् )'—दशरूपके—त्रिपताकाकरेणान्यान् अपवार्य…' इति। सङ्गीतरत्नाकरे—स एव त्रिपताकः स्याद् वक्रितानामिकाङ्गुलिः। इति।

'( शकुन्तला शृङ्गारलज्जां रूपयति )'—परावृत्तेन शिरसा लज्जितया

---

१. राघवभट्टोक्तानि सम्पूर्णलक्षणान्यत्र विस्तारभयान्नोद्धृतानि।

दृशा च । 'पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् । तत्कार्यं कोपलज्जादि-कृते वक्त्रापसारणे' । इति । 'मिथोऽभिगामिपक्ष्माप्यधस्तादुगततारका । पतितोर्ध्वपुटा दृष्टिर्लज्जया लज्जिता मता ।' इति ।

द्वितीयाङ्के—'एष बाणासनहस्ताभिः···परिवृत्तः' इति मृगयावेष-सूचकः । 'स्निग्धं वीक्षितं···( २.२ )' साभिलाषं व्याजावलोकनं कृतम् । ''विकाशिस्निग्धमधुरा बिभ्रती भ्रुवौ । कटाक्षिणी साभिलाषा दृष्टिः स्निग्धा भिधीयते' इति । 'विलासादिव···', 'यो वल्लभासन्नगतो विकारः' इति पूर्वोक्तम् । '( सव्याजं विलम्ब्य )', 'दर्भाङ्कुरेण···' अथानुरागेङ्गितं । 'विलम्बस्तु पथि व्याजात् परावृत्यापि दर्शनम् ।' इत्यादि । 'हसितमन्य-निमित्त···( २.११ )' मातृगुप्ते—'विकासितकपोलान्तमुत्फुल्लामललोच-नम् । किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः ।' इति ।

तृतीयाङ्के—'शिष्यः-( आकाशे )······( अकर्ण्य )' नाट्यधर्मोऽयम् । आकर्णनं च पार्श्वावनतेन शिरसा स्तब्धेन नेत्रेण । 'पार्श्वस्याभिमुखं यत्तु पार्श्वावनतमुच्यते ।' 'प्रयोज्यमाकर्णनादौ पार्श्वस्थस्यावलोकने । यत्तु स्यान्निश्चलपुटं स्तब्धनेत्रं प्रचक्षते ।।' इति । 'राजा—(मदनबाधां निरूप्य)' इति लोलितेन शिरसा दोलेन हस्तकेन शून्यया दृष्टयेत्यादि ज्ञेयम् । ''शिरः स्याल्लोलितं सर्वदिक्कैः शिथिललोचनैः ।' इति । 'लम्बमानौ पताकौ तु श्लथांसौ शिथिलाङ्गुली । दोलो भवेदसौ' इति । अथवा दोलस्थाने कर्कटं कुर्यात् । 'अन्योन्यस्यान्तरैर्यत्राङ्गुल्यो···कर्कटः सोऽभिधीयते । अन्तःस्थिताङ्गुलिः पृष्ठे त्वङ्गुलीनां हनुं दधत् । चिन्तायामथ खेदे वा' इति । अत एवोक्तम्—सूचयन्त्यान्तरं भावं ये कराः कर्कटादयः । विषण्णा-दिष्वपि प्रायः प्रयोज्यास्ते सतां मताः ।' इति ।

'( ततः प्रविशति यथोक्तव्यापारा शकुन्तला )' मदनबाधया शीतल-शयनतलनिपतननलिनीपत्रवातादिव्यापारः । '( सख्यौ विषादं नाटयतः' )—इति—धुतेन शिरसा विषण्णया दृष्ट्या चेति ज्ञेयम् । 'पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः । विषादेऽनीप्सिते ज्ञेयम् ।' इति । या दृष्टिः पतितापाङ्गा विस्फारितपुटद्वया । निमेषिण्यस्ततारा विषण्णा च विषादिनी ।।' इति । परस्परावलोकनं शङ्कासूचकम् । '( मुखमस्याः

समुन्नयितुमिच्छति' )—त्रिपताकस्थोत्तानाभ्यां मध्यमातर्जनीभ्यां चिबुकदेशगताभ्याम्' इति ज्ञेयम्। '( शकुन्तला परिहरति नाट्येन )' इति परावृत्तेन शिरसा विनिगूहिताधरेण। 'पराङ्मुखीकृतं शीर्षं······वक्त्रापसारणे ॥' इति। 'मुखान्तर्निहितप्राणसाध्येषु विनिगूहितः। रोषेर्ष्ययोश्च नारीणां बलाच्चुम्बति नायके ॥' इति।

चतुर्थाङ्के—'( कुसुमावचयं नाट्यन्त्यौ )' इति—वामहस्तेनोत्तानेनारालेन दक्षिणेन पुरः पार्श्वादिस्थितेनौचित्याच्युतसंयोगेन हंसास्येन।

'तर्जन्यादिष्वङ्गुलीषु······तमरालं प्रचक्षते।' इति 'लग्नास्त्रेताभिसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः।······हंसास्याभिधीयते ॥ औचित्याच्युतसंयुक्तं कुसुमावचयादिषु।' इति। 'अनसूया—( प्रविश्यापटीक्षेपेण )'—'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इत्युक्तेः। 'उभे—सखि, नोचितं······रोदितुम् ( इत्यश्रुणि प्रमृज्य नाट्येन प्रसाधयतः )' अश्रूणि प्रमृज्येति त्रिपताकानामिकया नेत्रदेशगतया। नाट्येन प्रसाधयत इति त्रिपताकानामिकया तिलकं, पार्श्वमुखसन्देशाभ्यामुभयकरस्थाभ्यां माला, भ्रमराभ्यां तालपत्रद्वयं कर्णपूरद्वयमित्यादि। संदंशमकरभ्रमरादीनां लक्षणानि 'अराला'···मकरो भ्रमरो भवेत्। कर्णपूरे तालपत्रे कण्टकोद्धरणादिषु'। इति। '( उभे नाट्येनालङ्कुरुतः )' इति कर्तरीमुखेनालक्तकेन पादरञ्जनम्, हंसास्येन च्यूतसन्देशेनोर्मिकापरिधानम्। एवं अन्यदप्यनुसन्धेयम्। अश्लिष्टा मध्यमा······स्यात् कर्तरीमुखम्। अलक्तकादिना पादरञ्जने ॥' इति। '( कोकिलरवं सूचयित्वा )' इति—नेपथ्यगतत्वेन। ते हि सुशिक्षिताः सर्वे शकुन्तरवं कुर्वन्ति। 'शकुन्तला ( गतिभङ्गं नाटयित्वा )।' इति। ऊरूद्धृतया चार्या। 'पार्ष्णिः पादस्य···तज्जेर्ष्यानतिभङ्गेषु चार्यूरूद्धृतसंज्ञिता ॥' इति। '( इति परावर्तते )—अपक्रान्तया चार्या। 'बद्धां विधाय चारीं चेद् उद्धृत्याङ्घ्रिं च कुञ्चितम्। पार्श्वे······चारीमपक्रान्तां तदादिशेत् ॥ ऊरुद्वयस्य वलनं···यत्र बद्धेति सा मता ॥' इति।

पञ्चमाङ्के—'राजा—नागरिकवृत्त्या संज्ञापयैनम्।' इति। त्रिपताकस्य मध्यमातर्जनीभ्यां वक्राभ्याम् अधोमुखं कल्पिताभ्याम्। इत्यर्थः।

'शकुन्तला—( अपवार्य )' इति—रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् । इति ।

षष्ठाङ्के—'सानुमती—(नाट्येनावतीर्य)' नाट्येनेति गङ्गावतरणेन । 'अङ्घ्रेरुत्क्षेपनिक्षेपावनुप्रोन्नतसन्नतौ । भजेतां विपताकौ चेदेवमेव शिरस्तदा । गङ्गावतरणम् ॥ इति । 'उद्यानपालिके—( कपोतहस्तं कृत्वा ) इति । सङ्गीतरत्नाकरे' कपोतोऽसौ करो यत्र श्लिष्टमूलाग्रपार्श्वतः । प्रणामे गुरुसम्भाषे ॥ इति । कञ्चुकी—( प्रविश्य )—'कञ्चुकिनोऽपटीक्षेपेण प्रवेशः सूचनाभावात् । तत्र कुपितत्वं हेतुः । 'सानुमती—( उद्भ्रान्तकेन निष्क्रान्ता ) उद्भ्रान्तकनामोत्प्लुतिकरणेन । सङ्गीतसुधानिधौ 'पूर्वं दक्षिणमङ्घ्रिमुत्थापयित्वात्र कुञ्चयेत् । वामं शीघ्रं भ्रमेद् वामावर्तमुद्भ्रान्तकं विदुः । देशीविदां तु केषांचिद् बाह्यभ्रमरिका मता ।' इति । 'राजा—( रथाधिरोहणं नाटयति )' इति । ऊर्ध्वजानुचर्या । सङ्गीतरत्नाकरे—

कुञ्चितोत्क्षिप्तपादः स्याज्जानुस्तनसमं तदा ।
न्यस्तस्याधः कृतोऽन्योऽङ्घ्रिरूर्ध्वजानुस्तदा भवेदिति ॥'

सप्तमाङ्के—'( नाट्येनावतीर्णौ )' इति । रथावतरणमेवैतयोरारोपितं कविना । रथावतरणे यानि चिह्नानि तेषामजातत्वात् तदेवाह 'रथाङ्ग···(७.१०)' । '( निमित्तं सूचयित्वा )' निमित्तं दक्षिणबाहुस्फुरणम् । 'बालः—त्वद्वचनात्···भीतोऽस्मि । ( अधरं दर्शयति ) । अधरं विसृष्टं तस्यैव तत्र विनियोगात् । संगीतसुधानिधौ—'विनिष्क्रान्तो विसृष्टः स्यादधरोऽलक्तकादिना । रञ्जने बालकानां च चेष्टाभेदे नियुज्यते । स्त्रीणां विलासबिब्बोकहर्षादिषु च कीर्तितः ।' इति । 'उभे—कथं गृहीतमनेन । ( इति विस्मयादुरोनिहितकरे परस्परमवलोकयतः ) 'उरोनिहितकरे' इति विस्मयाभिनयः । एतदुक्तमादिभरते चित्राभिनयाध्याये—शिरोधुतं पताकश्च वक्षस्थो विस्मये भवेद्' इति । राजा—'बाष्पं विमृज्य विगतानुशयो भवेयम् (७.१५) ( यथोक्तं तिष्ठति )' तत्र बाष्पप्रमार्जनं त्रिपताकवक्रानामिकया ज्ञेयम् । सङ्गीतरत्नाकरे—'तन्मार्जने च स्याद् अधोयान्तीमनामिकाम् । नेत्रक्षेत्रगतां बिभ्रत्' इति ।

इत्थमभिनयविवेचने राघवभट्टेनाधिकतरं नृत्ययोग्यानां हस्त-

मुद्राणां नेत्रशिरःपादादीनामाङ्गिकाभिनयस्यैव च चर्चा कृता। '( रथवेगं रूपयित्वा )' एवमादिसङ्केतेष्वभिनयो न दर्शितः। मषीवेषग्रहणं नामाहार्योभिनयः। तस्यापि रस उपयोगाद्' इति वेषभूषाविषये मातृगुप्ताचार्योक्तानि लक्षणानि व्याख्याकारेणोद्धृतानि।

काट्यवेमटीकायामभिनयविषये विवेचनं नास्ति। तथापि तत्राप्युक्तम्—नैपथ्यं नाम "पुस्तभूषाऽङ्गरचना सञ्जीवरूपं चतुर्विधमाहार्यमुच्यते। पुस्तं प्रदर्शितं नाट्ये विमानाद्रिवनादिकम्। कुण्डलादिविभूषाऽङ्गरचना त्वनुलेपनम्। सञ्जीवं पशुः।' इति।

अनेन शाकुन्तलस्याभिनयेऽपि रथसिंहादीनां प्रतिकृतयो रङ्गमञ्चे प्रस्तुता इत्यनुमीयते।

'हर्षशोकादिसम्भ्रमयुक्तस्य पात्रस्य प्रवेशः पटाक्षेपेण क्रियते' इति कविव्यवहारः।

'( कपोतकं कृत्वा )'—कपोतको नाम संयुक्तहस्तविशेषः। यथोक्तं—'कपोतः प्रान्तसंश्लेषादन्योन्यं सर्पशीर्षयोः' इति। 'बालः—( अधरं दर्शयित्वा )'—अत्राधरदर्शनमनादरे। दर्शिताधरोऽयं विसृष्टसंज्ञः। यथोक्तं वसन्तराजीये—

विवर्तितो विकासी च विसृष्टश्च निगूहितः।
आयतो रोचितो वृत्तः सन्दष्टश्च समुद्गकः॥

काचितश्चेति नाट्यज्ञैरधरो दशधा मतः।
तत्र प्रसारितो विसृष्टाख्योऽनादरे दर्शितार्पणः॥ इति

राघवभट्टेन व्याख्यायां गानविषयेऽपि सूचनाः प्रस्तुताः। यथा—ईसीसिचुम्बि…( १.४ )' इति नटी गायति। तदधिकृत्योक्तम्—अयं त्रिंशन्मात्रदलद्वयरूपो द्विपदीनामा लयभेदः। 'विलम्बितलया यत्र गुरवो द्विपदी तु सा। शृङ्गारे करुणे हास्ये योज्या चोत्तममध्यमैः। अवस्थान्तरमासाद्य गातव्या साऽधमैरपि॥' इति। अत्र गुरुतालरूपी। ग्रामरागेण ढक्काख्येन चास्या बन्धः। पञ्चमाङ्के हंसपदिकाया गीतविषयेऽपि सङ्गीतशास्त्रचर्या विद्यते। काट्यवेमेनापि 'ध्रुवा' इति नाम्नो गीतस्यास्य विस्तृतविवेचनं कृतम्।

द्वयोर्व्याख्ययोः प्रायो नाट्यविषयकसमस्तपारिभाषिकशब्दानां लक्षणानि प्रस्तुतानि। विविधसंबोधनानां संस्कृतप्राकृतभाषयोश्च यथोचितप्रयोगसम्बन्धिचर्चाऽपि विद्यते। अतिप्रसिद्धतयाऽनावश्यकमिति मत्वा विस्तारभयाच्चास्मिन्निबन्धे विषयाणामेतेषां समावेशो न कृतः। तथापि टीकाद्वयं नाट्यशास्त्रदृष्ट्योपयुक्तं रोचकं चेति नास्ति सन्देहः।

# कालिदासस्य दार्शनिकभूमिका

डॉ० राधावल्लभ त्रिपाठी

कालिदासीयकाले कला-शिल्प-साहित्यविज्ञानानां सामग्र्येण समुन्नतिः समजनि, तथापि तदीययुगस्य महदिदमभवद् वैशिष्ट्यं यद् विचारवैभिन्यसंघट्टेन साकं तेषां तेषां दार्शनिकप्रस्थानानां समुदयः। भारतीयदर्शनस्य सर्वाण्यपि प्रमुखप्रस्थानानि तस्मिन् युगे विकासं प्रपेदिरे। अनन्तरं वेदोपनिषदां भारतीयप्रज्ञायाः समुन्मेषस्वरूपाः ग्रन्थाः—( १ ) बादरायणरचितानि ब्रह्मसूत्राणि, ( २ ) सम्प्रति मूलरूपेणानुपलभ्यमानानि कपिलकृतानि सांख्यसूत्राणि, ( ३ ) भगवद्गीता च प्राक्कालिदासीयकाले कलां कलयामासुः। प्रतिष्ठितेष्वपि षड्दर्शनेषु तत्तद्दर्शनानां तास्ताः शाखाप्रशाखाः अद्वैत-विशिष्टाद्वैत-द्वैताद्वैतप्रभृतयो न तदानीं प्रादुर्बभूवुः। वस्तुतो विरचितप्रायेषु प्रमुखसिद्धान्तग्रन्थेषु कालिदासीयकाले तेषां तेषां दर्शनानां व्यवस्थापनं वर्गीकरणं च समारब्धे। इत्थं चाङ्कुरितप्रायेषु विभिन्न-विचार-प्रस्थानेषु न तेषां समग्रा अपि प्रवृत्तयस्तदानीं पुष्पिता इति युज्यते वक्तुम्। कविः कालिदासः स्वकीये काले प्रसृतं चिन्तनं दर्शनमपि वा विभिन्न-कला-सहित्य-विज्ञानानामधिगमेन सह आत्मसादकरोत्।[१] कवेर्व्यक्तित्वे संगमितं दार्शनिकचिन्तनं बहुशस्तदीयकाव्यव्यूहे स्फुरति।

---

१. Nearer the beginning than the end of this period, when India was systematising her philosophies, and developing her arts and sciences, before its full tendencies had asserted themselves, in some spheres before it had taken the steps its attitude portended, Kālidāsa arose in Ujjayini and gathered up in himself its present tendencies while he foreshadowed many of its future developments.

—Kālidāsa : Aurobindo, p. 13–14.

पुरुषस्वरूपम्

कालिदासो वेदान्तदर्शनमिव एकां सर्वात्मिकां सत्तां स्वीकरोति। एषा सत्ता अनेन पुरुषः ( कुमार० २।१३ ), आदिपूरुषः ( रघु० १०।६ ), अव्यक्तः[1] (रघु० १०।१८), पुराणः (रघु० १०।१६), अजः (रघु० १०।१६), आत्मभूः (रघु० १०।१६), केवलात्मा (कुमार० २।४) इत्यादिभिर्नामभिरुप श्लोकिता। सृष्टेः प्राक् एषा वरते स्म।[2] इयमेव सृष्टेः स्रष्टृबिभर्तृ-संहर्तृ-रूपेषु संस्थिता—

नमो विश्वसृजे पूर्वं विश्वं तदनुबिभ्रते।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने॥

—( रघु० १०।१८ )

तिसृभिस्त्वमवस्थाभिः स्वमहिमानमुदीरयन्।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः॥

—( कुमार० २।६ )

कालिदासस्यायं पुरुषः न सांख्यदर्शनप्रतिपादितपुरुषेण साम्यमर्हति, सांख्ये पुरुष-बहुत्वसमुद्घोषात्, कालिदासेन तस्य एकत्वप्रतिपादनाच्च। वस्तुतः कालिदासस्य पुरुषविषयका धारणा वेदान्तसिद्धान्तेनानुरूपतां धारयन्त्यपि[3] वेदोपनिषद्भ्यः प्रसृता। तथा हि ऋग्वेदादिषु पुरुषस्य हिरण्यगर्भस्य वा विषये—

हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमाम्।—ऋ० १०।१२१।१

---

१. सांख्यकारिकादिष्वव्यक्तशब्दः प्रकृतेः कृते प्रयुक्तः। कालिदासेन चायं परब्रह्मण एव पर्यायतया गृहीतस्तथापि, 'बुद्धेरिवाव्यक्तमुदाहरन्ती ( रघु० १३।६० )' इत्यत्र तु सांख्यवत् प्रकृतिपर्यायतयापि।

२. 'प्राक्सृष्टेः केवलात्मने। ( कुमार० २।४ )।' एतेन सांख्यदर्शनमिव सत्कार्यवादं कालिदासः समर्थयतीत्यप्यूह्यम्।

३. वेदान्तेषु यमाहुरेकपुरुषम्—( विक्रमोर्वशीये १।१ )' इत्यत्र वेदान्तस्योल्लेखो वेदान्तदर्शनं संकेतयतीति सम्भाव्यते।

इत्यादिकथनानि कालिदासीयदर्शनस्याधारत्वेन प्रतीयन्ते ।

अयं च पुरुषः तत्त्वतोऽविक्रियोऽपि सृष्टेः समारम्भे गुणानां सत्त्वरजस्तमसां विपर्ययादवस्थाभेदं बिभर्ति—

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ ( रघु० १०।१७ )

गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे । ( कुमार २।४ )

गीतायामपि परमपुरुषस्येदमेव वैशिष्ट्यं विवृतम्—

असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च । ( गीता १३।१४ )

सोऽयं पुरुषस्तत्त्वदृशा अमेयोऽपि मितलोकः, अव्यक्तोऽपि व्यक्तकारणम्, अयोनिरपि जगद्योनिः, अनादिरपि जगदादिर्वर्तते ।[1] गीतायामपि निगदितम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । ( गीता ४।६ )

एष पुरुषो निखिलमपि ब्रह्माण्डं व्याप्य तिष्ठति । अयमस्य जगतोऽधिष्ठाता नियन्ता च—

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥
चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥
( रघु० १०।२०, २२ )

कवेरमुष्योपोद्घातस्य प्रेरणास्रोतः सन्ति वेदा भगवद्गीता च । तथा हि—

पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।—ऋ० १०।९०।२

---

१. अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ ( रघु० १०।१८ )
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥ ( कुमार० २।९ )

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ गीता १३।१३

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यश्च भूतानामन्त एव च ॥ गीता १०।१०

वस्तुतो वेदेषु गीतायां वा प्रतिपाद्यमानपुरुषस्वरूपेण कवेर्वचनानामन्यत्रापि दृश्यमानं साम्यं कालिदासे तेषां प्रभावं प्रत्याययति । तथाहि—

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः (कुमार० २।१५)
यत्पुरुषेण हविषा देवा यज्ञमतन्वत । ( ऋ० १०।९०।६
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः । ( गीता १३।२२ )

*प्रकृतिः*

अस्य पुरुषस्य परब्रह्मणो वा शक्तिः प्रकृतिरित्यभिहिता । कालिदासमानसे प्रकृतिपुरुषयोर्नास्ति कोऽपि भेदः, उभयोस्तादात्म्यमेवासौ ऊरीकरोति । कुमारसम्भवे ब्रह्माणं स्तुवन्तो देवा आहुः—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ ( कुमार २।१३ )

सांख्यदर्शने प्रकृतिः पुरुषात् पृथक्त्वयैव स्वीकृता, अतः कालिदासीया प्रकृतिविषयका अवधारणा ततो विभिन्नैव ।

प्रकृतिरेव सृष्टिं प्रवर्तयति पुरुषाधिष्ठाने, तथापि पुरुषस्तदन्तोदासीन इति सांख्याचार्या आहुः । कालिदासस्य नेदृशी मतिर्दृश्यते । 'तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदु'-रिति कथने वस्तुतो नास्ति कवेरभिप्रायः, विदुरिति पदेन अन्येषामेव मतमेतदिति सूचितत्वात् । प्रकृति-पुरुषयोरेकरूपतां तु कविः समर्थयति, अन्यत्रापि प्रकृतिपुरुषौ एकस्यैव ब्रह्मणो रूपे इति तेन प्रतिपादयिष्यमाणत्वात्[1], किन्तु सृष्टिक्रमे पुरुषस्यौदासीन्य-

१. स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ( कुमार. २।७ )

मसौ न गृह्णाति। कुमारसम्भवे पार्वती प्रकृतेः शिवश्च पुरुषस्य संकेतत्वेन कविना स्वीकृतौ। अर्धनारीश्वररूपं तयोः सूचयन्[१] कविर्न केवलं प्रकृतिपुरुषयोरेकरूपतामूरीकरोति, सृष्टिसमुद्भवाय पुरुषस्य पितृत्वं समुपकल्पयन्[२] पुरुषस्यानौदासीन्यमेव तस्य सम्मतमित्यपि सूचयति, अन्यथा पुरुषरूपशंकराय 'स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार' ( कुमार० १।५७ ) इति वचो न संघटते।

सांख्यदर्शनेनेव कालिदासेनापि प्रकृतिः त्रिगुणमयीति परिकल्पिता।[३] एषा प्रकृतिः वेदान्तप्रोक्तमायायाः सर्वथा विभिद्यते, मायेति शब्दस्य कविना तत्कृते क्वचिदप्यप्रयुज्यमानत्वात्, मायायाश्च सदसद्भ्यामनिर्वचनीयत्वात् ज्ञानविरोधित्वाच्च।

*सृष्टेः स्वारस्यम्*

प्रकृतिपुरुषौ उभावपि सदिति तयोः कृतिरियं सृष्टिरपि सद्रूपिणी कालिदासमतेन। पारमार्थिकदृशा जगदिदमसदिति वेदान्तवादः कालिदासदृष्ट्या अहृद्यः, अत एव जीवन एव लाभ इत्यसावुदघोषयत्।[४]

सृष्टिरियं एकस्मात् परात्परचैतन्यात् प्रादुर्भूता, तत्स्वरूपा च। तस्मिन्नेव च लीयते।[५] इदमेव चैतन्यं सिसृक्षु सत् प्रकृतिः पुरुषश्चेति द्विधा आत्मानं व्यवस्थापयति[६] अत एव चैतन्ययोः सत्स्वरूपयोश्च तयोः जातमिदं जगदपि चैतन्यं सच्च।

---

१. तया तु तस्यार्धशरीरभाजा ( कु. ७।२९ )

२. यावन्त्येतानि भूतानि स्थावराणि चराणि च।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता॥ ६।८०

३. रघु० १०।१७

४. रघु० ८।८७

५. आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे॥ ( कु० २।१० )

६. कुमार० २।७

*मोक्षः*

चैतन्यस्वरूपं परमपुरुषांशभूतं च जगदिदं नास्ति कवेर्मते बन्धनरूपमत एव मुक्तये जगतः सर्वथा परित्यागमसौ नानुमनुते। मोक्षमभिलषन्नन्त्यमाश्रममास्थितो रघुरपि न सर्वथा संसारं परितत्याज।[1] सांसारिकाः पदार्थाः क्षणभंगुराः अपि न हेया इति कालिदासीयं दर्शनं जागर्ति स्म। विषयाणां विनाशधर्मितां पर्यालोचयतां संसारं साधितवतां नृणां मनसि स्वत एव तेषु निःस्पृहता समुन्मिषति। तथा च कविना रघोर्विषये उपन्यस्तम्—

अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत्॥ (रघु० ८।१०)

अत्र विषयाणां हेयत्वं नास्ति कवेर्विवक्षितं, तथात्वे रघुप्रभृतीनां दिग्विजयादिविवरणं वैयर्थ्यमाप्नुयात्, अपितु तदीयनश्वरतां समीक्ष्याविनश्वरतायाः साधनायां विद्यते महाकवेर्दर्शनस्य स्वारस्यम्। वस्तुतः कालिदासदृशि जीवनस्य लक्ष्यं न विद्यते तत्परित्यागेन मोक्षावाप्तिः, अपितु जीवनस्यैव परिपूर्णविकासः। मोक्षनिर्वाणप्रभृति-शब्दा न कविना दिलीप-रघ्वतिथिप्रभृतीनामन्त्यां स्थितिं विवृण्वता क्वचिदपि प्रयुक्ताः, प्रयुक्तेषु च तेषु जीवनं बन्धनमिति कवेरनीप्सितोऽर्थः प्रकटितः स्यात्, अपितु तेषामव्ययपदप्राप्तिं परमपुरुषावाप्तिमेव वासौ उल्लिखति।[2]

---

१. स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद् बहिः।
समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया॥ रघु० ८।१४

अत्र अन्त्याश्रमसंस्थितस्यापि रघोः पूर्णतो न संसारपरित्यागः पर्यालोचितः कविना, यतो रघुणा न संन्यासिनेव अटाट्यतेऽपितु पुराद् बहिरावसथे उष्यते। रघोरपवर्गरूपसिद्धिप्राप्ति-( रघु०-८।२२, २३ )—समनन्तरमपि कविः पुत्रस्य कारणात् संसारे तस्यावस्थितिं विवृणोति—

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः।
तमसः परमापदव्ययं पुरुषम्—( रघु० ८।२४ )

२. रघु० ८।२४, १८।२८

अत्रेदमाकूतम् । विषयाणां विनाशधर्मवत्त्वं व्यावृण्वतापि कविना न तेषां दुःखकारणत्वं विवक्षितम् । तेन च वेदान्त-सांख्य-प्रभृतिदर्शनेषु दुःखरूपसंसारादात्यन्तिकनिवृत्तये विशदीकृतो मोक्षसिद्धान्तोऽपि तद्दृशा अपास्तः ।

जीवनस्य चरमं लक्ष्यं जीवने स्थित्वैव लभ्यते एषा खलु वैदिकद्रष्टॄणां सरणिर्यां कालिदासोऽनुरुरोध । अत एव शंकरविषये 'योगात्स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम' (३.५८) इति कथयित्वापि स तं निवेशार्थिनं प्रादर्शयत् ।

*योगः*

योगपदस्य कालिदासीयमानसे नातिव्यापका विवृतिर्वरीवर्ति । विनाशधर्मिदेहपरित्यागे अनिवार्ये सति योगविधिनैव देहस्त्याज्य इत्यसौ परामृशति ।[1] यत्र तत्र धारणा-ध्यान-प्रणिधान-समाधिप्रभृति-क्रियाणां समुल्लेखः कालिदासस्य योगदर्शन-प्रज्ञानं प्रकटयति ।[2] इन्द्रियजयाय मनसः संयमनाय चैताः क्रियाः सहायिका इति कालिदासोऽभिप्रैति । प्रणिधानाभ्यासेन शरीरगोचराः पञ्च वायवो वशमानीयन्ते ।[3] कुमारसम्भवे शिवसमाधिं विवृण्वन् कविः ध्यानसमाध्योः स्वरूपं विशदीचकार—

पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।
उत्तानपाणिद्वयसन्निवेशात् प्रफुल्लराजीवमिवाङ्कमध्ये ॥
किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥
अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरंगम् ।
अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥

---

१. योगेनान्ते तनुत्यजाम् ।—रघु० १।८
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः । ( रघु० ८।२४ )
२. रघु० १।२९, ७३; ३।४५–४९, ८।१८, १९
३. रघु० ८।१९

मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥

( कुमार० ३।४५-५० )

*तत्त्वज्ञानं याज्ञिकक्रियाश्च*

अविनश्वरपदोपलब्धये कालिदासः तत्त्वज्ञानमभीप्सति किन्तु संसारं साधयितुं कर्मकाण्डमप्याशंसते । वस्तुतो यथा ज्ञानयोगे तदीयास्था जागर्ति,[1] तथैव याज्ञिकसम्भारेष्वप्यसौ मनोयोगं प्रदर्शयति । तेन स्वादर्शनायका यत्र तत्र कर्मकाण्डपरायणाश्चित्रिताः । यथा—

यथाविधि हुताग्नीनाम्—रघु० १।६
दुदोह गां स यज्ञाय—रघु० १।२६

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानाम्—रघु० १।६२

वसंश्चतुर्थोऽग्निरिवाग्न्यगारे । रघु० ५।२५

कुमारसम्भवे शंकरमुखात्—

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ ६।२८

इति कथयन् कविः यज्ञसमारम्भेषु स्वीयामेवास्थां शोधयामास । दिलीपातिथिप्रभृतिनृपाणां रघुवंशेऽश्वमेधाद्यनुष्ठानं समुल्लिखन् तथैव मेघदूते च रन्तिदेवस्य सुरभितनयालम्भजां कीर्तिं बहु मानयन्[2] कविरेनामेवास्थां विशदयति ।

*उपसंहारः*

दर्शनक्षेत्रे कालिदासे वैदिकचिन्तनस्य भगवद्गीतायाश्च सर्वङ्कष-

---

१. इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी । ( रघु० ४।६० )
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना । ( रघु० ८।२० )

२. व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्—
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ( पू० मे० ४५ )

प्रभावः समवलोक्यते। कालिदासः सिद्धान्तेन वेदान्ती बभूव[1] इति यद् योगीन्द्रारविन्देन निगदितं मतं तन्मतिमतां मनसि न श्लिष्यते। कालिदासेन स्फुटतया वेदान्तदर्शनगत-जगदसदिति सिद्धान्तस्यास्वीक्रियमाणत्वात्, तत्काव्ये प्रत्यवभासमानवेदान्तप्रभावस्य वस्तुतो वेदभगवद्गीतामूलकत्वात्। सांख्यकारिकाकार एव कालिदास इति कस्यचिन्मतमपि[2] सन्दिग्धमेव तिष्ठति, सांख्यकारिकागतपुरुषबहुत्व-पुरुषप्रकृतिविभेद-पुरुषौदासीन्यादिमतानां कालिदासेन सुस्पष्टमस्वीकारात्। तथैव मीमांसादर्शनस्य सर्वातिशायिप्रभावः समुज्जृम्भते कालिदासे इति यदपरे[3] आहुस्तदप्यपास्तमेव यज्ञयागादिविधिविधानं स्वीकुर्वतापि कविना योगेन तत्त्वज्ञानेन च परब्रह्मणः साक्षात्कारस्य चरमलक्ष्यरूपेण निर्धारितत्वात्।

वस्तुतः कालिदासीयदर्शनस्य मूलं सन्ति वेदाः गीता च। वैदिक-दर्शनस्याधारपीठिकासंस्थः कविः क्वचिदितरप्रस्थानेभ्योऽपि तत्त्वानि समादाय स्वप्रतिभाज्योतिष आलोके तेषां समंजनं विदधाति। पूर्वतनार्वाक्तनविचारप्रस्थानानां सामञ्जस्येन सन्तुलितं स्वदर्शनं तेन निर्मितमिति तस्य वैशिष्ट्यम्।



1. Kālidāsa; Aurobindo, p. 14
2. Kālidāsa : T. G. Maikar, P. 4-19
3. Kālidāsa : Kunhan Raja

# भारविः कालिदासमनुसरति

*डॉ० अमरनाथ पाण्डेयः*

कृतीनां कालिदासस्य विभूतिं सञ्चिचीषवः ।
यतन्तेऽहर्निशं विज्ञाः कवित्वानन्दनाञ्चिताः ॥
किराते भारविः सिद्धः कवीन्द्रं श्रयते मुदा ।
प्रसङ्गं काशितं बुद्धौ तनोमि श्रद्धया गिरा ॥

संस्कृतसाहित्ये साहित्यान्तरेषु वाऽनेके कवयो महाकविकालिदासस्याधमर्णाः सन्ति । भारविस्तेष्वन्यतमः । कवयोऽन्येषां कवीनां वर्णनान्यधिगम्य तान्याधारत्वेन मनसि परिकल्प्य तत्सदृशान् भावान् कल्पना वोद्भावयन्ति । एतेन कवेः कवित्वं न हीयते ।[1]

भारविः कालिदासस्य वर्णनान्यनुहृत्य काव्यं निबध्नातीति समुपस्थाप्यते । किरातार्जुनीये चतुर्थे सर्गे निबद्धं शरदृतुवर्णनं कालिदासकृत ऋतुसंहार उपलब्धं वर्णनमनुहरति । यद्यपि भारवेर्वर्णने तस्य कल्पना राजन्ते, किन्तु ताः कालिदासकृतिप्रेरिता इति विमर्शान् निश्चीयते । भारविः पञ्चमे सर्गे हिमालयं वर्णयामास । तत्र कालिदासेन कुमारसम्भवे[2] सृष्टस्य वर्णनासन्दोहस्य स्पष्टः प्रभावः परिलक्ष्यते ।

कालिदासेनानेकेषु स्थलेषु[3] शैत्यसौरभ्यमान्द्योतिवैशिष्ट्यत्रयपूतस्य पवनस्योल्लेखो विहितः । भारविरपि तथाविधस्य पवनस्य वर्णनां चक्रे ।[4]

शिवसमाधिभङ्गायाचरतोः कामवसन्तयोर्व्यापारं निबबन्ध कालि-

---

१. ध्वन्यालोक; ४०. १५-१६

२. कुमारसम्भवम्, प्रथमः सर्गः ।

३. कु० १,१५; रघु० २.१३

४. किरातार्जुनीयम्, ६।३

दासः ।[१] तदनुसरन् कविः किरातार्जुनीयेऽर्जुनविलोभनसमासक्तानां सुराङ्गनानां विभ्रमान् वर्णयामास ।[२]

रावणस्य विनाशाय देवा विष्णुं तुष्टुवुः । कालिदासः देवानां स्तुतिं रघुवंशे निबबन्ध ।[३] एवं कविः कुमारसम्भवेऽपि विरिञ्चिनिष्ठां देवस्तुतिं जग्रन्थ ।[४] भारविः कालिदासनिर्मितां सरणिमनुगम्य शिवनिष्ठामर्जुन-स्तुतिं कल्पयामास ।[५] कविद्वयस्य वर्णनपरिपाट्यां संवाद उपलभ्यते ।

यद्यपि भारविणा गृहीता पद्धतिः कालिदासपद्धतेर्भिन्ना, तथापि कल्पनादिक्षेत्रे भारविः कालिदासमनुहरत्येव ।

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ।।[६]

इति सम्पदां पौरुषसाध्यत्वमुक्तम् । अत्र कालिदासस्य "सम्यक् प्रयो-गादपरिक्षतायां नीताविवोत्साहगुणेन सम्पत् ।"[७] इति कुमारसम्भव-वचनस्य प्रभाव अवलोकनीयः । उत्साहेन सम्पदाप्तिरित्युभयत्राम्नातम् ।

"भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ।"[८]

इति कालिदासवचनमेव "वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः ।"[९] इति योजयन्ननुवदति भारविः ।

"अन्तर्बाष्पश्चिरम*नुचरो राजराजस्य* दध्यौ।"[१०] इति स्थितां कालिदास-पदयोजनां भारविः "तं *राजराजानुचरोऽस्य* साक्षात् प्रदेशमादेशमिवा-धितष्ठौ ।"[११] इत्यनेनानुसरति ।

"स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।"[१२]

---

१. कुमारसम्भवम्, तृतीयः सर्गः । २. किराता० १०
३. रघु० १० ४. कुमार० २
५. किराता० १८ ६. किराता० २।१५
७. कुमारसम्भवम्, १।२२ ८. कुमार०, ५।३१
९. किराता०, ३।१२ १०. मेघ० १.३
११. किराता० ३।३० १२. अभिज्ञानशाकुन्तले ३.८

इति सूक्तेस्तात्पर्यं "तुल्याद् विभागादिव तन्मनोभिर्दुःखातिभारोऽपि लघुः स मेने"।[१] इत्यत्र प्रथितं भारविणा।

स्वभावतःसुन्दरं वस्तु बाह्यं सौन्दर्यं नापेक्षत इत्यर्थः कालिदासेन—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥[२]

इत्यभिज्ञानशकुन्तलोक्त्या—

यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम्।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते॥[३]

इति कुमारसम्भवोक्त्या च प्रकाशितः। अयमेवार्थः "तथापि पुष्णाति नभः श्रियं परां न रम्यमाहार्यमपेक्षते गुणम्।"[४] इति ख्यापयता कविना निध्यातः।

यथा कालिदासः "विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा।"[५] इति सागरस्य महिमानमुदीरयामास, तथैव भारविः—

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम्।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम्॥[६]

इति हिमालयस्य महिमानं वर्णयामास। सागरस्यानवधारणीयत्वं प्रतिपादयन्तं कालिदासं हिमालयस्य दुरधिगमत्वं प्रतिपादयन् भारविरनुसरतीति दिक्।

वेधसा जगतः सौन्दर्यराशिना सुराङ्गना निर्मिता इति किरातार्जुनीय उक्तम्।[७] इयं कल्पना कालिदासस्य

१. किराता० ३.३३
२. अभि० शा०, १.१८
३. कुमा०, ५.९
४. किराता०, ४.२३
५. रघु०, १३.५
६. किराता०, ५.१८
७. किराता०, ६.४२

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥[१]

इति कल्पनामनुधावति ।

"अतिस्नेहः पापशङ्की ।"[२] इति कालिदाससूक्तिं "प्रेम पश्यति भयान्यपदेऽपि"[३] इति भङ्ग्याऽनुवदति भारविः ।

"श्रोणीभारादलसगमना स्तोकनम्रा ॥"[४] इति मेघदूतवचनमेव "अवनिषु चरणैः पृथुस्तनीनामलघुनितम्बतया चिरं निषेदे ।"[५] इत्यनेनानुसृतम् ।

"अलक्तकाङ्कां पदवीं ततान"[६] इति रघुवंश उपलब्धायाः कल्पनाया अनुसृतिः "निहितसरसयावकैर्बभासे चरणतलैः कृतपद्धतिर्वधूनाम् ।"[७] इति किरातार्जुनीयवचस्युपलभ्यते ।

"उपहितपरमप्रभावधाम्नां न हि जयिनां तपसामलङ्घ्यमस्ति ।"[८] इति, "न हि महतां सुकरः समाधिभङ्गः ।"[९] इति,

"प्रभवति न तदा परो विजेतुं—भवति जितेन्द्रियता यदात्मरक्षा ।"[१०] इति च वचांसि "आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ।"[११] इति कालिदासवचनेन प्रेरितानि ।

"स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ॥"[१२] इत्यस्य प्रभावः "दीपितस्त्वमनुभावसम्पदा गौरवेण लघयन् महीभृतः ।

---

१. अभि० शा०, २.९ — २. अभि० ४.१९-२०
३. किराता०, ९.७० — ४. मेघदूतम्, २.२२
५. किराता०, १०.२ — ६. रघु०, ७.७
७. किराता०, १०.३ — ८. किराता०, १०.६
९. किराता०, १०.२३ — १०. किराता०, १०.३५
११. कुमार०, ३.४० — १२. रघु०, २.७

राजसे मुनिरपीह कारयन्नाधिपत्यमिव शातमन्यवम् ।।"[1] इत्यत्र सम्यग् विभाव्यते ।

"मा भूदाश्रम-पीडेति परिमेयपुरःसरौ । अनुभावविशेषात्तु सेनापरिवृताविव ।।"[2] इति स्थितमर्थं "तापसोऽपि विभुतामुपेयिवानास्पदं त्वमसि सर्वसम्पदाम् । दृश्यते हि भवतो विना जनैरन्वितस्य सचिवैरिव द्युतिः ।।"[3] इति वाचोयुक्त्या गृह्णाति भारविः ।

तवोत्तरीयं करिकर्मसाङ्गजं ज्वलन्मणिः सारसनं महानहिः ।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं कला हिमांशोश्च समं चकास्ति ।।

इति,

"अविग्रहस्याप्यतुलेन हेतुना समेतभिन्नद्वयमूर्ति तिष्ठतः ।
तवैव नान्यस्य जगत्सु दृश्यते विरुद्धवेषाभरणस्य कान्तता ।।"

इति च श्लोकद्वयस्य वर्णने

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ।। इति,[6]
अकिञ्चनः सन् प्रभवः स सम्पदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ।।[7] इति,
विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ।। इति,[8]
तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।[9] इति च

श्लोकेषूपात्तानां वर्णनानां स्पष्टः प्रभावोऽधिगम्यते ।

---

१. किरातार्जुनीयम्, १३.३८
"अनुभावसम्पदा प्रभावातिशयेन दीपितः प्रकाशितः" इति
"अनुभावसम्पदा" इत्यस्य व्याख्यावसरे मल्लिनाथः ।

२. रघुवंशम्, १.३७ ३. किराता०, १३.३९
४. किराता०, १८.३२ ५. " १८.३३
६. कुमार०, ५.७६ ७. कुमार०, ५.७७
८. " ५.७८ ९. " ५.७९

## कालिदासीयरूपकेषु समुदाचारसमुन्मेषः

*कु० गायत्री देव*

कवि-कुल-गुरोः कालिदासस्य रूपकेषु समुदाचारस्य सफलं निदर्शनमस्ति। समुदाचारस्य प्रत्येक-पक्षस्य यादृशं विस्तृतं सर्वाङ्गीणञ्च निदर्शनं कालिदासस्य रूपकेषु विद्यते तादृशं कस्याप्यन्य-नाटककारस्य रचनासु न दृश्यते। कालिदासस्य समुदाचारः अधोलिखितेषु विभागेषु संविभक्तमस्ति—

*कौटुम्बिकः समुदाचारः*

कुटुम्बस्य सर्वे सदस्याः परस्परं प्रेमपूर्वकमवसन्। पितरौ स्व-पुत्रेषु कन्यासु च समानरूपेण स्नेहमकुरुताम्। सर्वदा च तेषां हितचिन्तने निरतौ आस्ताम्। पुत्राः कन्यका अपि पितॄन् सेवमाना तेषामाज्ञा-पालनं स्व-प्रधानं कर्तव्यममन्यत। आश्रमस्य वृद्धा तापसी गौतमी शकुन्तलायै मातृवत् स्नेहं ददाति। शकुन्तलायाः पतिगृहगमनावसरे महर्षि-कण्वस्येदं कथनम्—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
    कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
    पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः॥ ४.६

शकुन्तलां प्रति तस्य अगाधं प्रेम व्यनक्ति। अनसूया-प्रियंवद-योरपि स्व-सखीं शकुन्तलां प्रति भगिनीवत् स्नेहमासीत्। शकुन्तलाया विवाहावसरे तेऽतीव-हर्षोल्लासेन तस्याः शृङ्गारं कुरुतः। ते सर्वदैव शकुन्तलायाः कल्याणमेव कामयेते।

कन्यायाः पितरि महदुत्तरदायित्वमासीत्। कन्यकां सुयोग्यवरहस्ते समर्प्य पिता निश्चिन्तोऽभवत्। महर्षिकण्वः शकुन्तलां कथयति—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम्।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः॥ इति ४.१३

पतिगृह-गमनावसरे कन्यका गुरुजनैरुपदिष्टा अभवन्। गुरुजनाः ताः आदर्श-गृहणीत्वमशिक्षयन्। शकुन्तलायाः पतिगृह-गमनावसरे महर्षि-कण्वः तामुपदिशति। सः ताम् नारी-धर्मं शिक्षयति। सः कथयति—

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठा भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥ इति ४.१८

*सामाजिक आचारः*

समाजे ब्राह्मण-क्षत्रिय-वैश्य-शूद्रा इमे चत्वारः वर्णा आसन्। वर्ण-व्यवस्थायां प्रथमं स्थानं ब्राह्मणानामासीत्। समाजे ब्राह्मणानां विशेष आदर आसीत्। कुलगुरु-तपस्वि-पुरोहितादीन् प्रति सर्वेषां सविशेषा आस्था आसीत्। नृपाः ब्राह्मणेभ्यः प्रभूतं दानं दत्तवन्तः। ब्राह्मणस्य वचनानामत्यधिकं महत्त्वमासीत्। ईदृशी मान्यता आसीद्यत् ब्राह्मणस्य वचनं कदापि मिथ्या न भवति। आचार्यः हरदत्त-गणदासयोरागमने अग्निमित्रः सादरं ताभ्यामासनं ददाति। दुष्यन्तोऽपि शार्ङ्गरवादीन् ऋषिकुमारान्विधिवत्सम्पूज्य महर्षिकण्वस्य कुशलं पृच्छति। दुष्यन्तस्य हृदये तपस्विजनान् प्रति प्रभूता श्रद्धा आसीत्। स कथयति—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम्।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः॥ इति २.१३

ब्राह्मणा अधिकांशतः अध्यापन-कार्यमेवाकुर्वन्। ते छात्रान् ब्रह्म-विद्याम् अस्त्रविद्यां च अशिक्षयन्।

ब्राह्मणानामनन्तरं समाजे क्षत्रियाणां स्थानमासीत्। क्षत्रियाणां प्रमुखं कर्तव्यं युद्धकरणमार्तानाञ्च रक्षणमासीत्। तेषां शस्त्राणि पीडितानां

रक्षायै आसन्। यथा अभिज्ञानशाकुन्तलस्य प्रारम्भे तापसः दुष्यन्तं कथयति—

आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ इति

पृथ्वी-पालनस्य शक्तिः क्षत्रियेषु जन्मत एव आसीद्यथा विक्रमोर्वशीये उक्तम्—

शमयति गजानन्यान्गन्धद्विपः कलभोऽपि सन्
भवति सुतरां वेगोदग्रं भुजङ्गशिशोर्विषम्।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहोभरः ॥ ५.१८

समाजे तृतीयं स्थानं वैश्यानामासीत्। वैश्या अधिकांशतः व्यापारमेवाकुर्वन्। अभिज्ञानशाकुन्तले समुद्र-व्यापारी धनमित्रनाम्नः वणिज उल्लेखोऽस्ति।

चतुर्थो वर्णः शूद्र आसीत् तेषां शूद्राणां प्रमुखो धर्मः द्विजानां सेवा आसीत्।

*अतिथि-विषयका आचाराः*

अतिथि-सत्कारस्य विशेषमहत्त्वमासीत्। अतिथिः सर्वेभ्यो देवतुल्यो: पूज्यश्चासीत्। कस्यापि गृहस्थस्य गृहे अतिथेरागमनं सौभाग्यफलमिति समाम्नातम्। अभिज्ञान-शाकुन्तले तापसः दुष्यन्ताय निवेदयति यदाश्रमे गत्वा अतिथिसत्कारः प्रतिगृह्यताम्। स कथयति—

"राजन्! समिदाहरणाय प्रस्थिता वयम्। एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातः तत्प्रविश्य प्रतिगृह्यतामातिथ्य-सत्कारः।" इति।

अतिथि-सत्कारस्योत्तरदायित्वं कन्यकाभ्यः अपि प्रदीयते स्म। सोमतीर्थाय गमनसमये महर्षि-कण्वः अतिथि-सत्कारस्योत्तरदायित्वं स्व-कन्यायै शकुन्तलायै अददात्, तथा हि तापसो दुष्यन्तमाह—

'इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।' इति

अर्घ्यं पादोदकमासनं फलानि च अतिथये समर्पितानि। अतिथि-सत्कारस्योदाहरणानि कालिदासस्य रूपकेषु प्रायः सन्ति। दुष्यन्तस्यागमने अनसूया शकुन्तलां कथयति—"हला शकुन्तले! गच्छोटजम् फलमिश्रमर्घ्यमुपहर। इदं पादोदकं भविष्यती'ति।

नारदस्यागमने पुरूरवा अर्घ्यादिना तमर्चयति। अतिथेर्विशेष-सम्मानः प्रीतिवचनैरभवत्। यथा दुष्यन्तः कथयति—

"भवतीनां सूनृतयैव गिरया कृतमातिथ्यमिति।" तस्य सम्बन्धि-जनानां कुशल-प्रश्नः, तस्य आगमन-प्रयोजन-जिज्ञासा, प्रयोजनस्य पूर्तये च प्रयत्नः, आतिथेयस्य प्रथमं कर्तव्यमासीत्। सामाजिकाचारस्य प्रधानमङ्गं सौम्य-मधुर-वचनैरतिथि-सत्कार एवासीत्। दुष्यन्तस्य परिचयम् अनसूया अतीव निपुण-सभ्य-शिष्ट-उच्च संस्कृतिपूर्ण-सुष्ठु-रीत्या जिज्ञासते। सा कथयति—

"आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते कतमार्येण राजर्षे-वंशोऽलंक्रियते कतमो वा विरहपर्युत्सुकजनः कुतो देशः किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः" इति।

नारदस्यागमने पुरूरवा तस्यागमन-प्रयोजनं पृच्छन् कथयति—
"भगवन्! किमागमनप्रयोजनमिति।

कण्वशिष्ययोरागमने दुष्यन्तः कण्वस्य कुशलं पृच्छन् कथयति—
"अथ भगवाँल्लोकानुग्रहाय कुशली कण्वः" इति दुष्यन्तः मुनीनां तपो-निर्विघ्नताविषयेऽपि पृच्छति—"अपि निर्विघ्नतपसो मुनयः" इति।

समुचित-सत्काराभावे अतिथयः क्रुद्धाः शापं दत्तवन्तः। दुष्यन्तस्य चिन्तने व्यग्रया शकुन्तलया उपेक्षिते सति अतिथिरूपेणागतो महर्षि-दुर्वासास्तस्यै शापाक्षराणि पातयामास—

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव॥ ४.१

*राजकीय आचारः*

कालिदासस्य नाटकेषु राजकीय-समुदाचारस्यापि उल्लेखोऽस्ति। राजपरिवारे कीदृशः समुदाचार आसीदस्य दिग्दर्शनं कालिदासेनानेकेषु स्थलेषु कारितम्। परिजनाः राजाज्ञां 'यदाज्ञापयति महाराजः', 'यदाज्ञापयति देवः', 'यद् भर्ताज्ञापयति' इत्यादि कथयित्वा सविनयं शिरोधार्यमकुर्वन्। राजा यदा एकस्थानादपरं स्थानमगच्छत्तदा कञ्चुकी कोऽप्यन्यो वा परिजनोऽग्रतो गत्वा 'इत इतो देवः' कथयित्वा तस्य मार्गप्रदर्शनमकरोत्। राज्ञे 'देव, प्रभविष्णो, स्वामिन्, भर्तः, महाराज, आयुष्मन्' इति समुदाचारपूर्णानि विशेषणानि प्रयुक्तानि। राजपुत्रेभ्यः 'भर्तृदारक' अथवा 'कुमार' राजसुताभ्यश्च 'भर्तृदारिके' इति सम्बोधनपदानि बभूवुः।

राज्ञः समीपे यदा कोऽप्यगच्छत्तदा पूर्वं तं राजद्वारे प्रतीहारभूमौ वा अवस्थाप्य प्रतीहारी दौवारिको वा तस्यागमनसूचनां राज्ञे अददत् तथा तस्यादेशानन्तरमेव तं प्रावेशयत्। अभिज्ञानशाकुन्तले कण्वशिष्ययोरागमने दौवारिकः दुष्यन्तं तयोरागमनं सूचयन् कथयति—

"जयतु जयतु भर्ता। एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमिमुपस्थितौ।" इति

इदमाकर्ण्य दुष्यन्तः तयोरविलम्बप्रवेशमादिशति—

"तेन ह्यविलम्बितं प्रवेशय तौ।"

अनेनैव प्रकारेण मालविकाग्निमित्रेऽपि आचार्यहरदत्त-गणदासयोरागमनं कञ्चुकी राज्ञे निवेदयति राजा च कथयति—"प्रवेशय तौ।"

राजा अपि प्रजासु पुत्रवत्स्नेहमकरोत् तथा प्रजानामेव हितचिन्तने रत आसीत्। अभिज्ञानशाकुन्तले दुष्यन्तस्य इदं कथनं यत्—

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥ ६.२२

तस्य प्रजावत्सलतायाः द्योतकमस्ति।

तपोवनानां रक्षा अपि राज्ञः कर्तव्यमासीद्यथा अभिज्ञानशाकुन्तले अनसूया कथयति—"राजरक्षितव्यानि तपोवनानि नाम" इति।

राजा तपोवन-निवासिनां कार्ये विघ्नं नोत्पादयेदिति सिद्धान्तित-मासीत्। दुष्यन्तः कथयति—

"तपोवननिवासिनामुपरोधो मा भूत्" इति।

राजा तपोवने विनीतवेषेण प्राविशत् नम्रतापूर्णञ्च सप्रश्रयं च व्यव-हृतवान्। महर्षि-कण्वस्याश्रमे प्रवेशात्पूर्वं दुष्यन्तेन स्वाभरणानि विमुच्य आश्रमोचितवेषभूषा धृता। स कथयति—

"सूत ! विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम।" इति

अनेन प्रकारेण वयं पश्यामः यत् राज्ञां प्रजानां पारस्परिकसम्बन्धा मधुरा आसन्। राजा प्रजानुरञ्जनमेव स्वप्रधानं कर्तव्यममन्यत्। सः प्रजाः स्वसन्तानवदमन्यत प्रजा अपि तं पितृतुल्यं मत्वा तस्यादेश-मपालयन्।

*स्त्रीविषयक आचारः*

कालिदासस्य नाटकैर्ज्ञायते यत्तस्मिन्समये नारीविषये-दृष्टिः उदाराः विशाला चासीत्। नारी धर्मस्य अर्थस्य च प्रदात्री, वैभव-सौख्य-जननी गृहलक्ष्मीरूपा सर्वपूज्या च मन्यते स्म। सा गृहस्वामिनी गृहस्य प्रवर्तिका च आसीत्।

समाजे नारीणां स्थानमतीव सुप्रतिष्ठितमासीत् किन्तु नारी आचरणे स्वतन्त्रा न आसीत्। अभिज्ञान-शाकुन्तले दुष्यन्तेन निराहता शकुन्तला यदा रुदती कण्व-शिष्यौ अनुगच्छति तदा तौ तस्याः स्वेच्छा-चरणाय क्रुध्यतः। शार्ङ्गरवः तां निन्दयन् कथयति—

"किं पुरोभागे स्वातन्त्र्यमवलम्बसे।" इति।

कुलवध्वः प्रायः अवगुण्ठनवत्यः भूत्वा बहिरगच्छन्। अभिज्ञान-शाकुन्तले शकुन्तला दुष्यन्तस्य समक्षमवगुण्ठनवती भूत्वा गच्छति। अवगुण्ठनं नार्योः विनयशीलतायाः लज्जायाश्च प्रतीकआसीत्।

अविवाहित-कन्यकानां कुत्राप्यधिकं गमनागमनमशोभनीयं मन्यते स्म। यदा पतिगृहगमनसमये शकुन्तलां स्वप्रियसख्योः साहचर्यमिच्छन्तीं

कण्वः कथयति—"वत्से, इमे अपि प्रदेये। न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।"

परस्त्री-विषये जिज्ञासा निन्दनीया आसीत्। यथा दुष्यन्तः विचिन्तयति—

"अथवाऽनार्यः परदारव्यवहारः।" इति

परस्त्री-दर्शनमपि त्याज्यमासीत्। अभिज्ञान-शाकुन्तले दुष्यन्तः कथयति—

"अनिर्वर्णनीयं परकलत्रमिति।"

*गुरुजनानुबन्धिन आचाराः*

गुरुजनान् प्रति मनुष्याणां हृदये आदर-भावना आसीत्। गुरुजनानामागमने आसनादुत्थाय तान् प्रति आदरः प्रदर्श्यते स्म। प्रथमं गुरुजनेभ्य आसनं दत्त्वा पश्चात् स्वयम् आसनं गृह्यते स्म। कण्वशिष्ययोरागमने दुष्यन्तः आसनादुत्थाय तयोः स्वागतं करोति। इत्थमेव दुष्यन्तस्यागमने शकुन्तला तथा अग्निमित्रस्य आगमने धारिणी आसनादुत्तिष्ठतः।

ज्येष्ठानां सन्देशोऽप्यादरपूर्वकं श्रूयते स्म। अभिज्ञानशाकुन्तले यदा कण्व-शिष्यौ दुष्यन्तं कथयतः यदाश्रमवासिनः भवन्तं प्रार्थयन्ते तदा दुष्यन्त आदरपूर्वकं पृच्छति—'किमाज्ञापयन्ति' इति।

अनेनैव प्रकारेण विक्रमोर्वशीयेऽपि यदा नारदः पुरूरवसं कथयति यद्भवते इन्द्रस्य सन्देशोऽस्ति तदा पुरूरवाः सादरं पृच्छति—'किमाज्ञापयति' इति।[1]

गुरुजनानां प्रतिष्ठितजनानां च समागमसमये तेषां कृते उपहारतया कस्यचिदाहरणस्य विधानमासीत्। कण्व-शिष्यौ दुष्यन्तस्य समागमावसरे तस्मै फलानि दत्तः। देवी कौशिकी अपि धारिण्याः सकाशं गमनसमये उपहारस्वरूपं बीजपूरकं नयति यथा दास्याः समाहितिकायाः निम्नलिखितकथनेन अभिव्यक्तं भवति—"सखि!

१. अयं समुदाचारः भासस्य नाटकेष्वप्यनेकेषु स्थलेषु दृश्यते।

भगवत्याज्ञापयति अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या तद्बीजपूरकेण शुश्रूषितुमिच्छामीति ।" विदूषकः राजानं कथयति—
"गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामीति" ।

*लोकाचारः*

गुरुजनानामभिवादनस्यादिकालतः प्रचलनमस्ति । तेषां चरण-स्पर्शं कृत्वा शिरो नमयित्वा प्रणामः क्रियते स्म । विक्रमोर्वशीये आयुः स्व-पितुः पुरूरवसः चरणौ स्पृष्ट्वा प्रणमति । अभिवादनार्थं 'वन्दे, प्रणमामि, अभिवादये' इति पदानि प्रयुक्तान्यभवन् । यदा कदा स्वनामोल्लेख-पूर्वकमभिवादनमभवत् । आयुः नारदं प्रणमन् कथयति—'भगवन् । और्वशेयः आयुः प्रणमति ।' दुष्यन्तोऽपि मारीचं तस्य पत्नीमदितिमभि-वादयन् कथयति—

"उभाभ्यामपि वासवनियोज्यो दुष्यन्तः प्रणमति ।"

स्त्रियोऽपि गुरुजनानामभिवादनार्थं 'वन्दे' अथवा 'पादवन्दनं करोमी'-ति कथयित्वा स्व-शीलस्य परिचयं ददति स्म । विक्रमोर्वशीये उर्वशी 'अम्ब पादवन्दनं करोमी'-ति कथयित्वा तपस्विन्या अभिवादनं करोति । स्त्रियः स्व-पतिं प्रति 'जयतु जयतु आर्यपुत्रः' इति कथयित्वा प्रणाममकुर्वन् । शकुन्तला दुष्यन्तं, राज्ञी पुरूरवसं, देवी धारिणी च स्व-पतिमग्निमित्रं 'जयतु जयतु आर्यपुत्रः' इति कथयित्वा अभिवादयन्ति ।

परिजनाः स्वामिनं 'जयतु महाराजः', 'जयतु जयतु भर्ता', 'जयतु 'जयतु देवः', 'जयतु जयतु स्वामी', 'विजयतां विजयतां देवः' वेति कथयित्वा प्रणाममकुर्वन् । स्वामिन्या अभिवादनार्थं 'जयतु भट्टिनी', 'जयतु भर्तृदारिके' इति च प्रयुक्ते ।

प्रणामः पूज्यानुक्रमादभवत् । यौवराज्याभिषेकानन्तरं पुरूरवसः पुत्र आयुः प्रथमं नारदमभिवादयते पश्चात् स्व-पितुः पुरूरवसः अभिवादनं करोति तदनन्तरञ्च स्व-मातरमुर्वशीं प्रणमति ।

प्रणामस्य प्रत्युत्तरे आशीर्वादो दीयते स्म । स्त्रीजनान् प्रायशः 'भर्तु-र्बहुमता भव', 'भर्तुर्बहुमानसूचकं महादेवी-शब्दं लभस्व', 'वीरप्रसविनी'

भव' वेति आशिषः दीयन्ते स्म। पुत्रान् 'चिरञ्जीव' अथवा 'आयुष्मान् भवे'-ति आशीर्वादो दीयते स्म। पुरूरवाः स्व-पुत्रमायुषं कथयति—'वत्स! आयुष्मान् भवेति।'

पतिगृहं गच्छन्तीं शकुन्तलां महर्षि-कण्वः कथयति—

'यदिच्छामि ते तदस्तु'। इति

ब्राह्मणा आशीर्वादार्थं 'स्वस्ति' इत्यब्रुवन्। आशीर्वादेसति जना 'अनुगृहीतोऽस्मि' इति कथयित्वा तं शिरोधार्यमकुर्वन्।

कस्यापि समागमसमये तस्मै साधुवाद-प्रदानस्य प्रचलनमासीत्। दुष्यन्तस्य समागमसमये कण्वशिष्यौ 'विजयस्व-राजन्नि'-ति कथयतः। विदूषकोऽपि राज्ञः समीपं गत्वा 'वर्धतु भवान्' इति कथयति। ब्राह्मणानां कुशलस्य क्षत्रियाणाञ्च अनामय-प्रश्नस्य रीतिरासीत्। कण्व-शिष्ययोरागमने दुष्यन्तः कण्वस्य कुशलं पृच्छन् कथयति—

"अथ भगवाँल्लोकानुग्रहाय कुशली कण्वः"

ऋषिकुमारौ कथयतः—

"स भवन्तमनामयप्रश्नपूर्वकमिदमाह।'

ऋषिजनेभ्यः तेषां तपो-निर्विघ्नताविषये प्रश्नः क्रियते स्म। दुष्यन्तः कण्वशिष्यौ मुनीनां कुशलं पृच्छति। सः कथयति—

"अपि निर्विघ्नतपसो मुनयः।" इति

शकुन्तलायाः प्रथम-दर्शन-समये दुष्यन्तः ताम् ऋषिकन्यां मत्वा पृच्छति—

"अपि तपो वर्धते" इति

सख्यः अपि परस्परं कुशल-प्रश्नमकुर्वन्। मालविकाग्निमित्रे उद्यानपालिका मधुकरिकायाः सखी समाहितिका तस्याः कुशलं पृच्छति—"मधुकरिके अपि सुखस्त उद्यानव्यापारः।" मधुकरिका तस्याः स्वागतं कुर्वती कथयति—"अहो समाहितिका। सखि स्वागतं ते।" मालविकायाः सखी बकुलावलिका तां पृच्छति—"अपि सुखं सख्याः।"
अस्य प्रत्युत्तरे मालविका तस्याः स्वागतं कुर्वती कथयति—

"सखि! स्वागतं ते। उपविश।"

सम्बोधनम्

पितरौ पुत्राय 'जात', 'पुत्र', 'वत्स' इति सम्बोधनं प्रयुक्तमकुरुताम् । पुत्रेण मात्रे 'अम्ब' तथा पित्रे 'तात' इति सम्बोधनं कृतम् । ज्यायान् भ्राता कनीयांसं भ्रातरं 'वत्स' इति सम्बोधनेन तथा कनीयान् भ्राता ज्यायांसं भ्रातरमार्य इति सम्बोधयामास । ब्राह्मणानां सम्बोधनार्थं प्रायः 'भगवन्' इति पदं प्रयुक्तम् । मित्राणां सम्बोधनार्थं 'वयस्य' इति प्रयुक्तम् । अपरिचितपुरुषान् स्त्रियः 'भद्र' इति अकथयन् तथा अपरिचितनारीः पुरुषाः 'भवति' इति प्रोचुः ।

अनेन प्रकारेण वयं पश्यामः यत् कालिदासस्य रूपकेषु समुदाचारस्य सम्यक् प्रतिष्ठा दृश्यते ।

# महाकविकालिदासस्य दार्शनिकदृष्टिः

*केदारनाथत्रिपाठी*

कविकुलगुरुर्महाकविकालिदासो नूनमस्या भूषा भारतवसुन्धरायाः, पूपाऽशेषसहृदयजनमानससरोरुहाणामाशा चादिकवेः कल्पनायाः, सर्वस्वमुपमानस्य, समिद्धः शोधनोऽग्निः शृङ्गारकार्तस्वरस्य, प्रसादो गभीराया अपि निर्मलधवलपदावलीसरितः, चेतयिताऽचेतनानां, सहृदयता पशुपक्षिलतावीरुधां, समन्वयो भूद्युलोकयोः, किं बहुना हृद्यो विश्वस्येति नेह सन्देहलेशोऽपि ।

तथापि "कविर्मनीषी" इति श्रुत्यनुसारं "कविः क्रान्तदर्शी" इति प्रसिद्ध्यनुसारञ्च महाकविरयमध्यात्मप्रधानायां भारतभुवि लब्धजनितया काव्यमाध्यमेन स्वीयां दार्शनिकदृष्टिमभिव्यञ्जयितुमपि तथैव सावहितोऽभूद् यथा रसालङ्काराद्यभिव्यञ्जने । तदस्मिन् विषये कतिपयनिदर्शनानीहोदाह्रियन्ते ।

सर्वप्रथमं "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ" इत्यत्र "नित्यः शब्दार्थसम्बन्धः" इति सिद्धान्तस्तदनुमतो प्रतीयते । अत्र वागर्थावुपमानीकृत्य नित्यसम्बद्धतया पार्वतीपरमेश्वरौ तदुपमेयतया वर्ण्येते तथैव भङ्ग्यन्तरेण नित्यसम्बद्धपार्वतीपरमेश्वराविव शब्दार्थावपि नित्यसम्बद्धावित्यप्यभिव्यज्यते । एवं—

"लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥"

इत्यस्मिन् पद्ये दिलीपस्य कृते सन्ततेरावश्यकतावर्णनप्रसङ्गेन परलोकः समर्थितो भवति । एवम्—

"मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत् पुरस्तादनुपेक्षणीयम् ॥"

इत्यत्रेश्वरस्य जगत्कारणत्वं प्रतिपाद्यते। तथा—

"नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने।
गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे॥
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ॥"

इति कुमारसंभवीयपद्ययोरीश्वरस्य जगत्सर्जकत्वं पार्वतीपरमेश्वररूपेण जगत्-पितृत्वञ्च निर्दिश्येते।

"तमो विश्वसृजे पूर्वं विश्वं तदनुबिभ्रते।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधात्मने नमः॥"

इति पद्येन सुरकर्तृकविष्णुस्तुतिप्रसङ्गेन स एवार्थ उपोद्बलितो भवति। एवं—

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥"

इति कुमारसंभवीयपद्ये सांख्ये या प्रकृतिरुच्यते सा ईश्वर एवेति कवेरभिप्रायो वेद्यते। एतेन सेश्वरसांख्यं समर्थितं भवति। सद्वैव विविधागमानां परस्परं समन्वयदृष्टिरप्यस्य महाकवेः श्लाघनीया वर्तत इति "बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः। त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे॥" इति पद्यात् स्फुटमवगन्तुं शक्येत। पुनश्च विविधागमभिन्नानां सर्वेषामेव मार्गाणां जाह्नवीयौघैः सादृश्यं प्रतिपादयन् महाकविः सर्वेषां मार्गाणां जाह्नवीयजलवृन्दवत् पवित्रत्वं निःश्रेयसकरत्वं च व्यनक्तीति सर्वमार्गान् प्रति सर्वथा श्लाघनीयोऽस्योदारो हार्दिकोद्गारः।

एवं "शैत्यं हि यत्तत् प्रकृतिर्जलस्य" इति पद्यांशो वैशेषिकदर्शनस्य पदार्थसिद्धान्तमनुहरति। तथा सुवर्णस्य तेजस्त्वाविशेषेऽपि न दाहकत्वं किन्तु वह्नेरेवेति पदार्थसिद्धान्तो रघुवंशस्य सप्तदशसर्गे प्रत्यपादि महाकविना। एवं—

"प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा॥"

इति रघुवंशस्य दशमसर्गस्थपद्यांशः परमेश्वरस्य प्रत्यक्षागम्यस्य श्रुत्यनुमानमात्रगम्यत्वं न्यायाभ्युपगतं स्वाभिप्रायविषयत्वेन प्रकटीकरोति महाकविः। पुनश्च—

"रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथाहि बाला।
गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसङ्गतिज्ञम्॥"

इति रघुपद्येन जन्मान्तरवादः सदा वासनाविशेषवत्त्वञ्च ज्ञायेते। अतः स एवायमिति प्रत्यभिज्ञानाभावेऽपि वासनावशादेवेन्दुमती पूर्व-जन्मसङ्गतमजं वव्रे। एवं "निवारयामास महावराहः कल्पक्षयोद्वृत्त-मिवार्णवाम्भः" इति पद्ये महाप्रलयसिद्धान्तः सूचितो भवति यो मीमांसया नाभ्युपेयते।

इत्थञ्च प्रायः सर्वदर्शनसिद्धान्तसारमनुरुध्य विविधागमानां विभिन्नदर्शनानाञ्च समन्वयपक्षपातिता निजा स्फुटीकृतैवेति। तथापि योगदर्शनं प्रति तु महाकविकालिदासस्य सर्वातिशायि किमप्यपूर्वं हार्दमसीदिति भूयो भूयस्तद्वर्णनेन विज्ञायतेतराम्।

तथाहि रघुवंशे—"अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः"। अजस्तु आप्तैर्मन्त्रिभिर्युयुजे, रघुस्तु योगिभिरिति वर्णयन् मोक्षपदप्राप्तिस्तु योगादेवेति कवेरभिप्रायो व्यज्यते।

"इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना"

इति पद्येन "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते···" इत्युक्त्यनुसारं ज्ञानद्वारा भवबीजभूतानां कर्मणां नाशो भवतीति स्वाशयमाविष्करोति महाकविः। अस्मिन्नेव प्रसङ्गे—

"न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात्"

इति पद्ये रघुर्योगविधेर्न विररामेति वर्णयता "परमात्मसाक्षात्कार एव जीवनस्य चरमलक्ष्यम्, तस्य च प्राप्तिर्योगविधिनैवेति स्फुटमुद्घोष्यते।

"तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः"

इति पद्येन रघुद्वारा ज्योतिस्स्वरूपाव्ययपुरुषसायुज्यप्राप्तिरूपं फलं योग-समाधिनैवाधिगतमिति योगस्य फलश्रुतिरुपवर्णिता।

"अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥"

इत्यनेन पद्येन "अभ्यासवैराग्याभ्यां तन्निरोधः" इति पातञ्जलयोगसूत्रमनुरुन्धानो महाकविः निरुद्धमनसा हृत्पद्मे ज्योतिर्मयस्य भगवतः साक्षात्कारमेव विमुक्तिप्रयोजकं वर्णयाञ्चकार ।

रघुकुलपरम्परायां लक्ष्मणोऽपि योगविधिनैव स्वदेहत्यागमकरोदिति वर्णितं पञ्चदशे सर्गे—

"स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥" इति रघुवंशे । एवं

"महीं महेच्छः परिकीर्य सूनौ मनीषिणे जैमिनयेऽर्पितात्मा ।
तस्मात् स योगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरुः ॥"

इति रघुवंशस्याष्टादशे सर्गे पुष्यनाम्नो राज्ञो वर्णनप्रसङ्गे जन्ममरणपरम्परारूपस्य संसारस्य विच्छेदे योग एव साधनमिति मन्यते ।

किं बहुना, स्वयं परमेश्वरोऽपि शिवः स्वातिरिक्तपरमेश्वरान्तरस्याभावे आत्मानमेवात्मनि योगविधिना साक्षात्करोतीति कुमारसंभवे वर्णयन् महाकविर्योगमहत्त्वमधिकाधिकं वर्धयतीत्यहो योगश्रद्धालुता महाकवेः ।

संक्षेपत इदमेव वक्तुं शक्यते यन्महाकविकालिदासेन सेश्वरपक्षीयो द्वैतवादोऽभ्युपगतः। संभवतस्तदानीं शङ्कराचार्यप्रवर्तिताद्वैतविचारधाराया अभाव एव तत्र कारणम् । शङ्कराचार्यात् प्राग्वर्तिनो ब्रह्मसूत्रव्याख्यातारोऽपि भर्तृप्रपञ्चादयो द्वैतपरतयैव सूत्राणि व्याचख्युरिति ।

इदं कथनं तु न कस्मैचित् सहृदयाय रोचिष्यते यत् कवितासु दर्शनं न भवति, दार्शनिकेषु कवित्वं वा न भवतीति । एतस्य स्फुटमुदाहरणं कालिदासप्रभृतयो महाकवयः शङ्कराचार्यप्रभृतयो दार्शनिकाश्च वर्तन्ते । श्रीहर्षे तु कवित्वदार्शनिकत्वयोरपूर्वसमावेशो वर्तते, यदीयं नैषधीयचरितमधीत्य समानभावेन साहित्यिका दार्शनिकाश्चोद्वेलं रसमास्वादयन्ति ।

वस्तुतः शाकुन्तलेऽपि तथाविधा रमणीयता नायास्यद् यदि शान्ताश्रमपालिता शकुन्तला नायिका नाभविष्यत् । अत एवाचार्यमम्मटः

काव्यलक्षणे सर्वसाधारणानि काव्यफलान्याह—"काव्यं यशसे...सद्यः परनिर्वृतये..." इत्यादि। परनिर्वृतिश्च परा शान्तिरेव दर्शनानां लक्ष्यभूता मन्तव्या। विश्वनाथोऽप्याह—

"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥" इति।

जानन्ति विज्ञाः—अत्युन्नता कलाऽपि विज्ञानीभवति, विज्ञानमपि पराभ्युन्नतं दर्शनायते। इदमेव हि रसवद् रसात्मिकायाः कविताया अपि साधारणीकरणमिति प्रतीमः।



## कालिदासीयो बिम्बविन्यासः

*डॉ० जनार्दन उपाध्यायः*

कालिदासस्य बिम्बविन्यासानां मूल्याङ्कनं तदीयान्तर्दृष्टिसूक्ष्मतायाः सर्जनात्मिकायाः कल्पनायाश्च निरीक्षणं परीक्षणं चास्ति। यतः बिम्बानां प्रेरकं तत्त्वं हेतुश्च भावः सर्जनात्मिका कल्पना चास्ति। काव्ये बिम्बानां सजीवता, भास्वरता, ध्वन्यात्मकता, उर्वरता, प्राचुर्यं वैविध्यं च कवेर्मूलप्रेरकानुभूतेस्तीव्रतायां प्रखरतायां समृद्धौ चाश्रितानि। तत्र बिम्बानां यावती अनेकरूपता प्राप्स्यते तदीयानुभूतेर्विस्तारो वैचित्र्यं च तावदेव व्यापकं सजीवञ्च भविष्यति।

कालिदासबिम्बेष्वनुभूतेस्तीव्रताऽस्ति। एतदीयबिम्बेषु संवेदना, भावना विचाराश्च एकस्मिन्नेव रागे सन्ति झंकृताः। अनुभूतेस्तीव्रतया कालिदासस्य बिम्बानि भास्वराणि उर्वरकाणि च सन्ति। बिम्बविन्यासकलायां रूपाङ्कनं हि सर्वोत्कृष्टं गण्यते। यतस्तदेवामूर्तभावानां चाक्षुषप्रत्यक्षीकारे हेतुभूतम्। चाक्षुषप्रत्यक्षरूपबिम्बेषु वर्णानामपि (रक्त-कृष्णादीनाम्) ईषदनुलेपनं भवति, येन बिम्बानि समधिकरमणीयानि सजीवानि च सम्पद्यन्ते। कालिदासः रूपवर्णनाधारेण येषां चाक्षुषरूपबिम्बानां सृष्टिं कृतवान् तान्यप्रतिमानि। वर्णबिम्बविन्यासे तु कविरयमद्वितीय एव। एतद्रूपचित्रेषु वर्णानामनुकूलः प्रयोगः, भिन्नानां गुणात्मकानां वर्णानां संश्लेषः, प्रतिकूलवर्णानां योजना, वर्णपरिवर्तनं चात्यन्तकुशलतया मिलति। कालिदासे सत्यामपि चाक्षुषबिम्बप्रधानतायां श्रुतिबिम्बानां नादबिम्बानां वा न न्यूनता। एतदीयानि नादबिम्बानि यमकानुप्रसादिजन्यनादव्यञ्जनया समधिकानि व्यञ्जकानि सन्ति। आशयोऽयमस्ति यत् कालिदासेन समस्तानामिन्द्रियजन्यानां बिम्बानां स्पर्श-घ्राण-स्वाद-चक्षुः-श्रोत्राणां सृष्टिः कृता। तथापि चाक्षुषाणि बिम्बानि आपेक्षिकरूपेण सर्वाधिकानि मनोज्ञानि च सन्ति। कालिदासबिम्बसर्जनप्रसङ्गे चत्वारि सूत्राणि विचारणीयानि—

( १ ) चित्रं बिम्बं च—स्वरूपभेदमीमांसा ।
( २ ) बिम्बचयनम्—क्षेत्रानुसन्धानम् ।
( ३ ) बिम्बवैविध्यम्—स्वरूपनिरूपणम् ।
( ४ ) बिम्बसर्जनप्रक्रिया—सर्जनात्मककल्पनायाः सन्निकर्षः ।

*चित्रं बिम्बं च—स्वरूपभेदमीमांसा-*

चित्रे काव्यात्मके बिम्बे च विद्यते भेदः। चित्रेषु मूलतो बाह्याः सीमारेखाः प्रधाना भवन्ति। स्पष्टपुष्टाभिः कोमलरेखाभिरेव चित्रं ओजो माधुर्यं चायाति। वस्तुतश्चित्रकलायां ब्रह्मरेखाया एव भवति प्राधान्यम्। सा ब्रह्मरेखा चित्रस्यास्ते मध्यवर्तिनो रेखा। सा भवति पूर्णतया कल्पिता। तथाप्यस्या बंगिमत्ताया उपरि चित्रस्योद्भवो निर्भरः। एतेन भवति शान्तरसस्य विभावनम्। मध्यवर्तिन्या रेखायास्तिर्यग्भाव एव अन्येषां रसानामुद्बोधको भवति। यावत् कलाकारः मध्यवर्तिनीमिमां रेखां भावेन रसेन च समन्वितां न करोति, तावन्न भवति तोषः। चित्रे यावत् उक्ततत्त्वद्वयं चित्रणीये वस्तुनि सीमितं तदा तत् भवति स्थूलं यथार्थपरं रेखाचित्रमेव। चित्रसूत्रशब्दावल्यामिदं "विद्धचित्रम्" भवति। कालिदासे सन्ति रेखाचित्राणि। परन्तत्र रसानुगतिरपि विलोक्यते। परिणामतश्चित्राणामेषां द्वयी स्थितिः—

( क ) स्थूलरेखाचित्राणि ( विद्धचित्राणि )
( ख ) भावात्मकरूपचित्राणि ( रसचित्राणि )

*स्थूलरेखाचित्रम्*

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम्।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥

माल० २।६५

शब्दचित्रेऽस्मिन् मालविकायाः सौष्ठवपूर्णदेहविन्यासजन्यमाङ्गिकसौन्दर्यमङ्कितम्। मूलभावोऽस्ति—अभिनयव्यञ्जितमङ्गसौष्ठवम्, नृत्य-

स्याभिरामभङ्गिमाया अतुलनीयं सौन्दर्यम् । मालविकाया वामः करः कटिप्रदेशे न्यस्तः, तस्याः कङ्कणं करमूले संसक्तम्, शिथिलश्यामेव दक्षिणः करः ऋजु लम्बते। पादोन्मुखी दृष्टिः स्थिता, यत्र पादाङ्गुष्ठौ कुट्टिमस्थकुसुमानि पर्यस्यतः। सुन्दरदेहलता नृत्यभङ्गिमया ईषदुन्नीतास्ति। शब्दानां माध्यमेनात्र लघु-लघुचित्राणि समन्वितीकृत्य चित्रे सजीवतायाः प्रयासो विहितः । कुट्टिमस्थपुष्पाणामपसारणवर्णनेन या नाटकीयतात्रागता तया क्रियाविधायिके चित्रमिदमिति वक्तुं युज्यते। वामहस्तस्य कटौ विन्यासः दक्षिणस्य च ऋजुता, स्थिर दृष्ट्या पादोन्मुखं दर्शनम् इमानि सन्ति स्थिरचित्राणि। यदैव मालविका पादाङ्गुष्ठेन कुट्टमिस्थपुष्पाण्यपसारयितुमारभते तदैव चित्रे गत्वरता समायाता । अत्र रूपचित्रं तु निर्मितं, परं किमप्यन्यदत्र योजयितुकामः कलाकारः तथा कर्तुं समर्थो न बभूव अतस्तेनान्यत्र भावचित्रस्य योजना कृता।

*भावचित्रम् ( रसचित्रम् )*

व्यापी सैकतलीन-हंस-मिथुना स्रोतोवहा मालिनी
पादस्तामभितो निषण्णहरिणा गौरीगुरोः पावना।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥

[ अभि० शा० ६।१७ ]

अत्र दुष्यन्तस्यान्तरिकी व्यथा हि मूलो भावः। अत्र मृगादीनामत्यन्तं विश्रब्धभावेन व्यवहारः। आश्रमस्य संपूर्णं वातावरणं विश्वासपरायणं घोषयति। तत्र विश्वासेन समर्पितां शकुन्तलां प्रति दुष्यन्तः कीदृशो विश्वासघाती संवृत्त इत्येषा मर्मिकी चेतना कलाकारं व्यथयति। व्यथां चेमां चित्रे सर्वात्मनावतारयितुं कलाकारेण हार्दिकः श्रमो विहितस्तेनैवेदं चित्रं रसमयं रसार्द्रीकरणक्षमं च समजनि।

रेखाचित्रे रेखामाध्यमेन क्रियाणां वर्णनं भवति। अभिव्यक्तेर प्रस्तुताख्यं साधनं तत्र नास्ति। अत्रैवास्ते भेदः काव्यात्मके बिम्बे काव्यात्मके शब्दचित्रे च [ पोयटिक इमेज, पोयटिक वर्ड्स

पिक्चर ] अतएव सी० डे० लेविस महाशयेन निर्दिष्टचित्रम् [ डाइरैक्ट इमेजरी ] लाक्षणिकं बिम्बम [ फिगरेटिव इमेजरी ] इत्यनयोर्द्वैविध्यं स्पष्टीकृतम् ।

*बिम्बानां चयनक्षेत्रानुसन्धानम्*

बिम्बानामौपम्यविन्यासार्थं वारंवारं प्राकृतिकान्युपादानानि, पुष्पम् , पल्लवः, वल्कलम् , मृणालवलयः, दूर्वा, यवाङ्कुराश्च प्रयुक्ताः कविभिः—

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥

[ रघु० १३।४९ ]

अत्र 'प्रवालमादाय सुगन्धि यस्य' इत्यनेन रूपस्पर्शगन्धानां सम्मिश्रितं बिम्बं सहैवोत्थितं भवति ।

प्राचीनेषु शास्त्रेष्वपि बिम्बचयनक्षेत्रं पश्यति कालिदासः । अमूर्त-बिम्बविन्यासदृशा हि सर्जनमिदं महत्त्वपूर्णमस्ति—

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्त्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥

अत्र मनुष्येश्वरधर्मपत्नी-नन्दिन्योः कृते श्रुतिस्मृत्योरमूर्तबिम्बपरिकल्पना साधीयसी दृश्यते ।

संस्कृतेः पोषिकां रुचिं पुरस्कृत्य तस्मादेव परिवेशाद् बिम्बग्रहणं करोत्ययं महाकविः—

लग्नद्विरेफं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥

सखीभिः पार्वत्याः शृङ्गारितस्य धम्मिल्लस्यौपम्यं मेघमण्डलस्थश्चन्द्रः भ्रमरालिङ्गितं कमलं वा न प्राप्नोति । "अलकैः प्रसिद्धैः" इति पदमलक-संरचनाया विशिष्टं रूपं प्रतिबिम्बितं कुरुते ।

तदित्थं त्रीणि क्षेत्राणि महाकवेर्बिम्बचयनस्य—

( १ ) प्राकृतिकं जगत्
( २ ) भारतीयवाङ्मयलोकाः
( ३ ) पुरातनं भारतीयसंस्कृतिमण्डलम्

*बिम्बसर्जनप्रक्रिया—सर्जनात्मककल्पनाया उत्कर्षः*

बिम्बसर्जनप्रक्रियायां कविः पूर्वं मानसीं सृष्टिमातनोति तदनन्तरं तस्या व्यञ्जनं शब्दमाध्यमेन करोति। एतत्कृते स सत्त्वस्थः सन् मानसीं कल्पनां करोति। इदमेवाग्रे ऐन्द्रिय-प्रत्यक्ष-बिम्बाधारेण व्यक्तीभवति।

चित्रे निवेश्य परिकल्पितसत्त्वयोगाद्
रूपोच्चयेन मनसा विधिना कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः॥

[ अभिज्ञान-शाकुन्तलम् २।९ ]

मनस्यनुभूतिग्रहणं तन्निर्मिताया बिम्बप्रक्रियायाश्च विषये हाब्स-हार्टले-प्रभृतयः प्राचीना विचारकाः कथयन्ति यत् बाह्याः पदार्थाः मस्तिष्के संवेदनानामङ्कनं कुर्वन्ति। सरलाः संवेदनाः मस्तिष्कप्रक्रियया जटिल-संवेदनारूपेण परिणमन्ते। प्रस्तारविस्ताराभ्यां [परम्यूटेशन-काम्बीनेशन] तदेतत्परिवर्तनं प्रजायते। एताभ्यामेवानुभूतीनामनेकानि रूपाणि भवन्ति। परन्तु समग्रे मस्तिष्के संचितास्तिष्ठन्त्यबोधपूर्वाः स्मृतयः। पारिस्थितिपरिवेशमासाद्य ताः स्फूर्तिमागच्छन्ति।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥

[ अभिज्ञानशाकुन्तलम् ५।२ ]

एब्रममहाशयः "दि मिरर एण्ड लैम्प" नाम्नि पुस्तके प्रतिपादितवान् यत् सर्जनात्मिकया कल्पनया बाह्यजगतोऽनुभूत्या संश्लिष्टं बिम्बमाविर्भवति उपर्युक्ते पद्ये तत्स्फुटीकृतं कविना।

बिम्बसर्जनक्षणे कविमानसे समुद्भवन्त्यनेकानि बिम्बानि, परन्तु सः विवेकेन अनुभूत्यनुकूलं तेषां चयनं विधाय संश्लेषणेनाभीष्टबिम्बसर्जनं करोति—

संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

एतदिन्दुमतीस्वरूपं कविमानसे यथा स्फुरितं सा प्रक्रिया मस्तिष्क-संश्लेषणात्मिकैव।

'दीपिकाभिरनेकाभिः समन्तादवभासितम्।
[ वाल्मीकीयरामायणम् सुन्दरकाण्डम् १८।२२ ]

इत्यादिष्वपि बिम्बमिदं दृश्यते। तदेतच्चाक्षुषं बिम्बमिति परिभाष्यते। तरलस्निग्धशीतलदीप्त्या सम्पन्ना इन्दुमती स्वयंवर-मण्डपे भ्रमणं करोति। अनेन संचारिण्या दीपशिखया साम्यं भजते। तदेतच्चाक्षुषं बिम्बं ( Visual Imagery ) संयोजितं कविना।

मानसानि बिम्बानि तद्रूप एव चाक्षुषबिम्बेषु नावतारयितुं शक्यन्ते। प्रत्येकं शब्दः स्वीयं बिम्बं धारयति, अर्थानामपि बिम्बानि भवन्ति, लयगतिच्छन्दसामपि भवन्ति स्वस्वबिम्बानि, सर्वाण्यपि संभूय लोकोत्तरे काव्ये अपेक्षितमुत्पादयन्ति प्रभावम्। तद्यथा—

कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम्।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥

[ अभिज्ञानशाकुन्तल ६।१८ ]

अत्र शब्दबिम्बकम् स्पर्शमार्दवबिम्बम्, छन्दोबिम्बम्, सारांशतोऽत्र आकृतिस्पर्शगन्धानां परस्परान्वितिः बिम्बं प्रभविष्णुं करोति।

एरिक न्यूरन महाशयेन माध्यमे ( मीडियम ) कलाकारप्रकृतेरानुकूल्ये च सविशेषं बलं दीयते। सी० डे० लेविस महाशयः बिम्बं भावगर्भितशब्दचित्ररूपेण व्याख्यातवान्। उभयत्रापि कालिदासः पारदृश्वा वर्तते। स भावानां बिम्बानां च संश्लिष्टवर्णनानि प्रस्तौति—

आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः।
नीता रात्रिः क्षण इव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ ( उत्तरमेघः २१ )

कलामात्रशेषाया हिमांशोः कलायाः क्षीणकायाया यक्षप्रियायाश्च बिम्बमत्र चाक्षुषमेव। ततोऽप्यधिकात्र विरहचरमोत्कर्षस्य मार्मिकी व्यञ्जनास्ति। बिम्बेऽस्मिन्नेकतो तीव्रानुभूतिः सूक्ष्मा निरीक्षणशक्तिः, अपरतश्चाविर्भवत्यस्तोन्मुखस्य चन्द्रस्य बिम्बम्। यद्धि यक्षप्रियायाः शारीरिकीं मानसिकीं च स्थितिं निवेदयते।

कालिदासीयबिम्बवैविध्यस्य चत्वारः आधाराः सन्ति।

(१) रूपात्मक आधारः

(२) बिम्बस्यैन्द्रिय आधारः।

(३) बिम्बानां सर्जनात्मिकायाः कल्पनाया आधारः।

(४) बिम्बानामनुभूतिमूलक आधारः।

रूपात्मक आधारः—अत्राकृतिमूलकानि बिम्बान्यायान्ति। तेषामपि द्वैविध्यं भवति—

(क) रूपबिम्बम्।

(ख) भावबिम्बम्।

आकृत्याधारेण कालिदासीयं बिम्बं यथा—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥

[कुमारसंभव १।१]

द्योतिताऽत्र हिमालयस्य विराट्ता महाकविना।

*बिम्बानामैन्द्रिय आधारः*

पञ्चविधबिम्बानि भवन्त्येतदाधारेण—

(क) दृश्यं चाक्षुषं वा बिम्बम्।

(ख) श्रव्यबिम्बम्।

(ग) स्पृश्यबिम्बम्।

(घ) घ्रातव्यबिम्बम्।

(च) आस्वाद्यबिम्बम्।

*दृश्यं चाक्षुषं वा बिम्बम्*

कालिदासीयानि गत्वराणि रूपबिम्बान्यन्य बिम्बापेक्षया समधिक-प्रभावोत्पादकानि सन्ति । तद्यथा—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥

[ कुमारसंभव ५।८५ ]

अत्र तात्कालिकीं पार्वत्या मानसिकीं स्थितिं चित्रयितुं वेगवत्या नद्या मार्गस्थितः पर्वतः उपमानरूपेण प्रस्तुतः कविना । चाक्षुषेणानेन बिम्बेन विराट्ता काचिदाविर्भवति ।

*श्रव्यबिम्बम्*

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ॥ [ पूर्वमेघः १० ]

अत्र पवनगत्यनुकूलच्छन्दोगतिलयानुप्रासात्मकशब्दप्रयोगेण नादोत्पादनप्रयासो दृश्यते । यो हि पवनस्य गतिसंगीतं ध्वनयति ।

*स्पृश्यबिम्बम्*

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्याप्तो माधवेन ॥

[ मालविकाग्निमित्र ३।४ ]

वसन्तस्पर्शमार्दवानुभूतिरत्र ।

*घ्राणबिम्बम्*

कालागुरुप्रचुरचन्दनचर्चिताङ्ग्यः
पुष्पावतंससुरभीकृतकेशपाशाः
श्रुत्वा ध्वनिं जलमुचां त्वरितं प्रदोषे
शय्यागृहं गुरुगृहात् प्रविशन्ति नार्यः ॥ [ऋतु० २।२२]

चन्दनलेपादीनि, केशसंसक्तानि गन्धयुक्तानि पुष्पाणि गन्धबिम्बं वेदयन्ते।

*आस्वाद्यबिम्बम्*

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा॥

[ रघुवंश ३।४ ]

मृत्तिका स्वादोऽत्र सुदक्षिणाया आस्वाद्यबिम्बाधारेण वर्णितः।

*इन्द्रियविपर्ययबिम्बम्*

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारिणम्॥

सुगन्धिः घ्राणबिम्बम्, शीतलता स्पृश्यबिम्बम्, कथं सुगन्धिः शीतला स्यात्, तदत्रैन्द्रियविपर्ययबिम्बस्यौन्नत्यं दर्शितम्।

*सर्जनात्मककल्पनाया आधारेण निर्मितानि बिम्बानि*

( क ) लक्षितबिम्बानि ( डायरैक्ट इमेजरी )
( ख ) लाक्षणिकबिम्बानि ( फिगरेटिव इमेजरी )

तत्र लक्षितबिम्बं यथा—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु, तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः॥

*लाक्षणिकबिम्बं यथा—*

तस्योत्संगे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्॥

[ पूर्वमेघ ६ ]

*बिम्बानामानुभूतिक आधारः*

कालिदासानुभूतिषु सरलता सहजप्रवाहश्च विद्यते—

दीर्घापाङ्गविसारि नेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धूरुचिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽस्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥

अत्र शकुन्तलाया मुखमण्डले नेत्र-भ्रू-अधर-हास्यानामुल्लेखो नान्येषाम् नात्रानुभूतेः कापि जटिलता। कालिदासः स्वीयां काव्यदृष्टिं स्फोरयन् कथयति यत् केवलं रसास्वादे दत्तावधानैर्भाव्यं न मीमांसायाम्।

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरम्
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥

[ अभिज्ञानशाकुन्तल १।२२ ]



# कालिदासस्य शब्दयोजना

*शिवदत्तशर्मा चतुर्वेदः*

वाङ्मयं हि शब्दप्रधानम्, अर्थप्रधानम्, उभयप्रधानं चाम्नायते। वैदिकमार्षं वाङ्मयं शब्दप्रधानम्, तत्र शब्दपरिवर्तनस्यासह्यत्वात्। पुराणेतिहासस्मृतिशास्त्राण्यर्थप्रधानानि, तत्र वर्णनीयस्यार्थस्य प्रकाशनाय यथेच्छं शब्दप्रयोगसौकर्यम्, तत एव प्रावर्तन्त तत्र पाठभेदाः। न तथा वैदिके वाङ्मये। काव्यनाटकान्युभयप्रधानानि, तत्र शब्दार्थयोः समप्राधान्येनावस्थानम्। न भवति तत्र शब्देषु परिवर्तनसहत्वम् अर्थेषु तु सौन्दर्यं साकारतां भजत एव। शब्द-गुम्फने अर्थ-विधाने च सामञ्जस्य-निर्वाहकः कविरेव दीर्घजीविनो यशसः स्वामी सम्पद्यते। कालिदासकाव्येषु शब्दार्थयुगलस्य सामञ्जस्यं पदे पदे विलोक्यैव काले काले मनीषिमूर्धन्यैस्तत्प्रशंसा कृता, श्रद्धाञ्जलयश्चार्पिताः समर्प्यन्ते च। एकतो यत्र कविनाऽनेन संस्कृतेरादर्शानां चित्रणं विहितम्, रस-निर्झरः प्रवाहितः, तत्र शब्दविन्यासेऽपि व्यञ्जकताया आश्रयो गृहीतः। आनन्दवर्धन-मम्मटादिभिराचार्यैः काव्येषु शब्दप्रयोगविषये शब्दानां रसानुकूलचयने भूयो भूयो निर्दिष्टम्। उदाहरणप्रदानावसरे चाचार्यैः कालिदासपद्यानि प्रायश उपन्यस्तानि।

कुमारसंभवस्य पद्यं विलोक्यताम्—

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया "कपालिनः"।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥

[ कुमारसंभवे ५।७१ ]

पद्येऽस्मिन् शिवस्यानेकेषु पर्यायेषु कालिदासः "कपालि"-पदमेव गृह्णाति, निन्दाप्रसङ्गे तस्य विशेषणोपयोगित्वात्, अनवधानवशादत्र "पिनाकि"-पदं प्रायोक्ष्यत चेत्समस्तमपि सौन्दर्यं व्यनङ्क्ष्यत "पिनाक्यादिपदेषु वीरतादिगुणानामतिव्यञ्जनात्, निन्दाप्रकरणे तेन सर्वथा विपरीतार्थाभिव्यञ्जनात्।

अस्यैव सर्गस्यावसाने विवादानन्तरं पार्वत्या दृढां निष्ठां समभिवीक्ष्य भगवता शिवेन स्वीयं रूपं प्रकटीकृतम्, स प्रस्थानाय चरणोत्थापनं कुर्वतीं पार्वतीं च स्वकरेणावरुरोध। तत्र कवेः पद्यम्,

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥

[ कुमारसंभवे ५।८५ ]

अत्र "न ययौ न तस्थौ" प्रयोगोऽतीव सुन्दरः। अनेकेषां विदुषां विचारानुसारं महाकविना अश्वघोषेणापि स्वीये सौन्दरनन्दनाम्नि महाकाव्ये ईदृशः प्रयोगः कृतः।

शीघ्रताप्रदर्शनेऽस्यैव महाकाव्यस्य तृतीये सर्गे "यावत्" "तावत्" पदयोः प्रयोगो वैलक्षण्यमावहति—

क्रोधं प्रभो संहर संहरेति
यावद् गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार॥

रघुवंश-महाकाव्ये तु कवितायाश्चरमः परिपाकोऽनुभूयते। अर्धनारीश्वर-चित्रणे प्रथमतया कविनाऽनेन वागर्थयोरुपमानता स्थापिता—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

स्वल्पेष्वेवाक्षरेष्वत्र शब्दशास्त्रस्य रहस्यं समर्पितं महाकविना। गोस्वामिना श्रीतुलसीदासेनाप्येतस्यानुकरणं कुर्वता—

"गिरा अर्थ जल वीचि सम कहियत भिन्न न भिन्न"

इति छन्दसि वीचिजलयोरन्यदप्युपमानं स्थापितम्।

रघुवंशे सर्वत्रैव शब्दसौन्दर्यस्यानुपमा छटा विलोक्यते। त्रयोदशसर्गे रावणवधानन्तरं सीतालक्ष्मणादिभिः सह चतुर्दशवर्षोऽनन्तरमयोध्यां

प्रति निवृत्तः। ज्येष्ठप्रतीक्षारतो भरतः सर्वान् प्रणतवान्। तत्र सीताया-श्चरणवन्दनावसरे नितरां भावगर्भितान्यक्षराणि कविना लिखितानि—

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्
वन्द्यं युगं चरणयोर्जनकात्मजायाः।
ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य॥ [ रघुवंश : १३।७८ ]

सीतायाश्चरणविशेषणं "लंकेश्वरप्रणतिभंगदृढव्रतम्" इति।

स्वर्णमय्या लङ्काया एकाधिपतेः रावणस्य प्रणतिपरम्परात्रोटना-भ्यस्तौ चरणावास्तां तस्याः। तयोश्चरणयोर्लग्नं भरतस्य शिरः। तत्तु— "ज्येष्ठानुवृत्तिजटिलम्" रामः प्रवासकाले मस्तके जटाः बभार। तदनुकरणेन भरतेनापि तावत्कालपर्यन्तं जटिलितं स्वीयं शिरः। सुखो-पभोगाद्दूरे स आसीत्, राजभवने संन्यासिरूपेण। तादृशं शिरः तादृशयोश्चरणयोः संलग्नम्। उभावपि पवित्रताविषये परस्परस्माद्-न्यूनावास्ताम्। कः कं तत्र पवित्रयेत्, महाकविरत्र जागरूकः, तस्य निर्णयः—

"अन्योन्यपावनमभूदुभयं समेत्य" किमुक्तमत्र स्वयं कविना, किंवा परित्यक्तम्। विक्रमोर्वशीयस्थेनैकेन पद्येन नितरां समाकृष्टाः समालोचकदृष्टयः। उर्वशीवियोगे अशोकमभिलक्ष्य व्याहरति पुरूरवाः—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः॥

श्लिष्टशैल्या प्रारभ्यान्ते तत्परित्यागोऽत्र भावसौन्दर्यं शतगुणितं विधत्ते।

भावसौन्दर्ये प्रकृति-चित्रणे च विश्वविख्यातं विद्यते अभिज्ञान-शाकुन्तलम्। विलक्षणस्तत्र महाकवेः स्थाने स्थाने शब्दविन्यासः।

निसर्गकन्यां शकुन्तलां प्रथमदर्शने पश्यन् दुष्यन्तः तदीयां रूपसुषमां वर्णयन् व्याहरति—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमपि च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

अत्र "उपस्थास्यति" इति क्रियापदं विचारमर्हति । 'उपस्थितं करिष्यतीत्यर्थप्रकाशनाय पदस्यास्य प्रयोगोऽत्र दृश्यते, तत्र णिजन्तस्य "उपस्थापयिष्यतीति पदस्य प्रयोगः समुचितः । अन्तर्भावितण्यर्थोऽयं प्रयोग इति कैरपि समाधीयते । परमत्रानेन प्रयोगेण कविः किमपि कमनीयमर्थान्तरमाविर्भावयति । उपपूर्वकस्य 'स्था' धातोः पूजनार्थे 'सूर्योपस्थानादौ' प्रयोगदर्शनादत्रापि पूजनार्थ एवास्य प्रयोगोऽभिप्रेतः । शकुन्तलारूपिण्याऽनया पूजनसामग्र्या विधिः कं तावद्भोक्तारं पूजयिष्यतीति दुष्यन्तस्यात्र वितर्कः । पूजने च पुष्प-पत्र-रत्न-मधु-फलानां वैशिष्ट्यं प्रथितमेव । सामग्र्याऽनयाऽभिन्नत्वेनाध्यवसीयते शकुन्तला । अग्रे पञ्चमाङ्केऽपि "शकुन्तला मूर्तिमती च सत्क्रिया" इति वदता कविना अर्थोऽयं स्फुटीकृतः । प्रयोगे कालिदासकाव्येषु विचारात्मकानुसन्धानेन शब्देष्वेतादृशी चमत्कृतिः सर्वत्रैवोपलभ्यते ।

# रघुवंशत्रयोदशे नर्मनिकषः

*डॉ. भास्कराचार्यः त्रिपाठी*

*संस्कृतविभागाध्यक्षः*

*शासकीय-स्नातकोत्तर-महाविद्यालयः, अम्बिकापुरम्*

उपक्रम्यतेऽथ कवित्वचूडायिते रघुवंशे काचिदौचित्यचर्चा, रामस्य पुष्पकयात्रां विवृण्वतः त्रयोदशसर्गस्य सहृदयैर्गीयते माहात्म्यं—यदत्र राष्ट्रप्रेमा विजृम्भितः कविवरस्य विहङ्गमदृशा निसर्गचित्रणेन, सर्गसंज्ञा च मल्लिनाथेन निर्दिष्टा 'दण्डकाप्रत्यागमनम्' इति, या हि न कथञ्चिदौचित्यवती स्यात्—नैव रामो दण्डकां प्रत्यागच्छति, न च दण्डकायाः प्रत्यागच्छति ।

वस्तुतः प्रकृतिचित्रणं प्रत्यागमनेतिवृत्तञ्च गजनिमीलिकया सर्गेऽस्मिन् समाकलयन्तो विद्वांसः, उपेक्षन्ते ध्वनिमनौचित्यसमन्वितम्, महाकविना नितान्तमेकान्तं पुष्पकस्य चन्द्रशाला[1]शिखरप्रान्तमधिष्ठापितौ मर्यादामहिमधुरीणौ सीतारामचन्द्राविति प्रथमश्लोकस्य 'मिथः' पदेन, 'मिथोऽन्योन्यं रहस्यपि' कोषतश्च प्रकटितम् ।

चन्द्रशाला नाम न कालिदासोपज्ञा रहःप्रकल्पना, वाल्मीकिरामायणेऽपि अन्तःपुष्पकं गुप्तगृहाणि वर्णितानि सन्ति—

> ततः काञ्चनचित्राङ्गं वैदूर्यमणिवेदिकम् ।
> कूटागारैः परिक्षिप्तं सर्वतो रजरप्रभम् ॥
>
> —६।१२१।२४

किन्तु तत्र समरव्यतिकरसमुद्धृता भारतीयमर्यादेव हुताशनभर्जित-

---

१. पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति, रघुवंशम् १३/४०
'चन्द्रशाला शिरोगृहमित्यमरः ।

करुणापवादेव सकलवनौकसां मातेव सीता सर्वेषां मध्यवर्त्तिनी तिष्ठति, यथा सीतारामचन्द्रयोर्वचांसि सर्वश्राव्याणि स्युः।[1]

रघुवंशस्य त्रयोदशसर्गे पुनः उपजातीनां विंशतिः निसर्गवर्णनपरा अपि नर्मगर्भतां व्यञ्जन्ति—

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः॥

इति बहुपत्नीकस्य समुद्रस्य निरन्तराधरपानकर्तृत्ववाच्यतः 'एकपत्नीकेन मया कथं नाधरपानं क्रियेत' इति व्यज्यते, अथ च नायको यत्र अनपोढस्थितिः,[2] मुक्तश्शृङ्गारविरोधी; नायिका च परम्परायां रावणस्य अनन्यसामान्यकलत्रवृत्तित्वं श्रावं श्रावं दूयमानमानसा स्यातां, तत्र प्रस्तुतपद्यस्य कियदौचित्यमिति विभावनीयमेव।

अग्रे च—

वेलानिलः केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम्,॥

इति मार्गगतो रामः बिम्बाधरबद्धतृष्णं स्वं मण्डनकालहानेः अक्षमं निवेदयति, मण्डनकालहानेरिति कर्मणि षष्ठी, तथापि हेतौ पञ्चमी[3] गन्धवती चेदर्थं कुत्सयेदेव, इह अनसूयातिसृष्टदिव्याङ्गरागेण जानक्याः सदामण्डनं, केतकरेणूनां बिम्बाधरं प्रति अकिञ्चित्करत्वमुदात्तत्वं धीरत्वञ्च नायकस्य सर्वं खल्वेकपदे निहन्ति महाकवेरिन्द्रवजा, हनुमन्नाटकेऽपि कश्चित्क एवंविधः श्लोकः सङ्गृहीतः[4]—यत्र सद्यः परिणीतो रामचन्द्रो दिवसमसहिष्णुः चित्रलिखितान् सूर्यवाजिनस्ताडयति कशाभिः।

---

१. वाल्मीकिरामायणम् ६।१२३।५५–५६.

२. रघुवंशम् १२।३१.

३. विभाषा गुणेऽस्त्रियाम् २।३।२५.

४. हनुमन्नाटम्.

किञ्च,

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन् संरक्षितां त्वामिव लक्ष्मणो मे ॥

अस्मिम् गर्ह्यवादिनि पद्ये 'भरतस्तथा अनघां श्रियं प्रत्यर्पयिष्यति, यथा हि अन्धपिच्छिलायां गिरिगुहायामादिवसं त्वया सार्धमुषितो लक्ष्मणः खरदूषणयुद्धसमाप्तौ अनघां[1] भोगाभावादनुच्छिष्टां त्वां समर्पितवान्' इति प्रतिपादितम्, मन्ये, सीतालक्ष्मणयोः अघगन्धोऽपि अशेषां रामकाव्यपरम्परां कलुषयेत्, रामश्च ईदृग्वचःप्रवणत्वे स्वचरित्रमसौम्यस्वराद् रजकादधश्च्यावयेत्, कियच्चिरं कालिदासश्च अनुचितोपमानानि समाकलय्य उपमासम्राट् सम्भवेत्, भरतस्य राजलक्ष्म्या अभोगः अनेन उपमानेनासाधारणतया विशदित इति चेत्, किन्तर्हि सीतालक्ष्मणयोरेव अभोगः सुलभोपमानम् ? यतः एकान्तरपद्येन अयमेव भावः पुनरुच्यते—

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥

एभिरुत्कटपद्यैः अन्यषोडशभिः[2] परिहासधीकृत्पदबहुलैः समुद्रादिवर्णनैश्च वस्तुतः सर्गप्रबन्धस्य अर्थशक्त्या दम्पतिनर्म व्यज्यते, यद्धि सीतायाः करुणविरहानन्तरं द्राङ् न बहु शोभते,–विशेषतो रामद्वारा—यस्य हि दिव्यादिव्यप्रकृतिः सर्गारम्भ एव महाकविना प्रतिश्रुता स्यात्–

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥

---

१. 'अनघा' पदेन प्रायः स्त्रीसम्बन्धतो भोगाभाव एव विवक्ष्यते कालिदासेन, तथा ह्यग्रे—'अवैमिचैनामनघेति किन्तु लोकापवादो बलवान्मतो मे', ( रघु० १४।४० ), 'अखण्डं पुण्यानां फलमिव च तद्रूपमनघम्' (शाकुन्तलम् २।१०) ।

२. रघुवंशम् १३।२–४, १०–१४, १८, २०, २१, २८, ३२, ३४–३५, ४२ ।

# अस्मदीयम्

*डॉ० रामजी उपाध्यायः*

अथेदं समाप्यमाने शैक्षणिकसत्रे प्रस्तूयते प्रकृतसंवत्सरे सागर-विश्वविद्यालयीयसंस्कृतविभागेनायोजितानां तेषां तेषां गतिविधीनां विवरणम्। तत्र—

*संस्कृतरूपकाभिनयः*

फरवरीमासस्य द्वितीयतारिकायां डॉ० राधावल्लभत्रिपाठिनो निर्देशने मध्यमव्यायोग इति महाकविभासप्रणीतं रूपकं संस्कृतविभागेन प्रायुज्जि। तौर्यत्रिकसमन्वितः ओजःप्रवाहोन्नमितश्चास्याभिनयः समुपस्थितानां सहृदयानां विदुषां च परितोषायालम्। तत्र गीतातोद्यादीनां प्रयोगेण संवादेषु रङ्गोपयोगाय क्वचित् परिवर्तनेन च निर्देशकस्य नैपुण्यं समुपकल्पितम्। अभिनेतारः सर्वेऽपि संस्कृतविभागीयाश्छात्त्रा आसन्। घटोत्कचस्य भूमिकायां श्रीमान् गोहदरसिंहः सर्वंकषां प्रभविष्णुतामानयामास। हिडिम्बाया भूमिकायां सुश्रीकिशोरी-वाखले रमणीयतमम् अभिनीतवती। वस्तुत एतेन नाट्यप्रयोगेण प्रेक्षकाणां पुनः पुनः संस्कृतनाट्यस्य दिदृक्षा जागरिता।

*संस्कृतशोधपरिषत्*

डॉ० राधावल्लभत्रिपाठिनः प्रेरणया परिश्रमेण च अस्मात् संवत्सरात् विभागे संस्कृतशोधपरिषत् प्रचलिता आस्ते। सुश्रीवीणा ओखदे अस्याः सचिवत्वेन नियोजिता। अस्याः परिषदः स्थापना संस्कृत-विद्यासम्बन्धिशोधकार्यं समुत्तेजयितुं साहित्य-धर्म-दर्शन-कला-संस्कृति-विषयक-चिन्तनं जागरूकं विधातुं प्रबुद्धविदग्धेषु विचाराणां परस्परं निर्बन्धमादानप्रदानाय पूर्वाग्रहरहितचर्चाणामायोजनाय च विहिता। संस्कृतस्य प्राध्यापकाः शोधच्छात्त्राश्चास्याः सदस्यत्वेन समुपकल्पिताः।

परिषदः प्रथमा गोष्ठी फरवरीमासस्य प्रथमदिवसे प्रवर्तिता। तत्र च सुश्रीवीणा ओखदे संस्कृते निबन्धसाहित्यस्य विकासमधिकृत्य

स्वोपज्ञं निबन्धं प्रस्तुतीचकार। लेखिकया निबन्धस्य स्वरूपं तदनु योरोपीयसाहित्ये तद्विधाया विकासं च निरूप्य आ वैदिककालात् संस्कृते निबन्धसरण्यास्तत्त्वानि सम्यग् गवेषितानि। परिसमाप्ते शोधपत्रपाठे तदाश्रित्य परिचर्चां प्रवर्तयन् श्रीमान् राधावल्लभः त्रिपाठी आह—तत्तत्प्रकारकेषु निबन्धेषु अनुस्यूतं किं मूलं तत्त्वमित्यादौ तावद् विचारणीयम्। अस्मन्मते आत्माभिव्यक्तेस्तत्त्वं सर्वविधनिबन्धेषु वर्तत एव। तथैव योरोपीयसाहित्ये 'एसे' इत्यभिधया प्रवर्तमानाया विधाया निबन्धस्य च को विशेष इत्यपि सम्यग् विवेचनार्हः प्रश्नः। अन्यच्च—तत्तद्देशे कश्चिद् विशिष्ट एव निबन्धप्रकारः विशिष्य विकासं प्राप नान्य इत्यत्र किं कारणम्। तद्देशस्य जातीयाः धारणाः परम्परास्तथैव राजनीतिक्य ऐतिहासिक्यः भौगोलिक्यश्च स्थितयोऽत्र कारणं भवितुमर्हन्ति इति। त्रिपाठिमहाभागेनोपस्थापितमुपन्यासं विषयीकृत्य डॉ० योगेशपाण्डेय–डॉ० डी० एल० अडोणी–डॉ० वनमाला भवालकर-प्रभृतयो विद्वज्जनाः स्वविचारान् प्रकटयाम्बभूवुः। अन्ततश्च निबन्धस्य स्वरूपं सम्यक् विमृशन् संस्कृते निबन्धविधाया विषये नितान्तमहत्त्वपूर्णाः सूचनाः प्रददत् डॉ० बच्चूलालः अवस्थी समेषां विदुषां विचाराणां समाहारं चक्रे।

अस्मिन् एव दिने डॉ० बच्चूलालावस्थिमहाभागेन शोधपरिषद उद्घाटनमपि विहितम्। उद्घाटनभाषणे विद्वद्वरेण्येनानेन संस्कृतविद्याविषयकशोधकार्यस्यावश्यकता महत्त्वं शोधस्य सरणिर्विधिश्च सम्यक् विवेचितानि, शोधनिरताश्च छात्राः मौलिकचिन्तनाय प्रेरिताः। गोष्ठ्या अध्यक्षपदं डॉ० डी० एल० अडोणीमहाभागोऽलंचकार।

शोधपरिषदो द्वितीया गोष्ठी डॉ० बच्चूलालावस्थिमहाभागस्याध्यक्षत्वे संस्कृतकाव्येषु आञ्चलिकतत्त्वमिति विषयमुपजीव्य प्रावर्तत। डॉ० राधावल्लभः त्रिपाठी विषयं प्रवर्तयामास। तेन पठिते निबन्धे संस्कृतकाव्येषूपलभ्यमानानि आञ्चलिकतत्त्वानि गहनानुशीलनपुरस्सरं समुद्घाटितानि। परिचर्चायां डॉ० चामूः, डॉ० योगेशपाण्डेयः, डॉ० वनमालाभवालकरमहाभागा च आञ्चलिकतायाः स्वरूपं संस्कृते च

तदुपस्थितिमधिकृत्य स्वसन्देहान् प्रकटयाम्बभूवुः । अध्यक्षमहाभागश्च सम्यक् तान् समादधे ।

*संस्कृतगोष्ठीनामायोजनम्*

अस्मिन् सत्रे बिभागेन पञ्चदशकल्पाः संस्कृतगोष्ठ्य आयोजिताः, यत्र प्राध्यापकाश्छात्त्राश्च साहित्य-संस्कृति-धर्म-दर्शन-सम्बद्धविषयानाश्रित्य संस्कृते विमर्शं विदधिरे ।

*पुस्तक-प्रकाशनम्*

विभागस्य संस्कृतपरिषदा अस्मिन् वर्षे ग्रन्थद्वयं प्रकाशमानीतम्—

१. मानवशिल्पी महाकविः—डॉ० रेवाप्रसादद्विवेदः

२. महाकविः कालिदासः—डॉ० रामजी उपाध्यायः

*स्वागतं नूतनाचार्याणाम्*

अस्मिन् सत्रे विभागे शोधनिरतौ द्वौ विद्वांसौ पी० एच्० डी० इत्युपाधिना विभूषितौ—

१. श्री गुलाबचन्द्र जैनः—( सप्तदशशतके संस्कृतरूपकस्य विकासमधिकृत्य शोधनिरतः )

२. श्री पन्नालालजैनः ( 'जीवन्धरचम्प्वा अध्ययनम्' इति प्रबन्धं प्रस्तुतवान् । )

इमे विद्यार्थिनः अस्मिन् वर्षे शोधकर्मणि दीक्षिताः—

१. श्री जगदीशप्रसादयादवः ( 'हरिवंशपुराणस्यानुशीलनम्' इति विषयः ) ।

२. श्री वीरेन्द्र पटेलः ( 'महाभारते प्रकृतिचित्रणम्' इति विषयः ) ।

३. श्री रामसजीवन त्रिपाठी ( 'वेङ्कटाध्वरेः कृतित्वम्' इति विषयः ) ।

४. सुश्री-कुसुमभूरिया ( 'कालिदासीयरूपकाणां नाट्यशास्त्रीयानुशीलनम्' इति विषयः ) ।

५. सुश्री-रेखा बडवे ( 'भवभूतेः रूपकाणां नाट्यशास्त्रीयानुशीलनम्' इति विषयः ) ।

# ग्रन्थ-समीक्षा

## मध्यकालीन-संस्कृत-नाटक ( हिन्दी )

लेखकः डॉ० रामजी उपाध्यायः, प्रकाशकः संस्कृतपरिषद् सागर-विश्वविद्यालय, सागर, पृष्ठसंख्या ५१५ मूल्यं २५ रूपकाः

लेखकस्य संस्कृतसाहित्येतिहासोपक्रमे नाट्येतिहासविषयको द्वितीयोऽप्यद्वितीयो ग्रन्थः। प्रथमग्रन्थे लेखकेन अश्वघोषादारभ्य भवभूतिं यावत् नाट्यकाराणां प्रतिभाविश्लेषणं नाट्यकलावैशिष्ट्यं च पञ्चशत-पृष्ठेषु निष्पादितम्। प्रस्तुतेऽस्मिन् द्वितीयभागेऽष्टमशताब्दीतः पञ्चदश-शताब्दीपर्यन्तं द्विशतप्रायाणि रूपकाणि पर्यालोचनपरिधौ ऐतिहासिक-क्रमेण समानीतानि। भवभूतेः पश्चात् भारतीयमनीषिणां नाट्यप्रतिभा विलुप्तेति वैदेशिकालोचकानां तेषामनुपदमनुयायिनां भारतीयालोचकानां च विप्रतिपत्तिं सप्रमाणं समालोड्य लेखकेनैतेषां नाट्यकृतीनां राष्ट्रस्य निर्माणे, नाट्यरूपस्य संविधाने च योगदानं प्रथमात् प्रकटितम्। तद्यथा लेखकः सम्यगुपसंहरति—

मध्ययुग भारत के सामाजिक और राजनीतिक विघटन और विप्लव का युग था। इस युग में वीरों को उत्साहित करके संस्कृति और समाज को विघटित करने वालों का डटकर सामना करने की प्रेरणा प्रदान करने वाले बहुशः डिम, व्यायोग और समवकार लिखे गये। इस दृष्टि से महाकवि वत्सराज का प्रयास प्रशस्त है। उनके त्रिपुरदाह, किरातार्जुनीयव्यायोग और समुद्रमथन निष्प्राण में भी राष्ट्ररक्षाभियोग की स्फूर्ति निर्भर करने में समर्थ हैं। आक्रमणकारियों से लड़ने के लिए राजाओं ने संघ बनाये और युद्धघोष हुआ—

एकः करः कलयति स्फटिकाक्षमालां
घोरं धनुस्तदितरश्च बिभर्ति हस्तः।
धर्मः कठोरकलिकालकदर्थ्यमानः
सत्क्षत्रियस्य शरणं किमिवानुयातः॥

संस्कृतसाहित्यस्य व्यावहारिकं मौलिकं च समालोचनं ग्रन्थेऽस्मिन्ना-दर्शभूतं स्वीकरणीयमेव । गर्भाङ्कनाट्यस्य, छायानाट्यस्य छायातत्त्वानां चानुसन्धानं स्थाने प्रतिपादितम् । प्राप्तांशनाटकानामप्राप्तनाटकानां च विषये लेखकेनाभिनवमुपयोगि च विवेचनं सम्यक् निबद्धमत्र ।

**Charudeva Shastri Felicitation Volume**

Published by Charudeva Shastri Felicitation Committee, Delhi. Price Rs. 35–00, pages 656. संस्कृतभागस्य मूल्यम् १५ रूपकाः पृष्ठसंख्या २५६

अभिनन्दनग्रन्थोऽयं सुनीतिकुमारः, वे० राघवन्, दाण्डेकरः, विश्व-बन्धुः, पुसालकरः, अय्यरः, सत्यव्रतशास्त्री इति विदुषां सम्पादकत्वे प्रतिपन्नः । अत्र प्रथमभागे आङ्गलभाषया निबद्धा लेखा द्वितीयभागे च संस्कृतेन हिन्द्या च निबद्धा लेखाः संग्रथिताः सन्ति । आङ्गलभागे वैदिकपारसीकविद्यात्मकः, व्याकरण-भाषाविज्ञानात्मकः, धर्मदर्शनात्मकः, साहित्यिकः, शैल्पिकः प्रकीर्णश्च षट् खण्डा आसते । प्रारम्भे तु शास्त्रिमहाभागानां तपःपूता जीवनचर्या, वैदुष्यं, सारस्वतसंकल्पाश्च वर्णितानि ।

न केवलं भारतीयानामपि तु वैदेशिकानामपि महामनीषिणां वैदुष्यमनुसन्धाननिबन्धेषु सम्यक् प्रतिफलितमस्मिन् ग्रन्थे । जर्मन-देशस्य हैड्रबेकेर्ट, फिलाडेल्फियादेशस्य जार्ज कार्डोना, इंगलैण्ड-देशस्य जे० ब्रक्रन, हालैण्डदेशस्य किपर, जापानदेशस्य नाकामुरा, अमेरिकादेशस्य डेविडपिगरी, फ्रांसदेशस्य लुडविकस्टर्नबाख, भारतीयाश्च आचार्यो विश्वबन्धुः, पुरुषोत्तमलालभार्गवः, क्षेत्रेशचन्द्रः चट्टोपाध्यायः, बहादुरचन्द्रः छावरा, सुब्रह्मण्यः अय्यरः, काङ्गा, वे० राघवन् , सूर्यकान्तः शास्त्री, सिद्धेश्वरो वर्मा इति कतिपयगण्यमानानुसन्धातॄणां लेखैः समलङ्कृतोऽयं ग्रन्थो भारतीयपुरातत्त्वपरामर्शेन स्थायित्वमर्हति ।

*स्मृति अने संस्कृति—राजरत्न श्री नानजी कालिदास महेता-स्मृतिग्रन्थ* ( गुजराती-हिन्दी-आंगल-भाषात्रयेण निबद्धा ) प्रकाशकः स्मृति-ग्रन्थ-सम्पादनसमितिः, आर्यकन्या गुरुकुल, पोरबन्दर, गुजरात । खण्डद्वयेन पृष्ठसंख्या ११६२

स्मृतिग्रन्थोऽयं सुरूपो विषयगौरवानुरूपो भव्यातिभव्यो भारतीविद्यायाः परमो विश्वकोशः संस्कृति-शिक्षण-धर्म-तत्त्वज्ञान-प्रकृतिदर्शन-विज्ञानायुर्वेदेतिहास-पुरातत्त्व-लोकजीवन-शिल्प-स्थापत्य-नृत्य-नाट्य-चित्र-संगीत-साहित्यालोचनादीन् विषयान् क्रोडीकुर्वन्नास्ते वैदिककालतोऽद्यावधि यत्किंचिद् रम्यतमं, तपःपूतं, सर्वपावनं आ हिमालयात् समुद्रं यावदाविर्भूतं निकामं निकामं निचित्य संगृहीतं पाठकानां समुदयाय प्रोत्साहनाय च साधु समुद्गीतम्।

आंगलभाषया डॉ० राधाकृष्णन् महोदयस्य Qualities of Indianness आपासाहबपन्तस्य Resettlement of Man, सङ्कालियामहोदयस्य Kuch : Prospect and Retrospect लेखान्ते च ग्रथितानि अरविन्द-राधाकृष्णन्-जवाहरलालनेहरू-महात्मगान्धि-विवेकानन्द-स्वामिरंगनाथानन्द-रवीन्द्रनाथादीनामुद्बोधवाक्यानि नितरां समुत्कर्षकाणि प्रमोदमावहन्ति।

**Studies in the Sectarian Upaniṣads**

Dr. T. R. Sharma, M. A., Ph. D. Indological Book House, 1675, Kuccha Dakhini Rai Street, Daryaganj, Delhi-6. Price Rs. 25-00, pages 184.

श्रीतुलसीरामशर्मणा प्रणीतोऽयं निबन्धो दिल्लीविश्वविद्यालयस्य पी० एच० डी० उपाधेः सम्यगाहरणाय समुदितः। स्वकीयेन बुद्धि-वैचक्षण्येन तपोभिरत्या च लेखकेन शैववैष्णव-शाक्तोपनिषत्सु पराध्यात्मिकतत्त्वानां, दैवीनां विभूतीनां संस्काराचारादीनां चानुत्तममनुसन्धानं सर्वजनग्राह्यं सम्पादितम्। आत्मविभूतिदर्शनकामानां जिज्ञासूनां प्रतिपत्तये परमं सोपानं विरचयन् शर्मायं पुरातत्त्वालोचकानां वर्धापनं यथातथमर्हति।

**अथर्ववेद—एक साहित्यिक अध्ययन ( हिन्दी )**

लेखको मातृदत्तत्रिवेदी, विश्वेश्वरानन्द-वैदिकशोध-संस्थान होशियारपुर। मूल्यं ३० रूपकाः पृष्ठसंख्या २७५।

शोधोपाधिग्रन्थेऽस्मिन् यथानामाथर्ववेदस्य विशदविवेचनं काव्यतत्त्वानुसन्धानं चोद्दिष्टम्। श्री को० अ० सुब्रह्मण्यानामय्यरमहाभागानां प्राक्कथनेन सुष्ठु संवलितोऽयं निबन्धो राजते। अथर्ववेदे उपबृंहिताः काव्यालोचनस्य मानदण्डाः, विभावादीनां गरिमाणः, छन्दोबन्धाः अलङ्काराः, काव्यविधाश्च सोदाहरणं विभाविताः। भारतीयालोचनविधौ संस्कृतकाव्यानां व्यावहारिकी समीक्षा प्रायशो यत्र तत्र प्रकीर्णा एव दरीदृश्यते। न तत्र निबन्धानुबन्धः प्रवर्तते। आलोचनचणैः मातृदत्तैः वैदिककाव्यस्य या व्यावहारिकी समीक्षा प्रस्ताविता सा शोधार्थिनामादर्शभूता विलसतुतरामिति काम्यते।

## वैराग्यमार्तण्डः

( संस्कृत-हिन्दीव्याख्यासहितम् ) लेखको वीतरागः परमहंसः परिव्राजकः श्रीस्वामी आत्मानन्द जी महाराज, प्रकाशिका श्रीमती गुलाबी देवी, ग्राम तमालपुरा, पो० आ० मुहम्मदाबाद-यूसुफपुर, जनपद गाजीपुर। मूल्यम् १२ रूपकाः पृष्ठसंख्या ३५०

आकरग्रन्थोऽयं वैराग्यमधिकृत्य वैदिकविचारधारां धाराधिरोहं विशदयति। उपनिषत्-स्मृति-पुराण-महाभारत-योगवासिष्ठ-रामायणोपदेशसाहस्री-विवेकचूडामणि-भर्तृहरिशतकादीनां सारं सारं विगाह्य महामुनिभिर्वैराग्यसूक्तिरत्नानि सर्वजनग्राह्यं सम्पादितानि। स्त्रीणां निन्दा स्वभावतः परिव्राजकानां प्रियो विषयो भवति। पुरावृत्तिमनुस्मरद्भिरेवात्मानन्दैः बहुकृतमनिष्टमपि स्त्रीणां विगानम्।

## जयभारतादर्शः

लेखको गोस्वामिफागुनभट्टः बीकानेरतः प्रकाशितः ४ रूपकाः पृष्ठसंख्या २६६ ( संस्कृतं-हिन्दीटीकासहितम् )

भट्टप्रवरस्य फाल्गुनस्य चम्पूकाव्येऽस्मिन् महाभारतानुसारं १३ पर्वसु भारतभूमिः, पञ्चशीलानि, राजनीतिः, वङ्गविच्छेदः, छम्बक्षेत्रम्, श्यालकोटाञ्चलम्, क्षेमकरणयुद्धम्, हाजीपीरद्वारधर्षणम्, भारतस्य शौर्यपरम्परा, सुभाषवसुः इत्यादीनां प्रतिभोत्कृष्टं वर्णनं सम्पादितम्।

आद्यन्तं नवयुवकानां विशेषतः साधारणतः सर्वेषां भारतवासिनां परमोत्साहस्य जननाय गाथाः समीहिताः सन्ति। अपरं च देशस्य ह्रासमवरोद्धुकामो, लेखकश्चारित्रिकपतनं प्रति कारुण्यं वितनोति। ग्रन्थोऽयमाधुनिकसंस्कृतसाहित्यस्य गौरवं वर्धयति।

## साहितीजगती ( संस्कृतम् )

लेखकः काल्लूरि हनुमन्तरावः, प्राप्तिस्थानं K. V. Seshubai, OUB/F 7 University Campus, Hyderabad 7, मूल्यं पञ्चरूपकाः पृष्ठसंख्या १६८

मूलतः आन्ध्रभाषया प्रणीतेयं निबन्धावलिः प्रशंसकानामनुरोधमनु संस्कृतेन विरचिता। अत्र साहितीजगती, साहित्य-प्रयोजनम्, कवित्वमितिवृत्तं च, काव्येऽस्पष्टता, वाङ्मयसमालोचनम्, साहित्यं समाजश्च, महाभारते केचन सन्देहाः रामायणपरिशीलनम् इत्येते निबन्धविषयाः सन्दृब्धाः सन्ति। लेखकस्य विचारणा पाश्चात्त्यप्रणालीं वैज्ञानिकसरणिं चानुधावति। कतिपयनिबन्धाः शोधात्मकाः सन्ति। रामायणपरिशीलननामके निबन्धे वानराणां शबरत्वमनुसन्धानरीत्या प्रतिपादितम्। संस्कृतज्ञानां कृते एतस्य ग्रन्थस्य माहात्म्यं सविशेषं प्रतिभाति।

## ऊर्मिलीय-महाकाव्यम् ( संस्कृतम् )

लेखकः प्रकाशकश्च श्री पं० नारायणशुक्लः, प्रधानाचार्यः श्रीनाथसंस्कृतमहाविद्यालय, हाटा, देवरिया ( उ० प्र० ) मूल्यं रूपकाः ४/५० पृष्ठसंख्या २०० ।

सप्तदशसर्गेषु निष्पन्नोऽयं सर्गबन्धो रामायणकथायाः परमोत्तमामेकां प्रकृतिं समवलम्ब्य रमणीयां काव्यकलनां प्रस्तौति। जनकोर्मिलाजन्म, कौशिकवृत्तं, रामादीनामुद्वाहः, परशुरामवृत्तं, रामवनवासाज्ञा, सौमित्रिशिक्षणं; और्मिलसम्प्रबोधः, भरतानुरोधः, रामराज्यं, सीतावनवासः लवकुशजन्म, रामाश्वमेधः तत्र अश्वस्य बन्धनात् लक्ष्मणपुत्रैः सह रामपुत्रयोः युद्धं, सीतायाः पुनर्ग्रहणं, लक्ष्मणपुत्रयोः राज्यसंचालनम्, इति प्रमुखा आख्यानविषयाः सन्ति। प्रायशः सांवादिकशैल्या महाकाव्येऽस्मिन् नाट्यतत्त्वं समुदित-

मिवाभाति । आधुनिकसमाजस्य वैषम्यं निराकर्तुं कविः मनागपि नात्र प्रावर्तत। अथ च केवलं पुराणपरता पुनः पुनः परामृष्टा। कान्यबन्धस्य केवलं पश्चाद्दर्शनं नानुमोदनीयम्। वर्तमानस्य शोधनं भविष्यस्य निर्माणं च कवेरेकं कर्मेति सम्प्रधार्य मनीषिणा सम्प्रवर्तनीयम् ।

## सौप्रभम् ( संस्कृतम् )

लेखको वेदव्यासशुक्लः, गर्गप्रकाशन—खोड़ा- पो० आ० तारादीक्षित जनपद देवरिया ( उ० प्र० ) मूल्यं २ रूपको, पृष्ठसंख्या ६६ ।

कथाकृतिरियं शुक्लस्य प्राचीनकाव्यशैलीं विशेषतो कादम्बरीमनुहरति। दुर्भाग्यवशात् न तत्र सन्ति बहुसंख्यकास्ते महाभागा ये बाणानुरागिणः बहुपृष्ठकमपि भृशमलङ्कारानुवर्तिनं समासबन्धं पठितुकामाः। कवेः विचारणापि प्राचीनविषयपरिधेः सीमोल्लंघनं न विदधाति। मार्जारीभाषणं पुनर्जन्म-व्यवस्था, पूर्वजन्मकथा—इत्यादीनि न सन्ति लोकरुचिराणि चित्राणि। कवेः प्रतानवती वर्णनालता सफला चारुचमत्कारपूर्णा च वर्तते ।

## सुमनोऽञ्जलिः ( संस्कृतम् )

लेखकः प्रकाशश्च के० राजन्नशास्त्री, संस्कृतसाहित्यरत्नं, विद्याप्रवीणः धर्मपुरी, करीमनगर ( आन्ध्रप्रदेशे ) प्रस्तुतिकर्ता डा० बी० आर० शर्मा, प्राचार्यः, विभागाध्यक्षश्चोस्मानियाविश्वविद्यालयस्य। मूल्यं २–५० । पृष्ठसंख्या ४० ।

राजन्नशास्त्रिणो गीतिकाव्यानां षोडशानां संग्रहो विलसति सुमनोऽञ्जलिः तद्यथा, सत्यं परं धीमहि, प्रत्यूषः, बालिपुष्टविलसितम्, शर्वरी, परपुष्टदशकम्, नमो महसे, सायम्, श्रीधर्मपुरीलक्ष्मीनरसिंहसुप्रभातम्, मङ्गलाशासनम्, स्वतन्त्रभारतम्, तारावलिः, परिसान्त्वनम्, नवरत्नानि, प्रशस्तिः, श्रद्धाञ्जलिः, स्मृत्यञ्जलिश्च। सुमनोऽञ्जलिरयं परं प्रसादं जनयति सुमनसां भव्यभारतीधारावगाहेन। युगानुरूपं न केवलं भावानुबन्धोऽपि तु पदशय्या सर्वशः कामपि नवतां परिचाययति। तथाहि स्वतन्त्रभारतमधिकृत्य कविः सम्बोधयति—

जयताद् भारतजननी श्यामा सस्यैश्च वाहिनीसेव्या।
विद्युद्वल्लीदीप्रा जनहितनिरता नु वसुमती महिता ॥

राष्ट्रकण्टकानामुद्धरणाय कविनानेकत्र प्रणोदिताः पाठकाः।

## श्रीगान्धिगौरवम् ( संस्कृतम् )

लेखकः श्रीशिवगोविन्दत्रिपाठी, प्रकाशको मातृशरणम् ए–६५, जनता कालोनी, जयपुर मूल्यं रूपकाः ५–५० पृष्ठसंख्या २१०।

बहुशः संस्कृतज्ञा गान्धिमहाभागानां चरितैः परमुद्विग्ना आसन्। न तत्र महात्मनां दोषोऽपि तु तथाकथितपण्डितानां स्वार्थान्धतैव कारणम्। संस्कृतज्ञेष्वपि केचित् महात्मनां भारतीयसंस्कृति-रक्षणं दरिद्रनारायणत्वं च संविदानाः तेषां चारित्र्यवैशिष्ट्यं सर्वजनग्राह्यं विधातुमूरीकर्त्तुं च काव्यगुणमण्डितं कुर्वन्ति स्म। तेषु पण्डितप्रकाण्डेषु शिवगोविन्दो ललामभूतो गान्धिगौरवमिति सर्गबन्धं विरचितवान्। अष्टसर्गात्मकेऽस्मिन्महाकाव्ये महात्मनां प्रमुखवृत्तानि समाख्यातानि। तत्र वर्णनानामभावो महाकाव्योत्कर्षं क्वचित् क्षीणं करोति। तद्यथा समालोचकवरैर्विशदीकृतम् गान्धिगौरवे विविधा अंशाः स्फूर्तिदायकाः, जीवनस्योन्नतिकारकाश्च गुणानां चयो दृश्यतेऽत्रेति। सरलसरलया संस्कृतगिरा निष्पन्नमिदं काव्यं संस्कृतच्छात्राणां कृते महतीमुपयोगितां भजते।

## वैदिक व्याकरण ( हिन्दी )

लेखकः डा॰ सत्यपालनारङ्गः, प्राध्यापकः, संस्कृतविभागः रामजस कालेज, दिल्ली ७। प्रकाशकः—देववाणी-प्रकाशन, ११५७/१४ रोहतास नगर, शाहदरा, दिल्ली ३२। मूल्यं ६ रूपकाः पृष्ठसंख्या १२८

लघुकायमिदं वैदिकव्याकरणं लेखकस्य शास्त्रीयं परमलाघवं व्यनक्ति। न खल्वेतादृशं वैज्ञानिकसरणिं भजमानं सरलं सुबोधं सर्वाङ्ग-प्रकाशपूर्णं च छात्रोपयोगि पुस्तकमेतावदासीदिति विचार्य सत्यपालं वर्धापयामः। नवीनतत्त्वानुसन्धानेन वैयाकरणशैली सर्वत्र सुसंभृतैव। वैदिकवर्णमाला, वैदिकसन्धिः, सुबन्तरूपाणि, तिङन्तरूपाणि, कृदन्त-

प्रत्ययाः, तद्धितप्रत्ययाः, समासप्रक्रिया, कारकप्रक्रिया, वैदिकस्वरप्रक्रिया, वैदिकच्छन्दांसीत्येते विषया विविधाध्यायेषु संगाधिताः। शुद्धिपत्रस्य प्रमादवशात् दैर्घ्यं विनिवर्तनीयम्।

## भारतीय दर्शन के सम्प्रदाय ( हिन्दी )

लेखकः डा० सुधीरकुमार गुप्तः, प्रकाशकः भारतीमन्दिर, अनुसन्धानशाला, आर—२ विश्वविद्यालयपुरी, जयपुर मूल्यं ५ रूपकाः, पृष्ठसंख्या २८८

पुस्तकेऽस्मिन् भारतीयदर्शनानां विविधसम्प्रदायानां संक्षिप्त-परिचयेतिहास-साहित्यादीनि सुनिबद्धानि सन्ति। पूर्वपरिचितेषु दर्शनेतिहाससन्दर्भेषु प्रायशो मध्ययुगं यावत् दार्शनिकप्रवर्तनं परिचीयते। अस्मिन् पुस्तके तु पारसीकेस्लामख्रीष्टदर्शनानां, ब्रह्मकुमारी-दयानन्दा-नन्दमार्ग-गान्धि-शरणानन्दारविन्दादीनां दर्शनानां सोपकरणं वर्णनमद्यावधि विन्यस्तम्। रामकृष्ण-विवेकानन्दादीनां दर्शनं कथं नाम विस्मृतमिति नावधीयते। सुबोधरीत्या विषयप्रतिपादनं लेखकस्यानुत्तमं वैशिष्ट्यं सर्वत्र पाठकानां सुखसंवादं प्रणयति।

आलोचनाचणकाः

# सांख्यसिद्धान्ते कैवल्यस्वरूपम्

*डॉ० अमलधारी सिंह*

*सुश्री राजमाथुर*

अपवर्ग एव परमः पुरुषार्थो मानवजीवनस्य। मानवजीवनेन सह घनिष्ठसंबम्धत्वाद् वैदिकावैदिकानां सर्वेषां दर्शनानामपीदं कैवल्यमेव परमं प्रयोजनं भवति। सर्वेषां प्रवृत्तिरप्यत्रैव दृश्यते। किंतु सत्यपि समाने साध्ये तत्र साधनविषये स्वरूपविषये च मतभेदो विद्यत एव। एवं सांख्यसिद्धान्तस्यापि कैवल्यमेव चरमं साध्यमस्ति।

अस्मिन् खलु जगति सन्ति सर्वे मानवास्त्रिविधतापतापिताः। आध्यात्मिकाधिभौतिकाधिदैविकरूपेण सन्ति तत्र त्रिविधानि दुःखानि। त्रिगुणात्मिकायाः प्रकृतेर्विकारत्वाज्जगदिदमस्ति नानाक्लेशपरिपूर्णम्। अतो लोकेऽस्मिन् शब्दादिविषयसंयोगाद् यत्किंचिदपि सुखमधिगम्यते तत्तु दुःखसम्भिन्नमेव भवति। निष्केवलमनन्तमपरिच्छिन्नं सुखं कदापि लब्धुं न शक्यते। सांख्यदृष्ट्या सा सुखानुभूतिरपि दुःखमयं बन्धनमेव भवति। समानतन्त्रस्य योग[1]स्यापीदमेव सम्मतम्। सुखानुभवकाले तापदुःखं दुष्परिहरं भवति। एवं सर्वाणि भोगसाधनानि परिणामतो दुःखात्मकान्येव। अतोऽसह्यवेदनीयत्वाद् दुःखमिदं जिहीर्षितं भवति। एवं त्रिविधानामेतेषां दुःखानामपघातकाय निरसनायोपशमनार्थं प्रवृत्तिर्भूता सांख्यदर्शनस्य। दुःखनिवृत्त्यर्थमेवास्य शास्त्रस्य प्रवृत्तिर्जातेति प्रथमयैव सांख्यकारिकया[2] निर्ज्ञायते प्रथमेन च सांख्यसूत्रेण।[3] तत्त्वसमाससूत्रेणापि[4] दुःखानि निरूपितानि।

---

१. परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः।
—योगसूत्र २।१५

२. दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ। १ अब

३. अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।

४. त्रिविधं दुःखम्। २२

'कैवल्यार्थं प्रवृत्ते'रिति हेतुना सांख्याचार्येणेश्वरकृष्णेन पुरुषस्य सिद्धिः कृता। इमं हेतुं व्याकुर्वताऽऽचार्यवाचस्पतिमिश्रेण कैवल्यस्य स्वरूपमपि प्रतिपादितम्—

'शास्त्राणां महर्षीणां दिव्यलोचनानां च *कैवल्यमात्यन्तिकदुःख-प्रशमलक्षणं* न बुद्ध्यादीनां सम्भवति। ते हि दुःखाद्यात्मकाः कथं स्वाभावाद्वियोजयितुं शक्यन्ते। तदतिरिक्तस्य त्वतदात्मनस्ततो वियोगः शक्यसम्पादः।

अन्यत्रापि[6] तेनैवाचार्येण *'कैवल्यं दुःखत्रयविगमम्'* इतिरूपेण निःशेष-क्लेशराशिसमुच्छेदरूपं सांख्यसम्मतं कैवल्यस्वरूपं निरूपितम्। एवं त्रिविधानां दुःखानामात्यन्तिकी[7] निवृत्तिरेव परमपुरुषार्थरूपेण स्वीकृताऽत्र।

सांख्यसिद्धान्तेऽस्मिन् प्रकृतिस्तु त्रिगुणात्मिका सत्त्वरजस्तमोरूपा सुखदुःखमोहयुता। महदहंकारेन्द्रियाणि शब्दाद्यात्मकमिदं जगच्च प्रकृतिपरिणामत्वात्सर्वे तद्रूपाः सुखदुःखमोहसमन्विताः। अतो यथार्थतोऽस्ति दुःखं प्रकृतिगतम्। पुरुषस्तु[8] हेतुरहितोऽनादिर्नित्यो व्यापकोऽनाश्रितः स्वतन्त्रो निरवयवोऽलिङ्गो विवेकी संघातरहितस्त्रिगुणातीतश्चेतनः। रजोगुणरहितत्वात्तस्मिन् क्रियाया अभावः। एवं स निष्क्रियोऽकर्ताऽपरिणामी नित्यकूटस्थः समस्तविकारविरहितः पुष्करपलाशवन्निर्लिप्तः। त्रिगुणातीतत्वात्स सुखदुःखमोहैः सर्वथाऽसंपृक्तो नित्यमुक्तो[9] मध्यस्थः

५. सांख्यकारिका १७ द

६. तत्त्वकौमुदी ६८

७. आत्यन्तिको दुःखत्रयाभावः कैवल्यम्।
—तत्त्वकौमुदी ११, एवं सांख्यसूत्र १।१

८. सांख्यकारिका १०, ११, १९, ३ द; सांख्यसूत्र १।१५, १९, २०, १३९, १४६, १६२; ४।१३; ६।२,
तत्त्वसमाससूत्रवृत्ति ३

९. आत्यन्तिको दुःखत्रयाभावः कैवल्यम्। तच्च तस्य स्वाभाविकादेवात्रै-गुण्यात्सुखदुःखमोहरहितत्वात् सिद्धम्। —तत्त्वकौमुदी १९
न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते।—सांख्यसूत्र १।१९
नित्यमुक्तत्वम्। सां० सू० १।१६२

उदासीनोऽमलः। अतः स्वरूपतस्तस्य[10] बन्धनं संसरणमेवं विमोचनं नास्ति—

'मुचेर्बन्धनविश्लेषार्थत्वात्सवासनक्लेशकर्माशयानां च बन्धनसमाख्यानां पुरुषेऽपरिणामिन्यसम्भवात्' —तत्त्वकौमुदी ६१

निष्क्रियत्वात्प्रेत्यभावापरनामा संसारो नास्त्यस्य पुरुषस्य। वस्तुतः प्रकृतेरेवास्ति बन्धनं संसरणमेवं विमोचनमपि। किन्त्वविवेकवशाद् एते सर्वे धर्मा निर्गुणे धर्मविहीने पुरुषे समारोपिता भवन्ति—

'प्रकृतिरेव नानाश्रया सती बध्यते संसरति मुच्यते चेति। बन्धनमोक्षसंसाराः पुरुषेषूपचर्यन्ते। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते, तदाश्रयेण भृत्यानां तद्भागित्वात्, तत्फलस्य च शोकलोभादेः स्वामिनि सम्भवात्। भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषसंबन्ध उपपादितः' इति वाचस्पतिमिश्राः। —तत्त्वकौमुदी ६२

एवमनाद्यविद्यावशात्स्वरूपतो निर्लिप्तस्यास्य पुरुषस्य प्रकृत्या सह संबन्धो भवति। ततश्च बुद्धौ संक्रमितः स तद्गतान् निःशेषान् धर्मान् स्वस्मिन्नेवोपचरति।[11] अनेन प्रकारेणोदासीनोऽकर्ताऽपि स कर्तेव भवति। जपाकुसुमस्फटिकमणिवत् सत्त्वसंयोगात्स प्रकृत्यादीनां त्रिगुणात्मकतत्त्वानामचेतनानां प्रेरकोऽधिष्ठाता[12] भवति। दृश्यानामेषां द्रष्टा भवति। सुखदुःखमोहमयानामेषां भोग्यानां स भोक्ता भवति—

'पुरुषस्तु सुखाद्यननुषङ्गी चेतनः। सोऽयं बुद्धितत्त्ववर्तिना

---

१०. तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥
—सांख्यकारिका ६२

११. पुरुषाद् भेदाग्रहाल्लिङ्गधर्मानात्मन्यध्यवस्यति पुरुषः। —तत्त्वकौमुदी ५५
पुरुषस्य सर्वविषयोपभोगसंपादिका बुद्धिः। तत्त्व० ३७

१२. तत्सन्निधानादधिष्ठातृत्वं मणिवत्। सांख्यसूत्र १।९६
कुसुमवच्च मणिः। सां० सू० २।३५

ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवति'
—तत्त्वकौमुदी ४

'असङ्गस्य परमार्थतो दर्शनकर्तृत्वासम्भवाद् बुद्ध्युपाधिकमेव द्रष्टृत्वमात्मन इति मन्तव्यम्......एवं च द्रष्टृत्ववद् भोक्तृत्वस्यापि सम्भवात्'
—विद्वत्तोषिणी १७

अन्यत्राप्येवमेवोक्तम्—

विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥'

किन्त्वस्य पुरुषस्येदं भोक्तृत्वं तु प्रतिबिम्बादानमात्रं[13] न तु स्वाभाविकम्। एवं त्रिकालेषु बन्धनविहीने मुक्तत्वे सत्यपि तस्मिन् पुरुषे तत्र बन्धनस्य सुखादिभोगस्यारोपणं भवत्येव। अतोऽस्ति तस्य बन्धनमेवं संसरणम्। अस्माद्धेतोर्विमोचनमपि भवत्येव। अपरिणामित्वात्तत्त्वतो नास्ति तस्य जननमेव मरणमपि। किन्त्वविवेकवशाद् देहेन्द्रियमनोबुद्ध्यादिभिः सह तस्याभिसंबन्ध एव जन्मरूपेण तथा पूर्वोपात्तानामेषां परित्याग एव मृत्युरूपेण प्रोच्यते।[14] अतोऽस्य भोक्तृत्वं सुखित्वं दुःखित्वं

---

१३. तस्मात्प्रतिबिम्बरूपेण पुरुषे दुःखसंबन्धो भोग्याख्योऽस्ति ।
—सांख्यसूत्रप्रवचनभाष्य १।१

अपरिणामित्वात्पुरुषस्य विषयोपभोगः प्रतिबिम्बादानमात्रम् ।
—प्रवचनभाष्य २।१०४

उपरागात्कर्तृत्वं चित्सान्निध्यात् ।—सांख्यसूत्र १।१६४

निःसङ्गेऽप्युपरागोऽविवेकात् । सां० सू० ६।२७

१४. निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहंकारबुद्धिवेदनाभिः पुरुषस्याभिसंबन्धो जन्म, न तु पुरुषस्य परिणामः, तस्यापरिणामित्वात् । तेषामेव च देहादीनामुपात्तानां परित्यागो मरणम्, न त्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात् ।—तत्त्वकौमुदी १८

न वास्तविकमपि तु समारोपितमागन्तुकमविवेकनिमित्तम्।[२५] एवमस्य विमोचनमपि परिकल्पितमेव।

सांख्यसिद्धान्ते त्रिविधानां दुःखानामैकान्तिकी तथाऽऽत्यन्तिकी निवृत्तिरेवापेक्षिता साध्यरूपेण। येषां दुःखानामविवेकख्यातिनिबन्धनः संबन्धः पुरुषतत्त्वेन पूर्वमासीत्तेषामेवाभावोऽभिमतः कैवल्याय। किंतु त्रिगुणात्मिकायाः प्रकृतेर्नित्यत्वाद् रजोगुणपरिणामभूतस्य दुःखस्यापि विनाशो न सम्भाव्यते। किन्त्वेषामुपशमनं[२६] तु शक्यमेव। एतेषां दुःखानां प्रध्वंसाभावो भवति। किंतु '*सादिरनन्तः प्रध्वंसाभावात्*' इति नियमेन कार्यत्वादप्यस्य दुःखाभावस्य नित्यत्वमस्त्येव। अतः कैवल्य-साधनरूपेण प्रकृतिपुरुषविवेकख्यातिरेव प्रतिपादिता—

व्यक्ताव्यक्तज्ञविज्ञानात्—सांख्यकारिका २ द
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः—सां० क० ४४ सद
अपवर्गहेतुर्विवेकख्यातिः—तत्त्वकौमुदी ५२
तच्च ( कैवल्यम् ) सत्त्वपुरुषान्यताख्यातिनिबन्धनम्—तत्त्व० २१
गुणपुरुषान्यताख्यातिज्ञानम्—तत्त्व० २३
सत्त्वपुरुषान्यतासाक्षात्कारि ज्ञानम्—तत्त्व० ६४
अष्टाङ्गयोगानुष्ठानजनितश्च ( धर्मः ) निःश्रेयसहेतुः—तत्त्व० २३
विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता नेतरात्—सांख्सूत्र ३।८४

यतोऽविवेकख्यातिर्बन्धनम्। अतो विवेकख्यातिरेव तद्वैपरीत्याद् बन्धना-भावे हेतुर्भवति। अविवेकख्यातिकारणात् सकलधर्मरहितः सुखदुः-खैरसंपृक्तोऽपि स पुरुषो बुद्धिगतेषु धर्मेष्वहंबुद्धिं करोति। अतो विवेक-ख्यातिवशाद् आगन्तुकानां समारोपितानां सर्वेषां धर्माणां निरासः

---

२५. अविवेकनिमित्तो वा पञ्चशिखः।—सांख्यसूत्र ६।६८
अविवेकख्यातिनिबन्धनो हि तदुपभोगः।—तत्त्वकौमुदी ६६
अकर्तुरपि फलोपभोगोऽन्नाद्यवत्।—सांख्यसूत्र १।१०५
अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः।—सां० सू० १।१०६

२६. यद्यपि न सन्निरुध्यते दुःखं तथापि तदभिभवः शक्यः कर्तुम्।
—तत्त्वकौमुदी १

परित्यागो भवति। कर्तृत्वसुखित्वदुःखित्वादयः सर्वे धर्मास्ततः पुरुषादपाकृता भवन्ति। एवमन्यधर्मान् विहाय स स्वस्मिन्नेव चिन्मात्रतायां स्वरूपेऽवस्थितो भवति। दुःखनिवृत्तिरूपा पुरुषस्य चित्तत्त्वस्य एषैव स्वरूपप्रतिष्ठाऽस्ति तत्कैवल्यम्।

यावदेव विवेकख्यातिर्नाविर्भवति तावत्कालं कारणानां परम्परा[17] प्रवर्तत एव। सा प्रकृतिर्बन्धनहेतुभूतान् शब्दस्पर्शादीन् सुखदुःखरूपान् भोगान् अस्मै पुरुषाय संप्रयच्छति। किंतु विवेकख्यातिमन्तं[18] पुरुषं प्रति सा निवर्तते। तं प्रति सा निवृत्तप्रसवा भवति पुनर्न शब्दादीन् विषयान् प्रस्तौति। अत्र विवेकख्यातेस्तु स्वरूपमेवास्ति 'प्रकृतिरेव कर्त्री परिणामिनी सुखदुःखमोहरूपा। अहं त्वकर्ता, मयि क्रियाया आवेशो नास्ति, न चास्ति मम स्वामिता, अस्म्यहमसङ्गोऽपरिणामी पुरुषः'।[19] अनेनैव ज्ञानेन कैवल्यसिद्धिर्भवति।

अत्र सिद्धान्तेऽस्मिन् प्रकृतेः प्रवृत्तिः पुरुषार्थनिमित्तमेव। भोगापवर्गौ[20] हि द्वौ पुरुषार्थौ। अनयोः सिद्ध्यर्थमुपकारिणी प्रकृतिः स्वयमेव यतते। एवमेषा प्रकृतिः स्वभावतः सहजरूपेण तस्य पुरुषस्य विमोच-

---

१७. विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः। तत्त्व० २
यथाऽऽहुः 'विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्'।

उद्धृत : तत्त्वकौमुदी ४४

१८. तावदेव प्रकृतिर्भोगमारभते न यावद्विवेकख्यातिं करोति।
अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते। तत्त्वकौमुदी ४४

१९. एवं तत्त्वाभ्यासान्नास्मि न मे नाऽहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥

—सांख्यकारिका ६४

२०. भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ। —तत्त्वकौमुदी ३७

नार्थं प्रवर्तते।[२१] धर्माधर्मादिसप्रभावेनैषाऽऽत्मानमेव बध्नाति तथा पुनः सैव ज्ञानरूपेणैकभावेनात्मानमेव विमोचयति।[२२] भेदेनात्मानं प्रकाश्य[२३] सा निवृत्ता भवति तथा तं पुरुषं प्रति पुनर्न प्रवर्तते। तं प्रति सोदासीना भवति। इदमौदासीन्यमेवापवर्गः।[२४] एवं भोगापवर्गरूप-द्विविधपुरुषार्थस्य संसिद्धौ सत्यां सा प्रकृतिः स्वव्यापारादुपरता भवति। शब्दादीन् विषयोपभोगान् सा प्रकृतिः पुनर्न प्रयच्छति। तं विमुक्तं पुरुषं प्रति तस्याः पुनर्व्यापारो[२५] न भवति। प्रकृतिपुरुषयोर्भेदस्तु पूर्वतः स्वाभाविको विद्यत एव। किन्त्वविद्यावशान्न प्रतिभासते। यथा बुद्धिः सर्वभोगान् पुरुषाय संप्रयच्छति तथैव सा विवेकख्यातिमपि—

> 'प्रधानं सविकारमन्यद् अहमन्य' इति विद्यमानमेवान्तर-मविवेकेनाविद्यमानमिव बुद्धिर्बोधयति न तु करोति'
>
> —तत्त्वकौमुदी ३७

एवं स्वभावतो नित्यमुक्तः पुरुषो विवेकज्ञानप्रभावात्पुनर्मुक्तो भवति। रजस्तमोवृत्तिकलुषया बुद्ध्याऽसम्भिन्नो भवति। सुखदुःखमोहैः सर्वथाऽसंपृक्तः स्वच्छो भवति तथा स्वस्मिन्नेव स्वरूपेऽवस्थितो भवति।

---

२१. प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः।

सांख्यकारिका ५६ सद

पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्। सां० का० ५८ सद

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य।—सांख्यसूत्र २।१

२२. रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः।

सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण॥—सांख्यकारिका ६३

२३. पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः। सां० का० ५९ सद

पुनर्न दर्शनमुपैति पुरुषस्य—सां० का९ ६१ द

२४. द्वयोरेकतरस्य वौदासीन्यमवर्गः।—सांख्यसूत्र ३।६५

यद्वा तद्वा तदुच्छित्तिः पुरुषार्थः। सां० सूत्र ६।७०

२५. यथौदनकामः ओदनाय पाके प्रवृत्तः ओदनसिद्धौ निवर्तते, एवं प्रत्येकं पुरुषान् मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तं प्रति पुनर्न प्रवर्तते। —तत्त्वकौमुदी ५६

यद्यपि स्वरूपाधिगमात् स पुरुषो मुक्तो भवति। किंतु नैषाऽऽत्यन्तिकी मुक्तिरपि तु जीवन्मुक्तिरेषा। भेदाग्रहणादनन्तकर्माशयप्रचयेन सह स संबद्धो भवति। बन्धनरूपस्य तस्य कर्माशयस्य विपाककालोऽप्यनियतो भवति। किंतु तत्त्वसाक्षात्कारोदयादेव कर्माशयप्रचयोऽयं दग्धबीजभावं प्राप्नोति तथा पुनर्न जात्यायुर्भोगलक्षणफलाय कल्पते। यतोऽविद्याभावात्तत्कर्म[२६] न प्ररोहं यात्यङ्कुररूपेण। किंतु विवेकज्ञानात् केवलं संचितकर्मणामेव विनाशो भवति तथापि नवीनकर्मणां संचयः पुनर्न भवति। किंतु शरीरस्थितौ प्रारब्धकर्मपरिपाकौ संस्कारौ भोगेनैव क्षेतव्यौ उपभोगादेव संक्षयो भवत्यनयोर्न तु ज्ञानात्। अतः प्रारब्धकर्मपरिपाकवशात्स चक्रभ्रमिवत्[२७] तावत्कालपर्यन्तं शरीरं धारयति यावत्कालमुपभोगेनैषां कर्मणां क्षयित्वं न भवति। एषैव जीवन्मुक्तिः। शरीरेण संबद्धोऽपि सुखदुःखादिभिस्तस्य संश्लेषो न भवति।

एवं यदा प्रारब्धविपाका उपभोगेन क्षयित्वमुपयान्ति तदा स ऐकान्तिकमात्यन्तिकं *दुःखत्रयविगमलक्षणं*[२८] *कैवल्य*मधिगच्छति। पुनस्तस्य बन्धनं न भवति।[२९] त्रिगुणात्मिकायाः प्रकृतेरसम्भिन्नोऽयं पुरुषः स्वचिन्मात्रस्वरूपे प्रतिष्ठितो भवति—इदमेव कैवल्यस्वरूपं सांख्यसिद्धान्तसम्मतम्। एवं त्रिविधरूपेण[३०] क्रमतो वा मोक्षः प्रतिपादितः। प्रथमो मोक्षोऽधिगम्यते ज्ञानोद्रेकाद् बन्धनहेतुभूताया अविद्याया

---

२६. क्लेशावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते। तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः।
तत्त्व ६७

२७. सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः॥—सांख्यकारिका ६७

२८. प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति॥—सांख्यकारिका ६८

२९. पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकाविरयपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः। —तत्त्वकौमुदी ६६

३०. त्रिविधो मोक्षः। तत्त्वसमाससूत्र २२

निवृत्तिरूपः। द्वितीयस्तु रागसंक्षयाद् विषयेष्विन्द्रियाणामुपशमरूपः। तृतीयो मोक्षो धर्माधर्मरूपकृत्स्नकर्मक्षयादेवावाप्यते। उक्तं च—

आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात्।
कृत्स्नक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम्॥

वायुपुराणेऽप्येवं निरूपितं—

पूर्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात्।
लिङ्गाभावात्तु कैवल्यं कैवल्यात्तु निरञ्जनम्।
निरञ्जनत्वाच्छुद्धस्तु ततो नेता न विद्यते।
तृष्णाक्षयात्तृतीयस्तु व्याख्यातं मोक्षकारणम्॥ १०२।७६-८०

किंतु भावागणेशेन[31] त्वयमप्रधानो मोक्षस्तथाऽऽत्यन्तिकरूपेण दुःखत्रयनिवृत्तिरेव प्रधानो मोक्ष इति प्रतिपादितम्।

यद्यप्यत्र सिद्धान्तेऽस्मिन् त्रिविधानां दुःखानामात्यन्तिकी निवृत्तिरेव कैवल्यं तथाप्यस्य दुःखाभावस्याभिप्रायः सुखस्य भावो नास्ति। यतस्त्रिगुणात्मकत्वात्प्रकृतेः सुखमपि दुःखमिव धर्मोऽस्ति। स्वरूपतः सा सुखदुःखमोहरूपा। अतो मोक्षकाले स पुरुषः सुखदुःखमोहैरसंसृष्टो भवति। एवं सुखदुःखयोरुभयोरप्यभावो भवति कैवल्यदशायाम्।

*'मरणमेवापवर्ग'* इति चार्वाकमतं मोक्षस्वरूपमत्र नाभिमतम्। यतः आत्मा पुरुषस्तु नित्योऽनादिः परिणामरहितः। जन्ममृत्यू च शरीरस्य धर्मो न त्वात्मनः। इच्छाद्वेषप्रयत्नसुखदुःखधर्माधर्मसंस्कारप्रेत्यभावादीनाम् असाधारणगुणानामुच्छेदोऽपि न कैवल्यम्। यतो निर्गुणत्वान्नैते चिद्धर्माः। मोक्षदशायामयमात्मा मनोबुद्ध्यादिसंयोगाभावेऽचेतनत्वं प्राप्नोतीति न्यायवैशेषिकसम्मतं स्वरूपमत्र न विचारसहम्। यतश्चैतन्यं न हि तस्यागन्तुको गुणोऽपि तु स्वरूपमेव। *'कृत्स्नकर्मविप्रमोक्षलक्षणो मोक्ष'* स्तथैवं सकलकर्मबन्धनवियुक्तः स जीवः किंचिदूनमाकारं प्राप्य लोकाग्रे स्थितो भवतीति जिनवराणामपि मतं न समीचीनम्। यतः स

---

३१. एतत्त्रयं ज्ञानद्वारभूतत्वाद् गौणं मोक्षत्रयम्।
आत्यन्तिकत्रिविधदुःखनिवृत्तिरेव मुख्यो मोक्षः॥
—तत्त्वयाथार्थ्यदीपन २२

तु विभुरशरीरी त्रिगुणातीतत्वान्निष्क्रियः। अतः कुत्रापि तस्य गतिर्नास्ति। एवमेव मोक्षदशायामिन्द्रविष्णुसत्यादिलोकानां सम्प्राप्तिर्भवति, तदपि न संगतम्। 'ईश्वरांशत्वात्स जीवस्तस्य परमात्मनः सलोकतां सान्निध्यं प्राप्नोती'ति रामानुजाभिप्रेतं मतमपि स्वीकर्तुं न शक्यतेऽत्र। ये त्वद्वैतवेदान्तिनोऽपवर्गावस्थायाम् आत्मनो ब्रह्मरूपत्वं सच्चिदानन्दमयत्वं स्वीकुर्वन्ति तदपि न समीचीनमस्मिन् सिद्धान्ते। यतः आनन्दमयत्वस्वीकारे तस्य स्वरूपतो हानिर्भवति। चिन्मात्रमेव तस्यात्मनः पुरुषस्य स्वरूपम्। अतोऽविवेकवशाद् भेदाग्रहणात् समारोपितानि प्रकृतिगतानि सर्वाणि दुःखानि विहाय स पुरुषः स्वकीये विशुद्धे निष्केवले चिन्मात्रस्वरूप एव प्रतिष्ठितो भवति। एषा स्वरूपप्रतिष्ठैव सांख्यसिद्धान्तसम्मतं कैवल्यम्। यथा समानतन्त्रे योगेऽपीदमेव स्वरूपं प्रतिपादितमस्ति—

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्।—योगसूत्र ३।५५
पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः
कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेः।—योगसूत्र ४।३४

# पालिसाहित्य-प्रसङ्गः

*श्री शिवशङ्कर त्रिपाठी*

भगवतः सम्मक्सम्बुद्धस्य तथागतस्य सर्वेषामुपदिष्टानां वचनानां सङ्कलनमेव पालिसाहित्यमिति कथ्यते आलोचकैः। गद्यपद्यमयं पालिसाहित्यम्। गद्यभागे तत्र स्थविराणां सामान्यजनानां च कृते नीतिधर्मपोषकाणि वचनानि उपदिष्टानि, एवं पद्यभागे तु विशेषेण भिक्षुभिक्षुणीनां वासदिनचर्याचारविचाराणां कथनेन समं प्रसङ्गानुकूलं नदनदीपर्वतवननिर्भराणां नैसर्गिकच्छटाया निदर्शनं, शिशिरग्रीष्मप्रावृट्शरद्वसन्तादिसरसानां ऋतूनां च प्रभावचित्रणं पठ्यतेऽस्माभिः। 'सुत्तविनयाभिधम्म' इति त्रीणि पिटकानि। त्रिषु पिटकेषु सुत्तपिटकं विषयादिदृष्ट्याऽत्यन्तं महत्त्वपूर्णम्। सुत्तपिटकेऽस्मिन् दीघमज्झिमसंयुत्ताङ्गुत्तरखुद्दकनामधेयाः निकायाः। पञ्चदशग्रन्थानां सङ्कलनम् अयं खुद्दक निकायः। वस्तुतः पालिसाहित्यस्य काव्यभागोऽयं निकायः। सङ्कलितेषु ग्रन्थेषु निद्देशपटिसम्भिदामग्गेतिद्वयं विहाय खुद्दकपाठधम्मपदोदानेतिवुत्तकसुत्तनिपातविमानवत्थुपेतवत्थुथेरगाथाथेरीगाथाजातकापदानबुद्धवंसचरियापिटकेति सर्वे ग्रन्था काव्यरीतिं कविल्पनां च विदधति। तत्र सुत्तनिपातथेरगाथाथेरीगाथाजातकापदानग्रन्थेषु साहित्यरीतयविशेषेण दरीदृश्यन्ते। धर्मदर्शनसमाजसंस्कृतिभूगोलेतिहासादीनां विषयाणां तत्र समावेशो वर्तते। कथाकाव्यभाष्यनाट्यादिशैल्याश्च वैविध्यम् अपि वैशिष्ट्यमस्य खुद्दकनिकायस्य। अनुशीलनेन तु ज्ञायते यत् साहित्यस्य प्रचलिताः समस्ताः रीतयः अङ्गभूतत्वमवाप्य साहित्याध्येतॄणाम् अनुसन्धित्सूनां च कृते निश्चितरूपेण कर्षणभूमिरियं निकायः।

---

१. हिरिं तरन्तं विजिगुच्छमानं। सखा हमस्मि इति भासमानं।
सय्हानि कम्मानि अनादियन्तं। नैसो ममं ति इति नं विजञ्ञा॥
—( त्रिष्टुभ् )-हिरिसुत्त। १

सुत्तनिपातसंज्ञको ग्रन्थस्तु वैदिकसाहित्यस्य रीतीः भाषां, छन्दश्च अनुगच्छन् अस्माकं हृदि आदरभावानां अनायासेनैव सृष्टिं करोति। खुद्दकनिकाये वैदिकऋचाम् आदर्शः, छन्दसां वैविध्यं, अलङ्काराणां कमनीयच्छटा, करुणवीरश्रृङ्गारादीनां रसानां पूर्णाभिव्यक्तिः, प्रवाहमय-भाषासनाथललितपदावली, मर्यादासंस्कृतिधर्मसमाजेतिहासविश्लेषांग-सुरुचिपूर्णकथानां कमनीयता, प्रसादगुणपूर्णवैदर्भीरीतिसमन्वितायां शैल्यां भावानुगामि भाषानिबद्धकाव्यानन्दस्रोतश्च सहृदयपाठकानां हृदयं कर्षन्ति। थेरथेरीगाथयोः तत्र संगीतमयसरसभाषायां स्वानुभूति-प्रवणात्माभिव्यक्तिमूलकगीतिमयशैल्यां च स्थविराणां जीवनस्योन्मुक्त-भावव्यञ्जकं शाश्वतगानमपि श्रूयतेऽस्माभिः।

काव्यग्रन्थेषु साहित्यसौष्ठवदृष्ट्या थेरीथेरीगाथाऽपदानं सुत्तनिपातश्च विशेषेण उल्लेखनीयाः। जातकेऽपि निसर्ग-चित्राणां वर्णनं रसिक-सहृदय-पाठकानां मनो मोहयति। प्राचीनतमोऽयं सुत्तनिपातः। अनुशीलनेनास्य भाषायाः सादृश्यं वैदिकभाषया सह प्रतीयते यथा[२]—आतुमानं, 'सुवामि', 'सुवाना', 'अवोचासि,' 'रुण्णेन', 'उग्गहायन्ति,' कुप्पटिच्चसन्ति, 'संजसंजी, विसंतसंजी आदि शब्दानां प्रयोगः। विविधशैलीप्रयोगेणायं ग्रन्थः साहित्यानुसन्धित्सूनां कृते विवेचनाया भूमिरस्ति। एकस्मिन्नेवास्मिन् ग्रन्थे उपदेशमूलकानां सूक्तानां संवादात्मकानामाख्यानात्मकानां च गहनभावभावितानां तथागतस्योपदेशानां प्रखरज्योतिःकिरणजालकैः चमत्कृता वयं तत्कालीनसमाजे साहित्यिकप्रतिभाया सम्यगादरभावान् तस्य प्रचारप्रसारौ चानुभवामः। संवादशैल्यां ग्रन्थस्य द्वितीयसूक्ते (सुत्ते) सामाजिकसुसम्पन्नताया निदर्शनमद्वितीयम्।

धनियगोपः

---

२. पुरिमे पहाय अपरं सितासे। एजानुगा ते न तरन्ति संगं।
तै उग्गहायन्ति निरस्सजन्ति। कपीव साखं पमुखं गहायं॥

—सुद्धट्ठकसुत्तं। ४

न संजसंजी न विसंजसंजी। नो पि असंजी न विभूतसंजी।
एवं सतस्स मे विभाति रूपं, संजानिदाना हि पपंच संखा॥

—कलहविवादसुत्तं। १३

पक्कोदनो दुद्धखीरोऽहमस्मि, अनुतीरे महिया समानवासो।
छन्ना कुटि आहितो गिनि, अथ चे पत्थयसी पवस्स देव ॥

भगवा :

अक्कोधनो विगतखिलो हमस्मि, अनुतीरे महियेकरत्तिवासो।
विवटा कुटि निब्बुतो गिनि, अथ चे पत्थयसी पवस्स देव ॥

—इत्यादयः ॥ धनियसुत्त

सुत्तेऽस्मिन् धनियगोपो स्वगार्हस्थ्यजीवनस्य पूर्णसम्पन्नतां प्रकटयति, भगवान् बुद्धः आत्मनो वैराग्यजीवनस्य सम्पूर्णतां वर्णयति।

एवमेव हेमवतसुत्ते द्वयोर्यक्षयोः संवादरीत्या तथागतस्यार्हतः बुद्धस्य निर्मलजीवनस्य चित्रणं मनोहारि। तत्र हेमवतयक्षस्य प्रश्नान् उत्तरयति द्वितीयः सातगिरयक्षः—

हेमवतयक्खो :

कच्चि अदिन्नं नादियति, कच्चि पाणेसु संजतो।
कच्चि आरा पमादम्हा, कच्चि झानं न रिंचति ॥

सातगिरयक्खो :

न सो अदिन्नंआदियति, अथो पाणेसु संजतो।
अथो आरा पमादम्हा, बुद्धो झानं न रिंचति ॥

—हेमवतसुत्ते। ४, ५

किं सः अस्तेयप्रमादध्यानेभ्यो निरन्तरं विवेकबुद्ध्या प्रभावितोऽस्ति—अस्तेयप्रमादौ दूरीकृत्य सततं ध्यानमेवाचरति? किं स प्राणिषु संयमाचरणं विदधाति? श्रुत्वा तं, सातगिरयक्षो तस्य सन्देहान् निवारयन् वदति—'स अर्हन् बुद्धः प्रमादास्तेयाभ्याम् आत्मानं न प्रभावयति, प्राणिषु निरन्तरं संयमरीतिम् अनुसरति, ध्यानेषु रममाणः स भागवान् प्राणिनां मङ्गलं च अनुशोचति।' तत्र पबज्जापधानसुत्तयोः पारायणवग्गस्य वत्थुगाथायां च आख्यानात्मिकाशैल्याः सुष्ठु निदर्शनं यथा—

कोसलानं पुरा रम्भा अगमा दक्खिणापथं।
आकिंचञ्ञं पत्थयानो ब्राह्मणो मन्तपारगू॥

सो अस्सकस्स विसये अलकस्स समासने।
वसी गोधावरीकूले उञ्छेन च फलेन च ॥
तस्सेव उपनिस्साय गामो च विपुलो अहु।
ततो जातेन आयेन महायञ्ञं अकप्पयि ॥
महायञ्ञं यजित्वान पुन पाविसि अस्समं।
तस्मिं पतिपविट्ठम्हि अञ्ञो आगच्छि ब्राह्मणो ॥

—पारायणवग्ग-वत्थुगाथा । १-४

सहजभाषानिबद्धमिदमाख्यानं पठित्वा कस्य हृदयं नाकृष्टं स्यात् ? सुत्तनिपातेऽस्मिन् अनेकेषु सुत्तेषु प्रथमान्तिमपादयोः अनेकधा आवृत्तिं पठित्वा सहृदयसाहित्यरसिकानां लोकगायकधुरीणानां च मनसि सहजेनैव महदौत्सुक्यमाकर्षणं च उत्पत्स्यते।[1] उपमादिविविधालङ्काराणां दिव्यच्छटा तु रससिद्धसंस्कृतकवीनामलङ्कारप्रयोगं स्मारयति। 'उरगसुत्ते' तु सर्वमेव विषय-विवेचनमुपमामाध्यमेन कृतम्—यः संसारेऽस्मिन् उदुम्बरे कुसुमोत्पत्तिमिव सारं न पश्यति स एव भिक्षुः संसारसागरमप्रयासेनैव पारयितुं क्षमो भवति यथा उरगः स्वां पुरातनीं त्वचं निस्पृहभावेन त्यक्तुं समर्थोऽस्ति ( उगरसुत्त । ५ )।' भिक्षुः यस्य मनसि नास्ति कोपः, न च पापपुण्यं प्रति कश्चिदपि मोहभावः स एव भवाब्धिं लङ्घितुं क्षमो भवति यथा उरगो स्वां पुरातनीं त्वचं त्यजति—

यस्सन्तरतो न सन्ति कोपा, इति भवाभवतं च वीतिवत्तो।
सो भिक्खु जहाति ओरपारं, उरगो जिण्णमिव तचं पुराणं ॥

उरगसुत्त । ६

रूपकोपमाऽलङ्काराणां प्रयोगोऽत्यन्त-स्वाभाविकेन रूपेण भेदोपभेद-सनाथेन च 'कसिभारद्वाज-सुत्ते, 'रतनसुत्ते' 'धम्मचरियसुत्ते' वंगीससुत्ते, सन्तरिकभारद्वाजसुत्ते, सभियसुत्ते, सेलसुत्ते, सल्लसुत्ते, सुद्धट्ठकसुत्ते, जरासुत्ते, तिस्समेत्तेय्यसुत्ते, मागन्दियसुत्ते पारायणवग्गस्य वुत्तगाथायां

१. अद्धा पसंसाम सहायसम्पदं, सेट्ठा समा सेवितब्बा सहाया।
एते अलद्धा अनवज्जभोजी, एको चरे खग्गविसाणकप्पो ॥

—खग्गविसाण०। १३

च सफलतापूर्वकं जातः।' खग्गविसाण 'तु' एको चरे खग्गविसाण-कप्पो' इति रूपकयोजनाऽऽद्यन्तं यावात् चित्ताकर्षकाऽस्ति। रतनसुत्ते' आर्यसत्येषु पारंगतोर्हतं 'इन्द्रकीलेन सह निरूप्य द्वयोः साधर्म्यं वर्णयति' सुप्रतिष्ठितः इन्द्रकीलो यथा मरुता कथमप्यान्दोलनक्रियां न करोति, तथैव स्थिरचित्तानां जनानां संज्ञा 'सत्पुरुष' इति प्रख्याता, स सत्पुरुषः स्वप्रज्ञाज्ञानप्रबलत्वेनार्यसत्यानां गहनभावानां सर्वस्वं ज्ञान-चक्षुषा दृष्टवन्तः स्थिरीभवति (अष्टम)। आतपेन तप्तजनाय यथा तृष्णाशमनार्थं जलस्यावश्यकता वरीवर्ति, तथैव बङ्गीसोः तथागतार्हतः-बुद्धस्य सुधोपमवाणीं श्रोतुमभिलषति—

परोपरं अरियधम्मं विदित्वा, मा मोहयी जानणनोमविरियं।
वारिं यथा धम्मनि धम्मतत्तो, वाचाभिङ्खामि सुतं पवस्स॥

—बङ्गीससुत्ते। ११

शान्तिप्रिय तृष्णामहन्तारो मुनिः सांसारिकविषयवासनासुकिंचिदपि मोहात् न भ्रमति, यथा जलजो जलेन प्रभावितो भवितुं स्वप्नेऽपि न शक्यते—

येहि विवित्तो विचरेय्य लोके, न तानि वदेय्य नागो।
एलम्बुजं कण्टकं वारिजं यथा, जलेन पङ्केन च नूपलित्तं।
एवं मुनी सन्तिवादो अगिद्धो, कामे च लोके च अनूपलित्तो॥

—मागन्दियसुत्ते। ११

मनुष्यस्य श्रेष्ठत्वं राज्ञा, नद्याः सागरेण, यज्ञस्याग्निहोत्रेण, नक्षत्रस्य चन्द्र-मसा, तेजस्विजनानां सूर्येण, सह सादृश्यं स्थापयन्ति बुद्धभगवन्तः—

अग्गिहुत्तमुखा यञ्ञा सावित्तीछन्दसोमुखं।
राजा मुखं मनुस्सानं नदीनं सागरो मुखं॥
नक्खत्तानं मुखं चन्दो आदिच्चो तपतं मुखं।
पुञ्ञं आकङ्खमानानं सङ्घो वे यजतं मुखं ति॥

—सैलसुत्ते। २१, २२

एवमेवानेकेषु स्थानेषु विविधविधालङ्काराणां हृदयावर्जकं संयोजनं

विद्यते । अपदानाख्येग्रन्थेऽपि अलङ्काराणां कमनीयता काव्यसौष्ठवं सृजति ।

भिक्षुभिक्षुणीनां स्वानुभूतिजन्यभावोद्वेलितानुरंजनभावरंजितानामुद्गाराणां सरसवर्णनंतत्रथेरथेरीगाथायां कस्य हृदये न करोति निर्भयानन्द-सृष्टिः स्थविराः प्रावृटं स्फूर्तिदाकंकालं, निस्तब्धनिशायाः क्षणं संयमशीलज्ञानिजनानां कृते तपश्चर्यायाः मनोरमंसमयं नवोपत्रनेषु विकसितानां सुमनःपुंजानां स्वरूपे परमशक्तिमानस्यालौकिक रूप-प्रदर्शनं, नदीनां सततप्रवहमाननिर्मलजलधारासु जीवनस्यामन्दगतेः प्रेरणां मन्यमानाः सकलभावविलासान् दूरीकृत्य निर्मलेन शाश्वतगानं गायन्ति स्म । गिरिमानन्दस्थविरः जलवर्षणंनिरीक्ष्य मधुरलयसमान्वितगीतिमिव श्रवणानन्दहर्षभूमिं परिकल्प्य परमशान्तिमनुभवति—

वस्सति देवो यथा सुगीतं, छन्ना मे कुटिका सुखा निवाता ।
तस्सं विहरामि वूपसन्तो, अथ चे पत्थयसि पवस्स देव ॥

—इत्यादय । गाथा १–५

स्थविराणां हृदयं नृत्यलीनानां मयूरदलानां स्वच्छन्द विहारं दृष्ट्वा स्वच्छन्दविचरणकल्पनयाभिभूतं भवति, जलवर्षणात् जलार्द्रीकृतां धरित्रीं निरीक्ष्यलोकमङ्गलेकामनया प्रेरितं विकासोन्मुख कलिकायाः सुगन्धम् अनुभूय लोकमिमं विविधसुकृत्येन सनाथीकतुम् औत्सुक्येन शुभावसरस्य प्रतीक्षां करोति—

अङ्गारिनो दानि दुमा भदन्ते फलेसिनो छदनं विप्पहाय ।
ते अच्चिमन्तो व पभासयन्ति, समयो महावीर भागीरसानं ॥
दुमानिफुल्लानि मनोरमानि, समन्ततो सब्बदिसा पवन्ति ।
पत्तं पहाय फलना समाना कालो इतो पक्कमनाय वीर ॥

—कालुदायी । गाथा १, २

वसन्ततोः प्रभावेणाक्रान्तः जीवक शुभानामधेयां भिक्षुणीं सुरम्येवातावरणे रमणाय निमन्त्रणं ददाति—

मधुरं च पवन्ति सब्बसो कुसुमरजेन समुट्ठिता दुमा ।
पठमवसन्तो सुखो उतु एहि रमाम सुपुप्फिते वने ॥

कुसुमितासिखरा च पदपा अभिगज्जन्ति व मालुतेरिता।
का तुय्हं रतिं भविस्सति यदि एका वनभोगाहिस्ससि॥

—सुभाथेरी। गाथा ३७१–७२

हेमन्तर्तोरपि चित्रणं निरभ्राकाशतले विचरणं, शीताधिक्येन प्रभाविता एषा हेमन्तयामिनी, तथापि शीतवशात् न किंचदपि विरामस्यावश्यकता—

अब्भोकासे विहरसि, सीता हेमन्तिका इमा रत्तियो।
मा सीतेन परेतो विहञ्ञित्थो, पविस त्वं विहारं फुसितग्गळं॥

—तेकिच्छकारिथेर।

एतादृशं निसर्गवर्णनं थेरथेरीगाथयोः स्थाने-स्थाने[1] मनो मोहयति। अपदानकाव्ये बुद्धाश्रमस्य बुद्धक्षेत्रस्य मनोरमं चित्रणं—सर्वतः विकसितानां पुष्पाणां परागः प्रसरति, सरोवरेषु निर्मलोदकं, कमलदलेषु भ्रमराणां गुञ्जनं, सुरभितसुमनःसनाथा वृक्षावलिः हृदय-कालुष्यं हरति—

पुप्फभिकिण्णा सुचित्ता सुरभिगन्धभूसिता।
गन्धपंचङ्गुलिता हेमच्छदनछादिता॥
चतुद्दिसा पोखरञ्ञो पदुमुप्पलसन्थता।
सोवण्णरूपा खायन्तु पद्मरेणुरजुग्गता॥
पुप्फन्तु पादपा सब्बे पासादस्स समन्ततो।
सयं च पुप्फा मुञ्चित्वा गन्त्वा भवनमोकिरुं॥

—अपदान। १।१।३६–४१

तत्र 'सारिपुत्तथेरापदाने' विकासशीलसुमनःसनाथानां वृक्षाणां वर्णन-प्रसङ्गे आमलकी जम्बूनिम्ब-कुटजकर्णिकारपुन्नागकदम्बकेतकीचम्पक-

---

१. वनवच्छथेर। १३, चित्तकथेर। २२, सिरिवड्ढथेर। ४१, रामाणेय्यक०। ४९, विमल०। ५० सञ्जिच्च०। २४०, सम्बुलकच्चानो०।१५५, चूलकथेर। १६६, सप्पक०। १९६, एकविहारियथेर। २३४, महाकस्सप०। २६१, तालुपुटथेर। २६२, उसभथेर। गाथा ११३ एवं गिरिमानन्दथेर।

सिन्धुवारबकुलादिद्रुमाणां, चक्रवाकपारावतकोकिलहंसकीरादिविहगानां च उल्लेखः प्रायो दृश्यते। विकसितकमलविकीर्णपरागस्याङ्कनम्—

पदुमुप्पलसंछन्ना पुण्डरीकसमायुता।
मन्दालकेहि संछन्ना दिब्बगन्धो पवायति॥
एवं सब्बंगसम्पन्ने पुप्फिते फलिते वने।
सुकते अस्समे रम्मे विहरामि अहं तदा॥

अपदान। १।३।१७२–७३

एतेषु काव्यग्रन्थेषु न केवलं निसर्गचित्रणं, साहित्यिक-सौष्ठवमलङ्काराणां कमनीयता, अपितु संस्कृतसाहित्यस्य सूक्तिग्रन्थेष्विव स्थाने स्थाने प्रसङ्गानुकूलानां सुभाषित-वचनानामपि छटा दर्शनीया—

परित्तं दारुमारुय्ह यथा सीदे महण्णवे।
एवं कुसीतमागम्म साधुजीवी पि सीदति॥

—सोममित्तथेर।

तस्सेव तेन पापियो यो कुद्धं पटिकुज्झति।
कुद्धं अप्पटिकुज्झन्तो संगामं जेति दुज्जयं॥

—ब्रह्मदत्तथेर।

'दोषस्य गोपनं तस्य वर्द्धनाय एवं दोपस्य प्रकटनं तस्य शमनार्थं' भवति, अतः दोषस्य गोपनं न कर्तव्यम्—

छन्नमतिवस्सति विवटं नातिवस्सति।
तस्मा छन्नं विवरेथ एवं तं नातिवस्सति॥

—सिरिमण्डथेर।

उपानहस्तु पादत्राणाय भवन्ति, किन्तु आतपेन तप्ते सति चरणान् क्लेशयन्ति। एवमेव अकुलीनो जनः तमेव द्रुह्यति येन स ज्ञानं प्राप्नोति—

यथापि कीता पुरिसस्सुपाहना सुखस्स अत्थाय दुखं उदब्बहे।
धम्माभितत्ता थलसा पपीळिता, तस्सेव पादे पुरिसस्स खादरे॥

एवमेव यो दुक्कुलीनो अनरियो तम्हाक विज्जं च सुतं च आदिय।
तमेव सो तत्थ सुतेन खादति अनरियो वुच्चति' पानदूपमो॥

—उपाहनजातके

एतादृशानां सुभाषितानां कथनं तत्र थेरगाथायाः १०६, ११७, १४०, १४७, ४८, ५०, १९७, ३०६, ३०७, ३२६, ३७३, ४१५, ४४५, ५४५, ५५४, ६०३, ६७२ संख्यकासु गाथासु प्राचुर्येण विद्यते। जातकग्रन्थेऽपि मंगल-जातके, महासारजातके, तेलपत्तजातके, एकपण्णजातके, गुणजातके, पुटभत्तजातके, तिलमुट्ठिजातके सुभाषितानि प्रायः प्राप्यन्ते।

# रामायणे कण्ठतोऽपि कृतं महाकाव्यलक्षणम्

*रहसविहारी द्विवेदी*

किमपि पूर्वसिद्धं प्रसिद्धं लक्षणमलक्षीकृत्योपनिबद्धे तथाप्यादर्शीभूत आदिमहाकाव्ये वाल्मीकीये रामायणे कण्ठतोऽपि कृतं सर्वाङ्गपूर्णं महाकाव्यलक्षणमत्र प्रस्तूयते[1]—

तपःस्वाध्यायनिरतेभ्यो वाग्विदां वरेभ्यो[2] धर्मात्मनो भगवतो लोके[3] [ च ] कस्यचिद् गुणवतो वीर्यवतो धर्मज्ञस्य कृतज्ञस्य सत्यवाक्यस्य दृढव्रतस्य चरित्रवतः सर्वभूतहितस्य विदुषः समर्थस्य प्रियदर्शनस्य आत्मवतो जितक्रोधस्य द्युतिमतोऽनसूयकस्य संयुगे च जातरोषस्य[4]

---

१. वाल्मीकीये रामायणे विशेषतो बालकाण्डस्य द्वितीये, तृतीये, चतुर्थे चोत्तरकाण्डस्य चतुर्नवतितमे च सर्गे महाकाव्यस्वरूपसम्बन्धिनः सङ्केताः प्राप्यन्ते। कोष्ठकेतराः प्रायोऽविकला एव शब्दा अत्र प्रदर्शिताः, ये वस्तुतः काव्यस्वरूपनिर्धारणप्रसङ्ग एव तत्र व्यवहृताः सन्ति; केषुचित् सत्यपि विभक्तिगते भेदे स्थापनायां न किमप्यन्तरमत्र विद्यते। 'गीताप्रेस-गोरखपुरस्य' २०२० वैक्रमाब्दे प्रकाशितस्य मूलमात्रस्य द्वितीयस्य संस्करणस्य उपयोगोऽत्र कृतः।

२. तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥ बाल० १।१

३. रामस्य चरितं कृत्स्नं कुरुत्वमृषिसत्तमः।
धर्मात्मनो भगवतो लोके रामस्य धीमतः॥ बाल० २।३२

४. 'वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम्' [ बाल० २।३३ ] इति ब्रह्मणो वाक्यानुसरणेन तु नारदोक्तो नायको ग्राह्य आसीत् किन्तु यादृशं नायकं कविरपेक्षते तदेवोचितं मत्वा संग्रहेऽस्मिन् वाल्मीकिना पृष्टस्यैव सामान्यनायकस्य [ न तु रामस्य ] स्वरूपमत्राङ्गीकृतम्। तच्चैवम्—

जनैः श्रुतस्य[5] नरस्य[6] [ वा ] धीमतो धीरस्य[7] यशस्विनो[8] [*'नायकस्य'*] धर्मार्थसहितं हितं समग्रं *'वस्तु'* श्रुत्वा[9] तस्य रहस्यं प्रकाशं च वृत्तं[10] व्यक्तमपि भूयोऽन्विष्य[11] काव्ये काचिदत्र वागनृता न भवति[12] [ इति विचार्य तत्स्वकल्पनयाऽपि सम्बद्धय तस्य *'नायिकायाः'* ] कृत्स्नं महच्चरितं,[13] [ उच्चकुलोत्पन्नस्यातिपराक्रमशालिनोऽपि *'प्रतिनायकस्य'* ] वधं[14] [ पराभवादिकं च ] चरितव्रतः[15] उदारदर्शनः[16] कीर्तिमान्[17]

---

को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैक प्रियदर्शनः ॥
आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ बाल० १।२–४

५. बाल० १।८; ६. बाल० १।७; ७. बाल० २।३२;

८. बाल० २।४२

९. श्रुत्वा वस्तु समग्रं तद्धर्मार्थसहितं हितम् ।
व्यक्तमन्वेष्यते भूयो यद्वृत्तं तस्य धीमतः ॥ बाल० ३।१

१०. वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ।
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥ बाल० २।३३

११. बाल० ३।१ [ पूर्वोद्धृतम् ]

१२. तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ।
न ते वागनृता काव्ये काचिदत्र भविष्यति ।
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥ बाल० २।३५,३६

१३. १४. काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवधमित्येवं चकार चरितव्रतः ॥ बाल० ४।७
—दशशिरसश्च वधं निशामयध्वम् ॥ बाल० २।४३ इति च
अत्रैकस्मिम् श्लोके 'पौलस्त्यवधम्' अपरस्मिँश्च दशशिरसश्च वधम्, इति प्रयोगात् प्रतिनायकस्य रावणस्य उच्चकुलत्वं पराक्रमश्च ध्वन्येतेऽतः प्रतिनायकस्य स्वरूपमपि स्पष्टमिव भवति ।

१५. बाल० ४।७; १६, १७. बाल० २।४२;

तपस्वी[18] ऋषिसत्तमः[19] [ कवनीयस्य वस्तुनः ] अनुव्याहरणाद् भूयो भावितात्मा[20] मुनिपुङ्गवः[21] [ कविपुङ्गव एव कवते ]।

[ तदेव ] समाक्षरैश्चतुर्भिः पादैः[22] [ छन्दोभिः ] मनोरमैरुदारवृत्तार्थपदैश्च समक्षरैः श्लोकै[23] रुपगतसमाससन्धियोगं, सममधुरोपनार्थवाक्यबद्धं[24] यशस्करं[25] कामार्थगुणसंयुक्तं, धर्मार्थगुणविस्तरं, समुद्र इव रत्नाढ्यं, सर्वश्रुतिमनोहरं,[26] पाठ्ये गेये च मधुरं, त्रिभिः प्रमाणैरन्वितं, सप्तभिर्जातिभिर्युक्तं,[27] तन्त्रीलयसमन्वितं[28] स्वराष्ट्ररञ्जनं, नायकाभ्युदयं,[29]

---

१८. बाल० १।१; १९. बाल० २।२३

२०. समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा।
सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः॥
तस्य बुद्धिरियं जाता महर्षेर्भावितात्मनः।
कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्॥ बाल० २।४०,४१

विषयेऽस्मिन् डॉ० रेवाप्रसादद्विवेदिनो मध्यप्रदेशहिन्दीग्र० अकादमीतः प्रकाशितस्य 'आनन्दवर्धन'-नाम्नो ग्रन्थरत्नस्य पृ० १०२ तः १०६ यावद् विवेचनमपि द्रष्टव्यम्।

२१. बाल० २।२३; २२. बाल० २।४०

२३, २४, २५. उदारवृत्तार्थपदैर्मनोरमैस्तदास्य रामस्य चकार कीर्तिमान्।
समक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारदर्शनः॥
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम्।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम्॥
—बाल० २।४२, ४३

२६. कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम्।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम्॥ बाल० ३।८

२७, २८. पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम्।
जातिभिः सप्तभिर्युक्तं तन्त्रीलयसमन्वितम्॥ बाल० ४।८

२९. रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम्।
स्वराष्ट्ररञ्जनं चैव········॥ बाल० ३।३८

बहुभिः प्रमाणैर्बद्धं[30]ताललयोपपन्नं, सर्गान्वितं, सुस्वरशब्दयुक्तं, तन्त्रीलयव्यञ्जनयोगयुक्तं,[31] समलङ्कृतं[32] नानाचित्रैः कथाभिश्च युक्तं,[33] विचित्रार्थपदं,[34] विचित्रपदमर्थवत् कृत्स्नं चरितं,[35] शृङ्गार-करुण-हास्य-रौद्र-भयानकैर्वीरादिभी रसैर्युक्तं,[36] विश्रुतार्थं तन्त्रीलयवदत्यर्थं श्रोत्राशय-सुखं, चित्तायतनिःस्वनं,[37] गीतस्य विशेषतश्च श्लोकानां माधुर्येण चिरनिवृत्तमप्येतत् प्रत्यक्षमिव दर्शयत्[38] सर्वगात्राणि मनांसि हृदयानि च ह्लादयत्[39] [ *'महाकाव्यं'* भवति । ]

[ यच्च पुनः ] पार्थिवाः, पण्डिताः, विशेषतो नैगमाः, पौराणिकाः, वृद्धाः, स्वराणां लक्षणज्ञाः, उत्सुकाः, द्विजसत्तमाः, लक्षणज्ञाः, पादाक्षर-समासज्ञाः, छन्दःसु परिनिष्ठिताः, कलामात्रविशेषज्ञाः, ज्यौतिषे च पारङ्गताः, क्रियाकल्पविदः, कार्यविशारदाः, भाषाज्ञाः, इङ्गितज्ञाः,

---

३०. अपूर्वां पाठ्यजातिं च गेयेन समलङ्कृताम् ।
प्रमाणैर्बहुभिर्बद्धां तन्त्रीलयसमन्विताम् ॥ उत्तर० ९४।२,३

३१. सुश्राव तत्ताललयोपपन्नं सर्गान्वितं सुस्वरशब्दयुक्तम् ।
तन्त्रीलयव्यञ्जनयोगयुक्तं कुशीलवाभ्यां परिगीयमानम् ॥
उत्तर० ९४।३२

३२. उत्तर० ९४।२; ३३. नानाचित्राः कथाश्चान्या विश्वामित्र सहायने ।
—बाल० ३।११

३४. बाल० ४।३३; ३५. चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥ बाल० ४।१

३६. रसैः शृङ्गार-करुण-हास-रौद्र-भयानकैः ।
वीरादिभी रसैर्युक्तं काव्यमेतदगायताम् ॥ बाल० ४।९

३७. विचित्रार्थपदं सम्यक् गायकौ समचोदयत् ।
तौ चापि मधुरं रक्तं स्वचित्तायतनिःस्वनम् ॥
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ।
ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च ॥
श्रोत्राशयसुखं गेयं तद् बभौ जनसंसदि ॥ बाल० ४।३४, ३५

३८. अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ।
चिरनिवृत्तमप्येतत् प्रत्यक्षमिव दर्शितम् ॥ बाल० ४।१७, १८

३९. ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च ॥ बाल० ४।३४

हेतूपचारकुशलाः, बहुश्रुताः, वैदिकाः, चित्रज्ञाः, वृत्तसूत्रज्ञाः, गीतनृत्यविशारदाः, शास्त्रज्ञाः, नीतिनिपुणाः, वेदान्तार्थप्रबोधकाश्च[४०] [ सर्व एव सहृदयाश्चिरनिवृत्तमपि वस्तु रसानुभूत्या प्रत्यक्षीकुर्वन्तस्ते ] बाष्पपर्याकुलेक्षणाः [ श्रोतारं ] चक्षुर्भिः पिबन्त इव पश्यन्तो विस्मयमागताः कौतूहलसमन्विताः साधु ! साधु ![४१] [ इति वदन्तः ]—

'किं प्रमाणमिदं काव्यं ? का प्रतिष्ठा महात्मनः ?
कर्त्ता काव्यस्य महतः काऽसौ च मुनिपुङ्गवः ? ॥[४२]

---

४०. अथ कर्मान्तरे राजा समाहूय महामुनीन् ।
पार्थिवांश्च नरव्याघ्रः पण्डितान् नैगमांस्तथा ॥
पौरणिकाञ्शब्दविदो ये वृद्धाश्च द्विजातयः ।
स्वराणां लक्षणज्ञांश्च उत्सुकान् द्विजसत्तमान् ॥
लक्षणज्ञांश्च गान्धर्वान् नैगमांश्च विशेषतः ।
पादाक्षरसमासज्ञांश्छन्दःसु परिनिष्ठितान् ॥
कलामात्रविशेषज्ञाञ्ज्यौतिषे च परं गतान् ।
क्रियाकल्पविदश्चैव यथा कार्यविशारदान् ॥
भाषाज्ञानिङ्गितज्ञांश्च नैगमांश्चाप्यशेषतः ।
हेतूपचारकुशलान् हैतुकांश्च बहुश्रुतान् ॥
छन्दोविदः पुराणज्ञान् वैदिकान् द्विजसत्तमान् ।
चित्रज्ञान् वृत्तसूत्रज्ञान् गीतनृत्यविशारदान् ॥
शास्त्रज्ञान् नीतिनिपुणान् वेदान्तार्थप्रबोधकान् ।
एतान् सर्वान् समानीय गातारौ समवेशयत् ॥ उत्तर० ९४।४–१०

४१. तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ।
साधु, साधु, इति तावूचुः परं विस्मयमागताः ॥ —बाल० ४।१५, १६
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ।
चिरनिवृत्तमप्येतत् प्रत्यक्षमिव दर्शितम् ॥ बाल० ४।१७, १८
पिबन्त इव चक्षुर्भिः पश्यन्ति स्म मुहुर्मुहुः ॥ उत्तर२ ९४।१३

४२. उत्तर० ९४।२४ रामायणे प्रतिपादितमेतत् तथ्यं सत्यमेव प्रतीयते। तत्कथानकमाश्रित्य प्रणीतं गोस्वामिनः तुलसीदासस्य राष्ट्रभाषामहाकाव्यं

[कविपुङ्गवः]—इत्येवं पृच्छन्ति; तदेव *महाकाव्यं* तत्कर्ता *महाकविः* ॥



---

'श्रीरामचरितमानसम्' अद्यापि कथनमेतत्प्रमाणयति। यन्न केवलं शोधकर्त्तारोऽध्यापकाश्छात्राश्चैवं शृण्वन्तः पठन्तस्सन्ति, अपितु वैदिकाः, प्रशासकाः आयुर्विज्ञाः अधिवक्तारो, नेतारः, अभियन्तारः, इतोऽप्यधिकं 'का वस्सा जव कृषी सुखानी'त्यादिरूपेण हालिका अपि। भक्तिरसप्रधानं सप्तसर्गात्मकमपि महाकाव्यत्वं भजमानमेतद्दरीदृश्यते। कामं कलहायन्तां 'श्रृङ्गारवीराशान्तानामेकोऽङ्गी रस इष्यते', 'सर्गा अष्टाधिका इह' इति च आचार्यविश्वनाथमतप्रत्ययनेयबुद्धय आलोचकाः।

# भारतीयकाव्यतत्त्वम्

*शेशाचलशर्मा*

विद्यासम्प्रदायप्रवर्तका महर्षयः स्वानुभवपूर्वकं जगद्धिताय घोषयामासुः यत् सत्यतत्त्वसाक्षात्कार एव परमः पुरुषार्थ इति । भारतीयमहर्षिदृष्ट्या समवलोकने क्रियमाणे, पुरुषार्थमर्यादानिबद्धं हि जीवनमिति निश्चितं भवति । पुरुषार्थप्राप्त्युपायाः खलु सर्वा विद्यापद्धतयः सत्यदर्शिभिर्महर्षिभिः प्रवर्तिताः । तत्र साहित्यविद्या अथवा काव्यविद्याऽपि सत्यप्रतिष्ठामेव परमलक्ष्यत्वेन प्रतिपादयतीति निरूपयितुं प्रतनावस्मिन् प्रबन्धे प्रयत्यते मया ।

काव्यस्वरूपनिर्णयाय प्रवृत्ता नैके लक्षणमार्गाः अतिगहने काव्यमीमांसाकानने गोचरीभवन्ति । यद्यपि पूर्वपक्षप्रतिपादनदृष्ट्या सर्वाण्यपि तानि लक्षणानि अवश्यनिरूपणीयानि भवन्ति, तथापि विस्तरपरिहारवशात् ध्वनिसम्प्रदायमवलम्ब्य रस एव काव्ये परं तत्त्वमिति प्रतिष्ठापितः सिद्धान्त एवात्रास्थितः । भगवती श्रुतिरपि बोधयति "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति । जगति सर्वो जन्तुरानन्दप्राप्तये खलु सततं यतत इति विदितचरमेव । आनन्दाद्धि भूतानि जायन्ते । आनन्द एव हि तानि पुनर्लीयन्ते । अतएव "को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" इति उपनिषदि निगदितम् । प्रीत्यपरपर्यायमीदृशमानन्दं यदेव करोति तदेव हि प्रियं भवति । तथाहि श्रुतिः—"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति" इति । विषयेन्द्रियसम्बन्धे सति अनुभवपथमारोहन्तः सर्वेऽपि लौकिकानन्दप्रकाराः परानन्दस्य अंशरूपाः

छायामात्रभूता भवन्ति। तथाहि श्रुतिरवबोधयति, "एषोऽस्य परम आनन्दः। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति।

यद्यप्युपनिषत्सु ब्रह्मानुभव एव रसः इति वर्णितम्। तथापि काव्यानन्दः कथं ब्रह्मानुभवसमानो भवेदिति आक्षेप उदेति। ईदृशस्याक्षेपस्य समाधानं निरूपयितु नैके नैकधा कृतप्रयत्ना दृश्यन्ते। काव्यानन्दश्च ब्रह्मानन्दाद्दूरं विभेदवानिति केचित् प्रतिपादयन्ति। अन्ये तु काव्यानन्दं ब्रह्मानन्दसहोदरमामनन्ति "रसो वै सः" इति श्रुतिस्तु ब्रह्मानुभवं प्रतिपादयति न तु काव्यानन्दमित्येतेषामभिप्रायः।

काव्यानन्दमीमांसातः पूर्वं काव्यं नाम किमिति सम्यग् विचारणीयम्। कवेः कर्म च काव्यमित्यभिधीयते। यद्यपि कविरपि मनुजेष्वेवान्यतमः। तथापि मनुजमात्रसुलभं कर्म कविना क्रियमाणमपि काव्यव्यपदेशं न भजते। अतः अनितरमनुजसाधारणं कवेः कविसंज्ञाप्रयोजकं विशिष्टमेव कर्म काव्यमिति व्यपदिश्यते। इदमेव च लोकोत्तरवर्णनानिपुणकवेः असाधारणं कर्म भवति, न तु शब्दार्थसङ्घटनया केवललौकिकवाक्यार्थविन्यासमात्ररूपम्। अत एव अलौकिककविभावादिवर्णनमेव रसाभिव्यञ्जकं भवतीति सिद्धान्तः।

काव्यञ्च समान्यतो दृश्यं श्रव्यञ्चेति द्विधा विभज्यते। उभयोरप्यनयोः प्रकारयोः रसाभिव्यक्तावेव तात्पर्यम्। सृष्टगताः सर्वेऽप्यर्थाः महाकाव्यस्य अङ्गभावं भजन्तीति हेतोरेव अष्टादशवर्णनात्मकं तदुच्यते। अभिनयप्रधाने दृश्यकाव्येऽपि त्रैगुण्योद्भवं लोकचरितमेव विषयः। तद्द्वारैव नानारसानामभिव्यक्तिर्भवति। रसाभिव्यक्तिसाधनभूता उपाधयो भिन्नाः श्रृङ्गारादिरसभेदप्रयोजका भवन्तीति लक्षणकारैर्निरूपणे कृतेऽपि परमार्थरूपेण एक एव रसः इति तत्त्वम्। अत एवोक्तम्—

"स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।
पुनर्निमित्तापाये तु शान्त एव प्रलीयते॥"
"एको रसः करुण एव निमित्तभेदाद्।
भिन्नः पृथक् पृथगिव श्रयते विवर्तान्॥" इत्यादि।

आयुर्वेदशास्त्रेऽपि रसप्रकरणे मधुररसादेव इतरे रसा आविर्भवन्ति पुनर्मधुररसे एव पर्यवस्यन्तीति कथ्यते ।

तस्मात् शास्त्रीयव्यवहारसौलभ्याय रसभेदेषु निरूपितेष्वपि परमार्थरूपेण एक एव रसः । एक एवेत्युक्तौ एकत्वसंख्यायां न तात्पर्यम् । किन्तु परमार्थरूपेण रसः सजातीयविजातीयस्वगतभेदरहित इत्यभिप्रायः ।

ईदृशरसाभिव्यक्तिरेव काव्यस्य प्रधानं लक्ष्यम् । अत एव भरतमुनिराह स्म "न हि रसादृते कश्चिदर्थः प्रवर्वते" इति । अग्निपुराणेऽप्युक्तम् "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इति । काव्यं सुन्दरं चेत्ततो रसाभिव्यक्तिर्भवति । काव्यञ्च ग्राह्यमलङ्कारात् । सौन्दर्यं हि अलङ्कारः । शब्दार्थचमत्कारः काव्यसौन्दर्यमित्यापाततः प्रतीयते । तथापि समस्तं सृष्टिसौन्दर्यमेव क्रान्तदर्शी सत्कविः स्वकाव्ये सन्निवेशयति । ततश्च सौन्दर्यदर्शी खलु रसानुभवभाग् भवति । लोके च यदा तत्तदिन्द्रियैः सौन्दर्यानुभवो जायते तदा खण्डशः खण्डशः किल सौन्दर्यस्यानुभवो भवति, न तु परिपूर्णस्य सौन्दर्यस्य । केनाप्येकेनेन्द्रियेण समस्तैर्वेन्द्रियैः देशकालाद्यनवच्छिन्नपरिपूर्णसौन्दर्यस्य अनुभवो न भवति । तथापि सर्वोऽपि जीवः स्वभावतः रसानुभवाय सौन्दर्यदर्शनाय च समुत्कण्ठते । अत्रेदं विचार्यम् । कुत्रापि कदापि अदृष्टमश्रुतं वा वस्तु केनापि न जिज्ञास्यते खलु । एवं स्थितेऽपि लौकिकैर्विषयैः तात्कालिके रसानुभवाभासे तथा सौन्दर्यानुभवाभासे सम्भवत्यपि तावन्मात्रेण अपरितुष्यन् सर्वोऽपि चेतनः परिपूर्णं रसं सौन्दर्यं च अनुभवितुं भृशमभिकाङ्क्षति । अत्र च निदानेऽन्विष्यमाणे इदं निश्चितं भवति यत् परमार्थरूपेण स्वयमात्मा खलु परिपूर्णरसमयः समृद्धसौन्दर्यमयश्चेति । तस्माच्च स्वरूपात् प्रच्युतो जीवः कालदेशप्रतिबद्धोऽपि स्वभावतः अर्थात् कालदेशाद्यनवच्छिन्नदशायां स्वयंप्रकाशं रससौन्दर्यमयं स्वरूपमेव कामयते इति सूपपन्नमेव । ईदृशः किल भावः यस्य जागरितः स एव आत्मकामः आत्मक्रीडः आत्मरतिश्च । येन चैषा दशाऽऽसादिता स एव परिपूर्णरसानुभवी समृद्धसौन्दर्यदर्शी च । आदिकवेर्विधातुः सृष्टेरपेक्षया परमोत्कर्षयुतं क्रान्तदर्शिनः कवेः सृष्टिर्हि महाकाव्यं परानन्दमयीं रससौन्दर्यसम्पदमभिव्यनक्ति । अत एव मम्मटाचार्यः

स्वकाव्यमीमांसाया नान्दीं पपाठ—

"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ।।" इति ।

भरतमुनिरपि नाट्यशास्त्रस्यान्ते नाट्यवेदश्रवणपराणां तत्प्रयोगशीलानां तदध्ययननिरतानाञ्च फलश्रुतिमाह । यथा—

"या गतिर्वेदविदुषां या गतिर्यज्ञवेदिनाम् ।
या गतिर्दानशीलानां तां गतिं प्राप्नुयात्तु सः ।। इति ।

एतादृशसौन्दर्यानन्दसम्पदुन्मेषकरवागर्थसिद्धिं समासादितवान् कश्चिदेव कविश्रेष्ठः सत्काव्यनिर्माणे शक्तो भवति । ईदृशवागर्थ-सिद्धये खलु वाग्देवीवरपुत्रः कालिदासः वागर्थरूपौ जगन्मातापितरौ प्रार्थयामास—

"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।" इति ।

सृष्टिस्थितिलयतिरोधानानुग्रहरूपाणि आत्मनो दिव्यलीलाकृत्यानि विश्वरङ्गेऽभिनयन्,

"आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम् ।
आहार्यं चन्द्रतारादि तन्नुमः सात्त्विकं शिवम् ।।" इति ।

स्तुतेः एकमात्रविषयभूतो भगवानादिनटवरः परमेश्वरः यदा कालिदासस्य क्रान्यदर्शिन्यां प्रतिभायामाविर्बभूव तदा स कविवरः यथा बाह्यरङ्गस्य जवनिकां तथा अन्तरङ्गस्य जवनिकां मायामपि अपसारयन् क्रतु-( यज्ञ ) शीलानां सभ्यानां ( सामाजिकानाम् ),

"या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ।।"

इत्याशिषं प्रयुञ्जानः तादृशादिनटेश्वरसाक्षात्करणपटीयसीं दिव्यदृष्टि-मुद्घाटयति ।

वागर्थरूपौ लास्यताण्डवलीलाविलासिनौ दृश्यश्रव्यकाव्यलक्ष्यभूतौ सौन्दर्यानन्दसम्पत्प्रदौ च जगन्मातापितरौ, तदुद्दीपितविश्वरङ्गसभां ( भा इति प्रकाशः, तत्सहिता हि सभा तामिति ), क्रान्तदर्शिनः कवेः प्रतिभां च अभिवन्द्य प्रबन्धोऽयं परिसमाप्यते ।

"अपूर्वं यद्वस्तु प्रथयति विना कारणकलां
जगद् ग्रावप्रख्यं निजरसभरात् सारयति च ।
क्रमात् प्रख्योपाख्याप्रसरसुभगं भासयति तत्
सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते ।।"

# काव्ये व्यक्तित्वस्य प्रश्नः

*डॉ० जनार्दन उपाध्याय*

काव्यं कवेर्मनोभावानां संवेगानाञ्च सहजमुच्छलनम् । भावाः ह्यमूर्ताः किल भवन्ति । अतस्तेषां रूपाङ्कनमसंभवम् । अतएव काव्य-रचनाप्रक्रियायां भावानां मूर्तिकरणमकृत्वा कविस्तान् विभावादियोज-नयाऽभिव्यनक्ति । तद्यथा—

विभावैराहृतो योऽर्थो ह्यनुभावैस्तु गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥
वागङ्गमुखरागेण सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥[1] ( भरतमुनिः )

उपर्युक्तग्रहणप्रक्रियायां काव्यशब्दाः ह्युपकरणान्यन्यानि च पाठकेषु तदनुरूपां परिस्थितिं मनोभावांश्च प्रकटयन्ति । परिणामतः सहृदयः रसास्वादने भवति तल्लीनः । पाश्चात्त्यसमीक्षकेण हेराल्डआसवार्न-महोदयेनास्य तथ्यस्य विशिष्टा व्याख्या कृता । तदनुसारं कविः न खलु कस्यचिद्भावस्य वर्णनं संप्रेषणं वा करोत्यपि तु पाठकेषु उपयुक्त-शब्दमाध्यमेन तद्भावानुकूलां मनोदशामुत्पादयति येन तत्संस्कारगतानां भावानां स्मृतयो नवीनीकृता ह्युज्जृम्भिता वा भवन्ति । अनया रीत्या स खलु काव्यवर्णितसम्पदा तादात्म्यं संस्थाप्य रसमनुभवति ।[2]

---

१. भरतमुनि : नाट्यशास्त्र

२. हेराल्ड आसवर्न : एस्थेटिक्स एण्ड क्रिटिसिज्म पृ० १८६–१८७ :

what the poet can do is to evoke the great precision very finely discriminated states of mind towards presented situations or series of events. The poet can convey no new sensory or emotional experience. The most he can do is to induce us to recollect more vividly aspects of our own past

कालिदासेन श्लोकमेकमधिकृत्य संस्कारगतभावानां स्मृतेर्मनोवैज्ञानिकं संकेतं संसूचयता सौन्दर्यानुभूतिर्व्यंजिता :—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जन्मान्तरसौहृदानि ॥[3]

भावास्त्वमूर्ताः कथं तेषामभिव्यक्तिः ? अमूर्तभावानां मूर्ताभिव्यक्तिरपि न संभाव्यते । अतएव कविर्विविधबिम्बाधायकशब्दानामेतादृशानां प्रयोगं करोति—भावच्छविपरम्परा येन संमूर्तयितुं शक्यते । भावच्छवयस्त्विमा काव्ये सौन्दर्यभावनया संमण्डिताः किल रूपायिता भवन्ति । मूलतः भावाः मानवमनसः ह्यन्तर्गतानुभूतय एव । ऐन्द्रियानुभवगम्याः बाह्यसंसृतेः पदार्थजातास्तावद्मानवमस्तिष्कोपरि विविधप्रकारकान् बिम्बान् स्थापयन्ति; ये हि स्मृतिरूपेण तस्याचेतनमनसि स्थिताः भवन्ति । समानपरिस्थितिसमागमे स्फूर्तास्ते नवा इव

---

experience. No one can give a blind man the experiencc of seeing or the colour-blind man the experience of colour discrimination. Nor can any man communicate to another types of emotional experience with which the latter is uufamiliar. A man who has never been in love may read all the love poetry in the world and still he will not know what it feels like to be in love. Or......a man who has never known mystical religious emotions may read the books of the mystics and the analytical descriptions of the Psychologists......but it will all be 'meaningless' to him, empty words without concrete significance.

३. कालिदासः अभिज्ञानशाकुंतलम्—प्रथम अंक

भवन्ति । व्यक्तिमनस्तदा तान् अभिव्यंजयितुं प्रयतते । कविः स्वमानसोत्थभावबिम्बं नानावर्णेषु नानारूपेषु प्रकटीकर्तुमनेकबिम्बाधायकशब्दानाश्रयति । व्यक्तिचित्तं जन्मान्तरोत्थस्मृतिततीनां भावात्मके भवशेषमागारम् । ते हि व्यक्तौ निष्पादयन्ति कतिपयसंस्कारान् । भावगहनतायाः सघनबिम्बैः भावमयप्रकाशनमाह्लादनञ्चास्यैवाबोधपूर्वस्मृतीनां प्रतिफलनम् ।

काव्यरचनाया अशेषेयं प्रक्रिया महत्त्वपूर्णमेकं प्रश्नमुपस्थापयति समीक्षकाणां पुरतः, प्रश्नोऽयं कवितायां कवेर्व्यक्तित्वप्रतिबिम्बनमधिकृत्योदेति । उपर्युक्तानुशीलनप्रक्रियया चेदं स्फुटतरमेव यद् काव्यं कवेः प्रतिभायास्तस्य शिल्पचातुर्येण वचनविदग्धतया चोत्पन्न एकः स्पर्शमणिरेतादृशः संस्पर्शाद्यस्य सहृदयस्तन्मयो भवति भावितो भूत्वा। तन्मयीभवनं रसानुभूतेर्द्योतकम् । काव्यस्य कवेश्च प्रसङ्गे तर्हि वार्ताद्वयं विचारणीयम्—(१) कवेर्व्यक्तित्वं काव्ये भवति प्रतिबिम्बितः। नैवेदं चेत् तर्हि किं व्यक्तित्वनिरपेक्षं काव्यं भवति ? (२) काव्यं चेत् व्यक्तित्वनिरपेक्षं तर्हि किं कवेर्व्यक्तित्वं माध्यममात्रम् ? प्रश्नद्वयमधिकृत्य काव्यव्यक्तित्वप्रसङ्गे प्राच्यपाश्चात्त्यसमीक्षकैरनेकविधविचारतति पल्लविता ।

भारतीयाचार्यैर्मूलरूपेण काव्यव्यक्तित्वनिरपेक्षमेवाकलितम् । काव्ये कविव्यक्तित्वाप्रकाशनसमस्या तैः रसविमर्शे साधारणीकरणद्वारा संसिद्धीकृता । भारतीयाचार्याणां रसवादिनी दृष्टिर्न व्यष्टिमूला ह्यपितु समष्टिमूलैव । तस्मिन् व्यक्त्यपेक्षया समूहोपरि लोकोपरि वा विशेषरूपेण ध्यानम् । रसवादिन्या दृष्टेरियं स्थापना यत् कविः भावास्वादनाय स्वकीयया रचनया वर्णितभावानुरूपं पाठकेष्वपि तदनुरूपां मनःस्थितिमुत्पादयेत् । भावस्य व्युत्पत्तिमूलाऽवधारणा—"भावयति भावः" सहृदयं भावयित्वा ह्याह्लादकमनःस्थितेरुन्नयन( एलिवेशन )मेव व्यञ्जयति । विवेचनयानया स्फुटतरमिदं यत्काव्यगताः भावाः कवेः स्वमनोविकाराः न भवितुमर्हन्ति । युक्तमेतद् यत् कविः जीवनजगतः घातप्रतिघातजन्यानेकसंवेगानां तीव्रामनुभूतिं करोति परं तेषां व्यक्तिमतभावानां वैशिष्ट्यं लोकोत्तरस्थितिप्राप्तावेव । यावत्कविगत-

सद्यःस्फुरितमनोविकाराणां परिमार्जनं "अहं" एवं देशकालात्मकपरिसीमनात्परतरामवस्थां न प्राप्नोति—न तावत्स खलु समूहसंवेदनामान्दोलयितुं भवेत्समर्थः। उल्लेख्यमिदमस्मिन्विषयेऽभिनवगुप्ताचार्यस्य मतम्—"कवेः वर्णनानिपुणस्य च अन्तर्गतः अनादिप्राक्तनसंस्कारप्रतिभानमयः न तु लौकिकविषयजः—अतएव—देशकालादिभेदाभावात् साधारणीभावेन—आस्वादयोग्यः तं भावयन् आस्वादयोग्यीकुर्वन्।"[४] सन्दर्भेऽस्मिन् कतिपयमहत्त्वपूर्णतथ्यानि विचारणीयानि। (१) काव्यं कविहृदये सद्यःस्फुरितमनोभावनां सहजाभिव्यक्तिः किम्? (२) काव्यभूमिः व्यक्तिसापेक्षा आहोस्वित्समष्टिसापेक्षा? काव्यगताः भावाः सामान्याः अथवा व्यक्तिदेशकालनिरपेक्षा सन्तः सार्वभौमा इति? (३) काव्यानुभूतौ ग्राहकायेदमावश्यकं यत्तत्संस्कारगतभावाः वर्णितभावानां ग्रहणाय भवेयुः स्फुरिताः। (४) भावाः न खलु मूर्तीकृता भवन्ति अपि तु तेषां व्यञ्जनया पाठकानां संस्कारजन्यानुभवान्तुद्दीश्य कविमनःस्थितया तादात्म्यं स्थाप्यते। चतुर्णां येषामुपरि संकेतः तेषु क्रमशः प्रथमद्वितीये कवीनां सर्जकव्यक्तित्वेन संबद्धौ। अपरौ द्वौ सहृदयपाठकैस्सह च। अनुशीलनेनानेन मुख्यतया तथ्यद्वयमायाति ध्याने—(१) काव्यं व्यक्तित्वस्य प्रकाशनं पलायनं वाऽस्ति। (२) सर्जकव्यक्तित्वस्य पाठकसन्दर्भे भूमिका।

काव्ये वैयक्तिकतायाः निर्वैयक्तिकतायाश्च प्रश्नः भारतीयाचार्यैः (रसवादी) साधारणीकरणद्वारा समाधीयते। तदनुसारं काव्यं तावत् व्यक्तिनिरपेक्षं भवति। पाश्चात्त्यकाव्यशास्त्रिभिरस्य पक्षद्वयं सुविचारितम्। केचन काव्यं व्यक्तिसापेक्षं मन्यमानाः तत्काव्यं कवेर्व्यक्तिगतेच्छा-विचारभावनानामभिव्यक्तिमाकलयन्ति। परं समीक्षकाणामन्यः पक्षः काव्यं व्यक्तिनिरपेक्षं स्वीकुर्वन् तस्मिन् व्यक्तित्वप्रकाशनस्य विरोधं करोति। योरोपीयप्राचीनकाव्यशास्त्रविचारणायां व्यक्तित्वाप्रकाशनस्यैव प्राधान्यम्। पुनर्जागरणकालादारभ्य अष्टादशशतकपर्यन्तं तत्र काव्यस्य व्यक्तित्वनिरपेक्षत्वस्थितावेव बलम्। कारणमस्येदं

---

४. अभिनवगुप्त

यत्तदवधि कवितायाः स्वरूपमुद्देश्यं प्रति च धारणा काचिदन्यैवासीत्। एषां दृष्टौ काव्योद्देश्यं पाठकानां मनोरञ्जकं शिक्षणसाधनं चासीत्। होरेसमहोदयोऽपि काव्योद्देश्यमिदमेवावधार्य कथयति यत्काव्यं पाठकानां कृते मनोरञ्जकत्वशिक्षकत्वं च सम्पादयति। अवस्थायामस्यां कविव्यक्तित्वप्रकाशनस्य वार्तैव खलु जरीजार्गति। कविकर्म मुख्यतः व्यक्तिगतमनोभावविचारयोः प्रकाशने न खलु सक्रियं भूत्वा मनुष्यमात्रस्य कृते मनोरंजकपात्राणां, मनोज्ञभावव्यञ्जनानां च कृते सक्रियम् भवति। काव्यस्य कविकर्मणश्चेममेव भावबोधमाकलय्य—अष्टादशदशशताब्दस्थेन प्रख्यातसमीक्षकेण डॉ० जानसनेन कविकर्म सफलतायाः निकषः मानवजातिसमूहचित्रणे स्वीकृतम्—तदेव—कुशलं कविकर्म वर्तते यन्मानवजातिप्रतिनिधित्वं कुर्वाणानां पात्राणां निर्माणं कुर्वत् तस्य मनोविकारान् भावान् वा सामान्यमानवोचितभाषायां व्यनक्ति।[५]

अत्रैव पाठकस्य संदर्भे कविव्यक्तित्वस्य भूमिकाया अपि स्पष्टीकरणभावश्यकं प्रतिभाति। प्राचीनयोरोपीयकाव्यशास्त्रीयचिन्तनायां पाठकमेव केन्द्रबिन्दुमधिकृत्य स्थापनाः सर्वास्ताः। अरस्तूहोरेसलॉंजिनसप्रभृतयः सर्वेऽपि पाश्चात्यसमीक्षकाः काव्यं पाठकसापेक्षमेव स्वीकृतवन्तः। यतो हि तेषामुपरि वाग्मिताशास्त्रस्याथवा रिटरिक-

---

५. (a) The business of the poet is to examine, not the individual but the specis to remark general properties and large appearances; he does not number the streaks or describe the different shades in the verdure of the forest.

( Dr. Johonson : Rasselas. )

(b) The poet must divert himself of the prejudices of the age and country......must disregard present laws and opinions and rise to the general and transcendental truths which will always be the same. Ibid : Rambler—36.

शास्त्रस्य गम्भीरतरः प्रभाव आसीत्, व्याख्याने वक्तुः सर्वा शक्तिः श्रोतृणां मनसि एतादृक् प्रक्रियोत्पादने केन्द्रिता भवति यतस्तेषामुपरि अपेक्षित-प्रभावो भवेत्।'[5] अरस्तूमहोदयस्य काव्यशास्त्रीयचिन्तनायाः निष्कर्षः दर्शकमेवाधारीकृत्य निष्पन्नः। तेन किल कवितया नाटकेन वा पाठकानां दर्शकानां वा मनोभावान् मनोविकारान् वा उत्तेजितान् कृत्वा परिमार्जयेदिति निर्दिष्टम्। न खल्वेतदेवापि तु तेन प्रवर्तिते विरेचनसिद्धान्तेऽपि मूलबिन्दुः श्रोतृणां मनोदशा एव वर्तते।[6] लौंजिन-सेनापि औदात्त्यस्य व्याख्या पाठकमेव केन्द्रे कृत्वा विहिता। "औदात्त्यं प्रबन्धेषु स एव गुणः यो हि पाठकस्यात्मानं परमानन्दावस्थायामान-यति न खलु एकवारमपि तु निरन्तरं, पाठकः कस्यापि जातेः देशस्य लिंगस्य वा स्यात्।[7] अनेनोपर्युक्तविवेचनेनेदमेवावधार्यते यत् काव्यं न खलु ह्यात्माभिव्यक्तिरपि तु तस्मात्पलायनमेव। वस्तुतस्तु काव्यं व्यक्तिनिरपेक्षमेव।[8]

योरोपीयसाहित्यस्य रोमांटिकचिन्तनायां सम्बन्धेऽस्मिन् विचार-द्वयं प्रचलति। अस्यैको पक्षः काव्यस्य केन्द्रे कविं प्रतिष्ठाप्य तं कविसापेक्षं स्वीकरोति। यतो हि कविः स्वभावत एव भावाविष्टः सन् कोकिल इव स्वकाकलीशब्देन लोकं मोहयति।[9] शेलीमहोदयः उच्चकुलीनां रमणी-मिव कविं वदति या स्वकीयप्रेमाभिभूतस्य हृदयस्य मनोरञ्जनार्थं एकान्ते प्रणय इव मधुरं प्रणयगीतं प्रणिगदति।[10] संभवमिदं न खलु

६. डॉ० विक्रमादित्य राय : काव्य समीक्षा : पृ० ३५
७. डॉ० विक्रमादित्य राय : काव्य समीक्षा : पृ० ३५
८. डॉ० विक्रमादित्य राय : काव्य समीक्षा : पृ० ३५
९. The poet is a nightingale singing in darkness.

—P. B. Shelly.

१०. 'Like a high born maiden
In a palace Tower,
Soothing her love-laden
Soul in secret hour.' —P. B. Shelley.

कश्चित् शृणोति तद्गीतम्। अनेनेदमायाति यत् कविः भावावेशे स्वयं स्वभावत एव स्वान् मनोभावान् व्यनक्ति। तस्य श्रोता भवेन्न वा न खल्विदं तस्य दृष्टावायाति। अपरपक्षधरो सम्प्रदायस्तत्रैव पुनः काव्यं व्यक्तिनिरपेक्षमेव स्वीकरोति। तेषां दृष्टौ न खलु काव्ये कविर्व्यक्तित्वस्य चिह्नम्। काव्ये कवेर्भावानां विचाराणां, धारणानां कृते तदहकृतेऽपि न किमपि स्थानम्। यतो हि कवेर्धारणा-सम्मति-दृष्टिबोध-प्रभृतयो न काव्यं शुद्धकाव्यश्रेण्यां स्थापने समर्थाः। इयामेव मूलां वार्तां समधिकृत्याधुनिककाले इलियटमहोदयः काव्यव्यक्तित्वप्रकाशनस्य विरोधमकरोत्।

कीट्समहोदयः काव्ये व्यक्तित्वाप्रकाशनसमस्यां सहजयितुं कवेः प्रकारद्वयशक्तिं कल्पयांचकार। (१) स्वसंस्पर्शविहीनता (२) अहंभावस्यौदात्त्यम्। स्वसंस्पर्शविहीनता ( निगेटिव कपाबिलिटी ) कवेः सा शक्तिः या समस्तभ्रमेष्वपि सन्तोषयति। अनया शक्त्या सः व्यक्तित्वस्य विसर्जनं कृत्वा कस्यचिदपि पात्रस्य स्वरूपं धारयति काव्ये। तस्य सर्जनात्मकशक्त्या खलनायकस्य "इयागो" इत्यस्य निर्मितिः संभवा चेत्तर्हि स इभोजन इव पवित्रां नायिकामपि प्रस्तुतीकर्तुं समर्थः।[११] समग्रत आशयोऽयं यत् न खलु कवेर्व्यक्तित्वं नाम किमपि वस्तु। स परिवेशानुकूलं वर्णनानुकूलमेव भावान् निरूपयति।

---

११. "The capability of being in uncertainties, mystries, doubts, without any irretable reaching after fact and reason. The poetical character has no self, it is everything and nothing. It has as much delight in conceiving and Jago as Imagen" —Keats.

"अहम्" इत्यस्यौदात्त्यस्य स्थितिः स्वस्पर्शविहीनतात्मकस्थिते- र्विभिन्ना। अस्मिन् किल आत्मकेन्द्रितकवेः संतनाया परिमार्जितमौदात्त्यं प्राप्यते। अनयाऽनुप्राणितः कविः स्वकीयाहंकेन्द्रितव्यक्तित्वे हि सचराचरं जगत् प्रतिबिम्बितं पश्यति। रूपमिदं तस्यौदात्त्यस्य। अत्र किल तस्य चेतनायाः तस्याहमंशस्य परिमार्जनं भवति। आंग्लकवी वर्डसवर्थ- मिल्टनौ प्रसंगेऽस्मिन्नुल्लेख्यौ। हिन्दीभारत्या प्रसाद-निराला-पन्तादि- कवीनां परिपक्वकाव्यभूमिः व्यक्तिनिष्ठचेतनानुप्राणिताऽपि समष्ट्या सार्द्धं तादात्म्यस्थापने प्रयतमानाऽऽसीत्। परमुत्तरछायावादि-कवि- नरेन्द्र-अंचल-बच्चन-प्रभृति-कवीनां काव्यभूमिरहमतिशयवैयक्तिकतात्म- कत्वात् आत्माभिव्यक्तिमाध्यममात्रमेव जाता। मध्ययुगीनसंत- कवीनां दृष्टिर्लोकमंगलमूलाऽऽसीत्। तत्रापि कविः 'स्वान्तःसुखाय तुलसी रघुनाथ गाथा भाषा निबन्धमतिमंजुलमातनोति'[१२]—इत्यस्य घोषणां विधत्ते। परं कथं कया रीत्या च 'रामजन्मजगमंगलहेतु'[१३] एषा कल्पना चरितार्था भवत्येतदपि विचार्यम्। वस्तुतस्त्वत्र तुलसीदास- स्याहंवृत्तिरत्रौदात्त्यं भजति यत्र किल "स्व" परे व्यष्टिश्च समष्टौ समाहिता भवति। स स्वप्रभुवदेव प्रभुस्वरूपमेव स्वीकृत्य प्रणमति— 'निजप्रभुमय देखहि जगत् का सन करहिं विरोध।'[१४]

युगानुसारं काव्यप्रतिमानानि परिवर्तनसापेक्षाणि। प्रत्येकास्मिन् युगे समीक्षका युगानुरूपप्रतिमानेनैव तत्कालीनस्य काव्यस्य मूल्यां- कयन्ति। अधुना किल भावबोधेन कवितायाः परिभाषा एव परावर्तिता। काव्यस्य रोमांसवादी अवधारणा कवितां व्यक्तित्वाभिव्यक्तिमाकलयति। परिणामतः काव्यं व्यक्तिसापेक्षतां भजत् परमाधुनिकैः इलियटादिभिः काव्ये व्यक्तित्वस्य विरोधः कृतः। प्रसंगेऽस्मिन्नतएव इलियटप्रभृति- महाभागानां सिद्धान्ताः विमर्शमपेक्षन्ते।

---

१२. तुलसीदास : रामचरित मानस

१३. तुलसीदास : रामचरित मानस

१४. तुलसीदास : रामचरित मानस

इलियटस्य कथनमस्ति यत्कविकृतौ तस्य व्यक्तित्वाभिव्यक्तिर्नैव भवति। अपि तु स विशिष्टप्रकारकमेकं माध्यमं (मीडियम) व्यनक्ति, यत् किल पूर्णतया माध्यमं वर्तते, न खलु तद् व्यक्तित्वम्। माध्यमं तदेतादृशं यस्मिन् कवेः संवेदनाः अनुभूतयश्चाप्रत्याशितरूपेण समाहिताः समन्विता वा भवन्ति। याः किलानुभूतयः संवेदनाः वा व्यक्तिगतरूपेण व्यक्तौ महत्वपूर्णाः न खलु ताः काव्येऽपि तथैव।[१५] अतःपरं इलियटेन—काव्यस्य परिभाषा दत्ता यत्—काव्यं संवेगानामनियन्त्रितव्यंजनात्मकत्वेन तेभ्यः संवेगेभ्यो पलायनमेवास्ति। इदं तावत् व्यक्तित्वस्याभिव्यक्तिर्नैवापि तु तस्मात्पृथक्त्वमेवास्ति।[१६] अतः परं—इलियटेन काव्यसर्जनप्रक्रियायां कवेर्भूमिकां संकेतयता प्रोक्तं यत्—सर्जनवेलायां कलाकारः कतिपयमूल्यवत्तत्त्वम्प्रति समर्पितो भवति। अतएव कलाकारस्य विकासः क्रमिकात्मोत्सर्गस्य एवं च व्यक्तित्वस्य च विनाशोऽस्ति।[१७]

15. The poet has not a 'personality' to express, but a particular medium and not a personality, in which impressions and experienes combine in peculiar and unexpected ways. Impressions and experiences which are important for the man may take no place in the poetry and those which become important in the poetry play quite a negligible part in the man, the personality.

—T. S. Eliot : Selected Prose, pp. 27–28.

16. Poetry is not a turning loose of emotion, but an escape from emotion ; it is not the expression of personality, but an escape from personality.

—T. S. Eliot : The Sacred wood, p. 58.

17. The progress of an artist is a continual self-sacrifice, a continual extinction of personality.

—T. S. Eliot : Selected Prose, p. 25.

अनयैव निर्वैयक्तिकतया कला विज्ञानावस्थामाप्नोति ।[१८] कलाकारो यादृक् पूर्णो भविष्यति तादृगेव तस्य काव्ये भोगव्यक्तित्वं सवेदनशील-व्यक्तित्वं वा तथा च सर्जकव्यक्तित्वमथवा सर्जकमस्तिष्कं परस्परम सम्पृक्तं भविष्यति । अनयैवासम्पृक्ततया मस्तिष्कं भावसंवेगान् पूर्णतया-ऽऽत्मसात्कृत्वा रूपान्तरितं कर्तुं समर्थं भवति ।[१९] कवितायां कवे-र्व्यक्तित्वं माध्यमत्वमेव भजते येन विरोधिभावानां विचाराणां, संवेदनानां च संश्लेषणं भवति । अस्मिन् संश्लेषणे, एवं नवीन संवेदना-नामुत्पत्तौ कवेर्व्यक्तित्वं सर्वथा निर्विकारतां निर्लिप्ततां चाकलयति ।[२०] इममेव भावं स्फुटीकर्तुं इलियटः प्लेटीनमतन्तोः केटालेकएकेक्टस्यो-दाहरणं ददाति—यथा आक्सीजनस्य सल्फरडाईआक्साइडस्य च मिश्रणे प्लेटीनमतन्तुस्तटस्थभावमाकलयन् तं सल्फरएसिडे परिवर्तयति तथैव कविरपि स्वसर्जनात्मकप्रतिभया ह्यनुभूतिपथं प्रभावयन्नपि स्वयं तटस्थतामाकलयति ।[२१]

इलियटः कवेर्निर्वैयक्तिकत्वप्राप्तये पद्धतिद्वयमुक्तवान् । स्वव्यक्ति-

---

18. It is in this depersonalization that art may be said to approach the condition of science.

—T. S. Eliot : Sacred wood, p. 53.

19. The more perfect the artist, the more completely separate in him will be the man who suffers and the mind which creates; the more perfectly will the mind digest and transmit the Passions which are its material.

—T. S. Eliot : Selected prose, p. 26

20. ......But rather by being a more finely perfected medium in which special or varied, feelings are at liberty to enter into new combinations.

—T. S. Eliot : Sacred wood, p. 54

21. I shall, therefore, invite you to consider as a suggestive analogy, the action which takes place when a

त्वस्य प्रकाशनायेदमावश्यकं यत्स किल काव्याभिव्यक्तये एतादृशानां प्रतीकानां चयनं कुर्यात्—यानि हि तस्य भावान्स्वयमेव अभिव्यञ्जयेयुः। एतेनैतदायाति यत्कविः पदार्थानाम् एतादृशं समुच्चयं प्रसंगानां कथानकस्यापि एतादृशं प्रसंगं कुर्याद् येन भावनानां स्वयमेवाभिव्यक्तिर्भवेत्।[२२]

निर्वैयक्तिकत्वस्थितिप्राप्तेर्द्वितीया पद्धतिरियम् यदा परम्पराया ऐतिहासिकचेतनायाः सम्यक्परिज्ञानम्। कविकृते ह्यावश्यकमिदं यत्सः परम्पराबोधेन ह्यैतिहासिकचेतनया च स्वीयं लघुततम् अहमंशं समष्टिमनसि रीत्यानया निमज्जयेत्। यत्तस्य कवितायां परम्परा संस्कृतिश्च झंकृता भवेत्। का किल परम्परा ? इलियटस्य स्थापनाऽस्ति यत् वर्तमानस्य चेतना ह्यतीतबोधेनैव स्फुरति। अतएव कोपि कविः स्वकीयातीतं विच्छिद्य न खलु पूर्णार्थो भवितुं शक्तः। तस्यार्थवत्ता, तस्य प्रशंसा तत्त्वस्यास्यानुसन्धाने सन्निहिताऽस्ति यदतीतस्थमृतकविभिस्सार्धं तस्य कस्संबन्धोऽस्ति ?[२३] इलियटस्य दृष्टौ परम्पराया विशिष्टं महत्त्वम्।

---

bit of finely filiated platinum is introduced into a chamber containing Oxygen and Sulphur-dioxide .........in the presence of a platinum and the platinum itself is apparently unaffected, has remained inert, neutral and unchanged.

—T. S. Eliot : Selected Prose, p. 25.

22. The only way of expressing emotion in the form of art is by finding an 'Objective Correlative, in other words, a set of objects, a situation, a chain of events, which shall be the formula of that particular emotion, such that when the external facts are given, the emotion is immediately evoked.

—T. S. Eliot : Selected Prose.

23 .His significance, his appreciation, is the appreciation of his relation to the dead poets and artists.

—T. S. Eliot : Sacred wood, p. 49.

अतीतस्य जीवत्तत्त्वानां वर्तमानस्य सक्रियशक्तिशालितत्त्वैस्सह सन्तुलितसमन्वयाय कलाकारः संग्रहत्यागवृत्त्या परिचालितो भवेत्। एतदर्थं स किल स्वीयं लघुतमं "निजं", स्वीयामहम्मयतामियत्तामस्मितायाः संकीर्णपरिधिं अनया रीत्या विस्तारयति यत्स सार्वभौमभूमिकायां समष्टिमानसमात्मसात्करोति वस्तुतस्त्विदं व्यक्तित्वस्य समर्पणमेवास्ति। अतएव कविर्निर्वैयक्तिको भवति।

इलियटस्योपर्युक्तकथने कतिपयमहत्त्वपूर्णतथ्यानामुपरि देयमावश्यकमवधानम् तद्यथा—(१) "काव्यं निर्वैयक्तिकं भवेत्"। कवेर्व्यक्तित्वं किम्? न खल्विलियटः व्याख्यामस्य करोति (२) निर्वैयक्तिकीकरणस्य प्रक्रियायाः परम्परया सह सम्बन्धः। (३) कवेर्व्यक्तित्वद्वयस्य सर्जकव्यक्तित्वस्य-भोक्तृव्यक्तित्वस्य च कल्पना (४) स खलु नूतनस्वरूपाणां सम्मूर्तनाय चरमतत्त्वसमावेशपर्यन्तं व्यक्तित्वस्य विविधसंवेगान्, अनुभवान् बिम्बांश्च संकलयन् तद् माध्यमं स्वीकरोति। अनया रीत्या स व्यक्तिनिरपेक्षस्थितेः प्रक्रम्य व्यक्तिसापेक्षस्थितिं प्रति भवत्युन्मुखः। अत्र किल व्यक्तित्वस्य स्थितिद्वयस्य तथा च नैर्व्यक्तिकतायाः प्रक्रियाया अपि निरूपणमावश्यकं प्रतिभाति।

कवेर्व्यक्तित्वद्वयमुपस्थापयन् इलियटः किल समस्यामेकामुत्पादयति। प्राणिविज्ञानानुसारं क्रोमोजोम्स एवं जीन्सद्वारा सन्ततौ याऽऽनुवंशिकता संक्रामति सैव शारीरिके सामाजिके च परिवेशे व्यक्तित्वस्यैकस्य निर्माणं करोति। अतएव व्यक्तित्वं यदि एकमेव तर्हि भोक्तृव्यक्तित्वस्य एवं सर्जकव्यक्तित्वस्य कथं भ्रामकं विभागद्वयत्वम्। इलियटः व्यक्तित्वं स्वीकुर्वन् तस्योपमितिं प्लेटिनमतन्तुभिः ददाति। मानवीयमस्तिकं न खलु निर्जीवं निष्क्रियं वा। अस्त्यस्मिन् विभिन्नसंस्काराणां समन्वयस्य समता। मस्तिष्कसमन्वयस्य क्रिया किंचित् रहस्यात्मिकी ह्यनैच्छिकी च भवति। अतएव नेदं वक्तुं शक्यते यन्मस्तिष्कं तत्संस्पर्शशून्यतां भजते। इलियटानुसारं भोक्तृव्यक्तित्वं सर्जकव्यक्तित्वं च परस्परासंपृक्तमेव उत्तमकृतिमुत्पादयति।

परमाधारेऽस्मिन् व्यक्तित्वमेकं माध्यममात्रं स्वीकरणीयं किम्? मस्तिष्कं निश्चितमेव नास्ति प्लेटिनमतन्तुः। प्रक्रियायाः सर्जनस्थितौ

तत्किल यथासंभवमेव निस्संगो भवितुमर्हति। अतएवास्यैवाधारस्योपरि मानवस्य मस्तिष्कस्य वा ससंगासंगास्थितिर्निर्धार्यते। ससंगव्यक्तित्वस्य सम्बन्धः भोक्ता सहास्ति असंगस्य निस्संगस्य च व्यक्तित्वस्य सृजनप्रक्रियया सह। वस्तुतस्तु मनुष्यं विना मस्तिष्कस्य मस्तिष्कं विना मानवस्य कल्पनैव न संभाव्यते। अतएव व्यक्तित्वार्थे मनुष्यस्य मस्तिष्कस्य वाधारे ससंगस्य विसंगस्य च व्यक्तित्वस्य कल्पना कर्तुं शक्यते। कवेः ससंगं व्यक्तित्वं रागद्वेषयुक्तं तस्य व्यावहारिकं जीवनमेवं च तस्य निस्संगव्यक्तित्वं रागद्वेषशून्यं सर्जकव्यक्तित्वमस्ति। व्यवहारस्य सर्जनस्य च भूमिकायां व्यक्तित्वस्य द्विविधत्वं संभाव्यते परं न खलु ते व्यक्तित्वे परमार्थतः विलयीकर्तुं शक्येते।

इलियटेन व्यक्तित्वस्य परिभाषा प्रदत्ता, परं भारतीयकविचिन्तकमोहम्मद"इकबालेन" तथा च रवीन्द्रनाथेन व्यक्तित्वं व्याख्यायता काव्ये व्यक्तित्वस्याभिव्यक्तिः स्वीकृता। द्वयोः काव्यसम्बन्धिधारणायाः समानत्वेऽपि तयोर्व्यक्तित्वं प्रतिदृष्टि विभिन्ना। इकबालस्य धारणाऽस्ति यद्—वयं यद् व्यक्तित्वं व्याहरामस्तत्किल संघर्षावस्था। यावदियमवस्था तावदेव मानवव्यक्तित्वमपि तिष्ठति।[२४] व्यक्तित्वं जीवने संघर्षेण, कर्मठतया उत्साहेनान्तर्द्वन्द्वेन चाभिव्यञ्जितं भवति। यस्य जीवने नास्ति संघर्षावस्था स किल गतिहीनो निष्क्रियश्च तिष्ठति। अतएव इकबालस्य दृष्ट्याऽकर्मण्यस्य संघर्षभीरोर्मानवस्य न किल व्यक्तित्वम्। व्यक्तित्वस्य पूर्णाभिव्यक्तिरस्ति प्रवृत्तौ न तु निवृत्तौ। जीवनसंघर्षे रतस्य पुरुषस्य व्यक्तित्वं प्रखरतरं भवति। संघर्षस्तस्य जीवनस्य आवश्यको पक्षः। जीवनस्य प्रगतेर्मार्गं प्रवृत्तेर्मार्गम् न खलु निवृत्तेरिति।[२५]

रवीन्द्रनाथस्त्वेकबालस्योपयोगितावादिनिर्दृष्टेः विपरीतं काव्यं प्रयोजनातीतं स्वीकरोति। तस्य व्यक्तित्वस्य तदाऽऽरम्भो भवति यदा व्यक्तिः ह्युपयोगीतासीमानं तीर्त्वा प्रयोजनातीतो भवति। उपयोगितैव सा सीमा या किल व्यक्तिपशुपदयोर्भेदं स्पष्टयति। मन्तव्यं स्वं स्फुटयन्

२४. रामधारी सिंह : शुद्ध कविता की खोज, पृ० १८९

२५. रामधारी सिंह : शुद्ध कविता की खोज पृ० १८९

स खलु वदति यद्—स्त्रीणां मातृ, भगिनि, सखि, देशसेविका, प्रियादि-प्रत्येकरूपे प्रभूतमुपयोगित्वम्परं न खलु तत्तासां व्यक्तित्वम्। तासां व्यक्तित्वं तु तदैव स्फुटं भवति यदा ताः विशेषभंगिमया गतिलय-संगीत-सन्निबद्धाश्चलन्ति। नार्याः सहजरूपं तस्याः शृङ्गारे, चित्रमयतायां वाण्यां गतेः संगीतमयतायां च प्रकटते। नारी का? इति जिज्ञासायामस्यां न खलु समाधानं तस्याः उपयोगित्वं नाम तासामानन्दमयीमुद्रायामेव प्राप्यते।[२६] काव्यबोधस्यानन्दलक्ष्य एव सन्तोषावस्थाऽस्ति। सा किल पूर्णतः निःस्वार्था तटस्था निष्प्रयोजना चास्ति। काव्यानन्दः सौन्दर्यस्य मधुमतीभूमिकाया आनन्दः। मधुमतीभूमिकायां विचरणं काव्ये कवेर्भूमानन्दे तस्य व्यक्तिः अहमित्यंशस्य तिरोधानमेव भवति। तस्यानन्दः जडचेतनानन्देन सह तादात्म्यं स्थापयति। कविरस्यामेव निर्विकल्पक-निरुद्देश्यात्मकावस्थायां व्यक्तित्वमभिव्यंजयन्नपि निर्वैयक्तिको भवति।

कवि-काव्य-व्यक्ति-प्रभृति-सन्दर्भे मनोवैज्ञानिकानां धारणाद्वयम्। युङ्गमहोदयः मनोवैज्ञानिकमनोविश्लेषणप्रसंगे व्यक्तेः समूहमनसः प्राधान्यमुल्लिख्य कवेर्निर्वैयक्तिकावस्थितिप्राप्तेः सम्भावनाप्रकाशं कृतवान्। स मानवमनसः स्तरद्वयं कल्पितवान्:—(१) चेतनं मानसम् (२) अचेतनं मानसम्। अचेतनं मनः मनुष्यस्य प्राचीनतममस्ति। अस्यापि रूपद्वयम्—(१) व्यक्तिगतम् अचेतनं मनः (इण्डिवीजुअल अनकांसिअस) जातीयं समूहगतं चाचेतनं मनः (कलेक्टिव अनकांसिअस)।

व्यक्तिगताचेतनमनसि व्यक्तेर्निजानुभूतयो संवेगाः संस्काराश्च तिष्ठन्ति। परं तस्य समूहगतं जातीयं वा अचेतनं मनः ह्यनन्तकालादेव जातीयसंस्कारान्धारयति। प्रत्येकक्रियात्मकव्यक्तौ ह्यासां द्वन्द्वात्मक-शक्तीनां मिलति मिश्रणम्। काव्यं स्वभावजन्यसहजावेगानां सम्मूर्तनमस्ति यत्किल कलाकारमाध्यमनैवाभिव्यक्तो भवति। अनया रीत्या कलाकारः व्यक्तिरूपेण समूहमानवस्यैवांगभूतः। तस्य जीवनं संघर्ष-परिपूर्णम्। यदा तस्य जीवने एका प्रबलशक्तिराधिपत्यं स्थापयति तदा-तस्याधिकांशा क्रियात्मकशक्तिः कलायां प्रवृत्ता भवति। परिणामतः

---

२६. रामधारी सिंह : शुद्ध कविता की खोज पृ० १९२

जीवनस्यान्यव्यापारस्य कृते किंचिदेवावशिष्यते। अनेन प्रकारेण कला मानवस्य समूहगतसंस्कारैस्सह रहस्यमयं सम्मेलनं तथा च अनुभवस्यैतादृशस्तराणामवतरणमस्ति यत्र किल व्यक्त्यपेक्षया मानवस्यैवास्तित्वं सुरक्षितं भवति।[२७]

फ्राइडः कविजीवनमेव केन्द्रीकृत्य काव्यविवेचनां करोति। तदनुसारं व्यक्तेर्मूलप्रवृत्तिः कामः। अस्याभिव्यक्तिः कयापि रीत्या भवत्येव। व्यक्तिर्दमितेच्छानामागारः। यतो हि सामाजिकनैतिकभयात् व्यक्तेश्चेतनं मनः वासनेच्छावेगादीन् दमित्वाऽचेतने मनसि निक्षिपति। परमिच्छानामाभिव्यक्तिरावश्यकी। अतएव दमितवासना एव स्वप्ने विक्षिप्तावस्थायां च प्रकटिता भवति। कलाकारः कविश्चैकः कुण्ठितो प्राणी। तस्यापीच्छा, दमितवासनाः काव्यमाध्यमेन बिम्बेषु, प्रतीकेषु च छद्मरूपेणाभिव्यक्तिपथभवतरंति। अनेन प्रकारेण काव्यं कवेरात्मतुष्टेर्माध्यमम्। फलतः फ्राइडस्य मतमिदं व्यक्तिसापेक्षमेव काव्यं स्वीकरोति।

हर्वर्टरीडमहोदयो मनोविज्ञानमनुसृत्यैव व्यक्तित्वस्य विशदं व्याख्यानं कृतवान्—तद् यथा काव्यरचनाप्रक्रियायां कविः स्वव्यक्तित्वम्प्रति सचेतनः सन् स्वस्य नैसर्गिकक्रियायाः सहजं विकासं कुर्यादिति।[२८] यतो हि व्यक्तित्वं भावनानां विचाराणां चानियंत्रितरूपायणम्। रीडमहोदयो व्यक्तित्वापेक्षया चरित्रात् स्वसुरक्षायै आदिष्टवान् कलाकारम्। वस्तुतः व्यक्तित्वे चरित्रे च भेदोऽस्ति। चरित्रस्यार्थे आंग्लशब्दः "कैरेक्टर" अस्ति। एतत्किल एतादृक्षग्रीकशब्दान्निर्मितः यस्यार्थोऽस्ति—उत्कीर्णं चिह्नं—प्रत्यभिज्ञानं चिह्नं ("निशानं") किल चरित्रिकी कठोरता यतो हि तस्मिन् खलु सीमा, नियमानुवर्तिता, संयमः अनुशासनं स्थिरता च भवति। एकवारं यः चरित्रं स्वं स्थिरीकृतवान् तस्मिन् विकासस्याथवाऽनुभवक्षेत्रविस्तारस्य समाप्तिरेव जायते। रीडः अस्मादेव चरित्रात्सावधानं करोति कविम्। तस्य दृष्टौ व्यक्तित्वं सक्रियं गत्वरं च।

२७. डॉ० विक्रमादित्यराय : काव्यसमीक्षा : ४२
२८. Form in Modern poetry. ( Herbert Read. 36–37 )

तस्मिन् किल अनुभावानां विचाराणां विचारेण समं स्वयमपि विकसन-क्षमता। यतो हि व्यक्तित्वं नाम भावनानां सहजा स्वीकृतिः। तस्मिन् दमनस्यानुशासनस्य वा नास्ति ह्याग्रहः।

> राग विराग दुष्ट दोनों-दोनों निसर्ग द्रोही हैं—एक चेतना को अजुष्ट संकोचन सिखलाता है। और दूसरा प्रिय अभीष्ट सुख की अभिप्रेत दिशामें—कहता है बल सहित भावना को प्रसारित करने दो। दोनों विषय शान्ति समता के दोनों ही बाधक हैं—दोनों से निश्चिन्त चेतना को अभंग बहने दो। करने दो सब काम उसे निर्लिप्त सभी से होकर—लोभ, भीति, संघर्ष और यम नियम संयमों से भी।[२९]

उर्वश्याः कथनमिदं चेतनायाः सहजमेव प्रवाहमभिव्यनक्ति। यद्यपि व्यक्तित्वह्रास आरभ्यते चरित्रं प्रबलतरं भाति। अतएव रीडः चरित्रस्य स्थिरतातः सावधानयति।

काव्यसर्जने कविः व्यक्तित्वमवक्षितमेव तिष्ठति। यतो हि कला-कारः निजं "स्वं" हुत्वैवोत्तमां कृतिं दातुं क्षमते। ब्रह्मस्वात्मत्वं निक्षिप्यैव सृष्टिनिर्माणे समर्थो भवति तथापि तस्मिन्न खलु तद् दृश्यम्। काव्यमपि तथैव सृष्टिः। तस्मिन्नपि कवेर्व्यक्तित्वस्य तथैव समाहितत्व-मावश्यकं यदलक्षितरूपेणैव तत्र तिष्ठेत्। यदि तस्मात् व्यंजिताऽपि भवेत् तर्हि—समूहमानवस्य शाश्वत भावना या हि देशकालनिरपेक्षा भवन्ति अनया रीत्या कवेः काव्यस्य च घनिष्ठतरः सम्बन्धः। परं सम्पूर्णरचनायां तस्य व्यक्तित्वं तथैवालक्षितं भवितुमर्हति यथा सृष्टौ ब्रह्म।

---

२९. रामधारी सिंह दिनकर : उर्वशी, तृतीय अंक

# भरतातिक्रमः

*रामजी उपाध्यायः*

भरतस्तु काव्यशास्त्रविधायकेषु सर्वथा प्रथम एव। तस्य नाट्यशास्त्रं परवर्तिनाट्यशास्त्राचार्यैः प्रायश उपजीव्यमिति धृतम्। तथापि कतिपयैराचार्यैर्भारतीया नियमा नोरीकृता इति विसंवादः प्रवचनीयः।

*नाटकनायकः*

कस्तत्र नाटकस्य नायको भवितुमर्हतीत्यधिकृत्य भरतेन प्रोक्तम्—

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम्॥ १८.१०
नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा।
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम॥ १८.१२

एतदनुसारं नाटकस्य नायकः कश्चिद् राजा एवेति भवेन्नतु देव इति विशदयन् अभिनवगुप्तः प्राह—

राजर्षिवंश्येत्यनेन प्रख्यातमपि यद्वस्तु ऋषितुल्यानां राज्ञां वंशेन साधुनोचितं, तथा ख्यातत्वेऽपि देवचरितं वरप्रभावादिबहुलतयोपायोपदेशायायोग्यमिति नैतदुभयं निबन्धनीयमिति फलतः प्रतिषेधो दर्शितः।...न च सर्वथा देवचरितं तथाऽवर्णनीयम्। किन्तु दिव्यानामाश्रयत्वेन प्रकरी-पताकानायकादिरूपेण उपेतमुपगमोऽङ्गीकरणं यत्र।... यदि तु मुख्यत्वेनैव देवचरितं वर्ण्यते तत्तावद्विप्रलम्भकरुणाद्भुतभयानकरसोचितं चेन्निबध्यते, तन्मानुषचरितमेव सम्पद्यते, प्रत्युत देवनामधियाधानं प्रसिद्धिविघातकम्।...अतएव हृदयसंवादोऽपि देवचरिते दुर्लभः, न च तेषां दुःखमस्ति यत्प्रतीकारोपाये व्युत्पादनं स्यात्।...ननु नृपतिचरित एव किमित्ययमास्वादो न देवचरित इत्याह बहुप्रकारा उपायवैचित्र्याद्याः सुखदुःखोत्पत्तयस्तासां कृतं सम्पादनं यत्र, देवचरिते तु तन्नास्तीत्युक्तम्। अतएव प्रतीतिविघातस्य वैरस्यदायिनः सम्भवो यत्र यत्र तन्नाटके नोपनिबद्धव्यम्।

अभिनवगुप्तः स्थूणनिखननन्यायेन साधु प्रसाधितवान् यत् राजा नायको भवेत् न तु कश्चिद्देवः। एतदेव मतं रामचन्द्रगुणचन्द्राभ्यां नाट्यदर्पणे समर्थितम्। तद्यथा—

ख्याताद्यराजचरितं धर्मकामार्थसत्फलम्।
साङ्गोपायदशासन्धि दिव्याङ्गं तत्र नाटकम्॥ १.५

राजेति क्षत्रियमात्रम्, न पुनरभिषिक्त एव, रामजीमूतवाहनपार्थादीनामनभिषिक्तानामपि दर्शनात्। क्षत्रियो मर्त्य एव, तेन न देवनेतृकं नाटकमित्युक्तं भवति। नाटकं हि 'रामवद् वर्तितव्यं, न रावणवद्' इत्युपदेशपरम्। देवतानां तु दुरुपपादस्याप्यर्थस्येच्छामात्रत एव सिद्धिरिति तच्चरितमशक्यानुष्ठानत्वात् न मर्त्यानामुपदेशयोग्यम्; *तेन ये दिव्यमपि नेतारं मन्यन्ते, न ते सम्यगमंसतेति*।......दिव्याङ्गमिति दिव्यं देवता अन्योऽपि चोत्तमः प्रधानस्य नेतुरङ्गं सहायः पताका-प्रकरी-नायकलक्षणो यत्र। दिव्यो हि नेतैव विरुध्यते, न पुनः सहायः। नैके दिव्यमपि नेतारं मन्यन्ते। तद्यथा धनञ्जयो दशरूपके शारदातनयो भावप्रकाशने च—

प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः।

दश० ३.२३, भाव० पृ० २३३

सागरनन्दी नाटकलक्षणरत्नकोशे—

'राजर्षिवंशचरितं तथा दिव्याश्रयोत्थितम्'। १.६

राजर्षिवंशचरितमिति सोमसूर्यवंशजातानां चरितम्। दिव्याश्रयोत्थितमिति दिव्यानां महेश्वरजीमूतवाहनादीनां चरितम् सिंहभूपालः रसार्णवसुधाकरे

दिव्येन वा मानुषेण धीरोदात्तेन संयुतम्। ३.१३०

विश्वनाथः साहित्यदर्पणे

प्रख्यातवंशो राजर्षिर्धीरोदात्त प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः॥ ६.६

रूपगोस्वामी नाटकचन्द्रिकायाम्

दिव्येन दिव्यादिव्येन तथा दिव्येन वा युतम्। ६

स्वयं प्रकटितैश्वर्यो दिव्यः कृष्णादिरीरितः ।
दिव्योऽपि नरचेष्टत्वाद् दिव्यादिव्यो रघूद्वहः ।। १०

न खलु रामकृष्णादयः दिव्या[1] इति मन्यमानैः भरतसम्प्रदाय-धुरीणैर्नाटके दिव्यनायको विरुध्यते इति स्वष्टमेव। परवर्तिनः कतिपय-शास्त्राचार्या नाटकस्य दिव्यं नायकं प्रतिपादयन्तोऽवैदग्धीमेव प्रकट-यन्ति। प्राचीननाटकेषु दिव्यनायकानामभावः भारतीयं विधानं समुन्नयति ।

*ईहामृगनायकः*

ईहामृगस्य नायकः कश्चिद् दिव्यः पुरुषो भवतीति प्रतिपादयन् भरतः प्राह—

दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः । १८.७८

इति । अभिनवगुप्त एतद् व्याख्याति—

दिव्येति दिव्यानां पुरुषाणामाश्रयणं नायकतया तेन कृतः ।

न तावत् कोऽपि परवर्तिनाट्यशास्त्राचार्यो दिव्यमेव केवलं नायक-मभिमनुते । तथा हि—

नरदिव्यावनियमान्नायकप्रतिनायकौ । दशरूपके ३.७३
प्रसिद्धपुरुषः, विप्रत्ययकारकः, षण्नायकः । नाटकलक्षणरत्नकोशे ।
धीरोद्धतश्च प्रख्यातो दिव्यो मर्त्योऽथ नायकः ।। भावप्रकाशने पृ० ३.३३
नरदिव्यावनियमौ नायकप्रतिनायकौ ।। सा. द. ६.२४६

केवलं नाम रामचन्द्रगुणचन्द्राभ्यां दिव्य एव नायकः सम्मतः । तद्यथा,

ईहामृगः सवीथ्यङ्गः दिव्येशो हृतमानवः ।। २.२५

*प्रकरणवस्तु-विनिश्चयः*

भरतेनाद्योविधं रूपकवस्तु विनिर्णीतम्—

---

१. 'देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः' इति विवृण्वन् अभिनव-गुप्तः स्पष्टयति—'न हि जनकप्रभृतीनां रामादीनां वा धीरललितत्वम्' एतदनुसारं रामस्तु नृप एव न देवः ।




तद्यथा,

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम्॥ १८.१०
नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा॥ १८.१२
यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम्॥ १८.४५
यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम्।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम्॥ १८.४६

अभिनवगुप्तेन प्रख्यातादीनां सोदाहरणं व्याख्या कृता। एतदनुसृत्य—

प्रख्यातमिति—महाभारतादौ रामायणपुराणयोर्यद्वस्तु तद्विषयोऽस्येति नाटकम्।

औत्पत्तिकमिति—वस्त्वादिकं काव्याभिधेयमात्मशक्त्या प्रकुरुते यत्काव्येन तत्प्रकरणम्।

अनार्षमिति—पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धम् मूलदेवचरितादि।

आहार्यमिति—पूर्वकविकाव्यादाहरणीयम्।

एतदनुसारं महाभारत-रामायण-पुराणेषु प्रख्यातं वस्तु अथवा नृपतीनां चरितं नाटके वस्तु भवितुमर्हति। प्रकरणे च कविबुद्ध्या सर्वथा प्रपञ्चितमौत्पत्तिकं वस्तु वा बृहत्कथादितो वा पूर्वकविकाव्याद्वा गृहीतं वस्तु भवति।

भारतीयमिदं विधानं नाट्यदर्पणे समुपनीतम्।

तद्यथा प्रकरणलक्षणे

कल्प्येन फलवस्तूनामेकद्वित्रिविधानतः ॥ २.२

अत्राकल्प्यं पुराक्लृप्तं यद्वानार्षमसद्गुणम् ॥ २.४

प्रकरणस्यानार्षमाहार्यं वा वस्तु परवर्तिनाट्यशास्त्राचार्यैर्नाङ्गीकृतमित्यधोलिखितेन तेषां मतेन स्पष्टमेव—

"अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम्" इति दशरूपके ३.३६

"अथ कविना वस्तुशरीरं नायकश्चोत्पाद्यते" इति नाटकलक्षणरत्नकोशे

"इतिवृत्तमथोत्पाद्यमत्र प्रकरणे मतम्" इति भावप्रकाशने २४१ पृष्ठे

"भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम्" इति साहित्यदर्पणे ६.२२४

धनञ्जयशारदातनयसागरनन्दिविश्वनाथादीनां मतानुसारं तु प्रकरणस्य वस्तु केवलमुत्पाद्यं कविकल्पितं वा भवतीति न सम्यग्भरतमनुहरति। तद्यथा भरतेन निष्पादितमभिनवगुप्तेन व्याख्यातं चेति। यथा हि प्रकरणवस्तुविचारणायाम्—

यत्र समुत्पाद्यं न भवति तत्र योऽनुपाद्योंऽशः।

अभिनवभारती ना० शा० १८.४६

अनेन निःसंदिग्धमिदं प्रतीयते यत् भरतानुसारं प्रकरणस्य वस्तु समुत्पाद्यमनार्षमाहार्यं च त्रिविधं भवति। परवर्तिशास्त्रकाराः केवलमुत्पाद्यमेव प्रकरणस्य वस्त्विति जल्पन्तः किमप्यभारतीयं चेष्टन्ते।

*मिश्रवस्तुविकल्पनम्*

प्रख्यातोत्पाद्यवस्तुमिश्रणेन मिश्रं वस्तु भवतीति परवर्तिनाट्याशास्त्राचार्याणां मतमभारतीयं प्रतीयते। अभिवगुप्तानुसारं तु प्रख्याताहार्यानार्षाणि वस्तून्युत्पाद्यवस्तुभिः संयुक्तानि एव विशेषावापाधानेन काव्योचितानि क्रियन्ते प्रयोक्तृभिः। ईदृशं वस्तु नाटकादिषु प्रयुक्तं प्रख्यातं वानार्षं वाहार्यं वा भवति न तु मिश्रम्।[1]

---

१. अभिज्ञानशाकुन्तलोत्तररामचरितयोर्वस्तुनोरुत्पाद्यांशो बहुल एव। तथापि तयोर्वस्तु प्रख्यातमिति सम्मतम्, न मिश्रमिति।

अतएव मिश्रमिति वस्तुकोटि भरतेनाभिनवगुप्तेन वा न प्रमाणितम्। परवर्ति-नाट्याशास्त्राचार्या मिश्रमिति वस्तुकोटिं निर्धार्य ईहामृगे वस्तु मिश्रं भवतीति स्थापयन्ति।

तथाहि—

मिश्रमीहामृगे वृत्तमिति दशरूपके ३.७२

ईहामृगस्येतिवृत्तं प्रख्यातोत्पाद्यमिश्रितम् इति

भावप्रकाशने पृष्ठे २५३

ईहामृगो मिश्रवृत्तः इति साहित्यदर्पणे ६.२४५

भरतेनेहामृगस्य लक्षणे मिश्रं वस्तु न निर्दिष्टम्।

तदनुसारं तु—

"सुविहितवस्तुनिबद्धः" १८.७८ ईहामृगो भवति।

"सुविहितेन संश्लिष्टेन वस्तुना निबद्धः" इति तत्राभिनवगुप्तस्य व्याख्या।

अतएव 'मिश्रं वस्तु' इति मिथ्या प्रपञ्चः परवर्तिनाट्यशास्त्राचार्याणाम्।

*रङ्गपीठेऽनभिनेयम्*

भरतेन प्रवेशके किं वर्णनीयमिति प्रसङ्गे प्रोक्तम्—

"युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव।

प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि॥" ना० शा० १८.३८

एतस्यान्वयोऽधोलिखितः

अङ्के न प्रत्यत्क्षाणि युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव प्रवेशकैः संविधेयानि।

नात्र रङ्गपीठे युद्ध-राज्यभ्रंश-मरण-नगरोपरोधनानामभिनयस्य रङ्गपीठे निषेधः, प्रत्युत विकल्प एव।[1] यत्र तेषामभिनयोऽङ्के न क्रियेत, तत्र तानि प्रवेशकैः सूचनीयानीति। एतेषु प्रथमं तावद् युद्धम्। भरतानुसारं तु रौद्ररसनिष्पत्तये युद्धाभिनय आवश्यकः।

---

१. भरतः स्पष्टमेव निर्दिशति—

यस्माद् युद्धान्निवर्तन्ते तस्मान्न्यायाः प्रवर्तिताः॥ १०.७६

युद्धम्

भरतो रौद्रं निदर्शयति—

युद्धप्रहारघातनविकृतच्छेदनविदारणैश्चैव ।
संग्रामसम्भ्रमाद्यैरेभिः संजायते रौद्रः ॥
नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्तनैश्चैव ।
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ ६.६४–६५

अनेन युद्धाभिनयः विनिश्चित एव। पुनः पुनः भरतो युद्धाभिनयं प्रतिपादयति। तद्यथा—

चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥ १०.५
एतानि खण्डानि समण्डलानि
युद्धे नियुद्धे च परिक्रमे च।
लीलाङ्गमाधुर्यपुरस्कृतानि
कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥ ११.७०
न भेद्यं नैव चच्छेद्यं न प्रहर्तव्यमेव।
रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत् ॥[1] ११.२२४
अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा।
शस्त्रमोक्षः प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ॥ ११.२२५
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ॥ १०.७२
विभ्रमय्य तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ॥ १०.८५
न भेद्यं नापि चच्छेद्यं न चापि रुधिरस्रुतिः। १०.८६
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः।

एतासु करिकासु भरतो युद्धाभिनयस्य विवरणं प्रस्तौति।

अभिनवगुप्तस्तु न तथा मन्यते। स युद्धविषये व्याख्याति—'रङ्गे प्रत्यक्षतोऽप्रदर्शनीयत्वात्।[2] एतदेव कारणे स्फुटीकृतं युद्धमेव यन्निर्वाह-पर्यन्तं यावन्मरणमेव यदचिरप्रत्यापत्तिर्न भवति तन्न प्रत्यक्षेण प्रयोज्यं,

१. संज्ञामात्रेण यथा परो जानाति युध्येते इमाविति।
अभिनवगुप्तः ना० शा० १०.८७ अधिकृत्य।

२. द्वितीयभागे ३२० पृष्ठे बडौदासंस्करणे

प्रवेशकैरिति उपक्षेपपञ्चकमध्यादन्यतमेनोपक्षेपेणेत्यर्थः।'[1] अभिनवगुप्तस्यायं विसंवादः न सर्वसम्मत इति तेनैव समुद्धृतम्। तद्यथा, अन्ये त्वाहुः—व्याधिजमभिघातजं च मरणं रङ्गे प्रयोज्यं, अपुनर्जनिनिष्क्रान्तिरहितप्रकृतिविधेयेति।[2]

*मरणम्*

मरणमपि रङ्गपीठे न दर्शनीयमिति अभिनवगुप्तस्य मतमसमीचीनम्। एतस्मिन् प्रकरणे स व्याख्याति—

'मृतस्य कथं निष्क्रमणं कथं वावस्थानं, ततो नाट्योपयोगिसमस्तध्रुवागानादिप्रक्रियाविलोपः सामाजिकानां विरसताप्रतिपत्तिरिति तु सर्वत्र मरणं समानं तस्माद्रङ्गे मरणमप्रयोज्यमेव।' इति न सम्यक् प्रतिभाति। यतो हि नाम

शस्त्रक्षताद् मरणस्याभिनयः कथं कुर्यादिति प्रकरणे भरतो निर्दिशति—

"तावत्सहसा भूमिपतनवेपनस्फुरणादिभिरभिनयः प्रयोक्तव्यः।"[3]

परवर्तिनाट्यशास्त्राचार्या अभिनवगुप्तस्योपर्युक्तां व्याख्यां सम्यङ् मन्यमाना रङ्गपीठे वधो नाभिनेय इति प्रपिपादितवन्तः। तद्यथा दशरूपके—

"दूराध्वानं वधो युद्धं राज्यदेशादिविप्लवम्।
............प्रत्यक्षाणि न निर्दिशेत्॥" ३.३४,३५

साहित्यदर्पणे—

"दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।
............एभिर्वर्जितो नातिविस्तरः (अङ्कः)॥" ६.१६

परवर्तिनाट्यशास्त्राचार्याणामेतन्मतं समीचीनं न प्रतिभाति।

---

१. ना० शा० १८.३८ अधिकृत्य भारती

२. तृतीयभागे ४२७ पृष्ठे।

३. ना० शा० ७.८६

युद्धादिकं रङ्गपीठे बहुभिः कविभिर्निबद्धमेव। तथाहि—ऊरुभङ्गे युद्धम्, दुर्योधनमृत्युश्च दर्शितः मध्यमव्यायोगे च रङ्गपीठे घटोत्कचेन सह भीमस्य युद्धं भवति। अभिषेके रङ्गपीठे वालिसुग्रीवयोर्युद्धं दृश्यते। तत्रैव वालिर्म्रियते च। बालचरिते वधस्यानेकानि दृश्यानि सन्ति। रङ्गपीठे युद्धानि भवन्ति च। प्रतिमायां रङ्गपीठे दशरथस्य मृत्युर्भवति। मृच्छकटिके वसन्तसेनायाः मृत्युः प्रदर्श्यते। वेणीसंहारे युद्धारम्भो दृश्यत एव। तद्यथा,

युधिष्ठिरः—( वेगाद् भीममालिङ्ग्य ) दुरात्मन् भीमार्जुनशत्रो सुयोधनहतक !

उत्तररामचरिते रङ्गपीठे रामः शम्बूकस्य वधं करोतीति वर्णितम्। तद्यथा—

( कथंचित् प्रहृत्य ) कृतं रामसदृशं कर्म।

अत्र शम्बूकवधो रङ्गपीठे दर्शितः।

अस्मिन्नाटके पञ्चमे अङ्के लवः चन्द्रकेतुसेनया युध्यते। युद्धाभिसारिणश्चमूपतयो लवं पर्यवष्टम्भयन्ति। ते चमूपतयः रङ्गपीठे न सन्ति। तान् सर्वान् तेषां सैन्यानि च जृम्भकास्त्रेण लवः संस्तम्भयति। आश्चर्यचूडामणौ जटायू रावणेन सह रङ्गपीठे युद्ध्वा तत्रैव म्रियते। प्रायशः व्यायोगेषु रङ्गपीठ एव युद्धं भवति।

( क्रमशः )

# विश्वस्मिन्

*श्रीबालशास्त्री*

ननु संज्ञोपसर्जनीभूतानां प्रतिषेधो वक्तव्यः, सर्वो नाम कश्चित्, "तस्मै सर्वाय देहि" इति भाष्यात्, 'अत्र ( सर्वादिगणे ) सर्व-विश्वशब्दौ कृत्स्नपर्यायौ' ( पठ्येते ) इति शब्दकौस्तुभग्रन्थाच्च 'विश्वेषामपि दोषाणां मार्जनं कुरुते बुधः', 'विश्वानि देव सवितर्दुरितानि परासुव' इत्यादौ सर्वार्थकत्वेन विश्वशब्दस्य सर्वनामसंज्ञत्वेऽपि 'विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः' इत्यादौ विश्वशब्दस्य जगद्वाचित्वेन संज्ञात्वात्सर्वनामसंज्ञाप्रतिषेधेन कथं सर्वनामसंज्ञाप्रयुक्तस्मिन्नाद्यादेशः? तथा च 'कस्येदि'-ति सूत्रभाष्ये विकल्पः 'कस्येत्।' यस्येति लोपः कस्मान्न भवति। इकारोच्चारणसामर्थ्यात्। अथ यत्कायं हविः, कथं तस्य सम्प्रैषः कर्त्तव्यः? यदि तावत् किमः कादेशः, कस्मै अनुब्रूहि इति भवितव्यम्। अथ न किमः कायानुब्रूहीति भवितव्यम्—" इति।

अत्र कश्चित्—

'जगति सर्वेषामपि पदार्थानामन्तर्भावेन, जगच्छब्दस्यापि सर्वार्थकत्वेन तद्वाचकस्य विश्वशब्दस्य सुतरां सर्वार्थवाचकतया, 'सर्वेषां यानि नामानि तानि सर्वादीनी'त्येवं भाष्यकृता परिभाषणाद् विश्वशब्दस्य सर्वनामसंज्ञकत्वे बाधकाभावः। अत एव 'कः=प्रजापतिः देवता अस्येति कायं हवि'रित्यत्र कथं सम्प्रैष कर्तव्यः? 'कायानुब्रूहीति, कस्मायानुब्रूहीति वा' इति प्रश्ने 'सर्वस्य हि सर्वनामसंज्ञा क्रियते, सर्वश्च प्रजापतिः, प्रजापतिश्च कः इति कस्मै अनुब्रूहि इत्येव भवितव्यम्' इति 'कस्येत्' [ ४-२-२५ ] इति सूत्रस्थं भाष्यं संगच्छते। प्रजापतेः सर्वत्वे 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति भगवद्गीताऽपि प्रमाणम्—' इति।

वस्ततस्तु 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः,' 'संज्ञोपसर्जनप्रतिषेधः', इत्यादौ संज्ञापदेन आधुनिकसङ्केतरूपसंज्ञानामेव ग्रहणं न तु चिरन्तनसंज्ञानाम्। अन्यथा रूढ्या अर्थप्रतिपादकानामेव शब्दानां संज्ञा-

शब्दत्वेन व्यवहारात्, सर्वादिशब्दानमपि इन्द्रादिशब्दानामिव केवलरूढत्वेन रूढत्वरूपसंज्ञात्वस्य च सर्वत्र सत्त्वेन व्यावर्त्त्यालाभात् 'पूर्वपरावरे'ति [ १।१।३४ ] सूत्रे 'असंज्ञायाम्' इत्यस्य वैयर्थ्यं स्यात्। तथा च 'आधुनिकसंकेतो हि संज्ञा' इति प्रौढमनोरमाग्रन्थव्याख्यावसरे लघुशब्दरत्ने भट्टनागेशाः प्राहुः—'आधुनिकसंकेतो हीति। असंज्ञापदसामर्थ्यात्। अन्यथा सर्वादीनां केवलरूढत्वेन इन्द्रादिपदानामिव रूढत्वरूपसंज्ञात्वस्य सर्वत्र सत्त्वात् तदसंगतिः स्पष्टैवेति भावः' इति।

तथा च जगति प्रवर्त्तमानस्यापि विश्वशब्दस्याधुनिकसंकेतरूपसंज्ञात्वाभावेन सर्वनामत्वं सुलभमेव। अत एव 'किम्-शब्दस्य प्रजापतिवाचकत्वेऽपि आधुनिकसंज्ञात्वाभावेन कः = प्रजापतिर्देवता अस्येति विग्रहे किम् शब्दात् 'कस्येत्' इति सूत्रेण अणि तत्सन्नियोगेन मकारस्य इदादेशे, तस्य 'यस्येति चे'ति लोपे वृद्धावायादेशे च सिद्धे 'कायम्' इति प्रयोगे, कथमत्र सम्प्रैष इति प्रश्ने 'यदि तावत् किमः कादेशः, कस्मै अनुब्रूहि इति भवितव्य'मिति भाष्यमाञ्जस्येन संगच्छते।

अत एव 'कस्मै देवाय हविषा विधेम', 'विश्वेषां देवानाम्' इत्यादयः प्रयोगा अपि संगच्छन्ते। अन्यथा 'किंशब्दश्च प्रश्नाक्षेपयोरिव प्रजापतौ वर्त्तते' इति कैयटोक्त्या, विष्णुसहस्रनामसु 'सर्वः कः किं यत्तत्पदमनुत्तमम्' इत्येवं किंशब्दस्य—विष्णुवाचकत्वोपलब्ध्या च, 'आदित्य-विश्व-वसवः' इत्यमरेण विश्वशब्दस्य गणदेववाचकत्वेन च किम्शब्द-विश्वशब्दयोः संज्ञावाचकत्वेन सर्वनामत्वनिषेधापत्त्या 'कस्मै देवाय', 'विश्वे देवा', 'विश्वेषां देवनाम्', इत्यादिप्रयोगाणामसंगत्यापत्तेः।

तथा च 'पूर्वपरावरे'तिसूत्रे शब्दकौस्तुभे, प्रौढमनोरमायां च भट्टोजिदीक्षिताः—'असंज्ञायामिति किम्? उत्तराः कुरवः। सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दौ वर्त्तत इत्यस्ति इह व्यवस्था। प्रसिद्धत्वात्तु नावधेः प्रयोगः, मेघो वर्षतीत्यत्र जलस्य यथा। 'एवं दिशः सपत्नी भव दक्षिणस्या' इत्यादावपि वस्तुतो व्यवस्था अस्तीति सर्वनामकार्यं संभवत्येव।

'न च संज्ञात्वान्निषेधः। आधुनिकसंकेतो हि संज्ञा। न च दिक्षु सास्तीति पञ्चमे अस्तातिप्रकरणे कैयटहरदत्तादयः। अत्र दिक्षु चिरन्तनः, कुरुषु त्वाधुनिकः संकेत इत्यत्र व्याख्यातृवचनमेव प्रमाणम्'। इति।

'एतेन विश्वेषां देवानामिति व्याख्यातम्। वेदप्रसिद्धत्वात्। देवगणविशेषे विश्वशब्दस्याधुनिकसंकेतत्वाभावात्' इति प्राह।

भट्टनागेशास्तु बृहच्छब्देन्दुशेखरे इत्थं व्याहरन्तोऽवलोक्यन्ते :—"यद्यपि संज्ञाशब्दत्वं रूढ्यार्थबोधकशब्दत्वम्। अत एव संज्ञायां समजनिषदेत्यादिना समूहार्थकस्य समज्याशब्दस्य साधुत्वमुक्तं सूत्रकृता। अत एव आकडारसूत्रे इन्द्रादीनां कुशूलादीनां च संज्ञाशब्दत्वमुक्तं भाष्ये। अत एव च पञ्चमे पशुनामत्वेन गवादयो व्यवहृता गोगोष्ठमित्यादिसिद्धये। न हि एतेषु पदप्रवृत्तिनिमित्तकत्वं तत्, इन्द्रादीनां पर्यायत्वानापत्तेः, भिन्नप्रवृत्तिनिमित्तत्वात्,—तथापि संज्ञोपसर्जनीभूतास्तु न सर्वादय इत्यत्र आधुनिकसंकेतविषये संज्ञाशब्दो वर्त्तते, सामर्थ्यात्। अन्यथा सर्वादीनां केवलरूढत्वेन तस्यासंगत्यापत्तेः। दिक्षु त्वैश्वरसङ्केतो नाधुनिकः, कुरुषु तु आधुनिक एवेत्यत्र व्याख्यातृवचनमेव प्रमाणम्, लक्ष्यदर्शनं च। एवं देवगणविशेषे विश्वशब्दस्यापि ऐश्वर एव सङ्केत इति विश्वेषां देवानामिति सिद्धम्"—इति। लघुशब्देन्दुशेखरे च—"विश्वेभ्यो देवेभ्यः स्वाहेति लिङ्गात् व्यस्तस्यैव देवतात्वेऽपि वैश्वदेव्यामिक्षेत्यादौ तद्धितवृत्तिविषये समासो, विश्वदेव इति बहुव्रीहिश्च साधुरिति बोध्यम्।...परे तु (कस्येदिति सूत्रे) किमोऽप्यत्र (कशब्देन) सह तन्त्रेण निर्देशः। शब्दपरत्वेऽपि किमः कादेशः 'क्षियः' इत्यादावियङ्वत्। किंशब्दोऽपि प्रजापतिवाची। अत एव 'कस्मै देवाय हविषा विधेम' इति श्रुतौ 'प्रजापतये' इत्यर्थकं 'कस्मा' इति संगच्छते। एवं च कस्मा इत्यपि प्रैष उक्तश्रुतिमूलकः शाखाभेदेन व्यवस्थितः। विष्णुसहस्रनामसु च 'एको नैकः सर्वः कः किं यत्तत्पदमनुत्तम'मित्युक्तम्। न च संज्ञात्वादस्य सर्वनामत्वाभावे कृतं स्मायादिः। सर्वनामसंज्ञाप्रतिषेधे आधुनिकसंज्ञाया एव ग्रहणात्। अत एव विश्वेषां देवानामिति सिद्धम्"—इति। तथा चाऽयं निष्कर्षः यज्जगद्वाचकस्य विश्वशब्दस्य सर्वनामसंज्ञा भवत्येवेति विश्वस्मिन्नित्येव प्रयोगः साधुः न तु 'विश्वे' इति सुधियो विभावयन्तु।

## अश्वपदबन्धेन श्लोकद्वयम्

*ब्यावरनगरवास्तव्याः स्वर्गीयाः पण्डितरामप्रतापशास्त्रिमहाभागाः*

( सोद्धारटिप्पणीयं श्लोकद्वयी गोलोकधामनिवासिभिः परमादरणीयचरितैरस्मत्पितृचरणैः भूतपूर्व-नागपुरविश्वविद्यालयीयसंस्कृतपालि-प्राकृतादिविभागाध्यक्षैः स्वकीये लाहौरराजकीयप्राच्यमहाविद्यालयीय-प्राध्यापकत्वकाले प्रथमे वयसि वर्त्तमानैः षोडशवर्षदेशीयैर्निरमायि। यतो हि जे० एस०, विद्याभूषणेत्युपाधिसमुल्लेखस्तेषामल्पीयसि वयसि प्रकाशितेषु लेखेषु लोचनपथमागच्छति। को वा तत्सहचरो नान्वभूत्तेषां चतुरङ्गक्रीडायामनितरसाधारणं प्रावीण्यम्। मयाऽप्यनेकधाऽश्रावि यदश्ववगत्या विरचितां श्लोकद्वयीमधिकृत्य कस्यांचित्प्रतियोगितायां शैशव एव जिता तैः पुरस्काररूप्यकाणां पञ्चशती। मन्ये, इयमेव सा श्लोकद्वयी। विद्वज्जनमनोमोदकारिणीयं नातिचिरमास्माकीने ब्यावर-नगरस्थे पुस्तकालये कस्मिंश्चित्पुस्तके नूनमतीव जीर्णतामुपगतस्यैकस्य कर्गदपृष्ठस्योभयतः रमणीयाक्षरैः लिखिता यथोपालम्भि तथैव साहित्य-रसिकानां विद्वत्तल्लजानामास्वादनार्थं प्रकाशयामि। पितृपादानां श्रीपाद-पद्मयोश्च साञ्जलिबन्धं सभक्त्युन्मेषं सपादस्पर्शञ्च प्रणमामि। )

*प्रेषकः*—लेखकतनूजन्मा *रसिकबिहारी जोशी* जोधपुरविश्वविद्यालयीय-संस्कृतप्रोफेसरः विभागाध्यक्षश्च।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ उ | ३० मा | ९ द् | २० दा | ३ तु | २४ सा | ११ रा | २६ ध्या |
| १६ शं | १९ प | २ दे | २९ र | १० क्ष | २७ ता | ४ दि | २३ ह |
| ३१ सु | ८ सा | १७ या | १४ गा | २१ न | ६ पा | २५ धी | १२ श |
| १८ ज्ञा | १५ नि | ३२ भा | ७ वा | २८ ज | १३ य | २२ न्त | ५ व |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १<br>उ | २<br>दे | ३<br>तु | ४<br>दि | ५<br>व | ६<br>पा | ७<br>वा | ८<br>सा |
| ९<br>द | १०<br>क्ष | ११<br>रा | १२<br>श | १३<br>य | १४<br>गा | १५<br>नि | १६<br>शं |
| १७<br>या | १८<br>ज्ञा | १९<br>प | २०<br>दा | २१<br>न | २२<br>न्त | २३<br>ह | २४<br>सा |
| २५<br>धीं | २६<br>ध्या | २७<br>ता | २८<br>ज | २९<br>र | ३०<br>मा | ३१<br>सु | ३२<br>भा |

कुरङ्गनयना लक्ष्मीस्तुरङ्गपदबन्धनम् ।
चतुरङ्गक्रीडनकं चक्रमेतद्ददाति ते ॥ ३ ॥

अस्योद्धारस्त्वनुलोमेन पङ्क्तिक्रमेण प्रथमश्लोकस्य पाठः । द्वितीयश्लोकस्य पाठस्तु चतुरङ्गक्रीडायामश्वो यथा सार्द्धद्विपदमुल्लङ्घ्य गच्छति तथाविधया गत्या १, ११, ४, १५, प्रभृतिचिह्नितेषु कोष्ठेषु चालनीय इति । *दुष्करोऽयं बन्धः ।*

*अस्यार्थस्तु*

आराध्या आराधनीया सा प्रसिद्धा उमा पार्वती शं मङ्गलं ददातु । इह जीवलोके तव जयपदे जयस्थाने रक्षतात् । कीदृशी सा—सुसाया स्यति अन्तं करोति येन स सायोऽस्त्रं षोन्तकर्मणीत्यस्माद्धातोः करणे घञ् । शोभनाः सायाः सायका यस्याः सा तादृशी गानपा गानं स्तुतिमानं पिबति शृणोतीति गानपा । तथा अधीशज्ञानिभावा अधिगतः प्राप्त ईशादीशस्य वा ज्ञानिभावो ज्ञानित्वं ज्ञानमिति यावत् यया सा तादृशी ॥ १ ॥

हे धीध्याताज ! धियैकाग्रया बुद्ध्या ध्यातश्चिन्तितोऽजो विष्णुर्येन तादृश ! अक्षरा अनवश्वरा रमा लक्ष्मीर्दिवं स्वर्गं पातीति दिवप इन्द्रस्तस्यावासाच्छयं हस्तं गच्छतीति शयगा तव हस्तगा सतीत्यर्थः । अनिशं नित्यमुदेतु वर्धताम् । या रमा अज्ञापदा अज्ञो मूर्खोऽपदमस्थानं यस्यः सा तादृशी तथा अनन्तो हसो हास्यं यस्याः सा, यद्वा अज्ञानां मूर्खाणामापदा व्यसनेनानन्तो हसो हासजनिका प्रीतिर्यस्याः सा तादृशी । सुभा शोभना भा दीप्तिर्यस्याः सा ॥ २ ॥

# शब्दशक्तिमूलवस्तुध्वनिविमर्शः

*वायुनन्दनपाण्डेयः*

पण्डितमण्डलमण्डनभूताः कमनाः कविजनायां व्यञ्जनामुपासितुमुत्का अवलोक्यन्ते, तां मीमांसकनैयायिकानामभूमिं विद्वद्वरेण्या वैयाकरणाः सहृदयानन्दकृदानन्दवर्धनप्रभृतय आलङ्कारिकाश्च यथावदलङ्कुर्वन्ति। विहाय तर्ककर्कशसरणिपरिशीलनपाटवप्रवृद्धानुमानान्तर्भावाभिमानं महिमानं, मीमांसाप्रभावप्रभूताभिधाभासमुकुलितप्रातिभपट्टं मुकुलभट्टं, तात्पर्यातुलशक्तिप्रसारसमाराधनधनं धनिकं, धनञ्जयञ्च।

परं व्यञ्जनामञ्जतोऽपि साहसेन शाब्दीं व्यञ्जनामपवदतः कस्यचिद् भ्रान्तिनिरासाय, शब्दशक्त्युद्भववस्तुध्वनिविषयकवैमत्यविधूननाय च विविधाचार्यग्रन्थान् समधीत्यालोड्य च तन्मतप्रतिपादनपुरस्सरं ससमीक्षं निबन्धमिमं विदुषां प्रीतये प्रस्तौत्येष जनः।

ध्वनिस्तावद् द्विविधोऽविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति। तत्राद्योऽर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यभेदेनान्त्यश्चासंलक्ष्यक्रम-संलक्ष्यक्रमभेदेनोभावपि पुनर्द्विविधतामापन्नौ। तत्रासंलक्ष्यक्रमो ध्वनी रसादिरूप एकविध एव गण्यते, तद्भेदानां संख्यातुमशक्यत्वात्। संलक्ष्यक्रमव्यङ्ग्योऽपि प्रथमं त्रिविधः, शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च। तत्र शब्दशक्तिमूलध्वनिविषये काचन मीमांसा प्रस्तूयते।

तत्र काव्यात्मनो ध्वनेः प्रतिष्ठापको ध्वनिकारिकाकारो ध्वन्यालोके—

> आक्षिप्त एवाऽलङ्कारः, शब्दशक्त्या प्रकाशते।
> यस्मिन्ननुक्तः शब्देन, शब्दशक्त्युद्भवो हि सः॥[1]

इति निजगाद।

---

१. ध्व० लो० २।२१ कारिका।

सहृदयानां मनोमन्दिरेऽनश्वरीं प्रतिष्ठामाप्त आनन्दवर्धनश्च तत्रैव व्याचख्यौ—यस्मिन् काव्ये यतः स्ववाचकशब्देनानुक्तः शब्दशक्त्याऽऽक्षिप्त एवालङ्कारो न वस्तुमात्रं प्रकाशते स शब्दशक्त्युद्भवो ध्वनिः। यत्र च शब्दशक्त्या वस्तुद्वयं प्रकाशते स श्लेषस्य विषयो यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो,
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः,
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥

इति पद्ये द्वितीयोऽप्यर्थो वस्तुमात्रं भासते नालङ्कार इति श्लेष एवात्र।

न च यत्रार्थद्वयं वस्तुमात्रं तत्र श्लेषो यत्र चालङ्कारान्तरप्रतिभासस्तत्रापि श्लेष एव भट्टोद्भटेन प्रतिपादितोऽतः शब्दशक्तिमूलध्वनिर्निरवकाश इति वाच्यम्, शब्दशक्त्या वाच्ये सत्यलङ्कारान्तरप्रतिभासे श्लेषव्यवस्थापने तस्य तात्पर्यात्। यत्र पुनः शब्देनानुक्तः शब्दशक्त्या-(अर्थसामर्थ्यात्) आक्षिप्त एवाऽलङ्कारान्तरः प्रतीयते स ध्वनिरेव।

तत्र शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभायां श्लेषो यथा—

तस्या विनाऽपि हारेण, निसर्गादेव हारिणौ।
जनयामासतुः कस्य, विस्मयं न पयोधरौ॥

अत्र "अपिशब्दो" विरोधमभिदधत् हारिणावित्यस्य "मनोहरौ, हारयुक्तौ" इत्यर्थद्वयेऽप्यभिधां नियच्छति। अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावो यथा विस्मयशब्देनोक्तः प्रतिभाति, तथैव विरोधोपि "अपि" शब्देनोक्तः प्रतीयत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयो न त्वनुरणनरूपव्यङ्ग्यस्य।

यत्र तु शब्दशक्त्या अर्थसामर्थ्याक्षिप्तस्यालङ्कारान्तरस्य प्रतीतिस्तत्र संलक्ष्यक्रमध्वनेर्विषयो यथा—

"अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः।"

अत्र महाकालप्रभृतयः शब्दा योगरूढाः। यद्यपि योगरूढस्थले "रूढिर्योगापहारिणीति"—न्यायाद् रूढ्यर्थस्यैवाभिधया बोधो भवति,

तथाप्यस्य न्यायस्य प्रकरणाद्यभावे एव प्रवृत्तिर्भवति। अत्र तु ग्रीष्म-वर्णनप्रकरणेन योगार्थे एव नियन्त्रिताऽभिधाशक्तिरतएव "रूढिर्योगा-पहारिणी"ति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा यौगिकमर्थम-भिधाय विरतव्यापाराः सन्ति। अनन्तरं जगत्संहर्तृदेवविशेष ( रुद्र )-रूपार्थावगतिः शब्दशक्तिमूलध्वननव्यापारादेव।

अत्र शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिके जगत्संहर्तृदेव-विशेष ( रुद्र ) रूपेऽर्थे वाक्यस्यासम्बद्धार्थप्रतिपादकत्वदोषप्रसक्तिनिराकरणाय ग्रीष्माभिधानो महाकालो महाकाल इवेत्युपमानोपमेयभावः कल्पयि-तव्यः। अत्र अर्थसामर्थ्यात् ( ध्वननव्यापारात् ) आक्षिप्तोऽयं श्लेषो न वाच्यश्लेषवत् प्रकरणादिनियामकाभावात् सर्वथा शब्दप्रतिपाद्यः इति श्लेषाद् व्यतिरिक्त एव शब्दशक्तिमूलानुरणनरूपध्वनेर्विषय इति।

इत्थं ध्वन्यालोककारमते शब्दशक्त्युद्भवो ध्वनिरेकविधएवालङ्कार-रूप इति।

अत्राभिनवगुप्तपादा लोचने चतुर्णां मतानामुपादानं कृतवन्तः। तद्यथायेन प्रतिपत्रा यस्य शब्दस्य पूर्वमर्थान्तरेऽप्यभिधा ज्ञाता, तस्यैव प्रतिपत्तुस्तस्मादेव शब्दात् संयोगादिना प्रकारणिकेऽर्थे नियन्त्रितायाम-भिधायां प्राकरणिकार्थबोधानन्तरमप्राकरणिकार्थबोधो यतो ध्वनन-व्यापारादेव जायतेऽतोऽप्राकरणिकोऽर्थो व्यङ्ग्यः शब्दशक्तिमूलश्च सः। इति केषाञ्चिन्मतम्।

अन्ये चैवं प्रतिपादयन्ति यत्—सा शब्दस्यार्थान्तरबोधिकाऽप्य-भिधैव। परञ्चार्थसामर्थ्यं ( अप्रस्तुतार्थेन प्रस्तुतार्थस्य सादृश्यात्मकं सम्बन्धं ) सहकारितयाऽवलम्ब्यार्थान्तरं बोधयत्यतः सहकारिभेदात् सा ध्वननव्यापाररूपोच्यते। अर्थात् शब्दस्याभिधादयो व्यापारा अर्थ-बोधानुकूलशक्तिविशेषस्वरूपा एव। सहकारिभेदेन तेषां भेदः। तथा हि—सङ्केतग्रहसहकारेणार्थबोधिका शक्तिरभिधा। मुख्यार्थबाधादिग्रह सहकारेणार्थबोधनशक्तिर्लक्षणा। सङ्केतग्रहातिरिक्तार्थसामर्थ्यादि-सह-कारेणार्थबोधनशक्तिर्व्यञ्जनेति निमित्तान्तराऽपेक्षणात् या शक्ति-र्नैमित्तिकी, औपाधिकी वा सा व्यञ्जनेति।

शब्दश्लेषे सर्वदोमाधव इत्यादौ "सर्वदः माधवः" "सर्वदा उमाधवः" इति शब्दभेदोऽस्त्येव। अर्थश्लेषेऽपि "शक्तिभेदाच्छब्दभेदः", शक्य-भेदाच्छक्तिभेद इति दर्शने" सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति, इति च दर्शने द्वितीयार्थबोधको द्वितीयः शब्दस्तत्रानीयते। स च यत्र द्वावर्थौ प्रकारणिकौ तत्र त्वभिधयानीयते। यथा क इतो धावति, किंगुण-विशिष्टश्चेति द्वयोः प्रश्नयोरुत्तरप्रदानायोक्तं "श्वेतो धावति" इति वाक्य-घटकं श्वेत इति पदम्। (श्वा इतः, श्वेतगुणवांश्चेत्यर्थद्वयबोधायाभिधया द्वितीयः श्वेतशब्द आनीतः)। यत्र चैकोऽर्थः प्रस्तुतोऽन्यऽप्रस्तुतस्तत्र-प्रस्तुतेऽर्थेऽभिधाया नियमनादप्रस्तुतार्थबोधनाय द्वितीयः शब्दो ध्वनन-व्यापारादेवानीयते। तत्राप्रस्तुतोऽर्थो ध्वननव्यापारानीत-द्वितीयशब्द-बलात्प्रतिपन्नोऽपि ध्वननव्यापारमूलत्वाद् व्यङ्ग्य एवेति शब्दाध्याहार-वादावलम्बिनामेकेषां मतम्।

इतरेषां मते—अनेकार्थस्य शब्दस्य प्रकरणज्ञानाधीन-तात्पर्य-ज्ञानेन-प्राकरणिकेऽर्थेऽभिधाया नियन्त्रणादप्राकरणिकार्थस्य बोधे तात्पर्यज्ञानं प्रतिबन्धकमस्ति, तस्य प्रतिबन्धकस्य द्वितीयव्याख्यानोक्तार्थसामर्थ्येन निवृत्तिः क्रियतेऽतोऽप्रस्तुतार्थबोधनेऽप्यभिधा क्षमा भवति। अभिधया बोधनाच्च द्वितीयोऽप्यर्थो वाच्य एव। जाते द्वितीयार्थे शब्दस्यासम्बद्धार्था-भिधायित्ववारणाय यो द्वयोरर्थयोः सादृश्याख्यः सम्बन्धोऽभेदारोपो वा प्रतीयते स शब्दादेव। वाचकशब्दाभावेऽपि ध्वननव्यापारादेवातोऽ-लङ्कारध्वनिरेव शब्दशक्तिमूलो न वस्तुध्वनिरिति।

ध्वन्यालोके द्वितीयोद्योतस्य ३१-तम-कारिका-व्याख्यानाऽवसरे लोचने ध्वनिप्रभेदः पञ्चत्रिंशद्विधो गणितस्तत्र शब्दशक्त्युद्भव एकविध एव गणितोऽतस्तन्मतेऽलङ्कारध्वनिरेव।

महिमभट्टश्च व्यक्तिविवेकस्य द्वितीये विमर्शे 'अत्रान्तरे फुल्ले'-त्या-दिगद्यांशं धर्म्यर्थस्य श्लेषादभिन्नत्वमुदाजहार। आह चात्र समान-विशेषबलेन जगत्संहर्तृदेवताविशेषप्रतीतेः समासोक्तिरलङ्कारस्त-न्मूलकमहाकालशब्दस्यावृत्तिरिति। परं चैतत्तस्य प्रौढिवादितामात्रम्। यतो हि प्रस्तुतार्थवाक्येन विशेषणसाम्यादप्रस्तुतार्थकथनं समासोक्ति-

भंवति। समासोक्तौ विशेषणस्यैव साम्यं, शब्दशक्तिमूलकोपमाध्वनौ श्लेषमूलकविशेष्यसाम्यमपि। अपरं च समासोक्तौ व्यङ्ग्येनाप्रस्तुतार्थेनोपस्कृतस्य प्रस्तुतार्थस्यैव प्राधान्यमिति व्यङ्ग्यस्य गुणीभूतत्वम्। शब्दशक्तिमूलध्वनौ व्यङ्ग्यस्याप्रस्तुतार्थस्यैव चमत्कारितया प्राधान्यम्। अत्र ग्रीष्मस्य महाकालसादृश्यकल्पनमेव चमत्कारीति व्यङ्ग्यस्य प्राधान्यान्न समासोक्तेरवसर इति।

वाग्देवतावतारो मम्मटश्च काव्यप्रकाशे चतुर्थोल्लासे संलक्ष्यक्रमध्वनिस्त्रिविधः, शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च (सू. ५२)। तत्रशब्दशक्तिमूलो द्विविधः[1] अलङ्कारध्वनिवस्तुध्वनिभेदादित्याह।

तत्र शब्दशक्तिमूलाऽलङ्कारध्वनेरुदाहरणम्—

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जठरोर्जितगर्जितेन।
निर्वापितः सकल एव रणे रिपूणां,
धाराजलैस्त्रिजगति ज्वलितः प्रतापः॥ इति। (५४)

पद्यमिदं कस्यचिद्राज्ञो वर्णन उपात्तमतोऽत्र प्रस्तुते राजवर्णनरूपेऽर्थे प्रकरणेनाभिधायां नियन्त्रितायां प्रकृतार्थबोधानन्तरं महेन्द्रविषयकार्थप्रतीतिर्व्यञ्जनयैव। स चार्थो वस्तुरूपः। परञ्च वाक्यस्यासम्बद्धार्थाभिधायकत्वादपुष्टार्थताऽर्थयोरसम्बन्धे वाक्यभेदापत्तिश्च, तत्परिहाराय राजेन्द्रयोः सादृश्यप्रतिपादने कवेस्तात्पर्यं ज्ञेयमतोऽत्रोपमालङ्कारध्वनिः प्राधान्येन व्यवहर्तव्यः। इत्थं श्रीमम्मटमते यत्रैकस्यार्थस्य प्राकरणिकत्वमन्यस्याप्राकरणिकत्वं तत्र शब्दशक्तिमूलध्वनिः। यत्रोभयोः प्राकरणिकत्वमनियमो वा तत्र श्लेष इति व्यवस्थितम्।

शब्दशक्तिमूलवस्तुध्वनेरुदाहरणम्—

पन्थिअ ण एत्थ सत्थरमत्थि, मणं पत्थरत्थले गामे।
उण्णअ पओहरं पेक्खिउण जइ वससि ता वससु। (उ. सं. ५८)

---

1. अलङ्कारोऽथ वस्त्वेव, शब्दाद् यत्राऽवभासते।
प्रधानत्वेन स ज्ञेयः, शब्द शक्त्युद्भवो द्विधा। सू० ५३।

अस्य—"पथिक नात्र स्रस्तरमस्ति, मनाक्प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य, यदि वससि तदा वस ॥"

इतिच्छाया ।

अत्र "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रानुसारेण स्वयं कामुकी पथिकं प्रति रहस्यमाच्छाद्य कथयति—

पथिक ? पाषाणमयेऽस्मिन् ग्रामे ईषदपि कटाद्यास्तरणं नास्ति, तच्छयनसामग्र्यभावेऽपि वार्षुकं मेघं दृष्ट्वा तत्प्रतिबन्धाद् वससि तदा वसेत्यापाततो वक्त्रभिप्रायः । पाषाणत्वेनाध्यवसितानां मूर्खाणां ग्रामे कामशास्त्रमीषदपि नास्ति, तथाचाकारेङ्गिताद्यभिज्ञाभावति ग्रामे सति चैवंविधोद्दीपनविभावे मेघेऽनुपभुक्तोन्नतस्तनदर्शने च को नामोपभोग-क्षमोऽन्यत्र गन्तुं वाञ्छतीति यद्युपभोगक्षमोऽसि तदा वसेति वस्तु व्यज्यते ।

अत्र कश्चनाह—वक्तृबोद्धव्यादिवैशिष्ट्यज्ञानमन्तराऽत्र व्यङ्ग्यार्थस्य प्रतीतिरेव नास्ति, कुलजाया उक्तावुक्तार्थाप्रतीतेरतो वक्त्रादिवैशि-ष्ट्यापेक्षणाद् व्यङ्ग्यार्थस्यार्थशक्तिमूलत्वमिति । तन्न युक्तम्, पओहर-सत्थर शब्दयोर्व्यङ्ग्यार्थप्रतीतावन्वयव्यतिरेकसत्त्वात्, पर्यायपरिवृत्त्य-सहत्वादत्र वस्तुध्वनेः शब्दशक्तिमूलत्वम् । वक्त्रादिवैशिष्ट्यानामार्थीव्य-ञ्जनायामावश्यकत्वमात्रं, न तु शाब्द्यां सर्वथानुपयोगो, मानाभावात् । अतएवाभियुक्तप्रयुक्तात् सुरभिमांसं भक्षयतीति वाक्यान्न द्वितीयार्थ-प्रतीतिः । शाब्दी व्यञ्जना नियमेन वक्त्रादिवैशिष्ट्यं नापेक्षत इत्यन्य-देतत् ।

न चात्र पओहरादिशब्दबोध्ययोर्द्वयोरर्थयोर्मिथः सम्बन्धाभावाद् वाक्यभेदापत्तिः, वाच्यव्यङ्ग्ययोरसम्बन्धे वाक्यस्यासम्बद्धार्थाभिधाय-कत्वापत्तिश्चेति वाच्यम्, व्यङ्ग्यार्थस्य ग्राम्यतापरिहाराय गोपनाय च वाच्यार्थेनाच्छादितस्यैव प्रतिपाद्यतया विवक्षितस्याच्छाद्याच्छादकभाव-सम्बन्धस्य सत्त्वेनादोषात् । अत्र वाच्यव्यङ्ग्ययोर्नोपमानोपमेयभावः, व्यङ्ग्येन तिरस्कृतस्यैव वाच्यस्य प्रतीतेः द्वयोः समप्राधान्य एवोपमानो-पमेयभाव इति नात्रालङ्कारो व्यङ्ग्यः, किन्तु वस्त्वेव ।

अत्र केचन—पन्थिअणएत्थेत्यादौ सत्थरपओहरादयः शब्दाः परिवृत्तिमसहिष्णवः, "मणं पत्थरत्थले गामे" इत्यादि शब्दाः परिवृत्तिं सहिष्णवः। एवञ्चात्र शब्दार्थोभयशक्तिमूलध्वनि र्न केवलं शब्दशक्त्युद्भववस्तुध्वनिरिति वदन्ति। तन्न मनोरमम्, यतो हि मुख्यतयाऽत्र पओहर-सत्थरशद्वयोरेव व्यञ्जकत्वं तौ च परिवृत्तिमसहिष्णू स्त इति शद्वशक्तिमूल एव ध्वनिः। भवतु वाऽत्रोभयशक्तिमूलध्वनिः, शब्दशक्तिमूलध्वनेस्तर्हीद-मुदाहरणम्—

"शनिरशनिश्च तमुच्चैर्निहन्ति, यस्मै नरेन्द्र कुप्यसि त्वम्" (५६) इतिश्लोकार्धेऽशनि पदे विरोधार्थकनञा शनिविरोधिरूपार्थस्यावगतौ विरुद्धावपि द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते।

न त्वत्र विरोधालङ्कारः, शनित्वाशनित्वयोः सामानाधिकरण्या-भावात्। विरोधस्य तत्रैव विश्रान्तेः।

साहित्यदर्पणे श्रीविश्वनाथोऽपि शब्दशक्त्युद्भवध्वनिं वस्त्वलङ्कार-भेदेन द्विधा[1]स्वीकुरुते, वस्तुध्वनेरुदाहरणमपि श्री मम्मटवत् पन्थिअण एत्थेत्यादिरेव दत्तवान्।

राजानको रुय्यकश्चलङ्कारसर्वस्वे-संलक्ष्यक्रमव्यङ्ग्यः शब्दर्थोभय-शक्तिमूलो वस्तुध्वनिरलङ्कारध्वनिश्चेत्याह।

तत्रैव सञ्जीविन्यां श्रीविद्याधरचक्रवर्ती च शब्दशक्त्युद्भवावलङ्कारवस्तु-ध्वनी स्वीकरोति। तत्र वस्तुध्वनेरुदाहरणम्—

दृष्टिः कातरतामुपैति सहसा तस्मिन् पुरोऽवस्थिते,
नर्मोलापिनि तत्र न प्रतिवचो जिह्वाग्रमारोहति।
संस्पर्शं च न तस्य वेत्त्युपचितस्तम्भं ममैतद्वपुः,
संवृत्तः सखि सङ्गमोऽपि विरहप्रायो विधाताऽस्मि किम्॥

अत्र वस्तुन्यवस्तुभ्रमान् मौग्ध्यलक्षणं वस्तु प्रत्याय्यत इति

जयदेवोऽपि शब्दशक्तिजस्य वस्त्वलङ्कारभेदेन भेदद्वयं[2] स्वीकरोति।

---

१. वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा॥ इति सा० द०।

२. वस्त्वलङ्कार भेदेन, भेदौ द्वौ शब्दशक्तिजौ॥ चन्द्रालोके ७ मयूखे।

अप्पयदीक्षितश्च कुवलयानन्दे श्लेषाऽलङ्कारे प्रकृताप्रकृतश्लेषोदाहरणे—

असावुदयमारूढः, कान्तिमान् रक्तमण्डलः।
राजा हरति लोकस्य, हृदयं मृदुलैः करैः॥ पद्येऽस्मिन्

प्राकरणिके चन्द्रवर्णने प्रस्तुतस्य तत्कालोदितचन्द्रस्याप्रस्तुतस्याभिनवाभिषिक्तस्य राज्ञः श्लेष इत्यभिधायाह—यदत्र प्रस्तुताप्रस्तुतश्लेषोदाहरणे प्राचीनाः शब्दशक्तिमूलध्वनिमिच्छन्ति, तदुपमादेरलङ्कारस्य व्यङ्ग्यत्वात्, न त्वप्रस्तुतार्थस्य व्यङ्ग्यत्वाभिप्रायेण।

न च प्रकरणेनाभिधाया नियमनादप्रस्तुतार्थस्य व्यङ्ग्यत्वमेवेति वाच्यम्, अप्रस्तुतार्थस्यापि शब्दशक्त्यैव प्रतिपादनादभिधेयत्वात्, व्यक्तेरनपेक्षणात्। न च प्रकृतार्थो प्रकरणबलात् झटिति बुद्धौ भासतेऽप्रकृतार्थस्तु परस्परसन्निधिबलात् तत्तद्विषयशक्त्यन्तरोन्मेषपूर्वकं पश्चात् स्फुरत्येतावता तस्य व्यङ्ग्यत्वमिति वाच्यम्, सर्वथा शक्त्याप्रतिपाद्यमानेऽर्थे व्यक्तेरपेक्षाऽभावात्। इत्यादि प्रतिपादयन् शब्दशक्त्युद्भवाऽलङ्कारध्वनिमेवेच्छति न तु वस्तुध्वनिमिति।

रसगङ्गाधरकारः पण्डितराजजगन्नाथोऽत्रप्रथमं प्राचीन-( मम्मट ) सिद्धान्तं द्विधोपपादयन्नाह ( रसगङ्गाधरस्य द्वितीयानने )

अनेकार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वाच्छब्दश्रवणानन्तरं प्रथमं सर्वेषामर्थानामुपस्थितिर्भवति, ततः शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्दिहानः श्रोता तात्पर्यनिर्णायकं प्रकरणादिकं पर्यालोच्य वक्तृतात्पर्यं निर्णयति। ततः पुनस्तात्पर्यविषयीभूतैकार्थमात्रविषयकोपस्थितिस्ततोऽन्वयबोधः। न च पदार्थोपस्थितिहेतुभूतपदज्ञानस्य त्रिक्षणावस्थायित्वेन प्राथमिकोपस्थित्यनन्तरं तात्पर्यसन्देहकाल एव नष्टत्वात् कथं पुनरेकार्थमात्रविषयकोपस्थितिरिति वाच्यम्, तात्पर्यज्ञानात्मकपदज्ञानस्य सत्वात्। ( तथाहि सैन्धवमानयेतिशब्दश्रवणानन्तरं प्रथममश्वलवणोभयार्थोपस्थितौ कस्मिन्नर्थे तात्पर्यमितिसन्देहे सति भोजनरूपप्रकरणेना"अत्र सैन्धवपदस्य लवणरूपेऽर्थेतात्पर्यमिति निर्णयति" इति तात्पर्यनिर्णये विशेषणीभूतस्य पदस्य ज्ञानात् ) तत्र यथा प्राथमिक्यामुपस्थितौ सकलार्थानामुपस्थितिस्तथा

द्वितीयार्थोपस्थितौ कथन्नेति न शङ्क्यम्, प्रकरणादिज्ञानस्य प्रतिबन्धकत्वात्। न च त्रिक्षणावस्थायिनः प्रकरणज्ञानस्य (प्रथमक्षणे प्रकरणज्ञानं द्वितीयक्षणे तात्पर्यनिर्णस्तृतीयक्षणेऽर्थोपस्थितिः) नष्टत्वाद् द्वितीयार्थोपस्थितौ कथं प्रतिबन्धकत्वमिति वाच्यम्, प्रकरणज्ञानाधीनतात्पर्यनिर्णयस्य प्रतिबन्धकत्वस्वीकारात्। अन्यथा। नानार्थविषयक-शब्दबोधोऽपि स्यात्।

मतेऽत्र "अनवच्छेदे विशेषस्मृतिहेतवः" इति हरिकारिकांशस्य तात्पर्यसन्देहे सति संयोगादय एकार्थमात्रविषयकोपस्थितिकारणानि-भवन्तीत्यर्थः।

इत्थञ्च सुगन्धिमांसभोजनकाले शालकप्रयुक्तात् "सुरभिमांसं-भक्षयतीति" वाक्याद् विदग्धजनमनोमुकुरे यो गोमांसभक्षणरूपो द्वितीयोऽर्थः प्रतिबिम्बते स तस्मादेव शब्दान्नान्यतः, शब्दस्य चाभिधा प्रकरणादिज्ञानजन्यतात्पर्यज्ञानेन प्रतिबद्धा सती सुगन्धिरूपार्थबोधनादुपक्षीणा द्वितीयार्थं बोधयितुमक्षमाऽतस्तदुपस्थित्यर्थं व्यञ्जनाव्यापारोऽभ्युपेयोऽतो द्वितीयार्थो वस्तुरूपो व्यङ्ग्य इति शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो वस्तुरूपोऽपि सम्भवति इति प्राचीनसिद्धान्तः, लोचनोक्तप्रथममतस्वारस्यमप्यत्रैव।

ननु शक्यभेदाच्छक्तिभेदः, शक्यताऽवच्छेदकभेदाच्च शक्तिभेद इति सिद्धान्तादत्रशक्यशक्यतावच्छेदकयोरुभयोर्भेदाच्छब्दे नानार्थनिरूपिता नाना शक्तिः। इत्थमेकया शक्त्या प्राकरणिकार्थोपस्थितिरनन्तरं द्वितीयया शक्त्या द्वितीयार्थोपस्थितिरभिधयैव स्यादिति न शङ्क्यम्, प्रकरणादिज्ञानजन्यतात्पर्यज्ञानस्य प्रतिबन्धकस्य जागरूकत्वात्। अन्यथा प्रस्तुतार्थप्रतीतिकाल एवाप्रस्तुतार्थप्रतीतिरपि स्यात्।

न च प्रकरणादिज्ञानजन्यतात्पर्यज्ञानस्य प्रतिबन्धकस्य सत्वाद् व्यञ्जनयाऽपि कथं द्वितीयार्थोपस्थितिरिति वाच्यम्, सहृदयहृदयप्रमाणेनाप्रस्तुतार्थबोधनायैव व्यञ्जनावृत्तेरुल्लासाद् व्यञ्जनाजन्यार्थातिरिक्तार्थोपस्थितिं प्रत्येव तात्पर्यज्ञानस्य प्रतिबन्धकत्वकल्पनाद्, व्यञ्जनाज्ञानस्योत्तेजकत्वकल्पनाद्वाऽदोषात्।

इति सर्वं निश्चित्यैव मम्मटभट्टा आहुर्यत्—
अनेकार्थस्य शब्दस्य, वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थ-धीकृत्‌व्यापृतिरञ्जनम् ॥ इति ( का. प्र. द्वि. उ. )

अपरे तु—नानार्थकशब्दजन्यशाब्दबोधं प्रति तात्पर्यनिर्णयस्य कारणत्वमवश्यं कल्पनीयमन्यथा नानार्थकशब्दश्रवणानन्तरं सकलानामर्थानामुपस्थितत्वाच्छाब्दबुद्धेरपि नानार्थविषयत्वापत्तिः । न चेष्टापत्तिः, अनुभवविरोधात् । एवं सिद्धे तात्पर्यनिर्णयस्य हेतुत्वे नानार्थकशब्दादनेकार्थोपस्थानेऽपि प्रकरणादिभिस्तात्पर्यनिर्णये कृते तात्पर्यविषयस्यैवार्थस्यान्वयबुद्धिर्जायते नान्यस्येत्याहुः ।

अत्र मते पुनरेकार्थमात्रविषयस्मृतेः, द्वितीयायां पदार्थोपस्थितावपरार्थोपस्थितिप्रतिबन्धकल्पनायाश्चापेक्षा नास्तीति लाघवम् ।

इत्थं च भोजनप्रकरणे श्यालकाद्युच्चरितस्य" सुरभिमांसंभक्षयतीति" वाक्यस्य आवृत्ताभिन्नैककर्तृको वर्तमानकालिकः सौरभमयमांसकर्मकोगलबिलाधःसंयोगानुकूलो व्यापार" इत्यभिधयाऽन्वयबोधः । पुनः सहृदयानुभवसिद्धगोमांसरूपस्यार्थस्य कर्मतया भक्षणेऽन्वयबोधसिद्धये व्यञ्जनादृते कोन्यो व्यापारः ?

मतेऽस्मिन् "विशेषस्मृतिहेतवः" इति हरिकारिकांशघटकविशेषस्मृतिशब्देन विशेषविषयकस्तात्पर्यनिर्णयो गृह्यते ।

संयोगाद्यैर्वाचकताया नियन्त्रणं चैकार्थमात्रविषयकतात्पर्यनिर्णयजननद्वारा शाब्दबुद्धावनुकूलत्वम् । अवाच्यार्थश्च तात्पर्याविषयभूतोऽर्थ इति रीत्या अनेकार्थेत्यादिकारिकायाः सङ्गतिमपि कुर्वन्ति ।

न च वैयञ्जनिकबोधेऽपि पदज्ञानस्य कारणत्वेनाभिधया प्राकरणिकार्थबोधानन्तरं तात्पर्यज्ञानात्मकपदज्ञानस्य नष्टत्वाद् व्यञ्जनयाऽपि कथमतात्पर्यार्थबोध इति वाच्यम्, शङ्कायामस्यां त्रिविधं समाधानं, तत्रैकेषां मते—कार्योत्पत्त्यव्यवहितपूर्वक्षणे कारणं कारणव्यापारो वा भवेच्चेत् कार्यं जायते इति नियमः । अत्र वैयञ्जनिकार्थबोधेऽपेक्षितं पदज्ञानं यद्यपि नष्टं तथापि पदज्ञानस्य प्राथमिकार्थप्रतीतिरूपव्यापारस्य सत्वे नादोषात् ।

अपरेषां मते—न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ।।

इति हरिकारिकानुसारेण शक्यताऽवच्छेदकमिव पदमपि विशेषणतया शाब्दबोधे भासते, इति रीत्या व्यङ्ग्यार्थबोधात् प्रागुपस्थिताऽभिधेयार्थज्ञाने विशेषणतया भासितस्य पदस्यापि भानात् ।

कस्यचिन्मते—पदस्यावृत्त्या ज्ञानात् इति ।

इत्थं शब्दस्य परिवृत्त्यसहत्वाच्छब्दशक्तिमूलध्वनिं नानार्थस्थले प्राचीनाभिमतमुपपाद्य पण्डितराजो रसगङ्गाधरस्य द्वितीयानने स्वमतमुपन्यस्यन्नाह—

नानार्थकशब्दादनेकार्थोपस्थितावपि शाब्दबोधकारणीभूतेन प्रकरणज्ञानाधीनतात्पर्यमहिम्नैव प्राकरणिकार्थमात्रविषयकशाब्दबोधोपपत्तावेकार्थमात्रविषयकद्वितीयोपस्थित्यपेक्षायां मानाभावात् । सकलार्थोपस्थापकसामग्रीभूतस्य पदज्ञानस्य सत्वाद् द्वितीयोपस्थितिरपि सकलार्थविषयिकैव स्यात् ।

न च प्रकरणज्ञानाधीनतात्पर्यज्ञानमप्राकरणिकोपस्थाने प्रतिबन्धकमिति वाच्यम् , अनुभवजन्यसंस्कारतदुद्बोधकयोः सत्वे स्मृतेः प्रतिबन्धस्य सकलतन्त्रविरुद्धत्वात् ।

न च नानार्थशब्दजन्यार्थस्मृतावेवाऽयं प्रतिबध्यप्रतिबन्धकभावः कल्प्यते नान्यत्रेतिवाच्यम् , प्रतिबध्यप्रतिबन्धकभावकल्पनामन्तराऽपि नानार्थशब्दजशाब्दबुद्धाववश्यस्वीकरणीयेन तात्पर्यनिर्णयस्यकारणत्वेनैव प्राकरणिकार्थमात्रविषयकशाब्दबोधस्य सिद्धत्वात् । नूतनकल्पनाया निष्फलत्वात् ।

न चोपायस्योपायान्तरादूषकत्वान्नवीना कल्पनाऽपि सफलेति वाच्यम्, अनुभवविरुद्धत्वात् । तथा हि—पयोरमणीयमित्यादिवाक्यघटकपयआदिशब्दस्य दुग्धजलोभयत्रशक्तिरिति दृढसंस्कारवतां प्रथममर्थद्वयोपस्थितिरनुभवसिद्धा । अतएव प्रकरणादिना पयःशब्दस्य दुग्धे तात्पर्यं निर्णीतवताऽकस्मादुपस्थिता अप्रकरणज्ञा बोध्यन्ते यदस्य शब्दस्य दुग्धे तात्पर्यं नतु जले । यदि प्रकरणज्ञानमप्राकरणिकमर्थं प्रति-

बन्धीयात्तदा जलार्थस्यानुपस्थितत्वान्निषेधः कथं सङ्गच्छत इति न हृदयपथमधिरोहत्ययं प्रतिबध्यप्रतिबन्धकभावः।

'यदप्युक्तम्—प्रकरणज्ञानाधीनतात्पर्यनिर्णयेन प्राकरणिकस्यार्थस्य शाब्दबुद्धौ जातायां पुनरप्राकरणिकस्यार्थस्य जायमानो बोधो व्यञ्जनासाध्य इति, तत्र पृच्छ्यते, यन्नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लास उत कचिदेव। तत्र नाद्यः, सर्वत्र व्यञ्जनोल्लासस्वीकारे प्राकरणिकाप्राकरणिकार्थयोःसर्वत्रबोधे प्रसक्ते तात्पर्यनिर्णयस्य हेतुताकल्पनं व्यर्थमेव स्यात्। न चाभिधयैव बोधे तात्पर्यज्ञानस्य कारणत्वं, व्यञ्जनया बोधस्तु तात्पर्यज्ञानं विनाऽपि सम्भवतीत्यभिधाजन्यबोधवारणाय तात्पर्यकल्पनं युक्तमेवेति वाच्यम्, सर्वत्राप्राकरणिकार्थबोधस्वीकारे तस्याभिधाजन्यत्वेऽपि दोषाभावात्।

अथोच्यते नानार्थशब्दात् सकलानामर्थानामुपस्थितावपि प्रकरणादिना यत्र तात्पर्यनिर्णयस्तस्यैवार्थस्यान्वयबोधः प्रथमं जायते, नान्यस्येति नियमरक्षणाय "अभिधाजन्यनानार्थकपदार्थविषयकशाब्दबोधे तदर्थतात्पर्यज्ञानं कारणमिष्यते"ऽन्यथा तात्पर्यविषयीभूतस्यार्थस्येवातात्पर्यविषयीभूतस्याप्यर्थस्य प्रथमं भानं स्यात्। पश्चाद् भाव्यप्राकरणिकार्थबोधोप्यनुभवसिद्धः। अतस्तात्पर्यनिर्णयकार्यताऽवच्छेदककुक्षौ शक्तिजन्यत्वं निवेशनीयम्, एवं व्यञ्जनाजन्याप्राकरणिकार्थबोधे बाधानास्तीति चेन्न, "सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदो माधवः" इत्यादि श्लेषकाव्य इव नानार्थस्थलेऽपि प्राकरणिकाप्राकरणिकयोरर्थयोर्बोधे बाधकाभावात्।

न च सोऽव्यादित्यादावर्थद्वयेऽपि प्रकरणसाम्यात्तात्पर्यज्ञानमस्तीति युगपद् द्वयोरर्थयोर्बोधो जायते। सुरभिमांसमित्यादौ सुरभिशब्दस्य भोजनरूपप्रकरणेन सुगन्धिरूपार्थ एव तात्पर्यमतोऽत्र न युगपदर्थद्वयबोधोपपत्तिरिति वाच्यम्, नानार्थस्थले सर्वत्र व्यञ्जनोल्लासस्वीकारे तात्पर्यनिर्णयस्य शाब्दबोधहेतुतैवासिद्धाऽतो युगपदर्थद्वयबोधोऽनुपपन्न इति कथनमसारम्।

न चैवं तात्पर्यज्ञानस्य निरुपयोगित्वमिति वाच्यम्, नानार्थकस्य शब्दस्यार्थविशेषे प्रमाणत्वनिर्णयाय तात्पर्यज्ञानस्योपयोगात्।

इत्थं नानार्थशब्दजशाब्दबुद्धौ तात्पर्यज्ञानस्य कारणतैव शिथिलीभूताऽतोऽप्रस्तुतार्थबोधोऽपि शक्त्यैवेति तत्सम्पादनाय व्यञ्जनास्वीकारोऽनुचित एव ।

न च नानार्थस्थले क्वचिदेव व्यञ्जनोल्लास इति वाच्यम्, तत्काचित्कत्वनियामकहेतोरभावात् । न च व्यङ्ग्यार्थविषयककवितात्पर्यस्य (इदं पदं व्यङ्ग्यार्थबोधेच्छया कविना प्रयुक्तमित्याकारकस्य वक्तृतात्पर्यस्य) ज्ञानमेव हेतुरिति वाच्यम्, व्यञ्जनाजन्यबोधे तात्पर्यज्ञानकारणतायास्त्वयाऽनङ्गीकारात् । एवमपि फलबलाद् व्यञ्जनाजन्यबोधे तात्पर्यज्ञानं स्वीक्रियत इति चेन्न, व्यतिरेकव्यभिचारात् । तथाहि—"प्रससार शनैर्वायुर्विनाशे तन्वि ते तदा" इत्यादौ कवितात्पर्याभावेऽपि अपानवायुनिःसरण-नायिकामरण-रूपार्थप्रतीतिर्व्यञ्जनया सर्वानुभवसिद्धाऽत एवात्राश्लीलत्वदोषः ।

ननु फलबलाच्छ्रोतुः शक्तिविशेषश्चमत्कारिण्येवार्थे व्यञ्जनामुल्लासयति नाचमत्कारिणीति सिद्धं काचित्कत्वं व्यञ्जनोल्लासस्येति चेत्, एवं तर्हि श्रोतुः शक्तिविशेषः (प्रतिभा) नियन्त्रितां शक्तिमेवोल्लासयतु नानार्थस्थले व्यक्तिकल्पनानौचित्यात् ।

स्वीकृतेऽपि व्यञ्जनोल्लासस्य काचित्कत्वे नानार्थस्थलेऽप्राकरणिकार्थबोधस्य व्यञ्जनया प्रतिपादनमयुक्तं, यतोहि—उल्लास्य कालकरवालमहाम्बुवाहमित्यादि नानार्थव्यञ्जकस्थले येन प्रतिपत्रा द्वितीयेऽर्थे शक्तिर्न ज्ञाता, पूर्वं ज्ञाता पश्चाद् विस्मृता वा तस्य प्रतिपत्तुः सर्वथैव व्यञ्जनया द्वितीयार्थबोधो न जायते, परं तव मते तस्य द्वितीयार्थबोधापत्तिर्व्यञ्जनया दुर्वारा । न च नानार्थशब्दस्य व्यञ्जनयाऽप्राकरणिकार्थबोधं प्रति तच्छब्दस्य तदर्थगतशक्तिज्ञानं कारणमिति वाच्यम्, निश्शेषच्युतेत्यादौ रमणरूपेऽर्थेऽधमपदस्य शक्तिग्रहाभावाद् रमणरूपार्थाऽभिव्यक्तेरभावात् । सति वा अधमपदस्य रमणे शक्तिग्रहे शक्त्यैव रमणप्रतीतौ तत्र सर्वाभिमतस्य व्यञ्जनावृत्तिकल्पनस्य वैयर्थ्यापत्तेश्च । (खण्डनमिदं प्रौढिवादितामात्रम्—नानार्थस्थले येन पुंसाऽप्रस्तुतेऽर्थेऽप्यभिधा ज्ञाता, तस्यैव प्रस्तुतेऽर्थेऽभिधाया नियन्त्रणादप्रस्तुतार्थस्य व्यञ्जनयाबोधात् । लोचनस्वारस्यमप्यत्रैव । अत एव शाब्दव्यञ्जनाया

अभिधामूलकत्वं मम्मटेनोक्तं "अभिधामूलन्त्वाहे"त्यादिना । निःशेषेत्यादि त्वर्थव्यञ्जकताया उदाहरणमतस्तत्र व्यङ्ग्यार्थेऽभिधाज्ञानं नापेक्षितम् इति विचारयन्तु सुधियः ।)

न च नानार्थव्यञ्जनस्थले" सुरभिमांसमित्यादावेवंधिकार्यकारणभावो न तु निःशेषेत्यादावेकार्थव्यञ्जकस्थले, तेन तत्र तत्कारणाभावेऽपि व्यञ्जनोल्लासे क्षत्यभावः । न च नानार्थस्थले व्यक्त्युल्लासहेतुभूतशक्तिग्रहस्य स्वीकारे तेनैव द्वितीयार्थबोधोऽपि स्यादिति वाच्यम्, संयोगादिभिः शक्तेर्नियन्त्रितत्वेन शक्तिग्रहस्योपयोगाभावात्, व्यक्तिकल्पनौचित्यादिति वाच्यम्, नूतनकार्यकारणभावकल्पने गौरवात्, नियन्त्रणस्य पूर्वमेव दूषितत्वात्, तद्धेतोरेव तद्भवतु किं तत्कल्पनयेति न्यायेन द्वितीयार्थहेतुभूतव्यञ्जनोल्लासकारणेन शक्तिग्रहेणैव द्वितीयार्थबोधो भवतु व्यक्त्युल्लासकल्पनाया व्यर्थत्वाच्च ।

ननु तद्वत्ताज्ञानं प्रति तद्भाववत्तानिश्चयः प्रतिबन्धक इति सर्वसम्मतः सिद्धान्तोऽतएव "वह्निना सिञ्चती" तिवाक्यात् (सेको वह्निकरणकत्वाभाववान् इति निश्चयेन बाधितत्वात्) सेको वह्निकरणकत्ववानिति बोधो न भवति । एवञ्च यत्राप्राकरणिकोऽर्थो न बाधितस्तत्राभिधाबोध्य एव स्याद् यत्र तु बाधितो यथा "जैमिनीयमलं धत्ते रसनायामयं द्विज" इत्यादौ तु कथं शक्त्या बोध्यः स्याद्, बाधनिश्चयेन प्रतिबद्धत्वात् । व्यञ्जनया तु बाधितस्याप्यर्थस्य बोधोभवत्यतस्तदर्थं व्यञ्जनाऽभ्युपेयैवेति चेन्मैवम्—

"गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजादि" त्यस्य पद्यांशस्य वाच्यार्थ एव बाधित इति तदन्वयबोधोपपादनाय बाधनिश्चयप्रतिबध्यताऽवच्छेदककोटावनाहार्यत्वस्येव शाब्दान्यत्वस्यापि निवेशाद् यथा बाधितस्यैकार्थस्थलीयान्वयबोध उपपाद्यते, तथा बाधितस्य नानार्थस्थलीयाप्रस्तुतार्थस्य वाच्यत्वस्वीकारेऽप्यन्वयबोधः समुपपादयितुं शक्यः ।

अन्यथा गामित्यत्र कैतवापह्नुताविव सौधानामित्यत्र सम्बन्धा-

१. (का० प्र० द्वि० उ०)

तिशयोक्ताविव सर्वेष्वलङ्कारेषु वाच्यार्थानां प्रायशो बाधितत्वात् तदन्वय-बोधायापि व्यञ्जना समाश्रयणीया स्यात्, न च केनाऽप्याश्रीयतेऽतो नानार्थस्याप्रस्तुतेऽर्थेव्यञ्जनेति प्राचां सिद्धान्तः शिथिल एव।

"प्राकरणिकाप्राकरणिकयोरर्थयोरुपमायां व्यञ्जना कदाचित् स्यादपीति" पण्डितराजोक्त्येदं ज्ञायते यत्तन्मतेऽप्रस्तुतोऽप्यर्थो वाच्य एव न व्यङ्ग्योऽतोऽत्र श्लेष एव न शब्दशक्त्युद्भवबोध्वनिः। उपमा व्यङ्ग्याऽस्तीत्यत्राऽपि न सर्वथा तदभिप्रायो यतो हि "कदाचिदि" त्युक्तम्। तस्याभिप्रायो यदत्राप्राकरणिकार्थमादाय शब्दस्यासम्बद्धार्थाभिधायकत्ववारणाय स्वीकृतोपमाऽर्थापत्तिवेद्याऽपिभवितुमर्हति। (इदं सर्वं खण्डनं लोचनोक्ततुरीयमतानुसारि)

इत्थं पण्डितराजः प्राचीनाभिमतं शब्दशक्तिमूलव्यञ्जनोदाहरणं निरस्यापि योगरूढियौगिकरूढिस्थले शब्दशक्त्युभववस्तुध्वनिं स्वीकरोति। तद्यथा—"रूढिर्योगापहारिणी"ति सकलतन्त्रसिद्धः सिद्धान्तोऽतो योगरूढिस्थले रूढ्यर्थस्यैव वाच्यवृत्त्या बोधो भवति न योगार्थस्य, तथापि क्वचिद् रूढ्यर्थबोधानन्तरं योगार्थस्यापि या प्रतीतिर्जायते तत्राभिधाया विरामाद् व्यञ्जनैव व्यापारो यथा—

अबलानां श्रियं हृत्वा, वारिवाहैः सहानिशम्।
तिष्ठन्ति चपला यत्र स कालः समुपागतः॥

पद्यस्यास्य योगरूढशक्त्या (अभिधया)ऽयमर्थः—यत्र काले रमणीनां सौन्दर्यमपहृत्य विद्युतो मेघैः सहानिशं तिष्ठन्ति स वर्षाकालः समुपागत इति। अत्रान्योऽप्यर्थः सहृदयहृदये भासते स च" यस्मिन् काले दुर्बलानां (रतौ तृप्तिकरणेऽक्षमाणां) धनमपहृत्य पुंश्चल्यो जलवाहकैः पुरुषैः सह रमन्ते स प्रावृट्काल उपस्थित इति। अत्र द्वितीयोऽर्थोऽबला-वारिवाह-चपलाशब्दैरभिधया बोधयितुं न शक्यते रूढिर्योगापहारिणीति नियमाद् रूढ्यर्थस्यैवप्रतीतेः। द्वितीयार्थप्रतीत्यस्वीकारे चमत्काराभावात् पद्यस्यास्य काव्यत्वमेव न स्यात्। न च केवल योगशक्त्या द्वितीयोऽर्थो बोध्यत इति वाच्यम्, योगरूढिस्थले रूढ्यर्थस्यैवप्रतीतेः।

चपलाशब्दस्य योगशक्त्या पुंश्चलीरूपार्थस्यानुपलम्भाच्च। अतोऽत्र शब्दशक्तिमूलव्यञ्जनास्वीकार आवश्यकः। एवम्—

चाञ्चल्ययोगि नयनं, तव जलजानां श्रियं हरतु।
विपिनेऽतिचञ्चलाना, मपि मृगाणां च कथं हरति॥

अत्र कश्चन चाटुकारः कामुको नायिकानयनं प्रशंसन् कथयति यत्—तव नयनं चाञ्चल्ययोगि वर्तते, पद्मेषु च चञ्चलता नास्ति, अतोऽधिकगुणेन तव नेत्रेणाल्पगुणानां कमलानां शोभायास्तिरस्कार उचित एवेति नाश्चर्यकारी। परञ्च चाञ्चल्यातिशययुक्तानां वनवासिनां मृगाणां शोभायास्तिरस्कारं यत् करोति, तदाश्चर्यकारीति वाच्यार्थे जाते पुनः केवलयोगशक्त्या (डलयोरभेदात्) जडजानां मूर्खपुत्राणामतएव प्रमादकारिणां नेतृभिश्चौराद्यैर्धनापहरणं सुशकं, न तु गवेषकाणामतएवावहितानां तदिति या प्रतीतिः सा व्यञ्जनादृते भवितुं नार्हति। तस्माद्द्वितीयोऽर्थोऽत्र नाभिधाबोध्योऽपि तु व्यञ्जनागम्य एव। योगरूढपदाद् योगार्थमात्राप्रतीतेरेव पङ्कजादिपदात् पङ्कजनिकर्तृत्वेन कुमुदाद्युपस्थितिर्लक्षणया मन्यन्ते नैयायिकाः।

अत्र मुख्यार्थस्य बाधाऽभावेन लक्षणाऽप्यर्थान्तरबोधने न क्षमा। न चान्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्त्याऽत्र लक्षणेति वाच्यम्, अपहर्तृव्यवहारोऽत्रविवक्षित इति श्रोतुर्बोधे उपायान्तराभावाद् वक्तृतात्पर्यज्ञानार्थमपि व्यञ्जनैवाभ्युपेयेति सिद्धाऽपरार्थे व्यञ्जना। द्वितीयार्थप्रतीतिरेव नास्तीति सहृदयैर्वक्तुं न शक्यते। तथा चेत्थं सङ्ग्रहः—

योगरूढस्य शब्दस्य, योगे रूढ्या नियन्त्रिते।
धियं योगस्पृशोऽर्थस्य, या सूते व्यञ्जनैव सा॥ इति।

एवं नानार्थस्थलेऽपि क्लिष्टकल्पनाऽपेक्षया प्रस्तुतार्थयोरुपमायाः प्रतिपत्तयेऽवश्यं स्वीकर्तव्यया व्यञ्जनयैवाप्रस्तुतार्थस्यापि प्रतिपत्तिरिति प्राचीनोक्तिरपि युक्तैव।

शब्दशक्तिमूलाऽलङ्कारध्वनेरुदाहरणम्—करतलनिर्गलदविरलेत्यादि। वस्तुध्वनेरुदाहरणम्—

राज्ञो मत्प्रतिकूलान्मे, महद्भयमुपस्थितम् ।
बाले वारय पान्थस्य, वासदानविधानतः ।। इति ।

कश्चन् पथिकः काञ्चनाभिनवयौवनां प्रार्थयति—हे बाले ? पथिकोऽहं राजा च सर्वथा मत्प्रतिकूलः ।

तस्मान्मम प्राणोपघातकं भयमुपस्थितं, त्वं निवासप्रदानेन मद्भयं वारयेति वाच्योऽर्थोऽस्य पद्यस्य । व्यङ्ग्यश्चार्थः—पान्थस्यातएव वियोगिनो मे ( त्वां विलोक्यात्युत्कण्ठितस्य ) अत्युद्वेजकाच्चन्द्रमसः कामार्तिरूपं महद्भयमुपस्थितं, तत्सम्भोगं प्रदाय वारयेति । अत्र राजपदनिष्ठाभिधामूलव्यञ्जनयैवोपभोगं देहीति वस्तु ध्वन्यते ।

अत्र राजपदं चन्द्ररूपार्थगोपनायैवोपामतः समकालप्रतीत्यभावान्न नृपचन्द्रयोरुपमानोपमेयभावो न वा रूपकं वक्तृतात्पर्यविषयभूतम् । गोपनहेतुभूतस्य राजरूपार्थस्याभिधया पूर्वं बोधः पश्चाद्व्यञ्जनया गोप्यस्य चन्द्ररूपार्थस्य प्रत्यय इति द्वयोरर्थयोः युगपत्प्रतीत्यभावान्न वाक्यभेदाऽवसरोऽपि इति ।

यद्यप्यत्र नागेशो "बाले" इति सम्बोधनेनोपभोगं देहीति व्यङ्ग्यार्थस्य वाच्यायमानताकरणाद् वस्तुध्वनिं न स्वीकरोति तथापि शनिरशनिश्चेत्यादौ काव्यप्रकाशपद्ये स्वीकरोत्येव ।

अत्र कश्चन—व्यञ्जना तु अर्थवृत्तिर्न शब्दवृत्तिः । यतोहि—शाब्दी व्यञ्जना नानार्थस्थल एव निरूपिता, नानार्थे च शब्दे नानार्थनिरूपिता नानाशक्तिरेकाशक्तिर्वेत्यभिधयैव सकलार्थबोधे वस्तुतः श्लेषः । यश्च प्रस्तुताप्रस्तुतयोरर्थयोरभेद उपमानोपमेयभावो वा व्यङ्ग्यः, स तु श्लेषाऽलङ्कारादलङ्कारान्तरस्य व्यङ्ग्यत्वादर्थशक्त्युद्भव एव । अपि च प्राचीनैः स्वीकृते नानार्थस्थले शब्दशक्तिमूलध्वनेः खण्डनं पण्डितराजेनैवाऽकारि, तत्कृतसङ्ग्रहश्लोकार्थः ( योगरूढस्य शब्दस्येत्यादेरर्थः ) ध्वन्यालोकोदाहरणे "अत्रान्तरे·········महाकालः" इत्यादौ न घटते । यतो हि महाकालशब्दो योगरूढस्तत्र योगार्थ एव प्राकरणिको न रूढ्यर्थः अतो रूढ्या योगार्थनियन्त्रणोक्तिर्न सङ्गच्छते । किंच योगाऽर्थोप्यभिधेय एव, व्याकरणादिभिः शक्तिग्राहकैस्तत्राऽपि शक्तिग्रहात् । अतः शाब्दी व्यञ्जना नास्तीति वदति ।

तत्रैवमुच्यते—यद्दोपगुणाऽलङ्कारध्वनीनां शब्दार्थमूलकत्वनिर्णायकावन्वयव्यतिरेकावेव। नानार्थस्थले व्यञ्जना शब्दस्य पर्यायपरिवृत्त्यसहत्वान्नार्थनिष्ठा। यदुक्तं श्लेषस्तदपि न, द्वयोरर्थयोः प्राकरणिकत्वेऽप्राकरणिकत्वे वा श्लेषो न तु प्राकरणिकाप्राकरणिकयोः, प्रकरणेनाभिधाया नियन्त्रणात्। न च नियन्त्रणोक्तिर्न युक्तेतिवाच्यम्, अनुभवविरोधात्। "सर्व वाक्यं कार्यपरमि"तिरीत्या पय आनयेति वाक्यघटकपयःशब्दस्य द्वयोरर्थयोर्बोधे सत्येकतरानयने प्रवृत्तिर्न स्यादतोऽप्राकरणिकस्य बोधवारणाय प्रकरणादिभिर्नियन्त्रणोक्तिर्युक्तैव।

यच्च पण्डितराजेनोक्तं प्रकरणज्ञैरप्रकरणज्ञा बोध्यन्ते नूनमत्रत्य पयःशब्दस्य दुग्धे तात्पर्यं न तु जल इत्यादि (र. गं. द्वि. आ.) तदपि युक्तमेव। यतोहि अप्रकरणज्ञस्योभयोरर्थयोर्ज्ञानं भवति, जाते च सन्देहे तन्निराकरणाय प्रकरणज्ञैस्तात्पर्योद्बोधः क्रियते, जाते तात्पर्यज्ञाने तात्पर्यार्थमेव गृह्णाति श्रोता नत्वन्यार्थम्। न च प्रकरणादिना प्राकरणिकेऽर्थे प्रामाण्यनिर्णयः क्रियते, येन प्राकरणिके प्रवृत्तिर्भवति नाप्रामाणिकेऽप्रस्तुत इति वाच्यम्, शब्दः प्रमाणमतस्तेनाप्रामाणिकस्य बोधानुदयादप्रस्तुतस्य प्रतिबन्धौचित्यात्।

अत एव पण्डितराजः प्राचीनाऽभिमतां नानार्थस्थलेऽप्रस्तुतेऽर्थे व्यञ्जनां खण्डयित्वाऽपि तत्खण्डने क्लिष्टकल्पनामेव स्वीचक्रे "एवं स्थितेऽपी"—(र. ग. द्वि. आ.) त्यादिना। उपपादितवाँश्च तत्रैव प्रस्तुताप्रस्तुतयोरर्थयोरुपमायां व्यञ्जकत्वस्यावश्यकत्वम्।

यच्चोक्तं योगरूढस्य शब्दस्येत्यादिपद्यार्थः "अत्रान्तरे···महाकालः" इत्यत्र न सङ्घटते, तत्तुच्छम्, सङ्ग्रहस्यास्य "रूढिर्योगापहारिणीति" न्यायमूलकत्वात्, न्यायस्यास्य प्रकरणाद्यभाव[1] एव प्रवृत्तिस्वीकारात्। शनिरशनिश्चेत्यादौ शब्दशक्त्युद्भववस्तुव्यङ्ग्यस्य सर्वसम्मतत्वाच्चेति।

एवं प्रामाणिकानां ग्रन्थपरिशीलनेन ज्ञायते यदानन्दवर्धनाभिनवगुप्ताप्पयदीक्षिताः शब्दशक्त्युद्भवध्वनिमेकविधमेवालङ्काररूपं स्वीकुर्वन्ति[2]· अन्ये च मम्मट-रुय्यक-जयरथ-विद्याधर-जयदेव-विश्वनाथ-जगन्नाथ-

---

१. लघुमञ्जूषा।

२. 'आनन्दवर्धन'नाम्नि ग्रन्थे डॉ० रेवाप्रसादद्विवेदिनोऽप्येवमेव प्रतिपद्यते।

वैद्यनाथ-गोविन्दठक्कुर-नागेश प्रभृतयः शब्दशक्त्युद्भवध्वनिं वस्त्वलङ्कार-भेदेन द्विधा स्वीकुर्वन्ति इति।

समीक्षा—वस्तुतस्तु चमत्कारानुसारिव्यवस्था वर्तते, चमत्कारे सहृदयानुभव एव प्रमाणं, तत्र यदि चमत्कार उपमानोपमेयभावेऽभेदारोपे वा निर्भरस्तदाऽलङ्कारध्वनिः। यत्र द्वयोरर्थयोः प्राकरणिकत्वमप्राकरणिकत्वं वा समानश्च चमत्कारस्तत्रश्लेषः। परञ्च यत्रैकोऽर्थः प्रस्तुतोऽपरोर्थोऽप्रस्तुतश्चमत्कारश्चाप्रस्तुतेऽर्थे न प्रस्तुते, यत्र वाऽनेकार्थकशब्दप्रयोगः केवलं चमत्कारिणोऽप्रस्तुतार्थस्य गोपनायैव कृतस्तत्र प्रस्तुतेऽर्थेऽभिधाया नियमनादप्रस्तुतस्य व्यङ्ग्यत्वम्। पर्यायपरिवृत्त्यसहरूपाच्छब्दाच्च प्रतीयमानत्वाच्छब्दशक्तिमूलत्वम्। लोकेऽप्येतादृशार्थस्य व्यङ्ग्यत्वेन व्यवहारो दृश्यत इति शब्दशक्त्युद्भववस्तुध्वनिरप्यस्ति।

यद्यप्यापाततः प्रतीयते यद् ध्वनिकारलोचनकारौ शब्दशक्त्युद्भववस्तुध्वनिं न स्वीकुरुत इति। ग्रन्थपर्यालोचनेन ज्ञायते यत्तावप्यङ्गीकुरुतस्तद्यथा—"शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योर्थः कविना पुनः[1] इति कारिकायां, शब्दशक्त्या, अर्थशक्त्या, उभयशक्त्या वा आक्षिप्तो व्यङ्ग्योऽर्थो यत्र पुनः कविना स्वोक्त्या प्रकाशीक्रियते तत्र न ध्वनिरिति वृत्तौ च वस्तुध्वनेः प्रतिपादनात्, (उभयशक्तिमूलध्वनिरप्यत्र प्रतिपादितः) तथाहि "वत्से मा गा विषादम्"[2] इति पद्ये शिवादिनिषेध एव पयोधेस्तात्पर्यं परं शिवादिसन्निधौ तन्निषेधस्यानौचित्यादाच्छाद्य कथयति। विषादरूपोऽर्थ आच्छादकत्वेन विवक्षित इति समकालप्रतीत्यभावेन नात्र श्लेषः, प्रत्युत विषादशब्दस्य पर्यायपरिवृत्त्यसहत्वाच्छब्दशक्त्युद्भववस्तुध्वनिरेव। परं भयशमनच्छद्मना सुराणां प्रत्याख्यानं कारयित्वेत्युक्त्याऽऽविष्कृत इति नात्र ध्वनिः प्रत्युत श्लेषाऽलङ्कारः। अत्र शब्दशक्त्या आक्षिप्तो व्यङ्ग्योऽर्थः कविना स्वोक्त्या आविष्कृत इति प्रतिपादयन् कारिकाकार आलोककारश्च शब्दशक्तिमूलवस्तुध्वनिं स्वीकुरुत इति निश्चप्रचम्।

---

१. ध्व. द्वि. उ. २३ का०।

२. तत्रैव।

लोचनकारोऽपि तत्रैव व्याचख्यौ यत्—यत्रैकस्मिन् ( विषादरूपे ) अर्थे प्रकरणेन नियन्त्रिता सती अभिधा द्वितीयेऽ( शिवरूपे )र्थे न सङ्क्रामति तत्र द्वितीयोऽर्थो व्यङ्ग्य एव। तत्र यद्येतादृशः शब्दः स्याद् येन प्रकरणादिरपहृतशक्तिकः सम्पाद्यते, तत्राभिधा पुनः प्रतिप्रसूता भवतीति न तत्र शब्दशक्तिमूलध्वनिरिति। ज्ञायतेऽनेन यदि "दृष्ट्या-केशवगोपरागहृतयेत्यादिपद्ये[1] सलेशशब्दो न स्यात्," वत्से मा गा विषादमिति पद्ये प्रत्याख्यानमित्यादि पदं वा न स्यात्तदा गोपरागरूपे चार्थे प्रकरणेन नियन्त्रिता सती अभिधा गोपे राग इति शिव इति चार्थे न सङ्क्रामतीति द्वितीयोऽर्थो व्यङ्ग्य एव भवेत्, स च वस्तुरूपः, परिवृत्त्यसहशब्दात्प्रतीयमानत्वाच्च शब्दशक्तिमूल इति।

अन्यत्र च शब्दशक्तिमूलध्वनेः पदप्रकाशतोदाहरणे "प्रातुं धनैरर्थिज-नस्य वाञ्छा" मित्यादिपद्ये[2] उक्तं यत् जड इति पदं स्वसमानाधिकरण-तया प्रयुक्तमपि शब्दसामर्थ्यात् कूपसमानाधिकरणतां गत इति। एतस्यायमभिप्रायो यत्—जडशब्दस्यात्र त्रयोऽर्थाः, किंकर्तव्यविमूढः, शीतलो ( निर्वेदसन्तापरहितः ) ( डलयोरभेदात् ) शीतलजलयुक्तश्चेति। तत्र तृतीयार्थेनायं जडशब्दः "अहम्" इत्यनेन सम्बद्धुं नार्हः। न वा तडागार्थेन, यतो हि तडागविशेषणेन प्रसन्नाम्बुधर इत्यनेन पुनरुक्त एव भवेत्। अतः शीतलजलयोगितया कूपसमानाधिकरणतामेव प्रतिपद्यते शब्दशक्त्युद्भवध्वनिना ( कूपार्थेनैव सम्बद्धो जातः ) तत्र तृतीयार्थो वस्तुरूपो व्यङ्ग्य एवेति।

अतएवाऽलङ्कारचन्द्रिकायामपि कुवलयानन्दस्य श्लेषाऽलङ्कारटीका-यामलङ्कारस्येति प्रतीकमुपादाय शब्दशक्तिमूलवस्तुध्वनेरुच्छेदमाशङ्क्य शनिरशनिश्चेत्यादिपद्ये समर्थितम्।

अतएव पण्डितराजेन "अनेकार्थस्य शब्दस्येति" मम्मटाभिमताभिधा मूलव्यञ्जनालक्षणस्य द्विधा व्याख्यानं विधाय "ध्वनिकारानुयायिनो वर्णयन्ति"[3] इत्युक्तम्। यदि ध्वनिकारो द्वितीयेऽर्थे व्यञ्जनां न स्वी-

---

१. तत्रैव।

२. ध्वन्यालोक तृ० उ० १ कारिका।

३. र० गं० द्वि० आ० नानार्थनि०।

करोति तदा तत्स्वीकर्तॄणां मम्मटादीनां तदनुयायित्वप्रतिपादनं कथं सङ्गतं स्यात्। अत आक्षिप्त एवालङ्कार इति कारिकायामेव शब्द आक्षिप्त इत्यनेनान्वेति, अलङ्कार इति वस्तुनोऽप्युपलक्षणम्। न च सामर्थ्या-दित्यर्थाक्षिप्तोऽयं श्लेष इति तत्रैव प्रतिपादनादत्र श्लेष इति वाच्यम्, व्यञ्जनाव्यापाराक्षिप्तत्वाच्छ्लिष्टस्यार्थस्य व्यङ्ग्यत्वात्। अतएव न शब्दो-पारूढ[1] इत्युक्तम्।

परमलङ्कारो न वस्तुमात्रम्[2] इत्युक्त्यानन्दवर्धनः, शब्दशक्त्युद्भव-व्यङ्ग्यमेकविधमेव सङ्कलयन्नभिनवश्च शब्दशक्त्युद्भवाऽलङ्कारध्वनिस्थले एव (नानार्थे योगरूढस्थले चाप्रस्तुतेऽर्थे) वस्तुव्यङ्ग्यत्वं स्वीकृत्य पृथग्वस्तुध्वनिं नोदाजहतुरित्यन्यदिति।

न च लोचनोक्ताद्यमतत्रये द्वितीयार्थस्य व्यङ्ग्यत्वस्वीकारेऽपि तुरीयमते तु "द्वितीयपक्षव्याख्याने यदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते, ततश्च द्वितीयोऽर्थोऽभिधीयत एव न ध्वन्यत" इति प्रति-पादनाद् वस्तुध्वनिर्निराकृत इति वाच्यम्। द्वितीयाभिधाप्रतिप्रसवेऽर्थ-सामर्थ्यस्य कारणत्वाभावात्।

तथाहि—प्रस्तुताप्रस्तुतयोरर्थयोरसम्बद्धतानिराकरणाय कल्पितं यत् सादृश्यं तदात्मकमर्थसामर्थ्यं द्वितीयपक्ष (अन्येतु) व्याख्याने[3] गृहीतमिति, तेनाभिधायाः प्रतिप्रसवः क्रियत इत्युक्तमत्र। परं जाते सत्यप्रस्तुतार्थज्ञाने द्वयोरर्थयोरसम्बद्धतानिराकृतये कल्पितस्य सादृश्य-सम्बन्धस्य पश्चाद्भावित्वेन द्वितीयार्थबोधे कारणत्वाभावात्।

अपि च सादृश्यात्मकार्थसामर्थ्याद् द्वितीयार्थप्रतीतिः, द्वितीयार्थ-प्रतीतिसामर्थ्याच्च सादृश्यप्रतीतिरितीतरेतराश्रयदोषः च विचारपद-वीमारोहति तुरीयमतम्।

---

१. ध्व० लो० द्वि० उ० २१ का० वृत्ति।

२. तत्रैव।

३. द्वितीयपक्षव्याख्याने = अन्येत्वित्याद्युक्तव्याख्याने इत्यर्थं इति बाल-प्रियाकारः। (ध्व० लो० द्वि० उ०)।

न चात्र "अर्थसामर्थ्यमित्यस्य शब्दस्य द्वितीयार्थे शक्तिज्ञानमित्यर्थ इति तेन द्वितीयाऽभिधाप्रतिप्रसूयत इति वाच्यम्, अनुभवविरोधात्, तथाहि—"हिरण्यगर्भाङ्गभुवं मुनिं हरिरि"त्यत्र हरिशब्दस्य चतुर्दशार्थे ज्ञातशक्तिकस्यापि चित्ते वानरादिरूपार्थस्याभानादित्यलं विवादेन।

अतएव—"शब्दार्थशक्त्याक्षिप्तोऽपि" इति कारिकाघटकस्य "सान्यैवालङ्कृतिर्ध्वने"-रित्यंशस्य व्याख्यानाऽवसरे लोचने द्वितीयोऽर्थो व्यङ्ग्यत्वेनोक्तः, अथवा ध्वनिशब्देनालक्ष्यक्रमस्तस्यालङ्कार्यस्याङ्गिनः सव्यङ्ग्योऽर्थोऽन्यो वाच्यमात्रालङ्कारापेक्षया द्वितीयो लोकोत्तरश्चालङ्कार इत्यर्थः[1] इत्यादिना।

अपि च "अर्थसामर्थ्याक्षिप्तत्वमि"ति हि व्यङ्ग्यलक्षणं ध्वन्यालोके[2] प्रतिपादितम्। तत्रैव लोचनेऽपि-वाच्यसामर्थ्याक्षिप्तमिति भेदत्रयव्यापकं लक्षणमित्युक्तम्। उपपादितं च—यद्यपि हि ध्वननं शब्दस्यैव व्यापारस्तथाप्यर्थसामर्थ्यस्य सहकारिणः सर्वत्रानपायाद् वाच्यसामर्थ्याक्षिप्तत्वं, शब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽप्यर्थसामर्थ्यादेव प्रतीयमानाऽवगतिः। शब्दशक्तिः केवलमवान्तरसहकारिणीत्यादि" इत्यर्थसामर्थ्याक्षिप्तस्य द्वितीयार्थस्य व्यङ्ग्यत्वं सिद्धम्।

मतस्यैतस्य निराकरणात्तदनुयायी प्रकृताप्रकृतश्लेषवादी दीक्षितोऽपि सुतरां निराकृत इति।

प्रादीनां च द्योतकत्वं सर्वसम्मतम्, अतएवानुभूयते सुखमित्यत्र कर्मणि प्रत्ययः। अनुपसर्गकस्यैव भूधातोरनुभवरूपोऽर्थोऽनोरभावे केवलो भूधातुरकर्मकः। अतोऽनोर्द्योतिकता शब्दनिष्ठा। द्योतन—ध्वननव्यञ्जन-प्रत्यायनेत्यादयः शब्दा पर्यायवाचिन इति।

एवं शब्दशक्त्युद्भवानुरणनरूपध्वनिर्वस्त्वलङ्कारभेदेन द्विविध एवेति शिवम्॥



---

१. ध्व. द्वि. उ. २३ कारिका लोचने।

२. ध्व. लो. प्र. उ. ४ कारिकावृत्तिलोचनयोः।

# मनोदर्शनम्

*डॉ० गजाननशास्त्रिमुसलगाँवकरः*

सर्वैरपितत्त्वविश्लेषणचतुरैस्तान्त्रिकैरभ्युपेतमन्तःकरणतत्त्वम् । तेन च प्रतिक्षणमाकुलीकृता न परीक्षका एव; अपितु लौकिका अपि, यद्यपि विदन्ति तद्वृत्तम् । तथापि पुनः प्रणिधानमापादयितुमनूद्यत एवाऽयं विषयः । तस्य च करणस्यापि निगडितकरचरणस्य समीहा । चैतन्याऽनिकेतनस्यापि अधिकृतचेतनस्य, अनुल्लङ्घितकायसीमाबन्धनस्यापि बाह्यविषयप्रत्ययनिबन्धनस्य, अणोरपि भगवदक्षपादकणादनये सर्वतो विसारिणः, परिणामिनोऽपि कापिलानामनपायिनः, तत्त्वस्यापि अधिगताऽतत्त्वस्य, परिकल्पितावरणस्यापि अद्वैतिनाम्परमार्थचैतन्यमूर्धविहरणस्य, सर्वथाऽवस्तु तन्त्रस्यापि योगाचाराणां[1], क्षणविनाशिचैतन्यवस्तु मोहनमन्त्रस्य[2], शून्याकारस्यापि माध्यमिकानां[3] सर्वप्रत्ययाधारस्य, अस्तिनास्तीतिव्याहतप्रत्ययसिद्धस्यापि अनैकान्तिनां स्वरूपाऽविरुद्धस्य[4], निरुद्धस्यापि पातञ्जलानामनिरुद्धस्वभावस्य पाषण्डमण्डनमण्डनस्य[5], धूर्तगणकुलनन्दस्य, सत्यतरून्मूलनविभञ्जनस्य, दोषविभावसुप्रज्वलने सामिन्धनस्य, सर्वथापि चित्रचरित्रस्य चित्तस्य वृत्तं वक्तुं सयत्नं प्रवृत्ता अपि यद्यपि बिभीमस्तथापि प्रफुल्लवदनमिदं स्वयमेवाञ्जसाऽऽत्मवृत्तमभिदध्यादिति अपगतसाध्वसा वयम् ।

क्षित्यादिभूतपञ्चकजन्म[6] वपुरेतद् घटादिवद् वा निश्चलं, वारि वा यथा निम्नपथानुयायि तथा, वीतिहोत्र इवाहोस्विदुत्पथपरिपन्थि, मातरिश्वानमनुकुर्वदाहोस्विन्निश्चिन्तमितस्ततो भ्रमणतया भवेत् ।

---

१. बाह्यार्थशून्यत्ववादी योगाचारः ।

२. बाह्यार्थानुमेयत्ववादी सौत्रान्तिको ज्ञानस्य क्षणिकत्वात् ।

३. सर्वशून्यत्ववादी माध्यमिकः ।

४. आर्हतसिद्धान्तानुसारेण ।

५. चार्वाकसिद्धान्तानुसारेण ।

६. अक्षपादीयसिद्धान्तानुसारेण ।

परमिदमनुभवदभिलषद्यतमानं सतर्कमारभत्कर्माणि, आपरिणामं तद्विरोधिनि विप्रतिपद्यमानं, समाददानश्चानुकूलानि न सच्छीलमेवानुशीलयतीति भवेदस्य अवश्यं कर्णधारः कश्चित्तरणेरिव जलधिवारिपतितायाः ।

स चायं विभुर्वा[1] अणुर्वा[2] शरीरपरिमाणाश्रयो[3] वा, तत्रापि चैतन्यवान् चैतन्यमेव वा; चैतन्याकारोऽपि क्षणिको वा नित्यो वेति सत्यामपि दृष्टिविप्रतिपत्तौ नात्राऽनवसरे विविच्यते । सर्वथापि तु प्रत्यात्मविदितया ज्ञातृतया न विहीयते । एवं च जानन्नपि अयम् 'इदं मया पार्य्यतेऽनुष्ठातुं, नेदमिति', कदाचित् ऐकान्त्यमासेवमानो गर्तनदकण्टकव्याघ्रकरालव्यालमृगपालसमाकुलाध्वव्यतिकरपरिक्रान्ते कथमिति काननान्ते सध्वान्तेऽशान्ते च प्रविश्य अखिलमगण्यमुद्धृत्यारिकुलमित्युद्दिश्य अधिकरिष्यामीति विमृश्य, हन्त भो ! वीरजनिरहं विवदन्तं कालमपि उच्छेद्यमपौरुषञ्च मन्यमानः, प्रक्षिपन्नितस्ततो विद्युज्जालकमिव तडित्वान् प्रज्वलनास्त्रसन्ततिम् , प्रतिभटभयङ्करञ्च विमुञ्चन् केशरिकिशोरक इवाशावधूविकम्पनचणं सिंहनादं, गर्तनदादीनि च पवनकुमार इव वारिपूरमतिचङ्क्रम्यमाणः, केशरिव्यालव्याघ्रादीन मान्त्रिक इव रुद्धवीर्यान् कुर्वाणः, योगीन्द्र इवेन्द्रियाणि दाम्यन् ,—जगदिदमकालेऽपि गिलता विशालेन भल्लजालेन भाले प्रहृत्य, विजित्य समूलमुद्धृत्य चारिकुलं, तुमुलं विनद्याऽनवद्यमधिकरिष्यामि तद् दुर्गमित्यलमत्र विचारणयेतिसतर्कोत्तरप्रतिवचनैरभियुञ्जानः केनचिदपरेण सह विनिश्चित्य कदाचित् , कदाचिच्च अनिर्धारितमपि अस्तु नाम, इदमित्थमिति अध्यवस्यन् विनियुनक्ति कार्यानुष्ठाने करणसन्ततिम् । सोऽयं सतः अस्यैकस्य केनापरेण विप्रतिपद्यमानेन साभिमानेन समानेन संवादः ?

अत्र च परिकरस्य प्रतिद्वन्द्विसमानस्य चेतनस्य च एकत्र सन्निवेशः । अचेतनस्य प्रज्ञानुगो यत्नः कथमिति व्याघातावतारस्तेन

---

१. वेदान्तसिद्धान्तानुसारेण ।

२. वल्लभसम्प्रदायानुसारेण ।

३. जैनदर्शनानुसारेण ।

भवेदत्र आत्मातिरिक्तः अन्योऽपि कश्चिदिति मुखरमपि जडयति प्राज्ञमप्यर्थम् ।

सन्तु चात्र विचारपदमवतीर्णा मनीषिणां दृष्टिविप्रतिपत्तयः, भवतु वा किंकर्तव्यताप्रतिपत्त्युन्मुखोविरोधावभासप्रत्ययः । सर्वथातूपदर्शितसत्तर्कप्रसरस्य चेतनेतरस्य समवस्थानमवर्जनीयम् । इदमेवान्तःकरणं मन इत्यभिधीयते । तच्चेदं प्रमथ्यमानवारिप्रत्यासन्नशीतांशुप्रतिबिम्बमिव चञ्चलम्, पशूनिव गोपालइन्द्रियाणि, ग्रन्थिहर इव प्रवासिनम्, आत्मानमस्थिरं विमूढं च कुर्वन्, कुतर्कसंवेदीव, सुराप इव, प्रमत्त इव च प्रतिपदं स्खलद्, अवस्थितमप्यनवस्थितमात्मानं करोति । युक्तं चैतत्, कथं नु विकम्पसञ्चारिणिकुण्डवारिणि निश्चलम्भवेद् रविबिम्बम् ।

परावरानुध्यानसम्प्रणोदितं प्राकृताण्डानि, तत्र च विनियुक्तं गृहभाण्डानि, इहापिचाभ्यनुज्ञायां तरुकाण्डानि ध्यायं ध्यायं त्याजं त्याजं च आत्मावमानेन विचरते स्वच्छन्दचारिणे विषयविहारिणेऽकारि किमस्मै सर्वतन्त्रसिद्धान्तेन मनीषिभिरचैतन्यपदकप्रदानम् ? कथं च आहत्य प्रधानतरस्य प्रवृत्तिकरस्य पिशाचसमस्य चास्य पुरुषमपेक्ष्य अप्राधान्यप्रतिपत्तिः ?

सत्यमेतत्, परं वस्तुगत्या नैतत्प्रधानम्, प्रतीतिरेवात्र विश्रान्ता मुख्यतायाः । कथमितिचेदभिधीयते—वैश्वानर-मातरिश्वनोर्घनिष्टसंसर्गेण निष्पन्नः अन्नपाचनाखिलधातुसंचारणादिकायिकसर्वकार्यसम्पादनाय अलं शारीरः प्राणसमाख्योवायुः, एतस्य च निरोधेन निरुद्धम्, प्रकम्पनेन चञ्चलम्, बाह्यपवनस्येव पानीयं, प्रकृतेः सत्त्वप्रधानांशपरिणामसम्पन्नं सर्वविज्ञानकरणमन्तःकरणम् । तस्य च आत्मना अनादिरेव संसर्ग इव संसर्गः प्रायेण सम्मिश्रणमिवैव प्रतीयते,[1] येन एकस्य धर्मा अन्यस्मिन् इतरस्य चापरस्मिन् अवभासन्ते । तदिदमचेतनम्, चेतनः पुरुष एव उपजीवयन् तदुपहृतविषयजातमुपाददानः क्रियासमभिहारेण तथा कृत्याऽकृत्येषु विनियुयुजे, येनाधुना दृढदण्डनोदनपरिभ्राम्यमाणं स्वेनैव चक्रं कुलाल इव कृतप्रयत्नोऽपि सहसा न निरोद्धुम्प्रभवति स्वयमेवात्मा,

१. वेदान्तसिद्धान्तः ।

क्षणचतुष्टयं यावत् महता जवेन विघूर्णितं करमपि स्वकीयं सहसा नायं निरोद्धुं क्षमते[1]। प्रागेव अपरिमितेन कालेन संभ्रामितं सूक्ष्मतत्त्वं चित्तं, नहि कुल्यया केदारान् प्रयास्यत् कुल्याभंगेन परिस्रुतमन्यथा प्रचलत्पानीयमिव निरोधनीयम्, नापि धातुतन्तुना प्रणाडिकया ऊह्यमाना प्रयान्तीव प्रभायै भग्नायामन्तरा प्रणाडिकायां करालेन निजांशुजालेन संत्रस्यन्ती रथ्याप्राणिनः सर्वथा आक्रोशमर्हति सौदामिनी, किन्तु नेतुरयमपराधो येनावश्यं करणीयं नानुष्ठितमनेनाध्वपरिपालनम्।

इत्थमनु प्राणमाश्रित्य गमयितुमुद्दिष्टमभिकांक्षितं कामादिभीमजन्तुभिर्विभज्याधारमाकृष्यमाणं परिहृत्य च तान् आत्मना अनवरुद्धं कथमित्युपालम्भनीयमन्तःकरणम्।

एवञ्च सततं विशृङ्खलं गमनागमनं कुर्वत् अचक्ररथं को नामैतदावर्जयेदृतेऽगाधोद्योगिनं योगिनम्। कामाद्यन्तःकरणेषु चाकर्षणादि चेतनवृत्तमुपलभ्यमानं न विमोहयति लोहायस्कान्तवृत्तदर्शनं प्राज्ञजनमित्यलम्पल्लवितेनेति शम्।



---

१. अक्षपादसिद्धान्तः।

२. योगदर्शनसिद्धान्तः।

# जीवस्य क्रमिकविकासः

*श्रीकृष्णमणित्रिपाठी*

जीवस्य क्रमिकविकासे विवेचनीये तत्कारणमपि समालोचनीयता-महतीत्यभिप्रेत्य तत्सम्बन्धेऽपि किञ्चिदनुसन्धीयते। शक्तिशक्तिमतोर-भेदनियमाद् ब्रह्मणि तदीयशक्तौ चाभेदो लक्ष्यते। अतएव ब्रह्मणि तदीय-शक्तिरूपिण्यां मूलप्रकृतौ च शास्त्रेषु अभिन्नता प्रतिपादितास्ति। यथा गानपरायणस्य पुंसो गानशक्तिः गानमकुर्वति तस्मिन् अव्यक्तदशायां तिष्ठति। तदानीं न कश्चिदपि अवधारयितुमर्हति यदयं गायनोऽस्ति, किन्तु गानसमये सर्वोऽपि विजानाति यदस्मिन् गानशक्तिर्विद्यते, तथैव ब्रह्मशक्तिः प्रकृतिर्यदा ब्रह्मण्यव्यक्तावस्थायां तिष्ठति तदा जागतिक-प्रपञ्चानां विलयः, किन्तु यदा सा सृष्टिकाले व्यक्तावस्थामापद्यते, तदा सूक्ष्मस्थूलभावपरिपूर्णं सृष्टिवैचित्र्यमभिलक्ष्यते।

यद्वा यथा गानपरायणं पुमांसमदृष्ट्वापि श्रोता तद्गानेन विमुग्धो भवति तथैव ब्रह्मस्वरूपानभिज्ञोऽपि जीवो महामायायां ब्रह्मशक्तौ ग्रस्तो मोमुह्यमानो दरीदृश्यते। अत एव शक्तिमता पुरुषेण सह शक्तिस्वरू-पिण्याः प्रकृतेः नाणीयानपि अस्ति भेदः, अग्नौ दाहिकाशक्तिरिव भगवति शक्तिस्वरूपिणी प्रकृतिर्निहिता तिष्ठति। सर्गादौ समष्टिजीवप्रारब्धानु-सारेण परमेश्वरे यदा जगतः सिसृक्षा समुत्पद्यते तदा शक्तेरेतस्या विकासो जायते। तथा चोक्तम्—

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥
योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव ह।
पुंमाश्च दक्षिणार्द्धांशो वामार्द्धो प्रकृतिः स्मृताः॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी।
यथात्मा च तथा शक्तिर्यथाग्नौ दाहिका स्थिता[1]॥

---

१. कालिकापुराण ७। २. ४. ५।

देवीभागवतेषु—

स्वयं पुमांश्च प्रकृतिस्तावभिन्नौ परस्परम् ।
यथावह्नेस्तस्य शक्तिर्न भिन्नाऽस्त्येव कुत्रचित् ॥
सेयं शक्तिर्महामाया सच्चिदानन्दरूपिणी ।
रूपं बिभर्त्यरूपा च भक्तानुग्रहहेतवे[1] ॥

श्रीमद्भागवते च प्रोक्तमस्ति यत् सृष्टेः पूर्वं दृश्यमानमिदं समस्तं प्रपञ्चं यदा जले निमग्नमासीत् तदैकमात्रं श्रीमन्नारायणः शेषशय्यायां शयानो योगनिद्रामाश्रित्य निमीलितनयनः आनन्दमनुभवति स्म । यथानलः स्वां दाहिकां शक्तिं स्वस्मिन्नन्तर्भाव्य काष्ठे व्यापकरूपेणावतिष्ठते तथैव नारायणोऽपि निखिलजीवानां सूक्ष्मशरीराणि स्वस्मिन्यन्तर्भाव्य जले शयानः तिष्ठति, सृष्टिकाले च पुनः स्वां कालशक्तिं प्रेरयति—

उदाप्लुतं विश्वमिदं तदासीद्
यन्निद्रया मीलितदृङ् न्यमीलयत् ।
अहीन्द्रतल्पेऽधिशयान एकः
कृतक्षणः स्वात्मरतौ निरीहः ॥
सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः
कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे
यथाऽनलो दारुणिरुद्धवीर्यः[2] ॥

तस्या एव ईश्वरशक्तेः शास्त्रेषु विभिन्नानि नमानि श्रूयन्ते । ते ते आचार्याः स्वस्वकृतिषु तामीश्वरशक्तिं विभिन्नैर्नामभिर्व्यवहरन्ति, यया स दृश्यमानमिदं समस्तं विश्वं विरचयति । तत्र केचनाचार्यास्तां तप इति ब्रुवते, केचित्तम इति कथयन्ति, अन्ये जड इत्यभिदधति, इतरे अज्ञानमिति ज्ञापयन्ति, अपरे प्रकृतिमिति प्रख्यापयन्ति, एके प्रधानमिति निगदन्ति, भिन्ना अजामिति बोधयन्ति, शाक्ताः शक्तिमिति सम्बोधयन्ति,

१. देवी भागवत–९।३८।२८–२९
२. श्री० भा०–३।८।१०–११

अद्वैता अविद्यामिति उच्चारयन्ति, पौराणिकाश्च मायामिति व्यपदिशन्ति—

केचित्तां तप इत्याहुस्तमः केचिज्जडं परे।
ज्ञानं माया प्रधानञ्च प्रकृतिं शक्तिमप्यजाम्॥[1]

अपि च—

साविद्येत्यभिधीयते श्रुतिपथे
शक्तिः सदाद्या परा।
सर्वज्ञा भवबन्ध-छित्ति-निपुणा
सर्वाश्रये संस्थिता॥[2]

सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका।
माया नाम महाभाग ययेदं निर्ममे विभुः॥[3]

देवीभगवतेऽपि—

मूलप्रकृतिरेवैषा सदा पुरुषसङ्गता।
ब्रह्माण्डं दर्शयत्येषा कृत्वा वै परमात्मने॥[4]

यथा दृश्या अनुभवगम्याश्च सर्वे पदार्थाः त्रिप्रकारा भवन्ति तथैव विश्वसृष्टिरपीयम् आध्यात्मिकी, आधिदैविकी, आधिभौतिकी चेति भेदात् त्रिधा विभक्ता परिदृश्यते।

वस्तुमात्रं तु यद्दृश्यं संसारे त्रिगुणं हि तत्।
दृश्यं च निर्गुणं लोके न भूतं न भविष्यति॥[5]

कारणे ब्रह्मणि भावत्रयसत्वात् कार्यब्रह्मस्वरूपसर्गेऽप्यत्र सर्वत्रैव त्रयो भावा भवन्ति। अतः परम-पुरुषोऽसौ आध्यात्मिकाधिदैविकाधिभौतिक-त्रिविधरूपेण साधकानां दृष्टिगोचरतामापद्यते। तस्य ब्रह्मणः आध्यात्मिकं रूपं मायातीतं निर्गुणपरब्रह्मपदवाच्यम्, आधिदैविकं सगुण-परमेश्वरनाम्ना अभिधीयते, आधिभौतिकञ्च अनाद्यनन्तविराट-

१. देवीपुराण ५।२७
२. आ० वि० ५१
३. का० पु० ९।२१
४. दे० भा० ३।६।६९
५. श्री० भा० ६।२६।१०

पुरुषसंज्ञया स्वीकृतमास्ते । अतः त्रिगुणात्मिकां स्वां प्रकृतिं मायामधिष्ठाय स्ववीर्यं त्रिधा विभज्य त्रिविधां सृष्टिमसौ विधत्ते—

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः ।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ॥
एकमेकतराभावे यदा नोपलभामहे ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥
अधिदैवतमध्यात्ममधिभूतमिति प्रभुः ।
अथैकं पौरुषं वीर्यं त्रिधामित्यथ तच्छृणु ॥[1]

श्रीमद्भागवतेऽपि—

एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ।
आद्योऽवतारो यत्राऽसौ भूतग्रामो विभाव्यते ॥
साध्यात्मः माधिदैवश्च साधिभूत इति त्रिधा[2] ।

कूर्मपुराणस्य पूर्वार्द्धे तु—

इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ।
माया मम प्रियानन्ता ययेदं धार्यते जगत् ॥
अनयेव जगत्सर्वं सदेवासुरमानुषम् ।
मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च ॥
सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका ।
प्रागेव मत्तः सञ्जाता श्रीकल्पे पद्मवासिनी[3] ॥

प्रकृतेः त्रैविध्यात्तत् सम्बन्धेनैव भगवतः त्रिविधमिदं स्वरूपं समुपवर्ण्यते न वास्तविकम्। अन्यथा "एकमेवाद्वितीयं ब्रह्म" इति श्रुतिप्रतिज्ञा व्याहन्येत । देवीभागवते च—

एकमेवाद्वितीयं वै ब्रह्म नित्यं सनातनम् ।
द्वैतभावं पुनर्याति काले उत्पित्सुसंज्ञके[4] ॥

---

१. त० वि० ४२, ४३, ४४ ।

२. श्री० भा० ३।६।८९ ।

३. कु० पु० पू० १।३४.३५.३८

४. दे० भा० ३।६।४

सृष्टिस्तावत्त्रिविधा—आध्यात्मिकी, आधिदैविकी, आधिभौतिकी च। तत्र भगवतः स्थूलशरीरस्वरूपः विराटसृष्टिप्रवाहः आध्यात्मिकसृष्टिसंज्ञया शास्त्रेष्वभिधीयते, आधिदैविकी सृष्टिः ब्रह्माण्डसृष्टिः कथ्यते, आधिभौतिकी च पिण्डसृष्टिर्निगद्यते। तत्राद्या अनाद्यनन्ता, द्वितीया तृतीया वा सादी सान्ते च विज्ञातव्ये।

आध्यात्मिक्याः सृष्टेः अनाद्यतन्तत्वाद् ब्रह्मसत्तावत् प्रकृतिरपि अनाद्यनन्ता यतो हि सा ब्रह्मस्वरूपिणी, अतः तस्या अनाद्यनन्तता स्वतः सिद्धा। प्रकृतेरव्यक्तावस्थायां परमात्मा ब्रह्मनाम्ना अभिधीयते, व्यक्तदशायां सगुणत्वाद् ईश्वरनाम्ना व्यवह्रियते, सृष्टेरनाद्यनन्तधारासम्बन्धेन च विराट्-पुरुषसंज्ञया व्यपदिश्यते। आध्यात्मिक्याः सृष्टेः अनाद्यनन्तत्वात् यस्या महाप्रकृतेः गर्भे आध्यात्मिकी सृष्टिर्बोभवीति तस्याः किल अनाद्यनन्तत्वे का संशीतिः। तथा चोक्तम्—

"त्वं सर्वादिरनादिस्त्वं कर्त्री हन्त्री च पालिका[1]"।

वस्तुतः अनन्तानि ब्रह्माण्डानि सन्ति। तत्र प्रत्येकब्रह्माण्डे पृथक्-पृथक् ब्रह्म-विष्णु-महेश्वराः सन्ति। तदीयाः कार्यविभागा अपि स्वतन्त्रा भिन्नाभिन्ना भवन्ति, अतएव विभिन्नानां ब्रह्माण्डानां सृष्टि-स्थिति-प्रलया अपि विभिन्नतामुपयन्ति—

संख्या चेद्रजसामस्ति विश्वानां न कदाचन।
ब्रह्म-विष्णु-शिवादीनां तथा संख्या न विद्यते॥
प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः।
पातालाद्ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम्॥
प्रत्येकं लोमकूपेषु ब्रह्माण्डं परिनिश्चितम्।
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवादयः[2]॥

यथा स्थूलशरीरस्य जरारोगमृत्यवो भवन्ति तथैव प्रत्येकब्रह्माण्डे ब्रह्मणो दिवसावसाने खण्डप्रलयो रुद्रस्यायुषोऽन्ते च महाप्रलयो बोभवीति। तदा त्रिमूर्तौ ब्रह्मविलीनायां ब्रह्माण्डस्यैकस्य महाप्रलयः सम्पद्यते। अखिलब्रह्माण्डनायकस्य योगमायायाः अक्षिपक्ष्मसञ्चालन-

१. का० पु० २।११। २. देवी भागवत ९।७.८.१७

मात्रेणापि समस्तं विश्वमुत्पद्यते, अपि च तस्या एव प्रभावेण ब्रह्मविष्णु-महेश्वराणामपि सृष्टिस्थितिप्रलया बोभवन्तीति—

तथा चोक्तं देवीभागवते—

या नेत्रपद्मसञ्चलनेन सम्यग्
विश्वं सृजत्यवति हन्ति निगूढभावा ।
सैषा करोति सततं द्रुहिणाच्युतेशान्
नानावतारकलने परिभूयमानान् ॥[1]

अपिच—

जानीहि त्वं महाराज ! योगमायावशे जगत् ।
ब्रह्मादिस्तम्बपर्यन्तं देवमानुषतिर्यगम् ॥
मायातन्त्रीनिबद्धा ये ब्रह्म-विष्णु-हरादयः ।
भ्रमन्ति बन्धमायान्ति लीलया चोर्णनाभवत् ॥[2]

अनाद्यनन्तसृष्टिप्रलयप्रवाहे प्राणिनामुत्पत्तिमुक्तिविषये एवं प्रमाण-मुपलभ्यते—

निखिला एव संस्कारा साद्यन्ता सम्प्रकीर्तिताः ।
अतो जीवप्रवाहेऽस्मिन् अनाद्यन्तेऽपि जन्तवः ॥
मुक्तिशीलास्तथोत्पत्तिशालिनः सन्ति सर्वथा ।
नैवात्र विस्मयो कार्यो भवद्भिरमृतान्धसः ॥[3]

एवमेकब्रह्माण्डीयजीवानां स्थूलानि सूक्ष्माणि वा शरीराणि नूनं प्रणाशमापद्यन्ते । तस्माद् ब्रह्माण्डं पिण्डं ( जीवदेहः ) चोभे विनश्वरे भवतः । त्रिगुणात्मिकायाः प्रकृतेः वैभवस्वरूपे ब्रह्माण्डपिण्डे द्वे अपि त्रिगुणविलासपार्थक्यात् सृष्टि-स्थिति-प्रलयाधीने भवतः—

यदा सिसृक्षुः परमात्मनो परो
रजः सृजत्येष पृथक् स्वमायया ।
सत्त्वं विचित्रासु रिरंसुरीश्वरः
शयिष्यमाणस्तम ईरयत्यसौ ॥[4]

---

१. देवी भागवत ५।१।२९। २. तत्रैव ५।१।५३-५४।
४. श्री मद्भागवत ७।१।७० ३. दे० पु० ३।१७

अनन्तब्रह्माण्डमयी आध्यात्मिकी सृष्टिधारा अनाद्यनन्ता, किन्तु प्रकृतेः त्रिगुणमयत्वात् प्रत्येकं ब्रह्माण्डं नश्वरमभ्युपगन्तव्यम्। भगवतो रुद्रस्यायुषा सह ब्रह्माण्डस्यैकस्यायुः निर्णीतम्। रुद्रायुषोऽन्ते यश्च विष्णुः यो वा ब्रह्मा स्तः ताभ्यां सहैव ब्रह्माण्डं विलीयते। अतो व्यष्टिरूपेण प्रत्येकं ब्रह्माण्डस्य सृष्टि-स्थिति-विलया भवन्ति। अस्मादेव कारणात् प्रति ब्रह्माण्डं सृष्टिकर्ता ब्रह्मा स्थितिकर्ता विष्णुः संहारकर्ता च रुद्रः पृथक् पृथक् विद्यन्ते। ब्रह्माण्डवत् जीवदेहात्मकः पिण्डोपि नश्वरः।

जीवोऽत्र संसारे क्रमशः उद्भिज्जस्वेदजाण्डजजरायुजयोनिषु उत्पन्नो भूत्वा नैजं प्रारब्धं भुञ्जानोऽन्ते निधनं प्रपद्यते। एवं च सर्वेऽपि जीवा स्वस्वकर्मफलभोगानन्तरं विलयमुपगच्छन्तीति नात्र कश्चनास्ति सन्देहः।

स्मर्यते चात्र—

यदिदं दृश्यते किञ्चिज्जगत् स्थावरजङ्गमम्।
पुनः संक्षिप्यते सर्वं जगत्प्राप्ते युगक्षये[1]॥

पुराणानुसारं निर्विकारः, अजन्मा पुराणपुरुषः, पुरुषोत्तमो यदा सत्वादिगुणानां जन्मादिकर्मणाञ्च कारणभूतायां मायाशक्तिप्रकृतौ चिदाभासं रूपं वीर्यं निधत्ते तदा प्रपञ्च एष समुत्पद्यते। तथाचोक्तमिन्द्रियाधिष्ठात्रीभिः देवताभिः—

त्वं नः सुराणामसि सान्वयानां
कूटस्थ आद्यः पुरुषः पुराणः।
त्वं देवशक्त्यां गुणकर्मयोनौ
रेतस्त्वजायां कविरादधेऽजः[2]॥

अपिच—

स आदिः स मध्यः स चान्तः प्रजानां
स धाता स धेयः स कर्ता च कार्यम्।
युगान्ते प्रसुप्तः सुसंक्षिप्य लोकान्
युगादौ प्रबुद्धो जगद्व्युत्ससर्ज[3]॥

१. का० पु० ५।७ २. श्रीमद्भागवते ३।५।४९
३. म० भा० शा० प० मो० ध० ३४०।१००

ईश्वरः किल सृष्टिकर्मणि बीजदाता पितृस्थानीयः क्षेत्रस्वरूपा च प्रकृतिः जननी निर्द्धारिता। यथाऽङ्कुरोत्पत्तये क्षेत्रे बीजमुप्यते तथैव प्रकृतिक्षेत्रे परमपुरुषस्य बीजवपनेन सृष्टिविस्तारो जायते। मानवजगति यथा सृष्टिविस्तारहेतवे मातुः क्षेत्रे पितुर्वीर्याधानप्रयोजनीयता तथैव प्रकृतिमातुः क्षेत्रे परमेश्वरस्य वीर्याधानेन अनन्तकोटिब्रह्माण्डरूपिण्या विराट्सृष्टेः समुद्भवो भवति। तथाचोक्तं गीतायाम्—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत।
तेषां ब्रह्म महद् योनिरहं बीजप्रदः पिता[1]॥

मनुस्मृतावपि विज्ञानमेतद् भगवता मनुना समर्थितमास्ते

द्विधाकृत्वाऽऽत्मनो देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः[2]॥

श्रुतिश्च "ततो विराडजायत"। इयमेव मातृस्थानीया ब्रह्मशक्तिस्वरूपिणी प्रकृतिः शास्त्रेषु संस्त्यानशक्तिः सलिलस्वरूपा प्रोक्ता। इमामेव विश्वस्य संस्थानशक्तिमभिलक्ष्य भगवता पतञ्जलिना महाभाष्ये "संस्त्यानरूपा स्त्रीः प्रवृत्तिरूपः पुरुषः" इति सोपष्टम्भं प्रोक्तम्। संस्त्यान-संहनन-सम्मिलन-शक्तिसद्भावात् अप एव प्रकृतेर्नाम। यतोऽप्सु मेलनशक्तिर्वर्तते। महाप्रलयकाले समस्तब्रह्माण्डोपादानभूतं सर्वमपि प्रच्छन्नरूपेण प्रकृतेरङ्के विलीनं तिष्ठति। तदा सदसत् किमपि नासीत्, केवलमम्भ एवाभवत्। अस्यामेवानन्तजीवसंस्कारसम्बलितायामव्याकृतप्रकृतौ सर्वतः प्रथमं परमपुरुषेण वीर्यप्रदानपूर्वकं गर्भाधानं क्रियते। एवं त्रिगुणमय्या प्रकृत्या साकं लीलापूर्वकगर्भाधानद्वारा अनन्तकोटिजीवोत्पत्तिप्रकारोऽवसेयः। परमपुरुषवीर्याधानेनैव क्रमशो महत्तत्त्वादयः समुत्पन्नाः सृष्टिविकासं समेधयन्ति। एतदेव मनुसंहितायां प्रकारान्तरेण व्यक्तं समुपलभ्यते—

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत्[3]॥

---

१. गीता १४।३.४ २. म० स्मृ० १।३२

३. म० स्मृ० १।८

एवञ्च प्रलयदशायां सदसतोरभावात् कस्यापि वस्तुनः सत्ता नासीत् । केवलमव्याकृतप्रकृतिगर्भे विलीनाः संस्कारसमूहास्तदव-बोधकोऽद्वितीयचैतन्यमयः परमात्मैवाविद्यत । स एव सृष्टिप्रारम्भसमये एकत्वाद् बहुत्वकामनया प्रलयगर्भविलीनजीवसंस्कारानुसारेण कल्प-सृष्टिं प्रकाशयति । एकभावापन्नः परमात्मैव स्वं शरीरं द्विधा विभज्य प्रकृतिं विकाशयति । तस्या एव गर्भे विराड् विश्वमुत्पादयति । अतो दर्शनशास्त्रे सत्यस्वरूपस्य ब्रह्मणः शक्तिसमुत्पन्नायाः सत्यस्वरूपिण्याः प्रकृतिमातुर्लीलावैभवरूपं जगदपि सत्यमेव प्रतिभातीति सिद्धान्तितम् । अस्यां जडचेतनात्मकप्रकृतिपुरुषशृङ्गारसमुत्पन्नसृष्टिलीलायां प्रवाह-द्वयमभ्युपगम्यते । एक ऊर्ध्वगामी चेतनप्रवाहः, द्वितीयाश्चाधो-गामी जडप्रवाहः । तत्र जीवो नानायोनिषु परिभ्राम्यन् ऊर्ध्वगामिनीं चेतनधारामवलम्बमानः क्रमशः समुन्नमन् अन्ते तदुन्नतिपराकाष्ठां मुक्तिं लभते । ततस्तदन्तर्गतो जडांशः प्रकृतिधारायां निलीयते । चेतन-धारायाः पराकाष्ठा ब्रह्मसद्भावो यत्र प्रकृतेः पृथक् सत्ता विलीयते । एवं च चेतनप्रवाहः प्राकृतिकं रजस्तमोमयं राज्यमतिक्रम्य सत्त्वे समुपस्थितः समुन्नतेः परायां काष्ठायां व्यापिकायां चेतनधारायां विलीयते । तदीयो देहः मृत्योरनन्तरं चैतन्याभावात् प्रणाशमुपगच्छति । यया प्राणशक्त्या देहान्तर्गताः परमाणवः परस्परं विच्छिन्नाः सन्तः जडायाः प्रकृतेरधोगतिरूपं तमोऽभिमुखं प्रयान्ति ।

प्रकृतिः परिणामिनी चञ्चला चेति हेतोः चेतनप्रवाहः क्रमशः समुन्नतो भवन् सत्त्वराज्यमतिक्रामन् त्रिगुणमय्याः प्रकृतेः स्वभाविकीं धारां निस्तीर्य परिणामरहितः सन् स्थिरो जायते । किन्तु जडप्रवाहः नियतपरिणामशीलायाः प्रकृतेः नित्यमन्तर्गतत्वात् परिणामशून्यः स्थिरो भवितुं नार्हति । जडायाः प्रकृतेः अन्तिमा सीमा प्रस्तरादयः स्थावर-पदार्थाः सन्ति । इयमेव तमोगुणस्य परा काष्ठा ।

यथा किल सामुद्रिकास्तरङ्गा घातप्रतिघाताभ्यां तीरमायाताः अग्रे गतिनिरोधसत्त्वात् पुनः समुद्राभिमुखं प्रयान्ति तथैव प्राकृतिको निम्नगामी प्रवाहः क्रमशो निम्नत्वमुपढौकमानः तमोगुणस्य परां काष्ठां प्राप्तोऽग्रे स्थानमनवाप्य पुनरपि तमोगुणाद् रजोगुणाभिमुखं ( जडत-

श्चैतन्याभिमुखम् ) स्वभावत एवाग्रे सरति। तदानीं तमोगुणतो रजोगुणाभिमुखं प्रतिष्ठमानस्य प्रकृतिप्रवाहस्य किञ्चित् समुन्नत्या तमोगुणमालिन्यापसृत्या तत्र ईषत् स्वच्छताया आविर्भावो जायते। यथा भगवतो सूर्यस्य किरणाच्छायायाः सर्वत्र विद्यमानत्वेऽपि मलिनो दर्पणः प्रतिबिम्बग्रहणासमर्थः, किन्तु स एव यदि निर्मलीकृतो भवेत्तदा तत्र व्यापकस्य सूर्यस्य प्रतिबिम्बं प्रतिफलत्येव तथैव सर्वं व्यापकस्यात्मनः चित्सत्तायाः सर्वत्र सत्त्वेऽपि सा तामसिकप्रवाहमालिन्यात् तत्र नैव विकासमापद्यते; किन्तु प्रकृतिकः प्रवाहः तमोगुणस्यान्तिमकाष्ठातः किञ्चित् समुन्नततां प्रपद्यते। तदा तत्र स्वच्छीभूते सूक्ष्मप्रकृतिकेन्द्रे व्यापकस्य परमात्मनो यः प्रतिबिम्बो निपतति स एव ब्रह्मणः प्रतिबिम्बो जीवसंज्ञां धत्ते। तथाहि—

अविद्यायां च यत् किञ्चित् प्रतिबिम्बं नगाधिपः।
तदेव जीवसंज्ञं स्यात् सर्वं दुःखाश्रयं पुनः॥[1]

श्रीमद्भगवद्गीतायामपि भगवान् श्रीकृष्णः प्रोवाच—

ममैवांशो जीवलोके जीवभूतः सनातनः[2]।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
अपिच— जीवभूतां महाबाहो! ययेदं धार्यते जगत्[3]॥

महाभारतस्य शान्तिपर्वणि मोक्षधर्मेऽपि जीवात्मा परमात्मनोंऽशः स्वीकृतोऽस्ति—

जीवमात्मगुणं विद्यादात्मानं परमात्मनः[4]।

एवं हि अंशशब्देन कल्पितस्य जीवात्मनः प्रथमविकाससमये अविद्यायाः प्रबलेनान्धकारेण समाच्छन्ने तमोमयान्तःकरणो एतावत्तारल्यभावमापन्नमात्मज्योतिः प्रतिफलति यत् तत् चिदाभासतः चित्प्रतिबिम्बाद् वा अन्यत् किमपि अभिधातुं न शक्यते। तदेव ज्योतिः प्रकृतिराज्ये समुन्नमन् यथा-यथा अविद्यान्धकारतो विमुच्यते तथा-तथा तत् स्वीयां तां ज्ञानमयीं प्रभां प्रदर्शयति यया व्यापकेन चिन्मयस्वरूपेण

---

१. दे० भा० २।७।४५ २. ३. श्रीमद्भगवतगीता १५।७,७,५

४. म० भा० शा० प० १४१।१९

सह तस्य अंशांशिभावसम्बन्धो ज्ञानराज्यविचरणशीलैः साधकैः सदैवानुभूयते। विषयमिमं स्पष्टयितुं भगवान् महर्षिवेदव्यासः स्वकीये वेदान्तदर्शने सूत्रयाञ्चकार—

"अंशो नाना व्यपदेशात्"[1] ॥ इति

यथा एक एव आकाशो घटाकाश मठाकाशादिना भिद्यते तथैव अन्तःकारणोपाधिभेदेन एकमेव ब्रह्म संख्यातीतरूपेण परिव्याप्तं विलोक्यते। तस्मादेक एव विभुः परमात्मा उपाधियुक्तः सन् अंशस्वरूपतो नानात्वं भजते। अत एवोक्तम्—

वालाग्रशतभागस्य शतधा कल्पितस्य च।
जीवो भागः स विज्ञेयः स चानन्त्याय कल्पते[2] ॥

यथा वा एक एव निराकारोऽग्निः साकाररूपेण प्रज्वलितः सन् आधारभेदाद्भिन्नः प्रतीयते तथैव जीवमात्रेऽन्तर्यामितया सर्वत्र स्थित एक एव परमात्मा विभिन्नप्राणिषु तदनुरूपतया विभिन्नरूपोऽनुभूयते। वस्तुत एक एवेश्वर आधारभूतस्य वस्तुनः शरीरादेरनुरूपतया विश्वस्मिन् जीवरूपेण अनेकः प्रतीयते। तथाहि—

अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बभूव[3] ॥

प्रकृतेः अतिसूक्ष्मोंऽशो यत्र चैतन्यं प्रतिबिम्बितं भवति स एव कारणशरीरनाम्ना निगद्यते। ततः प्रकृत्या सम्बन्धनिबन्धनस्य जीवस्य इच्छया सूक्ष्मशरीरमुत्पद्यते। तद्गतसंस्कारसमूहतीव्रवेगानुसारेण च दृश्यमानं स्थूलं शरीरमुद्भवति। एवं शरीरत्रयेण भोगादिना बद्धो जीवः उद्भिज्ज-स्वेदज-अण्डज-जरायुजानां योनीरतिक्रमन् मानवयोनिमुपढौकते।

मनुष्ययोनौ असंख्याकविभिन्नगतिलाभान् मानवयोनिसंख्या निर्द्धारयितुमशक्या, केवलमुद्भिजादिचतुर्विधभूतसंघस्य संख्या शम्भु-

१. ब्रह्मसूत्र २।३।४३ २. कौ० उ० ५।३ ३. कठो० २।२९

गीतायां निर्धारिता विलोक्यते। तदनुसारं विंशतिलक्षसंख्याकाः स्थावरयोनयः सन्ति, कृमियोनय एकादशलक्षसंख्याकाः, जलचरयोनयो नवलक्षसंख्याकाः, पक्षियोनयो दशलक्षसंख्याकाः, पशुयोनयः त्रिंशल्लक्षप्रकाराः, वानरयोनयश्च चतुर्लक्षविधा भवन्ति। तथाचोक्तम्—

स्थावरे लक्षविंशत्यो कृमिजं रुद्रलक्षकम्।
जलजं नवलक्षं च पक्षिजं दशलक्षकम्॥
पश्वादीनां लक्षत्रिंशच्चतुर्लक्षं च वानरे।
ततो हि मानवा जाताः कुत्सितादे विलक्षकम्॥[1]

तथा च संकलनया चतुर्विधभूत संघस्य—

( २० + ११ + ९ + १० + ३० + ४ = ८४ ) चतुरशीति-लक्ष-प्रकारा योनयो भवन्ति।" चतुरशीतिलक्षान्तेमानवः इति वचनानुसारं जीवः पूर्वं प्रोक्तचतुरशीतिलक्षसंख्याकासु विविधासु योनिषु जन्म गृहीत्वा मनुष्ययौनौ जन्म गृह्णाति। तत्र सत्कर्मणा समुन्नतिम् असत्कर्मणा चावनतिं लभमानः तत्फले सुखदुःखे अनुभवति।

तत्त्वनिरूपणप्रसङ्गे देवर्षिनारदमुपदिशता ब्रह्मणा देवीभागवतेऽपि चतुरशीतिलक्षसंख्याका जीवयोनयः प्रोक्ता।

तथाहि—सर्वे जीवा मिलित्वैव ब्रह्माण्डांशसमुद्भवाः।
चतुरशीतिलक्षाश्च प्रोक्ता वै जीवजातयः[2]॥

मानवेतरचतुर्विधभूतसंघस्य योनिषु स्वाभाविकसंस्काराश्रयेण तद्गता जीवा क्रमोर्ध्वगामिनो भवन्ति, किन्तु मानवयोनौ जीवः स्वतन्त्रः सन् संस्काराधीनो जायते। अतोऽसौ क्रमोन्नतिमप्राप्तौ निजकर्मानुसारेण कदाचिदुन्नतः कदापि चावनतो भिन्नां भिन्नां गतिमासादयति।

उद्भिज्जयोनिमारभ्य जरायुजयोनिपर्यन्तं जीवो निर्बाधं क्रमोन्नतिमासादयति, यतो हि तासु योनिषु बुद्धेर्मालिन्येन जीवः स्वकर्मणः स्वतन्त्रसंस्कारार्जनं न कर्तुं पारयति, केवलं प्रकृतिरेव माता शिशुमिव स्वाभाविकसंस्कारानुसृत्य क्रमशो जीवान् सम्वर्द्धयति। यथा नद्या

---

१. शंभुगीता १७, १८। २. शं. गी. २५

प्रवहमाणः काष्ठखण्डोऽपवेगेनैव समुद्राभिमुखमानीयते तथैव मानवभिन्ना जीवाः, प्रकृतेरूर्ध्वगामिना प्रवाहेण उद्भिज्ज-स्वेदज-अण्डज-जरायुजान्तं क्रमशः समुन्नतां योनिं नीयन्ते। तदानीं प्रकृतिमातुरधीनत्वात् जीवानां क्रमोन्नतिर्निर्बाधं जायते परन्तु मानवयोनिमधिगते जीवे पूर्णरूपेण पञ्च-कोषा विकाशं प्राप्नुवन्ति तत्राहङ्कारबुद्ध्योरपि विकासो जायते। तदानीं मानवः प्रकृतौ स्वामित्वं स्थापयति, प्रकृतिमातुरधीनतां च परित्यजति। अतः प्रागेव प्रकृतिदायित्वस्य तिरोधाने स्वयं मानवः स्वकृतानां कर्मणां दायित्वं भजते। अतो मानवयोनौ धर्माधर्मयोरधिकारः समाम्नातः। तथाचोक्तम्—

मानुषेषु महाराज! धर्माधर्मौ प्रवर्ततः।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह॥
इयं हि प्रथमा योनिः यां प्राप्य जगतीपते।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः॥[1]

मनुष्ययोनौ कर्मानुष्ठानाधीनत्वात् स्वीयपुरुषार्थैर्मानवः स्वीयां समु-न्नतिमनुष्ठातुमर्हति, स्वीयेन पापकर्मणा च नीचामपि पापयोनिमप्या-सादयितुं शक्नोति। अतः शास्त्रेषु सर्वापेक्षया मानवजन्मनोऽभ्यर्हितत्वमुप-पादितम्। अहङ्काराक्रान्तचित्तो मानवः प्रकृतेरूर्ध्वगामिनं प्रवाहं परि-त्यजन् स्वेच्छाचारी सन् विपरीतगतिस्वरूपामवनतिं लभते। तस्मिन् समये धर्मो हि मानवसाहाय्यमाचरन् शास्त्रीयविधानद्वारा तस्यावनतिं निरुध्य क्रमोन्नतिमार्गे तं परिचालयति। तथाचोक्तं स्मृतौ—

उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधाना सावधाना लभन्तेऽन्ते परं पदम्॥[2]

आनन्द एव जीवस्य जीवनशक्तेरखिलपुरुषार्थानाञ्च मौलिकोऽस्ति आधारः। आनन्दप्रयासी जीव आनन्दकन्दसच्चिदानन्दचरणा-सरसीरुहमाश्रयन् क्रमशः आनन्ददायिनीं समुन्नतिकक्षामतिक्रमन् कृतकृत्यतामधिगच्छति।

ये भगवद्गुणानुरक्तमात्मनो मनः एकवारमपि भगवच्चरणकमलयोः

---

१. श्रीमद्भागवत ६।१।१९।   २. श्रीमद्भा० १२।३।५१-५२

निवेशयन्ति न तेषां कदाचिदपि यमाद् यमपाशहस्तेभ्यो यमदूतेभ्यो वा किञ्चिद्भयं जायते। भगवति मनोनिवेशमात्रेणैव ते निर्धूतपापा भवन्ति, तथा चोक्तं श्रीमद्भागवते भगवता शुकदेवेन राजानं परीक्षितं प्रति—

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥[1]

अतएव सारग्राहिणो गुणज्ञा सकलदोषदुष्टस्यापि कलेः एवं प्रशंसां कुर्वन्ति, यतस्तत्र भगवतो गुणनामकीर्तनेनैव मानवः, सत्ययुगे ध्यानस्य, त्रेतायां यज्ञस्य, द्वापरे भगवत्सेवायाश्च फलं लब्ध्वा सर्वविधं पुरुषार्थं प्राप्य कृतार्थो जायते—

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः।
कीर्तनादेवकृष्णस्य मुक्तसङ्गः परं व्रजेत्॥
कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्॥[2]

इदमेव जीवभावविकासक्रमाभिव्यक्तिविज्ञानस्य सारभूतं तत्त्वम्, एतदेव च चिज्जडग्रन्थिस्वरूपजीवविज्ञानस्य रहस्यम् अवगन्तव्यम्।



१. शम्भुगीता ५।७, २. देवीभागवत ३।७।५२

## पुस्तकपरिचयः

### १. रघुवंशदर्पणः

रचयिता भट्टहेमाद्रिः
संपादकः डॉ० रेवाप्रसादद्विवेदी
प्रकाशकः काशीप्रसाद जायसवालशोधसंस्थानम्, पटना-१
मूल्यम् ४०-०० रू०
पृष्ठानि १०४०
आकारः रायल × ८, संवत्सरः २०३१.

महाकविकालिदासस्य रघुवंशनाम्नो महाकाव्यस्य नैकाष्टीकाः सन्ति। तासु रघुवंशदर्पणनाम्नी टीका सर्वातिशायिनीति १८६२ खीष्टाब्दे प्रा० नन्दर्गीकरोऽजूघुषत्। ततः प्रभृति भृशं प्रतीक्ष्यमाणापि टीकेयं विश्वमात्रे कुत्रापि संपादनं मुद्रणं प्रकाशनं च नासादितवती। डॉ० रेवाप्रसादो द्विवेदी हस्तलिखितानि २४ पुस्तकानि ताभ्यस्ताभ्यो दिग्भ्यः संकलय्य टीकामिमां संपादितवान्। तत्र पञ्चमसर्गतः अन्तिमं सर्गं यावत् कस्यापि सर्गस्य पञ्चभ्यो न्यूनानि पुस्तकानि न लब्धानि। तत्र पञ्चमस्य-१०, षष्ठस्य-१२, सप्तमस्य-११, अष्टमस्य-१२, नवमस्य-१२, दशमस्य-१५, एकादशस्य-१५, द्वादशस्य-६, त्रयोदशस्य-१०, चतुर्दशस्य-८, पञ्चदशस्य-११, षोडशस्य-६, सप्तदशस्य, अष्टादशस्य-६, एकोनविंशस्य च ५ पुस्तकानि लब्धानि। आद्येषु चतुर्षु प्रथमस्य सर्गस्य किमपि पुस्तकं न लब्धम्, द्वितीयतृतीयचतुर्थानामपि मध्ये द्वितीयस्य-१, तृतीयस्य-२, चतुर्थस्य च ३ पुस्तकानि लब्धानि। तान्यपि नितान्तं भ्रष्टानीति प्रथमश्चतुर्थं सर्गं यावत् प्रथमे सर्गे मूलमात्रं मुद्रितम्, द्वितीयतृतीयचतुर्थेषु पुनः संशोध्य दर्पणो मुद्रितः, न तु संपाद्य, संपादनस्याशक्यात्।

अस्य ग्रन्थस्य चत्वारो भागाः सन्ति भूमिका, श्लोकपाठसहिता टीका, पाठान्तराणि, परिशिष्टानि च। तत्र विस्तृतया १८६ पृष्ठात्मिकया संस्कृतभूमिकया हस्तलेखविवरणादिकं लभ्यते।

मूलभागे श्लोका दर्पणे प्राग्वत् श्लोकप्रतीकानेवादाय रचिताः। तत्र मल्लिनाथटीकातः सुमहान् भेदः। तथाहि ५।४ पद्ये

१. यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः।

२. यतस्त्वया ज्ञानमशेषमाप्तं चैतन्यमर्कादिव जीवलोकः।

३. ज्ञानं यतस्त्वां प्रविवेश पुण्यं चैतन्यमुग्रादिव यायजूकम्।

४. यतस्त्वया ज्ञानमशेषमाप्तं चैतन्यमुग्रादिव दीक्षितेन।

इत्येवं चत्वारः पाठभेदा लभ्यन्ते। मल्लिनाथे पुनः प्रथम एव। दर्पणः पुनरभ्यो द्वितीयमेव पाठं मूलतया मनुते। स च पञ्चमस्यैव सर्गस्य पञ्चत्रिंशत्तमेन श्लोकेन पुनरुक्त इति संपादकश्चतुर्थमेव पाठं मूलत्वेन निर्धारयति, किन्तु पादटिप्पनके।

टीकाया अस्या अयं विशेषो यदत्र धर्मशास्त्रादिविषयाः सविस्तरं प्रपञ्चिताः। साहित्यशास्त्रे पुनरस्य विपरीतैव स्थितिः। ८।२० पद्यमात्रे टीकाकारः साहित्यशास्त्रे दर्शितरुचिः। व्याकरणेऽपि दर्पणकृतो भूयानेव संरम्भः। 'प्रादुरास' [ ८।१५ ]–पदे 'आस'–शब्दस्य सिद्धयै सारस्वतं, तस्य नारेन्द्रं टिप्पणं, काव्यालङ्कारसूत्रकारं वामनम्, अन्यदपि च बहु प्रमाणयति।

टीकाया अस्या रचयिता भट्टोपपदो हेमाद्रिः चतुर्वर्गचिन्तामणि-कारादु हेमाद्रेर्भिन्नः प्रायेण १५ ख्रीष्टशतकारम्भीयः। ततश्च मल्लिनाथेन समकालिकः किञ्चित्पश्चाद्वर्त्ती वेति संपादकमतिः, नन्दर्गीकरः पुनरिम-मतितरां प्राचीनं मनुते। निवासस्थानमस्य प्रायेण महाराष्ट्रकर्णाटक-सन्धिस्थानमेव किञ्चित्। पितास्य 'ईश्वर'-नामा।

पाठान्तरभागे प्रतिसर्गश्लोकं मूलपाठांशमुपस्थाप्य पाठान्तराणि तदाधारप्रतिप्रतीकाश्च 'क–ख'–प्रभृतिना वर्णक्रमेण प्रस्तुताः। ते च सर्वत्र समाना अपि क्वचन भिद्यन्ते। तदर्थं संपादकेन प्रतिसर्गं तदा-रम्भे सर्वेषां पुस्तकानां प्रतीकाः प्रदर्शिताः। एकस्मादेव ग्रन्थागारात् एकत्वेन प्रचारितेऽपि पुस्तकबन्धे पुस्तकद्वयं पुस्तकत्रयं वा दर्पणस्य लब्धमिति संपादकेन ग्रन्थागारप्रतीकास्त्यक्ताः।

टीकेयं संस्कृतसाहित्यस्य संस्कृतसमाजस्य च महत्तमा उपलब्धि-रिति संपादको डॉ० रेवाप्रसादो द्विवेदी प्रकाशकं काशीप्रसादजायसवाल-संस्थानाधिकारि विहारराज्यशासनं च साधुवादपात्रम्॥

## २. कालिदासः मानवशिल्पी महाकविः

रचयिता : डॉ० रेवाप्रसादद्विवेदी
प्रकाशकः संस्कृतपरिषद्, सागरविश्वविद्यालयः
मूल्यम् ५–०० रू०

ग्रन्थेऽस्मिन् डॉ० रेवाप्रसादस्य द्विवेदिन इयं स्थापना यत् कालिदासस्य महाकवित्वे 'मानवीयस्य व्यक्तित्वस्य देवाधिके महिमनि विश्वासः, तदीयं मुक्तकण्ठं प्रशंसनं च' मूलमिति। लेखकः कालिदासस्य काव्यशिल्पे कविकर्मणि, कौशलान्तरेष्वपि दत्तदृष्टिः, श्रीहर्षादिभिस्तुलनामपि तत एव सप्रमाणमुपप्रस्तौति, किन्तु मनुष्यो देवसखः, न तु देवदासः, देवसखत्वेऽपि तस्य भुक्तिमुक्त्युभयप्रभुत्वं, मर्त्यत्वेनाप्यभिमतेन शरीरेणापि मृत्युञ्जयत्वं शरीरेण व्यर्थीकृतकालशत्वं विजितवर्षातपाघातत्वञ्चेति ग्रन्थकर्तुः प्रिया विषयाः। वैदिकस्य मनुष्यस्य यो महिमा वस्तुतस्तत्रैव डॉ० द्विवेदी बद्धदृष्टिः। सरलेन सप्रमाणेन च वाक्यप्रबन्धेन रचित एष ग्रन्थः पाठकानां चक्षूंष्युन्मीलयितुमलमिति दृढं विश्वसिमः।

शुद्धेश्चतुष्टयमत्र ग्रन्थकृता प्रत्ययितम् १. स्थूल-सूक्ष्मोभयविधधातुविशिष्टशरीरशुद्धिः, २. प्रतिभाद्युक्ताया मतेः शुद्धिः ३. संयमादिविशिष्टस्य स्वभावस्य शुद्धिः, ४. एतात्त्रितयस्याप्याधारभूतस्य पित्रोः तपसि निभरस्य जन्मनः शुद्धिश्च। अतएव ग्रन्थकर्ताऽत्र मङ्गलमाचरञ्छ्लोकितं—

> शुद्धेश्चतुष्टयीं नौमि धर्मस्येव चतुष्पदाम्।
> मर्त्येऽप्यमर्त्यता सूते या मनुष्यकलेवरे॥ इति

## ३. सीताचरितस्य विशिष्टं संस्करणम्

कविः डॉ० रेवाप्रसादद्विवेदी 'सनातनः'
प्रकाशकः मनीषाप्रकाशनम्, डी ३५।२१० जंगमवाडी, वाराणसी–१
मूल्यम् २०–०० रू०

महाकाव्यमिदं १९६८ ख्रीस्टाब्दे सागरिकया प्राकाशि। ततः परं भूयोभिर्दिवसैरप्राप्यमिदमिदानीं हिन्दीभाषानुवादेन कतिचदंशकेन परिवर्त्तनेन च सह पुनरपि प्राकाशीति प्रसन्नताया विषयः॥

## ४. अभिधावृत्तमातृका

ग्रन्थकारः मुकुलभट्टः ( ६५० ई० )
संपादकानुवादकः डॉ० रेवाप्रसादद्विवेदी
प्रकाशकः चौखम्भाविद्याभवनम् , वाराणसी-१
मूल्यम् ७-०० रू०

आनन्दवर्धनाभिनवगुप्तमध्यकालिकस्य कल्लटात्मजस्य राजानक-मुकुलभट्टस्य १६१६ खीस्टाब्दे निर्णयसागरतः 'अभिधावृत्तिमातृका'—नाम्ना प्रकाशिता कृतिरियं डॉ० रेवाप्रसादद्विवेदिना संपाद्य मूलं परिशोध्य हिन्दीभाषानुवादेन सह 'अभिधावृत्तमातृका' इति नाम्ना चौखम्भासंस्कृतसंस्थानतः प्राकाश्यमानायि। नाम्नि वृत्तिशब्दस्य स्थाने योऽयं 'वृत्त'—शब्दस्य स्वीकारः स मूलग्रन्थसम्मत एव—

"इत्येतदभिधावृत्तं दशधात्र विवेचितम् ।
पदवाक्यप्रमाणेषु तदेतत् प्रतिबिम्बितम् ।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ॥"
—इत्येवम् ।

अनुवादकस्यापि 'अभिधावृत्ति'—इत्येवाभ्यासः। स तथैवासकृदुदलिखत्। वृत्तशब्दोऽत्र व्यापारभेदान्यतरवाचकः।

ग्रन्थ एष एकवृत्तिवादमुपस्थापयति धनिकस्यावलोक इव। सा चैषा वृत्तिः 'अभिधा' एव। अस्या दश भेदा अत्र स्वीक्रियन्ते—

जातिपरा, गुणपरा, क्रियापरा, संज्ञापरा, उपादानसहिता शुद्धा, लक्षणसहिता शुद्धा, शुद्धा सारोपा, गौणी सारोपा, शुद्धा साध्यवसाना, गौणी साध्यवसाना—इत्येवम्।

अत्र सर्वेष्वपि भेदेषु व्यापृता वृत्तिः अभिधैवैका। किन्तु प्रथमेषु चतुर्षु साऽभिधानाम्नैवोच्यते, परेषु षट्सु पुनः सैवाभिधा लक्षणा-पदेनाप्युच्येत। वृत्तिभेदस्तु न भवति।

सामीप्यसादृश्यादिभिः सम्बन्धैः, वाच्यादिवैचित्र्येण सेयमत्र ६४ भेदानश्नुते। काव्यप्रकाशस्य यो द्वितीय उल्लासस्तस्याधारोऽभिधा-वृत्तमातृकैव।

अयमस्य ग्रन्थस्य विशेषो यदसौ व्यञ्जनां ध्वनिव्यापारं वा प्रत्यादिशति। 'सहृदय'नाम्ना ध्वनिकारं द्विः स्मृत्वा तस्यामान्यतां सहेलमुल्लिखति, किन्तु समासेनैव।

अयमस्य द्वितीयो विशेषो यदसौ आनन्दवर्धनप्रयुक्ताः 'अर्थान्तरसंक्रमितवाच्यत्वा—त्यन्ततिरस्कृतवाच्यत्वादिकाः' परिभाषा अपि प्रयुङ्क्ते पश्यति च आनन्दवर्धनमम्मटाद्यदृष्टां काञ्चिदपूर्वां व्यामिश्रताम्। अपूर्वोऽयमस्योपन्यासः।

ग्रन्थ एष चिराद् दुष्प्राप्य आसीत्। साम्प्रतं पुनरपि सपरिष्कारं सुलभं जातमिति प्रहर्षविषयः॥

## ५. शब्दव्यापारविचारः

| | |
|---|---|
| रचयिता | काव्यप्रकाशकारो मम्मटः |
| संपादकानुवादकः | डॉ० रेवाप्रसादद्विवेदी |
| प्रकाशकः | चौखम्भाविद्याभवनम्, वाराणसी-१ |
| मूल्यम् | ४-०० रू० |

मम्मटभट्टविरचितो ग्रन्थ एष काव्यप्रकाशानुजः। अत्र केवलाः ६ कारिकाः सन्ति। ताभिरत्र मुकुलभट्टाभिधावृत्तमातृकाऽनामोल्लेखं प्रातिपद्येन खण्डयित्वा व्यञ्जनायाः शब्दव्यापारत्वं सिषाधयिषितम्। तत्र काव्यप्रकाश इवात्रापि मम्मटः अभिधातो लक्षणां, ताभ्यां च व्यञ्जनां पृथक् मनुते। संपादको डॉ० रेवाप्रसादो व्यञ्जनायां शब्दव्यापारत्वस्य विरोधी। स तत्र मङ्गलमाचरंल्लिखति—

नमामः शब्दशक्त्याख्यां शाबरीं विषकन्यकाम्।
लग्नया श्रुतिमात्रेऽपि यथा मूढा विपश्चितः॥
आनन्दवर्धनोऽपश्यत् तस्यास्त्रिविधरूपताम्।
भट्टश्रीमुकुलश्चैव दशावृत्तविवर्त्तिताम्॥
अपरे त्वनयोर्मोहं सत्यापयितुमिच्छवः।
कलहं कर्त्तुमारब्धाः पक्षमन्यतरं श्रिताः॥
तत्र श्रीमम्मटो हन्त गतस्तामेव दुर्गतिम्।
उच्चैस्त्रैविध्यपक्षेण स्वं शृणीते परश्वधम्॥

ऐन्द्रजालिकलीलायां सत्यतां पश्यतामिमाम् ।
मोहलीलां बुधाः पश्यन्त्वत्र मद्भाष्यभूषिताम् ॥
— इति ।

आक्षिपति चान्ते मम्मटं द्विजिह्वतया—

अविरामं विरामं च शब्दे तद्व्यापृतौ च यः ।
क्रमेण वीक्षते तादृग्द्विजिह्वाय गरुत्मता ॥
सनातनेन श्रीरेवाप्रसादेन द्विवेदिना ।
आत्मताटस्थ्यमाश्रित्य विचारोऽयमनूदितः ॥—इति ।

नेदृशमन्यस्यानुवादकस्य संयमो यदसौ विरुद्धमप्यात्मानं तटस्थयति विरोधिग्रन्थविचारानुवादे । अयमप्यस्य सनातनकवेर्विशेषो यदसौ शब्दे अभिधावृत्तिमपि न स्वीकरोति, का कथा वृत्त्यन्तरस्य ।

अयमपि ग्रन्थ १६१६ खैस्ताब्दे निर्णयसागरतः प्रकाशित आसीत् । चिरादनुपलब्धः पुनः सुलभो जात इति प्रकाशकः संपादकश्चेत्युभावप्य-स्माकं धन्यवादानर्हतः ॥

## ६. इङ्गलिश रोमांटिक लिरिक्स ( संस्कृते )

पद्यानुवादकौ डॉ० हरिहरत्रिवेदी श्री लक्ष्मीनारायण जोशी
प्रकाशकः चौखम्भा ओरियण्टालिया, के ३७।१०६ गवालदास शाह लेन, वाराणसी
मूल्यम् १५–००, डीलक्ससंस्करणस्य २५–०० रू०

ग्रन्थेऽस्मिन् 'कीट्स–शैले–वर्डसवर्थ–वर्न्स–लैम्ब–बायरन्–ब्राउनिङ्–बारबाल्ड–ब्रायण्ट–कवीनामाङ्गलभाषया उपनिबद्धानि २२ गीति-काव्यानि ललितललितैः संस्कृतच्छन्दोभिर्भावानुरूपाभिर्भाषाच्छटा-भिश्चानूदितानि । 'ओड टू आटम्' इति या कीट्सगीतिरस्या प्रथमांशानु-वादो ऽत्रैवंविधः—

अयि तुषारपटावृतविग्रहे मृदुफलाभरणे शरदङ्गने ।
सहचरी परिपाकविधौ रवेर्विहरसे हरसे च मनः सताम् ॥

अत्रान्तिमे चरणे यत् परम्परागतं द्रुतविलम्बितयमकं तस्य निर्वाहः नितान्तं हृद्यः ।

बायरन्कवेः 'दी ओसन' इति यद् गीतमस्यानुवादे या शब्दस्यार-भटी साप्यत्र समृद्धिमुपद्योतयते भाषाया अनुवादकयोः—

चेतः प्रसादयति काननमध्वहीनं
मोदेन सम्भ्रमयतीव तटो विविक्तः।
गम्भीर-नीर-भर-सागर-धीर-नाद-
सङ्गीत-सङ्गतिजुषां नहि निर्जनत्वम् ॥
अम्भोनिधान ! गहनैर्घननीलवर्णैः
कल्लोल-बाहुविरसैर्लुठ हेलया त्वम् ।
पोतायुतानि समरव्यवसायभाञ्जि
सर्पन्ति ते चटुलवीचिभरे मुधैव ॥—इति

प्रेमतत्त्वमधिकृत्य कृतोऽनुवादोऽत्र कियन्नु स्वाभाविक इति निम्नांकृतै-रुद्धरणैः स्पष्टम्—

सङ्गच्छन्ते निर्झराणां प्रवाहा नद्या सा चाभ्येति वारां निधानम् ।
व्योमोत्सङ्गे खेलतां मारुतानां प्रेम्णैवैक्यं दृश्यते सर्वतोऽत्र ॥
ईशादेशाद् दृश्यते द्वन्द्वभावः सर्वत्रायं चेतनाचेतनेषु ।
कोऽप्येकाकी वीक्ष्यते नो त्रिलोक्यां कस्मात् त्वं मां निर्भरं नोपगूहे ॥
चुम्बत्येषा तुरङ्गमभ्रं नगालिः श्लिष्यन्त्येता वीचयोऽन्योन्यमब्धौ ।
पुष्पव्रातेष्वप्ययं स्नेहबन्धः स्त्रीपुंपुष्पावर्जने दृश्यते च ॥
तेजोराशेरातपो भूमिमेनां चुम्बत्यब्धिं कौमुदी चोल्लसन्तम् ।
एतद्व्यर्थं त्वं न चेत् पाययेथाः पीयेथा वा मेऽधरं स्मेरवक्त्रम् ॥

कवितेयं—कालिदासस्य

विसृज सुन्दरि सङ्गमसाध्वसं मयि चिरात् प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥

इति मालविकां प्रति अग्निमित्रस्य परीरम्भप्रणयं स्मारयति, स्मारयति च माघस्य—

तपेन वर्षा शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधतः सदर्त्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥

इत्येतद् वचोरत्नम् ।

'समागतश्चेच्छिशिरः करालो न दूरमास्ते मधुमासकालः' इत्येवं-विधसुभाषितजातसमेधितं पद्यानुवादरत्नमिदं संस्कृतस्य महत्युपलब्धिः ॥

## ७. अभिज्ञानशाकुन्तल और पद्मपुराण

लेखकः पं० किशोरीलाल गोस्वामी
प्राक्कथन डॉ० रेवाप्रसादद्विवेदी
प्रकाशकः भारतभारती, बी २८।१५ दुर्गाकुण्ड, वाराणसी-५
मूल्यम् १५-०० रू०

भारतेन्दुहरिश्चन्द्र—महावीरप्रसादद्विवेदिकालयोः मध्यवर्त्ती हिन्दी-भाषायाः प्रतिष्ठापकेष्वन्यतमः पं० श्रीकिशोरीलालः गोस्वामी शाकुन्तलस्य कथायाः स्रोतस्त्वं महाभारतीये शकुन्तलोपाख्याने न दृष्ट्वा पद्मपुराणस्य शकुन्तलोपाख्याने पश्यन्ति। तत्र नैकानि प्रमाणानि उपस्थापयति। चतुर्षु सर्गनामकेषूपच्छेदेषु निर्मितो निबन्ध एष
( १ ) शकुन्तलादुष्यन्तपरिचयः
( २ ) तयोर्विवाहः
( ३ ) शकुन्तलायाः परित्यागः
( ४ ) तयोः पुनः प्राप्तिश्चेति
चतुरो विषयानुपस्थापयति।

प्राक्कथनेऽपि डॉ० रेवाप्रसादद्विवेदी शाकुन्तलकथावस्तु अधिकृत्य बहुविधानि नूतनानि रहस्यानि प्रस्तवीति। रहस्येष्वेषु शकुन्तलायाः सगन्धो भ्राता, कण्वेन कृष्णशारीभूतेनाश्रममृगतयाऽहन्तव्यत्व-ख्यापनद्वारा दुष्यन्तस्य स्वाश्रमे नयनमित्यादीनि महत्त्वपूर्णानि सन्ति। संक्षिप्तमपि प्राक्कथनमिदं चक्षूंष्युन्मीलयति प्रज्ञावताम्।

महावीरप्रसादद्विवेदिन इव कालिदासे गोस्वामिनोऽपि विचारा इमे संस्कृतज्ञस्याधुनिकस्य समाजस्य कृते नितान्तं निध्येया इति नः शंसा॥

—समीक्षाचणः

# शब्दसाधुत्वे शिष्टप्रामाण्यम्

*मिथिलेश चतुर्वेदी*

शब्दसाधुत्वविषये शिष्टानां प्रामाण्यं व्याकरणे कात्यायनपतञ्जलिभर्तृहरिप्रभृतिभिर्मीमांसायां च जैमिनिशबरभट्टकुमारिलादिभिरङ्गीक्रियते।

अस्मिञ्जगति सर्व एव मनुष्या अर्थमर्थमुपादाय शब्दान् प्रयुञ्जते। तत्र गोशब्दमुच्चारयितुकामेन कदाचिदशक्त्या गावीत्यप्युच्चार्यते। एवं साध्वसाधुशब्देभ्यो समानायामर्थावगतौ नापभ्रंशाः साक्षाद् वाचका भवन्ति इति। वैयाकरणैर्मीमांसकैश्च निर्णीतम्। तथाह जैमिनिः—'अन्यायश्चानेकशब्दत्वम्'[1] इति। भर्तृहरिणाप्युच्यते—

शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्॥
ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः।[2] इति॥

अथ कथमेतस्मिन् महति शब्दप्रयोगविषये एतज्ज्ञातुं शक्यते 'इमे शब्दाः साधव इमे पुनरसाधव' इति ? अस्मिन् प्रश्ने संजाते शिष्टास्तत्र प्रमाणमिति व्याकरणमीमांसयोर्निर्विवादमभ्युपगतम्। तत्र मीमांसासूत्रकारेण "तत्र तत्त्वमभियोगविशेषात्स्यात्"[3] इत्येवमभियुक्तानां प्रामाण्यं स्पष्टतयोपपादितम्। "तस्माद् यमभियुक्ता उपदिशन्ति एष

---

१. मीमांसासूत्र ( मी० सू० ), १. ३. २६.

२. वाक्यपदीय ( वा० प० ), १–१३९, १४१; संपा० के० ए० सु० ऐयर, पूना, १९६६.

३. मी० सू०, १. ३. २७.

एव साधुरित्यवगन्तव्यम्।''[४], ''न चावश्यं शिष्टप्रयोग उपास्यः''[५] इति पतञ्जलिनाऽपि भूवादिसूत्रस्य भाष्ये उद्घोषितम्। शिष्टस्यैवाशिष्टैश्चैवा-प्रतिषिद्धस्यैव वा शब्दस्यानुकरणमुचितं न तु शिष्टजनविरुद्धस्य इति वाक्यकारेण कात्यायनेनाप्युक्तम्।[६] पृषोदरादीनिसूत्रस्य भाष्येऽपि ''कैः पुनरुपदिष्टानि शिष्टैः''[७] इत्युक्तवता पतञ्जलिना शिष्टानां प्रामाण्यं भृशमङ्गीक्रियते।

भर्तृहरिणा तु वाक्यपदीये 'शिष्टा एव प्रमाणम्' इति मतं दृढमुपन्यस्तम्। तत्रेदमुक्तम्—

शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम्।
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः॥[८]

तत्र ''शिष्टानां हि प्रामाण्यमङ्गीकृतम्''[९] इति वृषभदेवेनापि स्पष्टी-कृतम्। शिष्टानां प्रामाण्यमनुमानप्रमाणेनापाकर्तुं न शक्यत इति वाक्यपदीये वृत्तौ च भर्तृहरिणा प्रतिपादितम्—

---

४. (अ) शाबरभाष्य (शा० भा०), १. ३. २७, पृ० २१५; आनन्दाश्रम संस्कृत ग्रन्थावलिः—९७, द्वि० सं० १९७०.

(आ) शिष्टा-निमित्तं श्रुति-स्मृत्यवधारणे।—तत्रैव, १. ३. ९, पृ० १४१–१४२.

५. महाभाष्य (म० भा०) १. ३. १, पृ० १२५; निर्णयसागर-संस्करण, मुम्बई.

६. (अ) अनुकरणं शिष्टाशिष्टप्रतिषिद्धेषु यथा लौकिकवैदिकेषु। प्रत्याहारसूत्र २, वार्तिक ३, पृ० ९३.

(आ) अत्र भाष्यं—अनुकरणं हि शिष्टस्य साधु भवति, अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति माभ्युदयाय। म० भा०, तत्रैव.

७. म० भा०, ६. ३. १०९, पृ० २६०.

८. वा० प०, १–२७.

९. पद्धति, तत्रैव, का० २९, पृ० ८४, पंक्ति १९–२०.

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥[10]

लोकस्तु शास्त्रं न जानात्यपितु शिष्टानेव दृष्ट्वा शब्दान् प्रयुङ्क्ते । पापपुण्यविषयेऽपि अल्पमेव मनुष्याणां शास्त्रेण प्रयोजनं भवति—

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥[11]

शिष्टप्रयोगादेव शब्दरूपाणां न्याय्यत्वमवसेयमिति महाभाष्यटीकायामपि भर्तृहरिणा प्रतिपाद्यते—"न्याय्योऽस्ति ऋतकशब्दः । कथं पुनरस्य न्याय्यत्वम् शिष्टप्रयोगात् ।"[12]

शिष्टप्रयोगप्रामाण्यादेव विश्रामादीनामपाणिनीयानामपि शब्दानां प्रामाण्यं नारायणभट्टेनाङ्गीकृतं[13] वैदिकभाषाविषयकाश्च सूत्राणि लौकिकविषयेऽपि व्यापारितानि ।[14]

---

१०. ( अ ) वा० प० १–३८.

( आ ) अन्तर्यामिणमणुग्राममभिजातिनिबन्धनमनभिव्यक्तं शब्दब्रह्म… ये शिष्टा व्यावहारिकादन्येनैव चक्षुषा मुक्तसंशयमुपालभन्ते तेषामनुमानविषयातीतं वचनं व्यभिचारिभिरनुमानैरपाकर्तुमशक्यम् ।—वृत्तिः तत्रैव.

११. वा० प० १. ४०.

१२. महाभाष्यदीपिका ( म० भा० दी० ), पृ० ६०, अभ्यंकरलिमये संपा०, पूना, १९७०.

१३. विश्रामस्यापशब्दत्वं वृत्त्युक्तं नाद्रियामहे ।
मुरारिभवभूत्यादीनप्रमाणीकरोति कः ॥
विश्रामशाखिनं वाचं विश्रामो हृदयस्य च ।
विश्रामहेतोरित्यादि महान्तस्ते प्रयुञ्जते ॥
—प्रक्रियासर्वस्व ( प्र० स० ), २, पृ० ८२; त्रि० सं० सीरीज़ १३९, १९४८.

१४. अत्र द्रष्टव्यम्—एस० वी० ऐयर, नारायणभट्टस् प्रक्रियासर्वस्व—ए क्रिटिकल स्टडी, पृ० ६४; पृ० १८९; त्रिवेन्द्रम्, १९७२.

के पुनरत्र शिष्टा व्यपदिष्टाः ? किं स्वत एवोत शास्त्राभ्यासात् ? अथवा किं शिष्टप्रयोगानुसारित्वं शास्त्रत्वं शास्त्रप्रयोगानुसारित्वं वा शिष्टत्वमिति द्रष्टव्यम् । अत्र पतञ्जलिः—"यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम् , तदितरेतराश्रयं भवति ।......एवं तर्हि निवासतश्चाचारतश्च ।...... एतस्मिन्नार्यावर्ते आर्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारगास्तत्रभवन्तः शिष्टाः ।"[15] भर्तृहरिणापि "भावतत्त्वदृशः शिष्टाः"[16] इति शिष्टानामाशंसा कृता । मण्डनमिश्रस्तु "शिष्टैर्वैदिकैः"[17] इति भाषते । अन्यत्रापि भर्तृहरिणोच्यते—

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥[18]

"अथ च तपसा निर्दग्धदोषा निरावरणख्यातयः शिष्टाः प्रतिबिम्बकल्पनेन प्रत्यक्षमिव स्वासु ख्यातिषु संक्रान्ताकारपरिग्रहमव्यभिचरितं सर्वं पश्यन्ति ।"[19]

एतादृशानां शिष्टानामस्तित्वं तु नैव शङ्कनीयमिति हेलाराजेन निर्दिष्टम् । अवश्यमेवैतादृशाः शिष्टा अस्मिञ्जगति वर्तन्ते येषां ज्ञानमलौकिकमतीन्द्रियं च भवति ।[20] किन्तु लौकिकेषु विषयेषु शिष्टप्रयोगा-

---

१५. म० भा० ६. ३. १०९, पृ० २६१.

१६. वा० प० २. लिङ्गसमुद्देश २१.

१७. मीमांसानुक्रमणिका, पृ० २४; सं० गंगानाथ झा, वाराणसी, १९३०.

१८. वा० प० १. ३७.

१९. वृत्तिः तत्रैव, पृ० ९५.

२०. तदेवमागमप्रामाण्याद् भावतत्त्वदृशः शिष्टास्सन्त्यतीन्द्रियार्थदर्शिन इति ते यथायथं गोत्वब्राह्मणादिजातीराश्रयविवेकेनाध्यवस्यन्ति । तच्च तेषां शिष्टानां ज्ञानं सर्वेन्द्रियप्रतिनियमापेक्षत्वात् । सर्वज्ञा हीन्द्रियान्तरेणापीन्द्रियान्तरव्यापारं कुर्वन्ति ।—हेलाराज प्रकीर्ण प्रकाश ( हेला० प्र० प्र० ), वा० प० ३ जाति०, ४६, पृ० ५३–५४; सं० के० ए० सु० ऐयर, पूना, १९६३.

नुसारेणैव साधुत्वं शब्दानां यदाऽवधार्यते तदैतद् वर्णनमलौकिकमतिरञ्जितं चास्तीति प्रतीतिर्जायते। अत एवान्यत्र भर्तृहरिणा शिष्टानां वस्तुपरं भाषातात्त्विकं च वर्णनं क्रियते। तदेतदेकेन औपम्येनावगन्तव्यम्। यत्तु माणिक्यपरीक्षकाणां सौवर्णिकानां च मणिरूप्यादिविषयकं विशिष्टं ज्ञानं तत् सतताभ्यासादेव जायते। एवमेव केषांचिज्जनानां भाषातत्त्वविषयकं ज्ञानमन्येभ्योऽतिरिच्यते। शास्त्रं लोकप्रयोगं च दृष्ट्वा ते शब्दान् प्रयुञ्जते प्रयुक्तांश्चान्वाख्यान्ति। भाषातत्त्वविषयकेषु विषयेषु तेषामबाधा गतिः, लोकप्रयोगं च ते सम्यग्जानन्ति सततं शब्दसंपर्के निवसनात्। मुनित्रयस्यापि प्रामाण्यं प्रयोगज्ञत्वादेव स्वीक्रियते। प्रयोगज्ञा हि ते व्यपदिष्टाः भर्तृहरिणा,[२१] महती सूक्ष्मेक्षिका च सूत्रकारस्य काशिकारेणापि प्रशंसिता। एवं मणिरूप्यादिविषये प्रमाण्यं यथा माणिक्यादिपरीक्षकाणां तथैव शब्दप्रयोगविषये शिष्टानां प्रयोगज्ञानाम्। "तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च।"[२२], "दृश्यते चाभियुक्तानां गुणयतामविस्मरणमुपपन्नम्। प्रत्यक्षं चैतद् गुण्यमानं न भ्रश्यत इति।"[२३] अत एव भर्तृहरिराह—

> ज्ञानं त्वस्मद्विशिष्टानां तासु सर्वेन्द्रियं विदुः।
> अभ्यासान्मणिरूप्यादिविशेषेष्विव तद्विदाम्॥[२४]

तदेतदेव भट्टकुमारिलेनापि तन्त्रावार्तिके निर्दिष्टम्—

> यथा च पद्मरागादीन्काचस्फटिकमिश्रितान्।
> परीक्षका विजानन्ति साधुत्वमपरे तथा॥[२५]

---

२१. सामर्थ्यमविशेषोक्तमपि लोकव्यवस्थया।
वृत्त्यवृत्त्योः प्रयोगज्ञैः विभक्तं प्रतिपत्तृभिः॥
—वा० प० ३, वृत्तिसमु० ४३; त्रिवेन्द्रम्, १९४२.

२२. शा० भा०, १. ३. ९, पृ० १४१.

२३. शा० भा १. ३. २७, पृ० २१५.

२४. वा० प० ३, जाति०—४६.

२५. त० वा०, पृ० २१९.

विश्वेश्वरसूरिणाप्येतद् मतमनुसर्यते—

अभियुक्ताश्च ये तत्र यन्निबद्धप्रयोजनाः ।
तत्रत्यगुणदोषाणां ज्ञाने चाधिकृता मताः ॥[२६]

ननु शिष्टत एव यदि शब्दसाधुत्वं किमर्थकं शास्त्रम् ? शिष्टपरिज्ञानार्थं शास्त्रमित्यत्र पतञ्जलेः मतम् ।[२७] प्रयुक्तानामेव शब्दानां व्याकरणेनान्वाख्यानं क्रियते लक्ष्यमूलत्वात् स्मृतेः । तत्र एत एव शब्दाः प्रयोक्तव्या इति शास्त्रेण नियन्तुं न पार्यते । "तस्मादाकृतिगणादिभिः सावशेषे शास्त्रे 'एतेषामेव शब्दानां प्रयोगे धर्मो भवति' इति नियन्तुमशक्यत्वाद् 'एतत्प्रकाराणां साधुशब्दानां प्रयोगे धर्मस्तदितरापशब्दप्रयोगे त्वधर्मः' इत्येतावदेव नियमपरत्वं वक्तव्यम्" इति नारायणभट्टः ।[२८] तत्र एतादृशी शिष्टानां प्रवृत्तिरिति शास्त्रेण ज्ञातुं शक्यते ।[२९] तत्र यदा शास्त्रानुमितान् साधून् शब्दान् प्रयुञ्जानोऽन्यानपि कांश्चिद् प्रयुङ्क्ते तदा व्याकरणमधीयानोऽन्योऽप्येवं जानाति 'अनेन प्रयुक्ताः सर्व एव शब्दाः साधव' इति । एवमेव धर्माचरणविषयेऽपि 'प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति तदपि स्वर्ग्यत्वाद्धर्मरूपमेव"[३०], इति कुमारिलेन व्यवस्थापितम् ।

किञ्च अविच्छिन्नायाः शिष्टपरम्पराया अपि निबन्धनं व्याकरणेन क्रियते । निपातनैरपि अन्यथानन्वाख्येयानां शब्दरूपाणां निबन्धनं क्रियते । एवं शिष्टपरम्परारक्षणेऽपि व्याकरणस्य योगः स्वीकरणीय एव । अतएव भर्तृहरिणा—

---

२६. व्याकरणसिद्धान्तसुधानिधिः पृ० ६९, वाराणसी, १९२४.

२७. यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते ?
शिष्टपरिज्ञानार्थाष्टाध्यायी ।

—म० भा० ६. ३. १०९, पृ० २६१.

२८. अपाणिनीय-प्रामाण्यसाधनम् (अपा० प्रा०), पृ० ४, तिरुपति, १९६८.

२९. तत्र शास्त्रसमयादपि प्रतिपद्यामहे एवंभूता शिष्टानां प्रवृत्तिरिति ।

—म० भा० दी०, पृ० ६१.

३०. त० वा०, पृ० १२७.

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम् ॥[31]

इत्येवं व्याकरणाशंसा कृता । अस्मादेव कारणात् भट्टकुमारिलेनापि—

"लक्षणानुसरणमेवैकमशेषलक्ष्यनिरूपणक्षमत्वेनावधार्यते ।
...तेनोभयज्ञानस्यापि व्याकरणमेवोपायः ॥"[32]

इत्येवमादिभिर्वचनैर्व्याकरणस्य श्लाघा कृता । व्याकरणस्यापि प्रामाण्यं शिष्टपरिगृहीतत्वादेव भवति ।[33] सदाचरणविषयेऽपि शास्त्रस्य—

यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता ।
तदकोपात्तु नाचारप्रमाणत्वं विरुध्यते ॥[34]

इति शिष्टाकोपादेव प्रामाण्यं स्वीक्रियते ।

ननु शिष्टा एव यदि भाषाविषये प्रमाणं महती तर्ह्यव्यवस्था स्यात् । सर्व एव ते यथेच्छं शब्दान् प्रयोक्ष्यन्ते । वैचारवैषम्यं चापि शिष्टेषु दृश्यत इति चेन्मैवम् । "बहु विकल्पेष्वपि शिष्टानां चरणेषु सन्ति साधारणाः प्रसिद्धाः पुरुषहितप्रतिपत्तिमार्गा येष्वन्यथाप्रवृत्तिर्लोकविरसा"[35] इति भर्तृहरिणा वाक्यपदीयवृत्तौ स्पष्टमुक्तम् । तान् सर्वजनाङ्गीकृतान्मार्गाननुसरन् लोके विगर्हित एव भवति । शास्त्रवचनमपि शिष्टेन आदरणीयमेव । न चैवमितरेतराश्रयः प्रकल्प्यो यतो हि पूर्वस्याः

---

३१. वा० प० १. १३३. अपि च—शिष्टानुमानहेतुस्मृतिर्निबध्यते । वृत्ति, तत्रैव, १. २९, पृ० ८५.

३२. त० वा०, पृ० २१५,

३३. ( अ ) आगमाद्ये साधवः सिद्धाः ते शिष्टस्मरणाद्धर्मसाधनम् ।
—पद्धति, वा० प० १, पृ० ८२, पंक्ति १६.

( आ ) सर्वैः शिष्टैः परिगृहीत आगमः ।
—वृत्ति, वा० प० १, पृ० ९८.

सर्वैः शिष्टैः इति । सर्वैरेव प्रमाणभूतैः परिग्रहात् प्रामाण्यमाह ।
—पद्धति, तत्रैव ।

३४. त० वा०, पृ० १३९.

३५. वा० प०, १-वृत्ति, पृ० ८७.

शिष्टपरम्पराया ज्ञानं शास्त्रं विना न भवति। अतएव भट्टपादैरुक्तम्—स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वाय। अन्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुर्न शिष्टाः।"[३६] इति।

यत्तु "शिष्टैः शास्त्रं न तान्प्रति" इति भर्तृहरिणोच्यते तत्रैतावत्येव विवक्षा यदधीतशास्त्रैः शिष्टैः यदान्येऽपि केचिल्लोके दृढप्रयोगाः शब्दा अनुज्ञायन्ते न तदा शिष्टानामुपदेशेन कार्यमनादिशास्त्राभ्यासादेव सिद्धेः।

लोकतः पुनः केषां शब्दानां साधुत्वं शिष्टैरनुगन्तव्यम्। लोके त्वेकैकस्य शब्दस्य बहवोऽपभ्रंशा दृश्यन्ते। तद्यथा गौरित्यस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः पतञ्जलिना निर्दिष्टाः। न च तेषां सर्वेषां साधुत्वं, शिष्टा-नुगमनाद्। तथा—

"अथ कस्मादेते गोशब्दस्य गाव्यादयः पर्याया न विज्ञायन्ते न हि शिष्टसमाचारप्रसिद्धेरन्यदेवंप्रकारेषु स्मृतिनिबन्धनेष्वर्थेषु निमित्तमभिधीयते। गाव्यादयश्चेत् पर्यायाः स्युरेतेऽपि शिष्टैर्लक्षणैरनुगम्येरन् प्रयुज्येरंश्च।"[३८]

इति भर्तृहरिणा वृत्तावुच्यते। हस्तः करः पाणिरित्येवमादयः शब्दाः सर्व एव पर्यायत्वेन ज्ञायन्ते शिष्टैः। अत एव तेषां साधुत्वं साक्षाद्वाचकत्वं च भवति।[३९]

अत एव ये तु लोके दृढप्रयोगभूताः शब्दास्तेषामेव साधुत्वं शिष्टैरनुगन्तव्यं न तु केनापि कदाचिदुच्चरितस्य शब्दस्य। अत एव पूर्वव्याकरणानाकलय्य दृढप्रयोगांश्च दृष्ट्वा युक्त्युक्त्या शिष्टाः शब्दान् साधयन्ति। एतदेव मतं भर्तृहरिणा—"यत्र प्रसिद्धिरस्ति तस्योपादानं, न त्वस्तित्वमात्रादेव प्रतिपत्तिर्युक्ता। शिष्टाश्च प्रसिद्धिं शास्त्रं चापेक्षन्ते।"[४०]

---

३६. त० वा०, पृ० १२६.

३७. वा० प०, ३ वृत्तिसमु०, पृ० ७८.

३८. वा० प० १ वृत्ति, पृ० २३१.

३९. हस्तः करः पाणिरित्येवमादिषु तु अभियुक्तोपदेशादनादिरमीषामर्थेन सम्बन्ध इति। —शा० भा०, १. ३. २६, पृ. २१४.

४०. म० भा० दी०, पृ० ६१.

इति महाभाष्यटीकायां प्रदर्शितम् । तस्मात्कदाचिल्लक्षणेन लक्ष्यव्यवस्था कदाचिच्च लक्ष्येन लक्षणप्रणयनमिति हेलाराजेनापि प्रतिपाद्यते ।[४१] एतदेवानुसृत्य द्वेधा शब्दानां साधने व्यवस्था शिष्टैरङ्गीकृता इति नारायणभट्टेनाप्युच्यते—

युक्त्यैव शब्दसिद्धिश्चेद् विप्लुता शब्दसाधुता ।
तस्माद् दृढप्रयोगान् वा पूर्वव्याकरणानि वा ॥

आलम्ब्यैव हि युक्त्यापि साधयन्ति मनीषिणः ।
अतएव हि युक्त्युक्त्या साधने वक्तृचिन्तनम् ॥[४२]

"एवं लक्षणशिष्टप्रयोगरहिता शब्दा असाधव" इत्यवधार्यम् ।

तदेवं न लक्षणैकचक्षुष्काः शिष्टा नापि लक्ष्यैकचक्षुष्का अपितु लक्ष्यलक्षणयोरुभयोरपि ज्ञातारः शब्दाभियुक्ताः शिष्टा व्यपदिष्टा इति फलति । तैश्च निरन्तरं विकसन्त्यां लोकभाषायां दृढप्रयोगेनावस्थितानां साधुत्वमवश्यमेवावगन्तव्यम् । पाणिनिनापि दृढप्रयोगस्य प्रामाण्यमङ्गीकृतमेव, 'तदशिष्यं संज्ञाप्रमाणत्वात्' ( पा० सू० १. २. ५३ ), 'योगप्रमाणे च तदभावेऽदर्शनं स्यात्' ( पा० सू० १. २. ५५ ), 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' ( पा० सू० १. २. ५६ ) इत्यादिभिः सूत्रैः । तत्र नारायणभट्टः—

इत्थमर्थाभिधानं सदनुशिष्टं पुरातनैः ।
तत्तु लोकप्रमाणत्वादशिष्यमिति पाणिनिः ॥[४४]

काशिकाकारोऽपि 'लोकप्रमाण्यं पाणिनिनाऽत्र स्वीक्रियते' इत्येव

---

४१. द्विविधं हि शिष्टैरनुशासनं प्रारब्धम् ॥ साक्षादुपेयनिर्देशेन यथा निपातनम् उपायनिर्देशानुसारेण वा यथा विधिः ।
—हेला० प्र० प्र०, वा० प० ३, वृत्तिसमु०, पृ० ४१–४२.

४२. अपा० प्रा०, पृ० ९.

४३. अपा० प्रा०, पृ० ८.

४४. प्र० स० — १; पृ० २६–२७; त्रि० सं० सी० १०६, १९३१.

स्पष्टीकरोति—"अन्य इति शास्त्रापेक्षया लोको व्यपदिश्यते, शब्दैरर्था-भिधानं स्वाभाविकं न पारिभाषिकमशक्यत्वात्" ।।[४५]

पाणिनिना यो बहुलमन्येषामेकेषामन्यतरस्यां यथोपदिष्टं वेत्या-दिशब्दानां प्रयोग आकृतिगणादिपरिग्रहश्च कृतः सोऽपि शिष्टप्रामाण्यस्य ज्ञापको भवति । ज्ञापकसिद्धा अपि शब्दाः शिष्टप्रयोगत एव साधवोऽव-धार्या इति परिभाषावृत्तौ सीरदेवेनोक्तम् ।[४६] लोके वाङ्मये च दृढप्रयोग-भूतानां शब्दानां कथञ्चिदप्यन्वाख्यानं कर्तव्यमिति भर्तृहरिणा निर्दिश्यते—

प्रकृतिप्रत्ययावूह्यौ पदात् ताभ्यां पदं तथा ।
अनुबन्धस्वरादिभ्यः शिष्टैः शास्त्रं न तान्प्रति ।।[४७]

एतदेव च महाभाष्यटीकायामप्युपपाद्यते ।[४८]

पतञ्जलिनापि इष्टिभिर्ज्ञापकैश्च शिष्टप्रयुक्तानां शब्दानां साधुत्वं प्रदर्श्यते । यस्तु शिष्टस्मरणमनादृत्य शास्त्रमात्रशरणः सः असाधूनेव शब्दान् प्रयुञ्जान उपहास्यत्वं गच्छत्यधर्मेण च युज्यते इति महाभाष्य-वाक्यपदीययोः प्रतिपादितम् । तत्र भर्तृहरिणा वाक्यपदीये उक्तम्—

शास्त्रदृष्टिस्तु शास्त्रस्य प्राप्तिमात्रेऽप्यनिश्चिते ।
युज्यते प्रत्यवायेन शास्त्रं चक्षुरपश्यताम् ।।[४९]

---

४५. काशिका, खण्ड – १, पृ० ३६२; प्राच्य भारती ग्रन्थमाला—२, वाराणसी, १९६५.

४६. तेन ज्ञापकसिद्धमात्मनेपदानित्यत्वादि न सर्वत्र प्रयोक्तव्यं किन्तु क्वचिदेव। शिष्टप्रयोगदर्शनात्। —परिभाषावृत्ति; परि० १२६; (परिभाषासंग्रह, सं० के० वी० अभ्यंकर, पृ० २७०, पूना, १९६७).

४७. वा० प० ३, वृत्तिसमु० ७८.

४८. शिष्टप्रयोगमभिसमीक्ष्य प्रकृतिरूहितव्या प्रत्ययश्च । अवश्यं चैतदेवं प्रतिपत्तव्यमिति । —म० भा० दी०, पृ० ४६.

४९. वा० प० ३ वृत्तिसमु० ७९.

वैयाकरणोऽपि यदीष्टिं न जानाति तदाऽपहस्यत एव इति पतञ्जलिना रोचकेनैकेनोपाख्यानेन प्रदर्शितम् ।[५०]

एतेन व्याकरणनिबद्धानां मुनित्रयानुमतानामेव वा शब्दानामैकान्तिकेन साधुत्वमित्यपि केषांचिद्दर्शनमपास्तम् । शिष्टपरम्परानिबन्धनं प्रयुक्तानां चान्वाख्यानमेव व्याकरणेन क्रियते न पुनः शब्दसंघटनम् तदाह पतञ्जलिः—'घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह–कुरु घटं कार्यमनेन करिष्यामीति । न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह—कुरु शब्दान्प्रयोक्ष्य इति ।"[५१] एतदेवाभिप्रेत्य नारायणभट्टेनाप्युच्यते—न च एत एव साधुशब्दा इति नियमितत्वादन्येपामप्रामाण्यमिति वाच्यम् । अन्यथा पाणिनिकात्यायनाभ्याम् 'एत एव साधव' इति नियमनाद् भाष्यकृतेष्ट्यादिवचनमप्रमाणं स्यात् ।[५२] तस्माद् पाणिनीयानुसारिणाऽपि नारायणभट्टेन व्यासशङ्करमुरारिमिश्रभवभूतिकालिदासश्रीहर्षबोपदेवविद्यारण्यादिभिः शिष्टैः प्रयुक्तानां शब्दानां रूपसिद्धये पाणिनीयेतराण्यपि व्याकरणानि समाश्रितानि ।[५३] अत एव

---

५०. एवं हि कश्चिद्वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति । सुत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति । वैयाकरण आह—अपशब्द इति । सुत आह—प्राप्तिज्ञो देवानां प्रियः न त्विष्टिज्ञः इष्यत एतद्रूपमिति । वैयाकरण आह—अहो नु खल्वनेन दुरुतेन बाध्यामहे—इति । सूत आह—न खलु वेञः सूतः, सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसुतेनेति वक्तव्यम् ।

—म० भा०, २–४. ५६, पृ० ५५७.

५१. म० भा०, पस्पशा०, पृ० ६०.

५२. अपा० प्रा०, पृ० ४.

५३. परमवैदिकानां वेदव्यासादीनां मुनित्रयालक्षितबहुपदप्रयोगदर्शनात्, शङ्कराचार्याणामपि प्रपञ्चसारादिषु 'हुनेद' इत्यादि मुनित्रयानुक्तपदप्रयोगात्; वैदिकोत्तमानां च मुरारिमिश्रसुरेश्वराचार्यादीनां 'विश्रामादिशब्दप्रयोगात्; वैदिकवीरस्य नैषधकारस्य 'नैवाल्पमेधसि पटो रुचिमत्त्वमस्य' इत्यादिप्रयोगात्; वैदिकस्थापकानां विद्यारण्याचार्याणां

"विश्रामं भजताम्" इति 'विश्रामशाखिनं' इति च कालिदासमुरारिमिश्रप्रयोगवदमुष्य कवेः विश्राम इति प्रयोगः प्रामादिक,[५४] इति उत्तररामचरितटीकाकारस्य घनश्यामस्योक्तिः न समीचीना। मल्लिनाथस्तु मेघदूतटीकायां चान्द्रव्याकरणाश्रयेण प्रयोगं साधयति।[५५]

एवं काले-काले देशे-देशे च प्रमाणभूता जनाः शिष्टव्यपदेशमर्हन्ति तैश्च निरन्तरपरिवर्तमानभाषाप्रवृत्तीरनुलक्ष्य शब्दस्वरूपव्यभिचारांश्च दृष्ट्वा प्रतिकालमन्यान्यानि स्मृतिशास्त्राणि निबध्यन्ते इति वाक्यपदीये तद्वृत्तौ च महाभाष्यटीकायां च भर्तृहरिणा स्पष्टतयोक्तम्।[५६] तत्र

---

धातुवृत्तौ 'कथापयति' इत्यादौ शाकटायनादिमताङ्गीकारात्;··· व्याकरणान्तराणां शिष्टाङ्गीकृतत्वं स्पष्टतरमेव।

—अपा० प्रा०, पृ० १–२.

५४. उत्तररामचरित–सं०–पी० वी० काणे, पृ० २५, दिल्ली १९६२.

५५. 'विश्रामो वा' इति चन्द्रव्याकरणे विकल्पेन वृद्धिविधानाद्रूपसिद्धिः।

—मेघदूत, १. २६.

५६. (अ) तद्विभागाविभागाभ्यां क्रियमाणमवस्थितम्।
स्वभावज्ञैश्च भावानां दृश्यन्ते शब्दशक्तयः॥

—वा० प० १. १३५.

स्मृतिस्तु नित्यमविच्छिद्यमानार्था गद्यश्लोकवाक्यादिभेदेन प्रतिकालमन्यथा शिष्टैरेव निबध्यते।

—वृत्ति, तत्रैव, १३६, पृ० २२४.

(आ) पूर्वेषामृषीणां स्मृतिशास्त्राणि प्रतिकालं दृष्टशब्दस्वरूपव्यभिचाराणि प्रमाणीकृत्येदमाचार्यैः शब्दानुशासनं प्रक्रान्तम्।

—वृत्ति, तत्रैव, ४३, पृ० १००.

(इ) नियतकाला हि स्मृतयः इष्टास्तच्छ्रुतयश्च यथा गवालम्भो मद्यपानं च। शुक्रेणासेवितमिति क्रियमाणं प्रत्यवायायेति। गवालम्भे दृष्टा स्मृतिर्नियतकाला। अद्यत्वे एतत्पापम्। शब्दाः स्मर्यन्तेऽभ्युदयाय, अन्ये तु दोषाय। इदं च शब्दरूपमद्यत्वेऽपि प्रयोक्तव्यम्।

—म० भा० दी०, पृ० १०८.

पूर्वस्मिन्काले न्याङ्क्वमिति साधुरासीत् सम्प्रति तु नैयङ्क्वमित्येवेति वृषभेणापि पद्धतावुपपाद्यते।[५७] अतएवान्यानि व्याकरणानि प्रति मुनित्रयस्य तद्व्याकरणानुसारिणां च दृष्टिः पक्षपातरहिता असांप्रदायिकी च। तथा, पाणिनिना अनेकेषां पूर्वेषां वैयाकरणानां प्रमाणरूपेण स्मरणं कृतम्। पतञ्जलिनापि पाणिनीयोत्तराणां सौनागप्रभृतीनां वैयाकरणानामुल्लेखः क्रियते। धर्माचरणविषये तु कुमारिलस्य सांप्रदायिक्येव दृष्टिर्वर्त्तते, तत्र बौद्धार्हतादीनां ग्रंथानां शिष्टापरिगृहीतत्वेन वर्णनात्।[५८] किन्तु भाषाविषये एतादृश्या दृष्ट्या न कृत्यम्। तत्र चान्द्रकातन्त्रहैमव्याकरणादीनां मतानि रामचन्द्रविठ्ठलनारायणभट्टादिभिः पाणिनीयानुसारिभिः स्वीकृतानि। सर्वे वैयाकरणसंप्रदाया अन्वाख्यानोपाया एव इति भर्तृहरेरपि मतम्—

अन्वाख्यानानि भिद्यन्ते शब्दव्युत्पत्तिकर्मसु।
बहूनां सम्भवेऽर्थानां निमित्तं कैश्चिदिष्यते॥

वैरवाासिष्ठगिरिशास्तथैकागारिकादयः।
कैश्चिद् कथंचिदाख्याता निमित्तावधिसङ्करैः॥[५९]

शब्दा यथा विभज्यन्ते भागैरिव प्रकल्पितैः।
अन्वाख्येयास्तथा शास्त्रमतिदूरे व्यवस्थितम्॥[६०]

"प्रतिपादकशब्दनिष्ठं ह्यन्वाख्यानम्।...केचित् किल भवतिशब्दं

---

५७. न्यङ्कोस्तु पूर्वेऽकृतैजागमस्याभ्युदयाङ्गतां स्मरन्ति। यथाहुः—"न्यङ्कोः प्रतिषेधान्न्याङ्क्वम्" इति। तत्सम्प्रत्यन्यथा, यतो नोपसंख्यातः प्रतिषेधः। नैयङ्क्वमित्येवाभ्युदयाय।

—पद्धति, वा० प० १, पृ० १००.

५८. परमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा।

—त० वा०, पृ० १२२.

५९. वा० प० २. १७०–१७१.

६०. वा० प० ३ वृत्ति० समु० ७४.

'भवात् तिः' इति व्युत्पादयन्ति, केचिद् भूशब्दादतिप्रत्ययेन अन्ये मध्ये विकरणेन। एवमेकशब्दात् त्रागारिकट, एकागारशब्दात् त्रिकट्"[61] इत्यादिभिरुदाहरणैः एतत् समर्थ्यते। इममेव दृष्टिमवलम्ब्य नारायण-भट्टेन—

पाणिन्युक्तं प्रमाणं न तु पुनरपरं चन्द्रभोजादिशास्त्रं
केऽप्याहुस्तल्लघिष्ठं न खलु बहुविदामस्ति निर्मूलवाक्यम्।
बह्वङ्गीकारभेदो भवति गुणवशात् पाणिनेः प्राक् कथं वा
पूर्वोक्तिं पाणिनिश्चाप्यनुवदति विरोधेऽपि कल्प्यो विकल्पः ॥[62]

इति संग्रहरूपेण पाणिनीयेतरेषामपि प्रामाण्यमुक्तम्। तेन पाणिनि-भ्रष्टानां शब्दानामन्वाख्यानं निबन्धनं च वार्तिकभाष्ययोः कृतं तत्राप्यनुक्तानां नवागतानां वा शब्दरूपाणामन्वाख्यानं निबन्धनं च चन्द्रभोजादिभिः स्वकीयेषु व्याकरणेषु क्रियते इति नारायणभट्टेन स्थापितम्—

दृष्ट्वा शास्त्रगणान्प्रयोगसहितान्प्रायेण दाक्षीसुतः
प्रोचे, तस्य तु विच्युतानि कतिचित् कात्यायनः प्रोक्तवान्।
तद्भ्रष्टान्यवदत्पतञ्जलिमुनिस्तेनाप्यनुक्तं क्वचि-
ल्लोकात् प्राक्तनशास्त्रतोऽपि जगदुर्विज्ञाय भोजादयः ॥[63]

शिष्टप्रयोगविषये प्राचीनानां भारतीयानां भाषाकोविदानामेतानि मतानि भाषादर्शनसामान्ये ( जनरल लिंग्विस्टिक्स ) महत्त्वमर्हन्ति। यत्त्वार्यावर्तनिवासिनामेव प्रामाण्यं पतञ्जलिना शबरेण चोक्तं तत्संस्कृत-भाषाविषयकमेव, निरन्तरसंस्कृतसंपर्कनिवसनात् तद्विषये तेषां प्रामाण्यम्। एवमेव इतरभाषाभ्य आगतेषु शब्देषु तद्भाषाभाषिण एव प्रमाणम्। तत्र संस्कृतधातुभिः प्रत्ययैश्च निर्वचनं न कर्तव्यमपितु यथावदेव तेषामर्थोऽवगन्तव्यश्च इति कुमारिलभट्टपादाः—

आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम्।

---

६१. हेला० प्र० प्र० — तत्रैव.

६२. अपा० प्रा०, पृ० १.

६३. तत्रैव, पृ० ७–८.

पदान्तराक्षरोपेतं कल्पयन्ति कदाचन।
न्यूनाक्षरं कदाचिच्च प्रक्षिपन्त्यधिकाक्षरम् ॥[६४]

"पिकनेमतामरसादिचोदितं सद्वेदादार्यावर्तनिवासिभ्यश्चाप्रतीयमानं म्लेच्छेभ्योऽपि प्रतीयेत लोकावगम्य-नित्यशब्दार्थाभ्युपगमाविरोधात् स्वेनैव प्रमाणेन प्रतीयेतेति।"[६५]

पत्रोर्णवारबाणादि यच्च तद्देशसंभवम्।
तैरेवाकथितं नाम तच्च को वेदितुं क्षमः ॥

"तस्मान्न तेषां व्यवहारप्रसिद्धौ दौर्बल्यम्।"[६६]



६४. त० वा०, पृ० १५१.

६५. तत्रैव, पृ० १५२.

६६. तत्रैव, पृ० १५३.

# किरातार्जुनीये प्रतिमुखसन्ध्यङ्गनिरूपणम्

*सुषमा कुलश्रेष्ठा*

आचार्यैर्नाटकेषु पञ्चसन्धीनां तेषामङ्गानाञ्च निबन्धनमावश्यकं मतम्। एते सन्धयस्तेषामङ्गानि च नाट्यशास्त्रदशरूपकसाहित्यदर्पण-प्रभृतिषु ग्रन्थेष्वतिविस्तरेणोल्लिखितानि। महाकाव्यलक्षणे आचार्यैः स्पष्टं निर्दिष्टं यत् महाकाव्यमपि नाटकवत् पञ्चसन्धिसमन्वितं भवेत्।[1] अनेन स्पष्टमिदं यत् महाकाव्यसन्धियोजनार्थं नाटकसन्धियोजनातुल्य-मेव महत्त्वं प्रदत्तम्। सन्धीनां सम्यक् सन्निबन्धनार्थमपेक्षितमिदं यन्नाटके काव्ये वाधिकारिकप्रासङ्गिकवृत्तयोः, पञ्चार्थप्रकृतीनां, पञ्चकार्यावस्थानां चापि सम्यक् योजना भवेत्।

एकस्मिन् प्रयोजनेऽन्वितानां कथांशानामवान्तरैस्सम्बन्धः सन्धि-रित्यभिधीयते।[2] पञ्चार्थप्रकृतीनां पञ्चकार्यावस्थानाञ्च समन्वयेन क्रमेण पञ्चसन्धयो निष्पन्ना भवन्ति।[3] सन्धीनामवान्तरविभागा एव सन्ध्य-

---

१. काव्यालङ्कारः (भामहप्रणीतः)—

सर्गबन्धो महाकाव्यं महतां च महच्च यत्।
अग्राम्यशब्दमर्थ्यं च सालङ्कारं सदाश्रयम्॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्।
पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत्॥ १।१९-२०

काव्यादर्शः—सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः।
सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्॥ १।१८-१९

काव्यालङ्कारः (रुद्रटप्रणीतः)—

सन्धीनपि संश्लिष्टांस्तेषामन्योन्यसम्बन्धात्। १६।१९

ध्वन्यालोकः—सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥ ३।१२

सा० द०—शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः॥ ६।३१७

२. दशरूपकम्—अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति। १।२३

३. दशरूपकम्—१।२२-२३

ङ्गानि कथ्यन्ते। इदन्तु स्वाभाविकं निश्चितं चास्ति यत् कस्मिन्नपि नाटके काव्ये वा यदा पञ्चसन्धीनां योजना भविष्यति, तदा तेषामङ्गानां तत्र योजना न भवेदिति तु सम्भवि नास्ति। नाटकेषु सन्ध्यङ्गयोजना-विषये निर्देशो नाट्यशास्त्रीयग्रन्थेषूपलभ्यते। यद्यपि केनापि प्राचीना-चार्येण महाकाव्येषु सन्ध्यङ्गयोजनाविषये कोऽपि निर्देशो न कृतस्तथापीदं स्वीकर्त्तुं शक्यते यत् पञ्चसन्धीनां योजना यदा तेषामभीष्टा तदा सन्ध्यङ्ग-योजनापि तेषामभीष्टैव भविष्यति। आम्, इदन्तु सम्भवि यत् पृथक् निर्दे-शस्तैरावश्यको न मतः। परवर्तिष्वाचार्येषु साहित्यदर्पणकारो विश्वनाथः 'सन्ध्यङ्गानि यथालाभमत्र विधेयानि'[४] इत्युक्त्वा स्पष्टं निर्दिशति यत् महाकाव्ये सन्ध्यङ्गानामपि यथासम्भवं सन्निवेशो विधातव्यः।

इत्थं सुनिश्चितमिदं यत् महाकाव्यस्य सन्ध्यङ्गनिवेशं प्रत्यपि महा-काव्यप्रणेतारोऽवधानं दत्तवन्तः। एतस्मादेव कारणात् संस्कृतमहाकाव्ये-ष्वनेकानि सन्ध्यङ्गानि प्राप्यन्ते। महाकाव्येषूपस्थितेष्वपि सन्ध्यङ्गे-ष्वस्माकं टीकाकारैस्तान्प्रत्यवधानप्रदानस्यावश्यकतैव नानुभूता तेषां पूर्णोपेक्षा च कृता। तेषां दृष्टिर्नाटकेष्वेव सन्ध्यङ्गानि निभालयितुं व्यापृता।

भारविप्रणीते किरातार्जुनीये महाकाव्ये पञ्चसन्धीनां तेषां द्विपञ्चा-शदङ्गानां च सन्निबन्धनमुपलभ्यते। प्रस्तुतस्य लेखस्य विषय उक्तकाव्ये प्रतिमुखसन्धेस्तस्याङ्गानां च विवेचनमस्ति।

मुखसन्धौ निवेशितस्य फलप्रधानस्योपायस्य विकासः यत्र बिन्दु-प्रयत्नानुगमादीषल्लक्ष्य ईषदलक्ष्यश्च भवेत्तत्र प्रतिमुखसन्धिर्भवति।[५] किरातार्जुनीये दिव्यास्त्रप्राप्तये तपश्चर्यार्थमर्जुनस्येन्द्रकीलप्रस्थानं मुख्या कथास्ति। अर्जुनस्येन्द्रकीलप्रस्थानोपक्रमसमये पाण्डवानां द्रौपद्या-श्चार्जुनस्य विश्लेषजनिते दुःखे निमज्जनरूपेणावान्तरार्थेन मुख्यकथा विच्छिन्ना, किन्तु द्रौपद्या आशीर्वचनानन्तरं यक्षेण सहार्जुनस्येन्द्रकील-

४. सा० द०—महाकाव्यलक्षणे वृत्तिः, पृ० २२५

५. दशरूपकम्—लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत्।
बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ।। १।३०

प्रस्थानेन मुख्यकथायाः सन्धानमभवत्। अतएव तत्र बिन्दुरर्थप्रकृतिरस्ति।[६] दिव्यास्त्रप्राप्त्यर्थं यक्षेण सहार्जुनस्येन्द्रकीलप्रस्थानं, तत्रेन्द्रप्रसादनार्थं कठोरतपश्चरणं च मुख्यफललाभायास्ति त्वरायुक्तो व्यापारः। अतएव तत्रास्ति प्रयत्नावस्था।[७] एवं बिन्दुप्रयत्नानुगमेन किरातार्जुनीये प्रतिमुखसन्धिर्निष्पन्नः।[८] सन्तीमान्यस्य सन्धेरङ्गानि—

| | | | |
|---|---|---|---|
| १. | विलासः | ८. | निरोधः |
| २. | परिसर्पः | ९. | पर्युपासनम् |
| ३. | विधूतम् | १०. | वज्रम् |
| ४. | शमः | ११. | पुष्पम् |
| ५. | नर्म | १२. | उपन्यासः |
| ६. | नर्मद्युतिः | १३. | वर्णसंहारश्च |
| ७. | प्रगमनम् | | |

प्रतिमुखसन्धेः कतिपयाङ्गानां परिभाषाः दृष्ट्वा प्रतीयते यदेतासां परिभाषाणां रचयितारः आचार्यास्तानि नाटकानि काव्यानि च लक्ष्यीकृत्य परिभाषाः रचितवन्तः येषां नाटकानां काव्यानां च कथावस्तूनि प्रेमविषयकाण्यासन् यतः प्रतिमुखसन्धेरनेकान्यङ्गानीदृशानि सन्ति येषां प्रयोगः प्रेमकथायुक्त एव नाटके काव्ये वा सम्भवति। प्रसङ्गेऽस्मिन् प्रथमप्रतिमुखाङ्गस्य विलासस्योदाहरणं प्रस्तूयते। रत्यर्थेहा विलासो भवति।[९] नायकनायिकयोः रत्यर्थेहा प्रेमविषयक एव नाटके काव्ये वा सम्भवति। अन्यान्यपि कतिपयान्यङ्गानि (नर्म, नर्मद्युतिः, पर्युपासनञ्च)[१०] केवलं प्रेमविषक एव नाटके काव्ये वोपलभ्यानि। एतस्मादेव कारणात् प्रेमकथाभिन्ने किरातार्जुनीये प्रतिमुखसन्धेः केवलं पञ्चाङ्गानामेव सन्निवेशो दृष्टिपथमायति। तान्येव पञ्चाङ्गान्यत्र प्रस्तूयन्ते।

*परिसर्पः*

पूर्वं दृष्टस्यानन्तरं नष्टस्य बीजस्य यदनुसर्पणं क्रियते स परिसर्पो

---

६. किरात०—३।३२-५९

७. किरात०—३।५९-६।२८

८. किरात०—३।२९-६।२८

९. दशरूपकम्—१।३२

१०. दशरूपकम्—१।३३, ३३, ३४

भवति ।[११] किरातार्जुनीयस्य पञ्चमे सर्गेऽङ्गमिदमुपलभ्यते । यक्षोऽर्जुनं प्रति कथयति—'शान्तो भवन्नपि त्वं महर्षेर्व्यासस्याज्ञया गृहीतशस्त्रोऽप्रमत्तश्च सन् तपस्यां कुरु यतः प्रायेणानुकूले भाग्ये सत्यपि विघ्नैर्विना श्रेयांसि लब्धुमसुखानि ।[१२] अत्रानया यक्षोक्त्या काव्ये पूर्वं दृष्टस्यानन्तरं नष्टस्य च बीजस्यानुसर्पणं कृतम् । महर्षेर्व्यासस्योक्तिषु बीजं दृष्टं भूतम्, शरदर्तोः हिमालयस्य च वर्णने तदेव बीजं किञ्चिदलक्ष्यं सञ्जातमनन्तरं च यक्षोक्तौ तस्यैव बीजस्यानुसर्पणादत्र परिसर्पो नाम प्रतिमुखाङ्गमस्ति ।

*निरोधः*

प्रतिमुखाङ्गमिदं साहित्यदर्पणे विरोध इति नाम्नोल्लिखितम् । नाट्यशास्त्रसाहित्यदर्पणयोरनुसारेण दुःखस्य प्राप्तिर्निरोधो विरोधो वा भवति ।[१३] दशरूपकानुसारेण हितरोधो निरोध इति भवति ।[१४] किरातार्जुनीयस्य तृतीये सर्गे प्रतिमुखाङ्गमिदं दृष्टिपथमवतरति यत्र वर्णितम्—'यथान्धकारः दिवसस्य भूरिधाम्नश्चतुरोऽपि प्रहरान् त्यक्त्वैकराशिभूतं सत् कृष्णपक्षरात्रिं प्राप्नोति तथैवार्जुनविश्लेषजं दुःखं तेजस्विनश्चतुरोऽपि पाण्डवान् विहाय एकौघभूतं सत् द्रौपदीं प्राप ।[१५] अत्र द्रौपद्या दुःखाप्तिर्वर्णिता । अतएवात्र निरोधो ( विरोधो ) नाम प्रतिमुखाङ्गमस्ति प्रथमपरिभाषानुसारेण ।

*पुष्पम्*

यत्र विशिष्टैर्वाक्यैः बीजोद्घाटनं क्रियते तत्र पुष्पमिति प्रतिमुखाङ्गं

---

११. ना० शा०—दृष्टनष्टानुसरणं परिसर्पस्तु वर्ण्यते । २१।७६
दशरूपकम्—दृष्टनष्टानुसर्पणम् । १।३२
सा० द०—इष्टनष्टानुसरणं परिसर्पश्च कथ्यते । ६।९०

१२. किरात०—५।४९
भव्यो भवन्नपि मुनेरिह शासनेन क्षात्रे स्थितः पथि तस्य हतप्रमादः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि श्रेयांसि लब्धुमसुखानि विनान्तरायैः ॥

१३. ना० शा०—या तु व्यसनसंप्राप्तिर्निरोधः स प्रकीर्तितः । १।७९
सा० द०—विरोधो व्यसनप्राप्तिः । ३।९२

१४. दशरूपकम्—हितरोधो निरोधनम् । १।३४

१५. किरात०—तान् भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य ।
एकौघभूतं तदशर्म कृष्णां विभावरीं ध्वान्तमिव प्रपेदे ॥ ३।३५

भवति।[16] किरातार्जुनीयस्य तृतीये सर्गेऽङ्गमिदं प्राप्यते यत्र महर्षिर्व्यासो विशिष्टैर्वाक्यैः बीजोद्घाटनं करोति।[17] एकस्मिन् स्थले स युधिष्ठिरं प्रति कथयति—'यस्य भीष्मस्य विषये तस्येच्छामरणत्वात् असामर्थ्येन दुःखी यमराजोऽपि पराजयं प्राप्तवान्, स भीष्मः युधि धनुः कम्पयन् कस्य मनसि भयं नोत्पादयिष्यति।'[18] व्यासोक्तेरभिप्रायस्त्वयमेव यत् भीष्मसदृशाः वीराः सुयोधनस्य सहायकाः सन्ति। अतएव सुयोधनः बले पाण्डवानतिशेते। तं जेतुं तैर्दिव्यास्त्रलाभः परमावश्यकः। अतोऽत्र व्यासोक्तौ बीजोद्घाटनात् पुष्पं नाम प्रतिमुखाङ्गमस्ति।

*उपन्यासः*

नाट्यशास्त्रदशरूपकयोरनुसारेणोपाययुक्तं हेतुप्रदर्शकं वा वाक्यमुपन्यास इत्यभिधीयते।[19] साहित्यदर्पणकारमते कस्यचित् प्रसादनमुपन्यासो भवति।[20] किरातार्जुनीयस्य पञ्चमे सर्गे इदमङ्गं दृश्यते यत्र यक्षोऽर्जुनं प्रति कथयति—'शान्तो भवन्नपि त्वं महर्षेर्व्यासस्यानुज्ञया गृहीतशस्त्रोऽप्रमत्तश्च सन् तपस्यां कुरु यतः प्रायेणानुकूले भाग्ये सत्यपि विघ्नैर्विना श्रेयांसि लब्धुमसुखानि।'[21] यक्षवचनस्य हेतुप्रदर्शकत्वादत्रोपन्यासोऽस्ति प्रथमपरिभाषानुसारेण। अस्मिन्नेव श्लोके परिसर्पाङ्गमपि यत् पूर्वमुल्लिखितम्। एकस्मिन्नेव श्लोकेऽङ्गद्वयस्य प्राप्तिः सम्भवति।

*वर्णसंहारः*

यत्र चातुर्वर्ण्यमेकत्रितं तत्र वर्णसंहारो भवति।[22] किरातार्जुनीये

---

१६. ना० शा०—विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम्। २१।८०
दशरूपकम्—पुष्पं वाक्यं विशेषवत्। १।३४
सा० द०—पुष्पं विशेषवचनं मतम्। ६।९३

१७. किरात—३।१७-२१

१८. किरात०—यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि।
धुन्वन्धनुः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः॥ ३।१९

१९. ना० शा०—उपपत्तिकृतो योऽर्थं उपन्यासस्तु स स्मृतः। २१।८१
दशरूपकम्—उपन्यासस्तु सोपायम्। १।३५

२०. सा० द०—उपन्यासः प्रसादनम्। ६।९३

२१. किरात०—५।४९

२२. ना० शा०—चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते। २१।८२

कुत्रचिदप्येतादृशः प्रसङ्गो नास्ति यत्र चत्वारो वर्णाः समुपस्थिताः। अतएवोपर्युक्तपरिभाषानुसारेणाङ्गमिदं तत्र नोपलभ्यते। साहित्यदर्पणकारेण विश्वनाथेन वर्णसंहारस्य परिभाषानन्तरम् आचार्याभिनवगुप्तस्य मतमुद्धृतम्। तस्य मते वर्णसंहारे वर्णशब्देन नाटकस्य काव्यस्य वा पात्राणि लक्ष्यन्ते। अतः पात्राणां मेलनं वर्णसंहार इत्यभिधीयते।[२३] अभिनवगुप्तस्य परिभाषेयं गृह्यते चेत्तदा किरातार्जुनीयस्य प्रथमे सर्गेऽङ्गमिदं प्राप्यते यत्रोल्लिखितम्—'वनेचरस्य गमनानन्तरं युधिष्ठिरः द्रौपदीभवनं प्रविष्टवान् तत्रानुजसन्निधौ च वनेचरोक्तं वचनमाख्यातवान्।'[२४] श्लोकोऽयं पञ्चानां पाण्डवानां द्रौपद्याश्चैकत्रोपस्थितिं सूचयति। अतोऽत्र वर्णसंहारो नाम प्रतिमुखाङ्गमस्ति।

द्वितीयसर्गेऽपि अङ्गमिदं दृश्यते यत्र व्यासयुधिष्ठिरयोः एकत्रोपस्थितिर्वर्णिता।[२५] तृतीयसर्गस्यापि द्वयोः स्थलयोरङ्गमिदं प्राप्यते यत्र क्रमशः व्यासार्जुनयोः यक्षार्जुनयोश्चैकत्रोपस्थितिर्वर्णिता।[२६]

एवं पञ्चानां प्रतिमुखसन्ध्यङ्गानां निबन्धनं कविना स्वकाव्ये सुष्ठुरूपेण कृतम्।'आचार्येण धनिकेन प्रतिमुखसन्धेः त्रयोदशाङ्गेषु पञ्चाङ्गानि प्रमुखाणि मतानि।[२७] एतेषु प्रमुखाङ्गेषु त्रयाणाम् (परिसर्पपुष्पोपन्यासानाम्) अङ्गानां समायोजनम् कविना कृतम्।



---

दशरूपकम्—चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते। १।३५

सा० द०—चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते। ६।९४

२३. सा० द०—अभिनवगुप्तपादास्तु 'वर्णशब्देन पात्राण्युपलक्ष्यन्ते। संहारो मेलनम्' इति व्याचक्षते। पृ० १९०

२४. किरात०—

इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसन्निवासिनाम्।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः॥ १।२६

२५. किरात०—२।५८

२६. किरात०—३।२४, ३०

२७. दशरूपकम्—एतेषां च मध्ये परिसर्पप्रशमवज्रोपन्यासपुष्पाणां प्राधान्यम्, इतरेषां यथासम्भवं प्रयोग इति।

# प्रस्तावना-मीमांसा

*रामजी उपाध्यायः*

[ ( क ) संस्कृतरूपकेषु प्रस्तावना—लेखकः सूत्रधार आसीत् न तु कविः ।

( ख ) सूत्रधारः प्रस्तावनायामधोलिखितमवर्णयत्—

( १ ) प्रयोगाभिनयस्य देशकालौ ( २ ) प्रेक्षकपरिषत्प्रशंसा ( ३ ) कविप्रशंसा, कवेः सत्प्रेक्षकापेक्षा च ( ४ ) नाट्यप्रबन्ध-प्रशंसा ( ५ ) सूत्रधाराय कविना प्रयोगार्थं कृतिसमर्पणम् ( ६ ) कविभिः राजभ्यो नाटकस्योपायनीकरणं, राजभिश्च तस्याभिनयाय सूत्रधारस्याभ्यर्थनम् ( ७ ) सूत्रधारस्य प्रयोग-साफल्यचिन्ता ( ८ ) नटानां मिथः स्पर्धा ( ९ ) पात्रक्लृप्तिः ( १० ) कथायोगबिन्दुश्च ]

अभिनवगुप्तेन सुस्पष्टमेव व्याख्यातं यत्—द्विविधा प्रस्तावना भवति—पूर्वरङ्गस्याङ्गभूता, अन्यस्य वा । तत्र पूर्वरङ्गाङ्गत्वेऽस्यां कविरुदासीनः । स्थापक एव स्वतन्त्रो निर्माता ।[1] अयं स्थापकस्तु सूत्रधार एवेति स्पष्टीकृतमभिनवगुप्तेन—सूत्रधार एव स्थापक इति सूत्रधारः पूर्वरङ्गं प्रयुज्य स्थापकः सन् प्रविशेदिति ।[2] प्रस्तावना आमुखं वा सूत्रधारस्य कृतिरिति विशदयन् गुणचन्द्र आह—आमुखार्थस्य सूत्रधारविषयत्वात् मुखसन्धेः प्रभृति कवेर्व्यापारः ।[3] यत्र तु रूपके आमुखाङ्गभूतो नाट्य-पात्रप्रवेशविधिः निर्दिश्यते तत्रामुखानुष्ठानेऽपि कवेर्व्यापारो भवतु नाम । तथापि विदुषामेतस्मिन्विषये विप्रतिपत्तिं समवलोक्य किंचिन्मीमांस्यते ।

प्रस्तावनासु कवेर्वाणी न भवति । तथा हि,

---

१. नाट्यशास्त्रम् ५.१६८ अधिकृत्य विवृतिः ।

२. नाट्यशास्त्रम् ५.१६२ अधिकृत्य वृत्तिः ।

३. नाट्यदर्पण ३.३ कारिकावृत्तेः ।

अत्रैव सम्यक् विवेचितं 'यत् स्वस्याभिप्रायोत्कीर्तनं तदामुखम् ।'

आ परितोषाद्विदुषां न साधु मन्ये प्रयोग विज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥

अभिज्ञानशाकुन्तलस्य प्रस्तावनाया द्वितीयोऽयं श्लोकः किं नाम कालिदासस्याभिप्राय उताहो सूत्रधारस्य ।

विक्रमोर्वशीये प्रस्तावनायां सूत्रधारः पारिपार्श्वकं सम्बोधयति—

मारिष, परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा । अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेनोपस्थास्ये । तदुच्यतां पात्रवर्गः स्वेषु पाठेष्ववहितैर्भवितव्यमिति ।

एतत्तु कालिदासस्य वचनं नास्ति ।

कुन्दमालायाः प्रस्तावनायां सूत्रधारस्य स्वाभाविकी कालोचिता चाधोलिखिता वाणी—

'आदिष्टोस्मि परिषदा—तत्रभवतोऽरालपुरवास्तव्यस्य कवेर्दिङ्नागस्य कृतिः कुन्दमाला नाम । सा त्वया प्रयोक्तव्या इति । तद्यावदस्य सन्दर्भस्य प्रयोगसाचिव्यविधायिनीमार्यामाहूय रंगभूमिमवतरामि ।' इत्यादि न कविनिर्मितिः ।

प्रियदर्शिकायाः प्रस्तावनया नितरां प्रमाणितमेव यत् सूत्रधारस्य विरचनमेवामुखमिति । तथा हि—

सूत्रधारः—( परिक्रम्य ) अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञो श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तो यथा 'अस्मत्स्वामिना श्रीहर्षदेवेन अपूर्ववस्तुरचनालङ्कृता प्रियदर्शिका नामनाटिका कृतेति अस्माभिः श्रोत्रपरम्परया श्रुता न प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सर्वजनहृदयाह्लादिनो बहुमानात् अस्मास्वनुग्रहबुद्ध्या वा यथावत् प्रयोगेण त्वया नाटयितव्या ।' इति । तद्यावन्नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादमामि । ( परितोऽवलोक्य ) आवर्जितानि सामाजिकानां मनांसि इति मे निश्चयः । कुतः—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन—
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥

( नेपथ्याभिमुखमवलोक्य ) अये कथं प्रस्तावनाभ्युद्यते मयि विदिता-

स्मदभिप्रायोऽङ्गाधिपतेर्दृढवर्मण आन्तपुरिककंचुकिभूमिकामादाय अस्मत्तात इत एवाभिवर्तते। तद्यावदहमपि अनन्तरभूमिकां सम्पादयामि।

न खलु महाराजहर्षोऽस्या नाटिकाया रचयिता कदापि लेखिष्यति—श्रीहर्षोनिपुणः कविः परिषदप्येषा गुणग्राहिणी। ईदृशं लोकप्रहर्षणं तु शैलूषोचितमेव न हर्षोचितमिति विदुषां प्रतीतचरम्।

महाराजोऽनङ्गहर्षः तापसवत्सराजस्य प्रणेतास्ति। एतस्य नाटकस्य प्रस्तावनायां नटी-सूत्रधारयोरग्रेतनः संवादः—

नटी--न खलु किं च आज्ञापयत्वार्यः।

सूत्रधारः--आर्ये, शरद्गुणाविष्कारिणा नेपथ्येन वत्सराजस्य मे वासवदत्ताभूमिकां सम्पादयिष्यतीति प्रस्तुतम्। (स्मृत्वा) यावदसम्पादयन्त्यैव सर्वं संपादितं भवत्या।

नटी--(विचिन्त्य) आर्य, किं तापसवत्सराजं पश्यन्ति सामाजिकाः?

सूत्रधार—आर्ये, अथ किम्। ननु तस्यैव सकलनरेन्द्रचन्द्रमसः श्रीनरेन्द्रवर्धनरङ्गहर्षापरनाम्नः श्रीमातृराजस्य कृतौ कृतानुरागो जनः सम्प्रति। स च कविः—

सद्वृत्तानुगतो गतो गुणवतामाराधनेऽनुक्षणं
कर्तुं वाञ्छति सर्वदा प्रणयिनां प्राणैरपि प्रीणनम्।
मात्सर्येण विनाकृतः परकृतीः शृण्वन् वहत्युच्चकै-
रानन्दाश्रु जलप्रवाप्लुतमुखो रोमाञ्चपीनां तनुम्॥ २॥

*स च किल कविरेवमुक्तवान्*। मया हि—

न कवित्वाभिमानेन न च व्यामूढचेतसा।
रचितं नाटकमिदं स्वगोष्ठीभावितात्मना॥ ३॥

सूत्रधारः—(आकर्ण्य) आर्ये, न कश्चिद्विलम्बः। तथा *ह्ययं मम कनीयान् भ्राता धृतकंचुकिभूमिक* इत एवाभिवर्तते। तदेहि, आवामप्यनन्तरकरणीयं सम्पादयावः।

इयं प्रस्तावना अनङ्गहर्षेण न विरचितेति स्पष्टमेव ध्वन्यते।

परिवर्तियुगे ख्रीष्टसंवत्सरस्य षोडशशतके रूपगोस्वामी विदग्ध

माधवं विरचितवान् । सच तस्य प्रथमप्रयोगस्य सूत्रधारोऽपि बभूव । तत्र प्रस्तावनायां स कथयति—

सूत्रधारः—मारिष, निर्मितः किमिति तन्नाटकपरिपाटीभिर्वर्णिका-परिग्रहः । ( क्षणं विमृश्य ) भवतु—

ममास्मिन् सन्दर्भे यदपि कविता नातिललिता
मुदं धास्यन्त्यस्यां तदपि हरिगन्धाद् बुधगणाः ।
अपः शालग्रामाप्लवनगरिमोद्गारसरसाः
सुधीः को वा कौपीरपि नमितमूर्धा न पिबति ॥ ४ ॥

ख्रीष्टसंवत्सरस्य सप्तदशशतके नीलकण्ठेन नलचरित्रमिति नाटकं विरचितम् । एतस्य नाटकस्याधोलिखितेन प्रस्तावनांशेन स्पष्टं प्रतिभाति यत् सूत्रधार एवैतस्य कालोचितमामुखं निबध्नाति स्म । तथा हि—

सूत्रधारः—कस्य वा पुनरन्यस्यानुग्रहेण भविष्यति । तत्रभवत्याः परदेवतायास्तदवतारस्य च भगवतो नारायणाध्वरिणः प्रसादेन । *उक्तं च तेनैव कविना—*

चन्द्रशेखरसव्याङ्गचरणोन्मार्जनाम्भसाम् ।
विवर्ता जगदुत्सङ्गे विहरन्ति मदुक्तयः ॥ ६ ॥
नारायणाध्वरीन्द्राय नमोऽस्तु ज्ञानसिन्धवे ।
शारदा यत्कटाक्षाणां साप्यवेतनकिंकरा ॥ १० ॥

परिपार्श्विकः—कथमिदमतिगम्भीरहृदयं रूपकमार्येण तत्त्वतः परिज्ञातम् ।

सूत्रधारः—( विहस्य ) अस्त्युपायः

पारिपार्श्विकः—क इव ।

सूत्रधारः—अग्रजन्मा खलु तस्य रसिकलोकमौलिमणिराचादीक्षितो व्याकरोदिदं रूपकमनुजस्नेहात् ।

परिपार्श्विकः—कथमयं कविरन्तर्मुखश्चात्यन्तविचारप्रवृत्तोऽपि करोति स्म नाटकेऽप्यभिरुचिम् ।

सूत्रधारः—यतोऽयमीदृशस्त *एवोक्तमत्रापि विषये तेनैव ।*

कालं जेतुमुपायौ द्वौ कलिकल्मषसंप्लुतम् ।
कथा वा निषधेशस्य काशी वा विश्वपावनी ॥ ११ ॥

( पुनः सहर्षम् ) 'सर्वं सुघटितम्' तथा हि कविर्विदितः, काव्यं च । अन्यदेव कौशलमस्माकं भरततन्त्रेषु परिषदपि रसोन्मुखी ।

पारिपार्श्विकः—सत्यमेतत् । कथमद्य पुरोभागी खललोकः सहतामस्माकमियन्तमुत्कर्षम् ।

सूत्रधारः—सहतां मा वा । किमेभिः ।

प्रायो व्याहन्यमानापि प्रत्यूहैरन्तरान्तरा ।
लब्ध्वैव कीर्तिरस्माकं नलस्येव विदर्भजा ।। १२ ।।

*अद्वितीयः किल रूपकाभिनयेष्वनुजो मे रङ्गशेखरः ।* यदेष यथाचिन्तितमेव स्वप्नदर्शनात् प्रभृत्युन्मनायमानस्य तद्विनोदनायैव विसृष्टनिखिलराजकस्य विदूषकमात्रोपसेवितस्य नैषधस्यैव भूमिकामादाय प्रविशति रङ्गमण्डपम् । तदेह्यावामप्यनन्तरपात्रनिर्वर्तनाय गच्छावः ।

एषा प्रस्तावना सूत्रधारस्यात्मकथेव प्रतिभाति । पुरा कवयः स्वप्रबन्धान् प्रयोगार्थं सूत्रधारेभ्य आर्पयन् । कवीनां सम्यग्ज्ञातारो वा प्रश्नपृश्निद्वारेण वा प्रासंगिकवार्त्तापरिचेतारो वा सूत्रधाराः प्रस्तावनासु स्वकीयप्रतिभया कविकाव्यविषयिणीं सामग्रीं लोकरुचिवर्धनाय युञ्जन्ति स्मेति नलचरित्रस्योपरिलिखितप्रस्तावनांशेन स्फुटीभवति । प्रस्तावनाद्वारेण प्रेक्षकाः प्रयोगं प्रति सातिशयमभिरता भवेयुरित्यस्यां कलायां सूत्रधाराः सुनिपुणा बभूवुः न तावत् कवय इति निःसन्दिग्धमेव । एतत्खलु यज्ञनारायणदीक्षितस्य रघुनाथविलासस्य प्रस्तावनया स्पष्टमेव । तत्र सूत्रधारस्य केनचित् नटकेसरिणा कूटयुद्धं समुपस्थाप्यते । तत्र नटकेसरी नेपथ्ये वदति—

प्राप्तोऽहं नटकेसरी परिजनैरन्यैः शठैः किं नरैः
किं वा दप्पलवेणधुत्तणडणो दंसेहि सत्तिं तुमं ।
शक्तिं मे नटने स एव लटहः सन्ध्यानटः प्रेक्षितुं
सो नट्टा अ विहू अयं खु भुवणे संझाणडाणं सदं ।। ६ ।।

नटकेसरी चाग्रे कथयति—

कुत्रापि 'नाटकस्य कर्ता' नायकोऽप्युभावेकसभावस्थितौ, मयेत्थमभिनयसमये न दृष्टचराविति ।

अपरं च नटी नायकानां भूमिका-नियोजनं निवेदयति। निश्चितमेवैतत्सर्वं सूत्रधारस्य विरचनम्।

भूदेवशुक्लस्य धर्मविजये नान्द्यन्ते सूत्रधारः प्रस्तावयतितद्यथा,

सूत्रधारः—अलमतिविस्तरेण। अद्य तावदाहूय *समादिष्टोऽस्मि* श्रीमद्दिल्लीदयितवेतनदानामात्येन महानीयचरित श्रीमहता केशवदासेन, यद्वयं धर्मशास्त्रानुसारिप्रयोगाभिनयेनात्मानं विनोदयितुमिच्छामः। तद् भूदेवशुक्लग्रथितेन नवेन धर्मविजयनाम्ना नाटकेन सम्भावनीयेयं स्मार्तसभेति। तत्सदनमुपेत्य कान्तामाहूय संगीतकमनुतिष्ठामि।

अयं प्रस्तावनांशः प्रासंगिकः स्थानकालोचितः प्रयोगाश्रयाभिलक्षकः सर्वथा सूत्रधारस्य व्यापार इति प्रतिभाति। अतः परं सूत्रधारो नटीं ब्रूते—

नटी—को नु खलु तुष्टेऽस्माकं लाभः।

सूत्रधारः—दारिद्र्यभङ्गः।

नटी—कथमिव।

सूत्रधारः—प्रसिद्धप्रभावो महावदान्यः खल्वसौ राजर्षिः यः पूर्णमनोरथैरर्थिसार्थैरनिशमेव श्लाघ्यते। यथा,

चित्तं मानसमुन्नतं करयुगं श्रीपुष्करं पद्मजा—
जन्मस्थानतया समुद्रमहिमाक्रान्तः शयो दक्षिणः।
सेतुर्धर्मकथाम्बुधेस्तव मतिस्त्वां च प्रभासं जनः
प्राप्तः केशवदास चित्रमिह किं प्राप्नोति यद्वाञ्छितम्॥

सभापतेरौदार्यादिकं सूत्रधारस्यैव वर्णनीयं भवति न तु कवेः।

महादेवस्याद्भुतदर्पणे तु सूत्रधारविदूषकयोः संवादः सूत्रधारलेखनीयोग्य एव न कविव्यापार इति अधोलिखितसंवादांशदिशा प्रतीयते—

सूत्रधारः—अस्ति तस्य किल सूनुरायुष्मानस्माकं गर्भरूपो वत्सो महादेवः।

विदूषकः—अत्थि सुणीअदि गोट्ठीसु

सूत्रधारः—स किल बालजनसुलभेन चापलेन कविगणनामिच्छन्ना-
टकमिति यदेतदभिनवमभिनिर्वर्तितवान् तदद्य कर्मान्त-
रेषु युष्माभिः प्रयुज्यमानमार्या यावत् परिशोधयन्तीति ।

नल्लादीक्षितस्य श्रृंगारसर्वस्वभाणे सूत्रधारः *कवेर्वक्तव्यमुद्धरति*—

निबध्नन्ति स्वैरं कृतिमिह कियन्तो न भुवने
रसं किन्तु व्यंक्तुं प्रभवति कविष्वेषु कतमः ।
मम श्रीमल्लम्बोदरदरकृपापांगितगिरः
प्रबन्धेऽस्मिंश्चेतः कुतुकमनुबध्नाति तदपि ॥

न कश्चित् भारतीयः कविः सभासु रंगपीठे प्रपञ्चार्थं स्वयमेव प्रस्तावनायामीदृशमाटोपं स्फोरयेत् ।

प्रस्तावनालेखकः सूत्रधारो वा कविर्वेति विवेचनप्रयासे शेषकृष्ण-प्रणीतकंसवधस्य प्रस्तावनाया अधोलिखितांशो महदुपकरोति—

सूत्रधारः—तस्यास्ति तण्डनकुलामलमण्डनस्य
श्रीतोडरक्षितिपतेस्तनयो नयज्ञः ।
नानाकलाकुलगृहं स विदग्धगोष्ठी-
मेकोऽधितिष्ठति गुरुर्गिरिधारिनामा ॥ १.१३ ॥

तेन चाहं सबहुमानमाहूय ससमाजेनादिष्टोऽस्मि ।

नटी—जइ एवं ता कीस चिन्तापज्जउलहिअओ विअचिरअन्तो चिट्ठसि ।

सूत्रधारः—प्रिये महदेव चिन्तास्थानं सभ्योपस्थानम् । तथा हि—

नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते ।
वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥

नटी—अज्ज, जइ एव्वं ता किं ति अप्पा संकडे पाडिज्जइ ।

सूत्रधारः—आर्ये,

त्वरयति नृपगोष्ठी-संस्तवख्याति-लिप्सा
जडयति च विदग्धाराधनासाहसिक्यम् ।
इति न समधिकर्तुं रूपकं नो विरन्तुं
प्रभवति बत दोलारोहदुःस्थं मनो मे ॥ १५ ॥

नटी--को उण उआओ विअद्धराहणस्स ।

सूत्रधारः—प्रिये, ममाप्येष विमर्शश्चिरं चेतसि वर्तते यतः,

प्राचां वाचामुदारन्नवरसलहरीहारिबन्धान् प्रबन्धान्
आपीय श्रोत्रपात्रैरपहृतहृदया हन्त तर्षप्रकर्षात् ।
गुम्फैः सम्फुलमल्लीसरससुमनसां माधुरीमुद्गिरन्तः
सन्तः सन्तोषमन्तः कमपि सहृदयास्वाद्यमेते वहन्ति ॥१६॥

... ... ... ... ... ... ... ...

(स्मृतिमभिनीय। सहर्षम्) आर्ये दिष्ट्या समासादितः खलु दुरन्तचिन्ताकान्तारहेतुः । तथा हि,

पृथ्वीमण्डलमौलिमण्डनमणिः श्रीमन्नृसिंहात्मजः
*कृत्वा कृष्णकविः कुतूहलवशादस्मासु यन्न्यक्षिपत् ।*
*नाट्यं कंसवधाभिधानमधुना तस्य प्रयोगोद्यमं*
विद्वद्राजसमाजमानसमहानन्दाय विन्दामहे ॥ १६ ॥

... ... ... ... ... ... ... ...

नटी--णं भणामि पसाअ कविणो विअ तस्स वि अण्डिअकइणो
वाणी विअद्धजणस्स पज्जुत्ता भोदि त्ति ।

सूत्रधारः--बाढम् । यतः

मौलौ मन्दारदाम-भ्रमदलिपटली-काकलीं श्रोणिबिम्बे
कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमंजीरशिंजाम् ।
उत्संगे कीरगीतं स्तनभुवि मसृणं वल्लकीपंचमं वा
तत्काव्ये दत्तकर्णा शिवशिव मनुते भारती भारमेव ॥ २१ ॥

अपि च--

यः पीयूषमयूखधामनि सुधासाराच्छकच्छेऽपि यः
क्षुभ्यत्-क्षीरसमुद्र-सान्द्रलहरीलावण्यपूरेऽपि यः ।
यः कान्ताधरपल्लवे मधुरिमा नासौ समुद्गाहते
श्रीविद्वत्कवि-कृष्णपण्डित-वचोवीचीसमीचीनताम् ॥ २२ ॥

उपर्युक्तसन्दर्भस्य भाषा सूत्रधारस्य स्वाभाविकी उताहो कवेरिति विपश्चिदालोचकानां नाप्रतीतम् । अन्यत्रात्मप्रशंसा तु वैरस्यमावहतीति सापवादमेव प्राचीनकविभिरूरीकृतम् । अन्यथा वा गौणरीत्यापि सूत्र-

धारमुखेन कवेरात्मप्रशंसा सोल्लुण्ठमेव ध्रियेत समसामयिकप्रेक्षक-वृन्दैः ।

उपर्युक्तं कंसवधमिति नाटकं कविः सूत्रधारादिषु न्यक्षिपत् प्रयोगाभिनयार्थमिति प्रस्तावनायां प्रकाशितम् । इयं प्रथा पुरा प्रवर्तितासीत् यत् कश्चित्कविः स्वीयं प्रबन्धं सूत्रधाराय समार्पयत् । सूत्रधारो लोकरुचिकरीं प्रस्तावनां तस्य प्रणिनाय इत्यासीत् प्रयोगोद्यमस्तस्य । सुस्पष्टमेवैतत् प्रतीयतेऽतिरात्रयाजिनः कुशकुमुद्वतीयस्याधोलिखितेन प्रस्तावनांशेन—( प्रविश्य ) *पारिपार्श्विकः*—अद्य श्रीहालास्यचैत्रोत्सवयात्रायामार्यमिश्राः समापतन्ति ।

सूत्रधारः—किं समापतन्तीति—

अन्योन्यप्रवितन्यमानविविधालापान्तरालापतन्-
नानातन्त्रकृतान्त-खण्डनसमाधानाभिधानोर्मिला ।
विद्वद्भिर्निरवद्यपद्यकृतिनिस्तन्द्रैः कवीन्द्रैर्वृता
*लब्धेयं परिषन्मया कवयितुर्निस्सीमभाग्योदयात्*

*उक्तं हि मयि स्वकृतिमर्पयता पण्डितम्मन्यदुर्जनसंवादनिर्विण्णेन कविकुलाग्रगण्येन*

*विभावादिस्वादूकृतनवरसा स्वादुचतुरा*
*यदि स्युः श्रोतारस्सुकृतपरिपाकेन मिलिताः ।*
*तदा तेषामेव प्रकटय पुरस्तान्मम कृतिं*
*न चेदास्तां गूढा चिरमियमनिष्पन्नसदृशी ॥*

इति तदेषा परिषदभिमता तस्य कवेः ।

( परिषदं निर्वर्ण्य, सानन्दम् ) अथवा किमभिमतेतिसर्वस्यापि प्रार्थितदुर्लभैवैषा । यतः

विद्वद्वादविवादकालयुगपद्विष्फूर्त्यहंपूर्विका
निर्यद्युक्तिसहस्रदर्शितनिजाहीन्द्रावताराकृतिः ।
कर्तुं कारयितुं तथा रसयितुं काव्यानि नव्यान्यलं
भूष्णुर्भाति सभासभाजितमतिः श्रीनीलकण्ठाध्वरी ॥

नटी—एआरिसो कविन्दो अम्हे कुसला पओअमग्गेसु ।
रूवअमिदं अणुरूवं तहविण सामाजिएसु विस्सासो ॥

एतत्सर्वमप्पादीक्षितस्य मदनभूषणभाणस्य प्रस्तावनयापि प्रमाण्यते। तथा हि--

सूत्रधारः (प्रतीचमवलोक्य सानुमोदम्) अये रङ्गशेषनाथो नाम मम श्यालः परिगृहीतविटशिखामणिभूमिकः संकेतितमदनभूषणनामा इत एवाभिवर्तते। यथायम्--

मध्याबद्धदुकूलदृश्यविरणत्सौवर्णसूत्रस्फुरत्
मुक्तादाम-विभूषणः श्रवणयोर्निक्षिप्तनीलोत्पलः।
आलिप्तो हरिचन्दनैर्मृगमदैः पिष्टातकैर्घूर्णयन्
नेत्रे स्कन्धतलावलम्बिवसनः साक्षाद्रतीशोऽपरः॥

कविः पात्रस्य वर्णनां न करोति, अतएव सूत्रधारस्यैवैततानि निश्चप्रचम्।

चोक्कनाथस्य कान्तिमती-शाहराजीये नाटके प्रस्तावनायां *पात्रक्लृप्तिः निदर्शिता* वर्तते। तद्यथा--

सूत्रधारः--कुम्भकोणनगरवासिने चित्रवेषाय पत्रिकां प्राहिणवम्। सखे कान्तिमतीशाहराजीयं नाम नाटकमभिनेतुं त्वमायाहि शीघ्रं परिजनैः सहेति।

पारिपार्श्विकः--साध्वनुष्ठितं भावेन। यतः

अत्यल्पेन च रूपकेण जनयत्याश्चर्यमन्यादृशं
नानावेशपरिष्कृतैरभिनयैः सोऽयं नटाग्रेसरः।
सम्प्रत्यद्भुतसंविधानमधुरेणानेन सामाजिकान्-
नेतान् रंजयतीति भाव भणितं यत् तावदस्त्यत्र किम्॥

सूत्रधारः—उत्तरमपि तेन प्रेषितम्। स्यादेतदेव सन्ध्यासमये सह परिजनैः समागच्छामि। किन्तु विदूषककविराक्षसस्य च वेषपरिग्रहाय सज्जीभवतु भवानिति।

आनन्दरायमखिनः विद्यापरिणयनस्य प्रस्तावनानुसारेण तु सूत्रधार एव प्रस्तावनाप्रणेता। तस्य पारिपार्श्विकेन सहसंवाद एवं प्रवर्तते—

सूत्रधारः—*स तावत् 'इदं नाटकमुचितेषु प्रयोक्तव्यम्' इति स बहुमानभरमदवशे समर्पितवान्। 'अनेन सुकरमभिरूपपरिषदनुरञ्जनम्' इति ममाध्यवसायः।*

... ... ... ... ... ... ... ...

पारिपार्श्विक—'''*एतत्प्रणीतमभिनवमिदं नाटकमस्माभिरभिनीयते इति वाङ्मनसातिवर्ति ननु भाग्यमिदस्माकम् ।*

सूत्रधारः—तत्प्रणीतमिदं नाटकमिह प्रयुञ्जानस्तदनुगुणसकलगुणरमणीयानत्रभवतः सामाजिकानुपतिष्ठे ।'

सोऽयमानन्दरायमखी स्वकीयं जीवानन्दनन्दनं नाम नाटकमुपर्युक्तसूत्रधाराय समर्पितवान् । अयं सूत्रधारस्तस्य प्रस्तावनायाः प्रणेता । प्रस्तावनाया अन्तिमभागे पारिपार्श्विकेन सहतस्य संवाद एवं प्रवर्तते—

परिपार्श्विकः—एवं च मन्ये त्वया सह स्पर्धमानोऽपि विकटनामा नटवटुरभिनयविद्यायां महदनुग्रहात्त्वयैव विजेष्यते इति ।

सूत्रधारः—विकटो नाम नटवटुर्मया सह स्पर्धत इत्यतत्त्वविदो वचनम् । शृणु तावत्—

अभिनयविद्याविषये दुरहंकाराकुलीकृतो विकटः ।
स नटवटुर्मां वाञ्छत्यभिभवितुं जीवमिव यक्ष्मा ॥ १५ ॥

सूत्रधारस्य वैयक्तिकमिदं संसूचनं न कवेरिति स्पष्टमेव ।

कृष्णदत्तमैथिलविरचितपुरंजनचरितस्य प्रस्तावनाया अधोलिखितांशेन सूत्रधारप्रणेतृत्वं निश्चीयते—

सूत्रधारः—*यत्किल कृष्णदत्तकविना मैथिलेन पुरंजनचरितं नाम नाटकमस्मासु समर्पितम् ।*

लोके हारि पुरंजनस्य चरितं प्रौढः कविर्मैथिलो
नाट्ये दक्षतमा वयं च तदयं स्वर्णेन योगो मणेः ॥ ४ ॥

... ... ... ... ... ... ... ...

सूत्रधारः—सखा मम गुणाकरो नाम मामनापृच्छ्य व्यापारानुरागतो नन्दिवर्धननगरमागतो दर्शितकामरूपगुणप्रकाशया कयापि कामकन्दलया वशीकृतोऽबलीभूय किमपि न प्रतिसन्दधातीति चिन्तामापन्नोऽस्मि ।

नटी—अज्जस्स अण्णए मये तुह समीवं सो आणीअदि, अज्जेण उण पडिवोहणिज्जोत्ति ।

चोक्कनाथस्य सेवन्तिकापरिणयनाटकस्य सूत्रधाररचितायां प्रस्तावनायां प्रयोगस्य विवरणं वर्तते । तदनुसृत्य चोक्कनाथ इदं नाटकं बसवक्षितीन्द्राय समर्प्य स्वपुरं प्रयातः । पश्चात् राजा सूत्रधारमाहूयावादीत्

पंचषदिवसैरेतद्रूपकमभ्यस्य सानुबन्धिजनः ।
अभिनीय भरतदेशिक नन्दय नाना कवीन्द्र सन्दोहम् ।।

सूत्रधारस्तु पात्रक्लृप्तिमकरोत्—

गृह्णाति पुत्रो मम नेतृभूमिकां सेवन्तिकायाश्च पितृव्य-नन्दनः ।
तस्याः सखीनां गृहिणीसहोदराः कौषीतकस्य त्वमहं महामतेः ।।

मौहूर्तिकस्य महामतेर्भूमिका मया परिगृह्यते त्वया च विदूषककौषीतकस्य परिगृह्यताम् ।

राजचूडामणिदीक्षितस्य कमलिनीकलहंसनटिकायाः प्रस्तावनापि सूत्रधारस्यात्मकथा सर्वथा वर्तते । तद्यथा—

सूत्रधारः—तदद्य किमप्यभिरूपं रूपकमभिनीय विनोदनीया विस्मयनीयमनीषोन्मेषा परिषदेषा ।

परिपार्श्विक :—तेन ( राजचूडामणिना ) हि गर्भसप्तमहायने विरचय्य सबहुमानमस्माकं हस्ते दत्ता किल कमलिनीं-कलहंसनामधेया शृंगाररसमणिपेटिका नाटिका ।

युवराजकवेः रससदनभाणस्य प्रस्तावनायां—

सूत्रधारः—( स्मरणमभिनीय । ) अहो, महान् प्रमादोऽस्माकम् । *यत्पुरुदेव तत्रभवता युवराजेन 'अस्मत्कृतं किमपि भाणं प्रयोगपदवीमवतारय' इत्यस्मत्करे समर्पितम्*

भास्करकवेः शृङ्गारकेतुलीलातिलकभाणस्य अधोलिखितः प्रस्तावनांशः सूत्रधारस्य प्रयोगविषयकमाचारं निबध्नाति—

सूत्रधारः—पूर्वकं प्रबद्धमिदं श्रीविक्रमदेवेन राजराजोपमेन राजराजेनानेक – कविभिरानीयोपायनीकृतेषु निबन्धनेषु निर्धार्य नियुक्तमित्यार्यमिश्राणामाज्ञापना ।

सूत्रधारः—अथ किं, नैव युवयोरयं भागिनेयो भर्गदासः प्रथमरङ्ग-प्रवेशकुतूहलकण्टकितकलेवरोऽभिनवभाणाभिनयानुरूपिकां भूमिकामा-दायालङ्कुरुते नेपथ्यद्वारभूमिम्।

वत्स, का पुनस्तवाभिनयानुसारिणी गाथिकी ? ( पुनः सस्मितम् ) विदितमेवैतत्—

पृष्टमात्रे मया यत्ते दृष्टिरासीदधोमुखी।
प्रत्यङ्गं पुलकोद्भेदे स्वेदैश्चालङ्कृतं वपुः॥

भवतु, प्रवेशानन्तरं प्रथममभिनेयमिदानीमेव प्रस्तुतम्। ( नटीं प्रति ) आर्ये, नन्वावामप्यन्तेवासिप्रतिबिम्बितप्रयोगप्रकाशप्रेक्षणकुतुकिनौ ताव-त्प्रेक्षकावेव भवावः।

अनन्तदेवस्य कृष्णभक्तिचन्द्रिकानाटकस्य प्रस्तावनानुसारेण तु कविः स्वयमेव सूत्रधारं निवेदितवान्—

सखे पश्यामि बहुशः सखेदं त्वामहर्निशम्।
संसारे तेन कंसारेराराधनमुदाचर॥ इति॥

तदनुसारेण तु सूत्रधारो ब्रूते—

तदहमस्यामेव सभायामस्यैव कवेरिममेव निबन्धमधुनैवाभिनीय प्रतिपादयामीति।

घट्टशेषस्य सपिण्डीकरणनिरासस्य प्रस्तावनायां सूत्रधारो वदति—

दासोऽहं रंगवासी निजपितृकलितव्यर्थवाग्जालतूल—
स्तोमाग्निं नाम सन्दर्भकमिति ललितं सम्प्रयोक्तुं प्रवृत्तः॥
... ... ... ... ... ... ... ...

प्रवृत्तिरस्मदीया स सन्दर्भस्त्वतिशोभनः।
सभायां तु प्रयुक्तश्चेत् सर्वान् सन्तोषयिष्यति॥

रङ्गनाथस्य रघुवीरविजये सूत्रधारो नटीं ब्रूते—

श्रीरामः कृतिनायकः कविरपि श्रीरंगनाथो गुरुः
शेषान्द्रीशमहे नितान्तरसिकाः प्राप्ताश्च संख्याविदः।
मद्वर्ग्याश्च रसानुवादनविधावन्योन्यमुत्सेकिनः
प्राप्तासि त्वमपीह नाट्यकुशला किं वाञ्छितं मे परम्॥

सुन्दरवीररघूद्वहस्य अभिनवराघवनाटके सूत्रधारः पात्रक्लृप्तिं निदर्शयति। तद्यथा—

सूत्रधारः—( सहर्षं नेपथ्याभिमुखमवलोक्य ) कथमुपक्रान्तमेव कुशलैः कुशीलवैः। यदद्य मे भागिनेयः कैकेयीवेषधारिण्या स्वगृहिण्या परिकलितदशरथनेपथ्यः महोद्यानविहरणोद्युक्त इव लक्ष्यते। तदद्यानन्तरकरणीयाय सज्जीभवावः।

प्रस्तावना-विरचनं सूत्रधारः कथमकरोदिति भरतेन नाट्यशास्त्रेऽधोलिखितेन पद्येन निर्दिष्टम्—

मुखबीजानुसदृशं नानामार्गसमाश्रयम्।
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत्॥ ना. शा. १६८

इदं काव्योपक्षेपणं नाम सूत्रधारस्य सहजं कर्म, न तु कवेः। नाट्याश्रितं काव्यमेव कविः सूत्रधाराय प्रयोगार्थमदात्। पश्चात् सूत्रधारस्तु—

प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम्। ना. शा. १६६

सूत्रधारस्तावत् कविकर्मणि निपुण आसीदिति वेमभूपालेन समुद्धृतम्। तथा हि—

सूत्रधारः स्मृतो नाट्ये सूत्रं धारयतीत्यतः।
विद्वान् वाग्मी कविर्दक्षस्तौर्यत्रयविचक्षणः॥
नाट्यप्रयोगकुशलो रसभावविवेचकः।
नानादेशसमुद्भूतवेशभूषाविशारदः॥
कामशास्त्ररहस्यज्ञो नानाशिल्पविचक्षणः।
ऊहापोहान्वितः शक्तो धारणे चोपदेशने।
उत्तमप्रकृतिर्नाट्याचार्यः स सूत्रधारकः॥

भरतकोशे पृ० ६७०

यत्र हि नाम प्रस्तावनासु सूत्रधारोऽनुकरणं करोति, ततः प्रभृति कविव्यापार आरभ्यते। तथा हि मृच्छकटिके सूत्रधारः कथयति—

एषोऽस्मि भोः कार्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्तः। अविद अविद भोः चिरसगीदोवासणेण सुक्खपोक्खरणालाइं विअ मे बुभुक्खाए

मिलाणाइं अंगाइं। इत्यत आरभ्यामुखान्तं यावत् कविना विरचितो भागः। उत्तररामचरितेऽपि सूत्रधार एवं विधं वदति प्ररोचनायाः पश्चात्—

एषोऽस्मि कार्यवशादायोध्यकस्तदानीन्तनश्च संवृत्तः। इत्यत आरभ्यामुखान्तं यावत् कविना विरचितो भागः प्रस्तावनायां समाविष्टः। गोकुलनाथस्यामृतोदये यतः सूत्रधारो वदति—तस्यामृतोदयं नाम नाटकमभिनिनीषतः पूर्वपरिगृहीतभोगभूमिकापरिहारेण विविक्तकेशमूरीकुर्वन्तु भवन्तः ततः प्रभृति कविव्यापारः प्रस्तावनायाम्।

# धर्मः संस्कृतिश्च श्रेयोमूलम्

*ब्यावरनगरवास्तव्याः स्वर्गताः पण्डित-रामप्रतापशास्त्रिणः*

[ अपूर्णोऽप्यपूर्वोऽयं लेखो भारतीय संस्कृति प्रियाणां विद्वद्वराणाञ्च योगक्षेमकारीति धिया प्रकाशनार्थं प्रहिणोमि ॥

—रसिकविहारी जोशी ]

अहो तदेवैतदशेषधरणिमण्डलमण्डनीभूतं सर्वदेवनमस्कार्यमस्माकं तत् प्राचीनं भारतवर्षं यत्र खलु श्रुतिस्मृत्यादिप्रतिपादितवर्णाश्रमाद्यनुष्ठेयानि नित्यनैमित्तिककाम्यप्रायश्चित्तरूपाणि चतुर्विधान्यपि कर्माणि यथायथमनुष्ठीयन्ते स्म। सकलकलिकल्मषविध्वंसनवज्रायमाणपठनानि श्रवणमात्रेणैव सर्वेषामेवान्तःकरणेषु परमशान्तिपरमपावित्र्यप्रयोजकानि श्रुतिस्मृत्यादीनि श्रीमद्रामायणमहाभारतभागवतादीनि निखिलानि शास्त्राणि सश्रद्धं सभक्तिप्रश्रयञ्च सर्वैरप्यधीयन्ते स्म सम्यगनुशील्यन्ते स्म सुनिपुणञ्च श्राव्यन्ते स्म। तस्मिन्काले राजानः प्रजाश्च, धनिनो दरिद्राश्च, विद्वांसो मूर्खाश्च, भद्रा अभद्राश्च, ब्राह्मणाश्चाण्डालाश्चेत्यादयः सर्वे भारतवर्षीया नूनं गोपालनमात्मनो धर्ममेवाकलयन्ति स्म। पुराणेतिहासादिषु च दृश्यन्ते खलु तद्विषये संख्यातीतानि प्रमाणानि। पूर्वं मत्स्यदेशाधिपतिर्विराटनृपतिः सहस्रशो गोगणान् पालयामास। अज्ञातवासिनः पाण्डवान् विचिन्वानः खलु दुर्योधनो विराटराजस्यान्यां प्रचुरामैश्वर्यसम्पत्तिं तृणाय मत्वा गृहीतचतुरङ्गिणीसेनाबलस्तस्य गोधनहरणार्थमेवच्छद्मवेशिना धनुर्धरेणैकाकिनार्जुनेन साकं देवविस्मायकं संग्रामं विदधे। दुर्योधनादीनामन्येषां सर्वेषामेव राज्ञामप्यासन् भूयिष्ठान्येव गोधनानीति न वयं साकल्येन वर्णयितुं प्रभवामः। किमधिकं, दैत्यभराक्रान्ताया धृतगोरूपाया भूमेः करुणक्रन्दनध्वनिश्रवणसमकालमेव सृष्टिस्थितिप्रलयैकहेतुर्निखिलब्रह्माण्डनायको भगवान् श्रीकृष्णचन्द्रोऽपि गोपवंशावतंसरूपेणावतीर्य गोपकुमारैः सह स्वयं बहुकालं गोचारणं विधाय ब्रह्मादीनपि देवान् विस्मयस्तिमितमानसांश्चक्रे। पुरा खलु सर्वेऽपि द्विजाः प्रातः सायं निरन्तरायं महत्सु होमकुण्डेषु घृताद्याहुतिभिर्हवनं विदधुः। तेन च

भगवानादित्यः सुतरां प्रीतः सन् यथाकालमेव पर्याप्तं जलं वर्षन् पृथिव्या उर्वरतां साधयामास। नित्यमुर्वरा चेयं भूमिः स्वगर्भोत्पादितनानाविध-सामयिकशस्यशालिनी भूत्वा वसुन्धरेति स्वीयं नाम याथार्थ्यं लम्भयन्ती सर्वासां प्रजानां नृपतीनाञ्च परमामैश्वर्यसम्पत्तिं सम्पादयामास।

तदानीं धनिकानां भूपतीनाञ्च दानवारिभिर्निरन्तरं सिच्यमानेयं पृथिवी सदा क्लिन्नगात्रा नित्यं पिच्छिलानेव मार्गान् दधे। प्रजाजनानाञ्च प्रतिदिनमुपचीयमानमैश्वर्यं निरतिशयमानन्दराशिञ्चावलोकयन्तो राजानः परमानन्दपरवशीभूतान्तःकरणाः आत्मनः कृतकृत्यतां मन्यन्ते स्म।

नासीत्खलु तदानीन्तने काले प्रजास्वाधिर्वा व्याधिर्वा दोषसंघातो वा नैराश्यं वा कुत्रापि। स्वल्पमूल्येनैव यथेच्छमनायासमलभ्यत सर्वैरपि पुरुषैरशनवसनादिकं वस्तुजातम्। सर्वत्र भारते प्रतिगेहं गावः प्रत्यपाल्यन्तेति न खलु न विदितमेतद्भवताम्। गोपालनकर्मण्युपेक्षावतां पुरुषाणान्तु धर्मशास्त्रेषु निन्दा श्रूयते—

यस्यैकापि गृहे नास्ति धेनुर्वत्सानुचारिणी।
मङ्गलानि कुतस्तस्य कुतस्तस्य तमःक्षयः॥ इति॥

सत्त्वगुणैकनिलयानि बलबुद्धिसम्पादनक्षमाणि शुद्धानि दधिदुग्धादीनि गव्यानि तु प्रायो न कुत्रापि विक्रीयन्ते स्म।

सम्प्रति हवनक्रियाशून्येयं धरणी प्रायः प्रतिवर्षमेव अनावृष्ट्या वा समधिकवृष्ट्या वा क्वचिदूषरतया क्वचिच्च जलनिमग्नतया वा न खलु पूर्ववत् शस्यानि प्रसूते। समुत्पद्यमानेष्वपि पर्याप्तेषु चान्नराशिषु देवपितृकार्येष्वनुपयुज्यमानतया भारतभूमेर्दुर्भाग्यतया प्रशास्तृणां धर्महीनशासनानुसारितया प्रोद्दामतृष्णाकुलीकृतचेतसां वणिक्पाशानां सर्वग्रासितापरतया कार्याधिकारिणां राजपुरुषाणाञ्च स्फुटमुत्कोचादानव्यसनितया वा न कथञ्चिदपि दूरीभवति नित्योपभोग्यवस्तुजातानां महार्घतमता। अन्नादीनां भक्ष्यपदार्थानाञ्च अत्यल्पपरिमितप्रमाणेन वितरणव्यवस्थया अनुपलभ्यमानपर्याप्तभोजना भूयांसः किल युवजना अपि शुष्कवीर्यहीना अल्पमेधसो रोगग्रस्ताश्च दृष्टिपथमवतरन्ति। दरिद्रताप्रियसखी

दुश्चिन्ता च सर्वेषामेव भारतीयानां हृदयेष्वपुनरुत्थानाय स्वासनं विस्तीर्य निर्भयं समुपविष्टा चेष्टते ।

आबाल्यादेवार्थोपार्जनचिन्ताव्याकुलीक्रियमाणचित्ताश्छात्रा बाल्य एव वार्धकतोऽपि हीनतमां दशामापद्यन्ते । उदरपूरणार्थं परीक्षाम्बुधिसमुत्तरणयोग्यां काञ्चिन्नवीनामेव शिक्षामर्जयन्त इष्टानिष्टप्राप्तिपरिहारोपायविवेकाक्षमं ज्ञानमनासाद्यैव "सर्वज्ञोऽस्मीत्यभिमानदूषिताः सर्वथा धिक्कुर्वन्ति प्राचीनानि मतानि, तृणावज्ञायमवजानन्ति च प्राचीनमतानुयायिनः पुरुषान् । किमधिकं प्राचीनसमये यद्यन्नाम सुखं सुखमित्येवोद्घोष्यत तत्राधुना तु सर्वं दुखं दुःखमित्येव कर्णारुन्तुदमारटितं समाकर्ण्यते ।

साम्प्रतं तु नव्यशिक्षावधूवशीकृतमानसाः प्रायेण सर्वेऽपि सुधारकंमन्याः पुरुषाः गवां स्थाने पुरीषाशिनः सारमेयानेव पालयितुं प्रवृत्ताः । स्नास्यन्तश्चैते महापुरुषा आत्मनः प्रियवयस्यं सहचरमिव सारमेयमित्रं मलापकर्षकद्रव्येण 'साबुन्' इति नाम्ना प्रसिद्धेन सर्वाङ्गेषु ससंमर्दनं स्नापयित्वा तदवशिष्टेन जलेन स्वयं स्नातुं प्रवर्तन्ते । प्रेष्ठाः ! कियद्वा वक्तव्यमस्माभिरेतेषामार्यजनविगर्हितपाश्चात्त्यदेशाचारानुकरणविषये । यस्य स्पर्शनानन्तरमेव शास्त्रेषु स्नानं विधीयते स एवायं पुरीषप्रणयी सारमेयो हन्त नवीनशिक्षाविलुप्तसदाचाराणामधुना ब्राह्मणानां कृतस्नानानामप्यङ्केषु लब्धस्थितिः सुतरां समाद्रियते । विपण्यां येन केनापि पाचितं येन केनाप्यानीतं यत्र कुत्रापि सोपानत्का अप्युदरपूरमभ्यवहरन्त्येते । शतशो बोध्यमाना अपि नैते दुराग्रहग्रहिलान्तरङ्गाः किमपि शृण्वन्ति । सनासाभ्रूसङ्कोचञ्च तिरस्कुर्वन्ति सदाचारिणः पुरुषान् । सर्वेषामेव अन्यदेशीयानामादर्शतामाश्रयन्तश्च सर्वथा विश्रृङ्खलयन्ति समाजं सर्वथा विसंष्ठुलयन्ति सामाजिकबन्धनानि । स्वल्पेनैव मूल्येन साध्यां पुरातनीमशनवसनादिद्रव्यजातसुलभतां परं स्वास्थ्यञ्च संस्मरतामाधुनिकीञ्च वस्तुजातानामदृष्टपूर्वां महार्घतमतां सर्वतोमुखीं स्वास्थ्यहानिञ्चावलोकयतां देशोपप्लव-प्रजाजनसंहारधनैश्वर्यादिलुण्ठन-स्त्रीजनापहरण-रोगशोकदुःखदारिद्र्यादिप्रपीडितानामनवच्छिन्नमनुक्षणं हाहाकारध्वनिञ्चोच्चैः शृण्वतामपि धर्माचारशून्यानां किंकर्तव्यविमूढानामेतेषां हृदये न कथञ्चिदपि समुदेति करुणालेशोऽपि ।

ननु स्वदेशवासिनो यूयं वर्तध्वे। विधिविधानरचनादीक्षिताश्च भवन्तः सन्ति। युष्मानपहाय केभ्यो वदामः खलु स्वहृदयवेदनाम्। धर्माचारतिरस्कारे सर्वापि प्रजा नूनमुत्पथगामिनी च परस्परघातिनी च स्वेच्छाचारदूषिता च दुराचारिणी च सम्पत्स्यत इति केन वात्र विप्रतिपत्तिः प्रेक्षावताम्। *एकवारं भ्रष्टाचारप्रवृत्ता चेयं प्रजा न खलु स्वयं ब्रह्मणापि सत्पथे प्रवर्तयितुं शक्ष्यते।*

गोजातीनाञ्चेयं कदर्थना तु नूनं भारतवर्षीयाणामस्माकं हृदयहीनतामेवावबोधयति। गणनायामियं गोजातिः प्रतिवर्षं प्रतिदिनं क्षीणतामुपगच्छति। शुद्धं घृतन्तु महता प्रयत्नेनाप्युपलब्धुं न शक्यते। नानारोगनिदानभूतेनाशुद्धेन शार्कमत्स्यतैलसम्वलितेन कृत्रिमेणैव घृतेन मिश्रितमेव तदुपलभ्यते।

अहो कीदृशीयमकृतज्ञतास्मद्देशस्य। नूनमितः परमस्मद्देशे मातृमांसप्रणयितापि कदाचिन्न प्रादुर्भवेत्? समधिकस्वादुबुद्ध्या स्तन्यं पिबन्तः स्तनमपि भक्षयितुं न प्रवर्तेरन्। वृद्धमातापितृपोषणं वृथा व्ययबाहुल्यमिति मन्यमानास्तयोर्मांसेनैव दिनद्वयं संसारयात्रां न निर्वहेयुरिति भीतभीतं हृदयमन्यथा शङ्कते। अतःशीघ्रमेव भवन्तः प्राचीनाचारपरम्परां पुनरप्याश्रयत। अन्यथा दुःखाद् दुःखान्तरमधिगच्छन्तो भूयिष्ठामधिकाधिकमनर्थपरम्परामेव भवन्तोऽनुभविष्यन्तीत्यत्र नास्ति नः स्तोकोऽपि सन्देहः।

संस्कृतभाषाध्ययने शुद्धाचरणे तथात्मनो धर्मे।
सर्वेऽपि भारतीया अधुना समुदासते प्रायः॥ १॥

नूनं ह्युपेक्ष्यमाणो धर्मोऽस्माकं द्रुतं हतो भवति।
हन्तारि निहन्यमानश्चायमुदासीनतां नैति॥ २॥

प्रत्युत समूलमेनं हिंसति धर्मो हतः स्वहन्तारम्।
रक्षति निषेवितारं सम्यक् त्रातश्च यत्नेन॥ ३॥

धर्माश्रयणादेवाभ्युदयं विन्दन्ति मानवा लोके।
धर्मादेवाप्नुवते निःश्रेयसमपि सुदुष्प्रापम्॥ ४॥

यतोऽभ्युदयनिःश्रेयससिद्धिर्नृणां भवेत् स नो धर्मः।
तस्माद्भोगं मोक्षं द्वयमपि चायं प्रसाधयति ॥ ५ ॥

धर्मादेव समस्तं लब्ध्वाभ्युदयं नरोऽत्र नन्दति।
धर्म्याचाराच्चान्तःशुद्ध्या मुक्तिं शनैर्याति ॥ ६ ॥

सन्त्यधरीकृतवाचस्पतयः पृथ्व्यां प्रशस्तविद्वांसः।
शारदसुधाकरोज्ज्वलयशोभिरापूरिताः शान्ताः ॥ ७ ॥

किन्तु यशस्तत्केवलमिह वैदुष्योदितं समुन्मिषति।
न तु तद्धर्माचरणप्रसूतमप्युल्लसत्यत्र ॥ ८ ॥

किं विद्यया तया खलु ययात्र धर्मेऽनुरागिता न स्यात्।
विद्या हि नाम बीजं धर्माचारस्य लोकेऽस्मिन् ॥ ९ ॥

किन्त्विह ये विद्वांसस्ते नेदयन्तेऽत्र धार्मिकप्रायाः।
ये च पुनर्धर्मिष्ठा बिरला खलु तेषु विद्वांसः ॥ १० ॥

कर्माण्याचर्यन्ते नित्यं यावन्त्यहर्निशं मनुजैः।
तेष्वखिलेष्वपि धर्मो नियम्यते धर्मशास्त्रेण ॥ ११ ॥

उद्यद्रविपरदारोदक्यानग्नादिकान् नहीक्षेत।
दर्शनविषये नियमितमेवं बहुधा हि शास्त्रेषु ॥ १२ ॥

प्रियसत्यं भाषेताप्रियसत्यं तु न कदापि कुत्रापि।
प्रियमप्यनृतं न वदेद्धितमितमधुरार्थवादी स्यात् ॥ १३ ॥

न वदेद् रुशतीं वाचं नारुन्तुदमाहतञ्च भाषेत।
भाषणविषये विहिता नियमाः शास्त्रेण भूयांसः ॥ १४ ॥

नास्नातो नानुष्ठितजापो नोदङ्मुखो न वा विमनाः।
नाक्षालितकरचरणाननो ह्यपूतांशुको नैव ॥ १५ ॥

नाहुत्वा देवेभ्यो ना न्युप्यान्नं पितृभ्य आदिभ्यः।
नादत्त्वा गुर्वतिथिज्ञातिसुहृत्स्वाश्रितेभ्यश्च ॥ १६ ॥

नाभक्ताधम-कोपि—क्षुधिताशुचिपरिवेषकः कथञ्चित् ।
नामेध्यायां पाच्यां नादेशे नापि सङ्कुले स्थाने ॥ १७ ॥
नाप्रोक्षिताभिमन्त्रितमनर्पितञ्चेवरायापि ।
भावक्रियादिदुष्टं दुष्टं कृमिकेशमक्षिकाभिश्च ॥ १८ ॥
यत्र क्वाप्यानीतं पाचितमिह येन केनापि ।
नाद्यादन्नं निन्दन्न च पर्युषितं विना फलादिभ्यः ॥ १९ ॥

दधिघृतमधुदुग्धेभ्यो विना द्विजोऽशेषभुङ् न स्यात् ।
न च तामसवस्तूनि ज्ञानावरणक्षमाणि भुञ्जीत ॥ २० ॥

(अपूर्णः)

# रसस्य दार्शनिकभूमिका

*विश्वनाथमिश्रः*

यद्यपि रसशब्दो विभिन्नेषु शास्त्रेषु विभिन्नार्थेषु प्रयुक्तस्तथाप्यत्र वेद्यान्तरस्पर्शशून्यः स्वप्रकाशानन्दस्वरूपोऽलौकिकः साहित्यशास्त्रीयो रसो विवेचनीयत्वेनोपात्तः। एतादृशस्य विलक्षणलक्षणलक्षितस्यास्वादनादनतिरिक्तस्य रसस्य किमस्ति दार्शनिकं प्रेरणास्रोत इति जिज्ञासायां तत्त्वबुभुत्सया प्रस्तूयते समासतः।

सन्ति हि वैचित्र्योपेतेऽत्र जगज्जाले ऐकान्तिकानि दुःखत्रयाणि यद्वशादकामं परिक्लान्तास्तातप्यमानाः प्राणिनो दुखं परिजिहासवः, आनन्दं कामयमानास्तदर्थं भृशं प्रयतमानाश्चावतरन्ति दृष्टिपथम्। तत्र भवति जिज्ञासा—कोऽयमानन्द : ? यदीया समीहा समुद्वेजयति प्राणिनः। यदर्थं नक्तंदिवमेकीकृत्य परितो बंभ्रम्यमाणा अपि नोपयान्ति परां शान्तिम्। तत्र न तावत् स्त्रीपुत्रधनधान्ययानप्रसादाट्टालिका—हर्म्योद्युपवनापलब्धिरेव सुखमिति शक्यते वक्तुम्। एतेषां फलान्तरेच्छाधीनेच्छाविषयत्वेन गौणत्वात्, निरतिशयानन्दरूपत्वाभावात् प्रातिकूल्यदशायां सुखवैपरीत्याच्च। दृश्यते हि स्त्रीपुत्रादौ तावदेव प्रेमा, यावद् वर्तेरन् (वृत्येरन्) तेऽनुकूलताम्। प्रतिकूलतामुपगतेषु तेषु वैरस्यं स्वाभाविकं, प्रत्यक्षसिद्धञ्च। एवञ्च यत्र कादाचित्कः स्नेहः कादाचित्कश्च द्वेषो नासौ सुखपदाभिलाप्यो, न वा आनन्दपदाभिधेय एव भवितुमर्हति इति शक्यते वक्तुं निर्विवादम्। अत एव लोके सुखत्वेन व्यपदिश्यमानस्य वास्तविकसुखरूपत्वाभावेन, किं बहुना विनाशित्वेन दुखाधायकतया च "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुखं विवेकिनः" इति पतञ्जलिचरणाः प्रत्यपीपदन्।

एवञ्चेत् कस्तावत् आनन्दपदार्थः ? इति जिज्ञासायां प्रोच्यते-यत् अभिलषितपदार्थप्राप्तौ तृष्णायां क्षणिकप्रशान्तिमुपगतायां योऽसौ शान्ते स्वान्ते सुखस्याभासः पतति, तस्याभासस्य प्रतिबिम्बस्य वा

निदानं बिम्बभूतः शुद्धान्तरात्मा एवानन्दः। यथा सर्वाणि वस्तूनि आनन्दायैव प्रियाणि भवन्ति, आनन्दस्तु न कस्यापि कृते प्रियो भवति, तथैव सर्वाणि भूतानि आत्मनः कृते प्रियाणि भवन्ति, न तु आत्मा कस्यापि कृते प्रियो भवति। अत एव श्रूयते 'आत्मनस्तु कामाय सर्वं प्रियं भवतीति।' एवञ्च तदभिन्नाभिन्नस्य तत्स्वरूपत्वमिति रीत्या आत्मनः, आनन्दस्य चैक्यं सुतरां सम्पद्यते। अर्थात् आत्मा एव आनन्दः, आनन्द एव चात्मा। 'आनन्दादेव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति, अभिसंविशन्ति' इति श्रुत्या सच्चिदानन्दस्वरूपस्य ब्रह्मणो विवर्त इदं जगदिति कृत्वा जागतिका विषया अपि सिन्धोर्बिन्दुरिव आनन्दांशस्वरूपा एव सन्ति।

सर्वाधिष्ठानस्य परमानन्दस्वरूपस्य भगवतो रसरूपत्वं "रसो वै सः' 'रसं ह्येवायं लब्ध्वा आनन्दीभवति' 'एष एवानन्दयति' 'आनन्दं ब्रह्मणो विद्वान्' 'तस्यैवानन्दस्य मात्रामुपजीवन्ति" इत्यादिश्रुतिभिः प्रसिद्धमेव। अतएव लौकिकेष्वपि विषयेषु तस्यैव रसरूपस्य भगवत आंशिकी अभिव्यक्तिर्जायते। एवञ्चात्मस्वरूपघटकतया दुःखकालुष्याद्यसंसृष्टतया चात्मस्वरूपावगतिरेवानन्दोपलब्धिः, रसोपलब्धिर्वा वक्तुं युज्यत इत्यौपनिषदपथाध्वनीनाद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैताद्वैतादिसम्प्रदायानुसारं (रेण) सम्प्रतिपन्नम्। एषु मतेषु स्यान्नाम विवेचनपार्थक्यं, परन्तु आत्मनो नित्यत्वे आनन्दस्वरूपत्वे चैकमत्यमेवेति प्रथितमेव तत्त्वविदाम्। यद्यपि चार्वाकमते आत्मनोऽभावः बौद्धमते च तस्याशाश्वतिकता, जैनमते च स्याद्वादसरण्या आत्मनः कथञ्चिन्नित्यत्वेऽपि अनानन्दात्मतया तस्य रसरूपत्वं नोपपादयितुं शक्यम्, तथापि अखिलान् अपि इमान् पक्षान् पूर्वपक्षीयत्वेन निराकृत्य सुस्थिरेषु अद्वैतादिवादेषु तत्त्वं सूपपादितमिति निरतिशयानन्दस्वरूपस्य ब्रह्मणो रसरूपत्वे नास्ति मनागपि संशीतिलेशः।

स चायं रसः प्राकृताप्राकृतभेदेन द्विविधः। यत्र प्राकृतकान्ताद्यवच्छिन्नविषयमवलम्ब्य रसाभिव्यक्तिः सा प्राकृतो रसः। अप्राकृतभगवदालम्बनत्वाच्च भवति अप्राकृतो रसः। उक्तञ्च भगवता मधुसूदनसरस्वतीपादेन— "निखिलमपि विषयनिष्ठं प्रेमाणं भगवत्येव प्रति-

ष्ठापयतः सकलविषयविमुखमनसः कस्यचिद् महाभागस्य विगलितायां चित्तवृत्तौ सर्वसाधनफलभूतायां गृहीतायां भगवदाकाराकारितायां विभावानुभावव्यभिचारिसंयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकारतारूपो रत्याख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवतीति ।

किञ्च— भगवान् परमानन्दः (द–) स्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो रसतामेति पुष्कलम् ॥ भक्तिरसायनम् ॥

अयंभावः—विषयाकारतानिराकरणपूर्वकं चित्तस्य भगवदाकारता—सम्पादनमेव सर्वशास्त्रोद्देश्यम् । चित्तस्य भगवदाकारता स्वाभाविकी, चित्तकारणीभूतसूक्ष्मभूतकारणानिर्वचनीयविचित्रानेकशक्तिमन्मायाधिष्ठानस्य नित्यविभोः सर्वत्रानुस्यूतत्वात् । आकाशपूर्णतेव घटस्य । चित्तस्य विषयाकारता तु जलपूर्णतेव घटस्य कारणसाध्या । तथापि अन्याकारताविरोधिभगवदाकारतासम्पादनेन शास्त्राणां सार्थक्यं जायते ।

नचैवं वेदान्तशास्त्रेणैव सिद्धे रसशास्त्रप्रणयनं व्यर्थमेवेति वाच्यम् ? प्रयोजनभेदस्य प्रस्थानभेदप्रयोजकत्वेन ये संसारिणः सुकुमारमतयो विविधवासनावासितान्तःकरणाः काव्यार्थानुशीलनपरायणा अपि परमपुरुषार्थपद्धतिपरिशीलनाऽपटवस्तान् 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इतिरीत्या प्रथमतः अप्राकृतरसे प्रवर्तयितुमशक्यतया गुडजिह्विकान्यायेन प्रथमं प्राकृतरसमास्वादयन्ति रसाचार्याः । यतो यावन्नानुभवपथगोचरीक्रियेत प्राकृतो रसस्तावदप्राकृतरसोपभोगसमीहैव कुतः समुदियात् । अतः प्राकृतरसमीमांसा सचेतसां चेतोऽवतारायाप्राकृतरसे महत्त्वपूर्णां भूमिकां निर्वाहयन्ती प्राथम्यमर्हति । अत उक्तं रससिद्धान्तप्रतिष्ठापनपरमाचार्यैः—"विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिरिति ।"

इदमत्र तत्त्वम्—विविधवैचित्र्योपेतेऽत्र जगज्जालेऽनादिकालतोऽटाट्यां कुर्वतः प्राणिनो दृष्टिपथमवतरन्ति विभिन्नाः स्थितयः । स कदाचित् कुत्राप्यनुरज्यति, कुत्रापि कुप्यति, इतरत्रासूयति, विरज्यते चान्यत्र, बिभेति च कुतश्चित् । आपनीपद्यमानायामेतादृश्यां स्थितौ स्वभावात् कठिनात्मकं चित्तद्रव्यं द्रवत्वं प्रतिपद्यते

तापकैर्विषयैर्योगे जतुवत्। लाक्षा हि स्वभावतः कठिना, तापकाग्नि-द्रव्यादिसमवधानाज् जलवत् द्रवीभावमापद्यते। तत्र च निक्षिप्तो रङ्गो लाक्षायाः सर्वांशे प्रविष्टः सन् यथा लाक्षां स्वाकारतामानयति, तथैव विषयसम्प्रयोगे द्रवावस्थापन्ने चेतसि वस्तुस्वरूपं प्रविष्टं सत् काठिन्य-दशायामपि तत्र सूक्ष्मरूपेणावतिष्ठते। एवञ्च शीततेव तोयस्य, उष्णतेव दहनस्य, संचरिष्णुतेव पवनस्य अनादिकालात् द्रवच्चित्त-प्रविष्टतत्तदिष्टानिष्टविषयकोटिसंकीर्णता चित्तस्य स्वाभाविकी। तत्र चान्तःकरणसंभिन्नाः सूक्ष्मविषया एव वासना भावभावनादिभिर्विभिन्नैः शब्दैरभिलप्यन्ते। तदुक्तम्—

द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना।
संस्कारवासनाभावभावनाशब्दभागसौ॥ भक्तिरसायनम्॥

मानवानामन्तःकरणेषु अवस्थिता इमा भावना एव काव्यक्षेत्र-मवतीर्णाः रत्यादिस्थायिभावपदाभिधीयमानतामुपयान्ति। समुचित-ललितसन्निवेशचारुणा काव्येन समुपस्थाप्यमानेषु विभावादिषु, अभिन-यादिप्रकारान्तरेण वा प्रत्यक्षीक्रियमाणेषु तेषु पुनः पुनरनुसन्धानात्मि-कया काव्यार्थभावनया जायते तेषां साधारणीकरणं, भवति च सहृदया-नामन्तःकरणस्य तदाकाराकारात्मिका चित्तवृत्तिरपि। चित्तवृत्त्यानया विषयीक्रियते विषयावच्छिन्नं चैतन्यमेव। पश्चाच्च विभावादिभिः सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेणानन्दांशतिरोधायकेऽज्ञानावरणेऽपाकृते सति द्रवावस्थापन्नायामन्तःकरणवृत्तावुपारूढं विषयावच्छिन्नचैतन्यमेव पूर्वं भावरूपतामापद्य विगलितवेद्यान्तरसम्पर्कशून्येनानन्दस्वरूपेण वृत्त्य-नवच्छिन्नप्रमातृचैतन्येन सहैकीभावमापद्यते। एकीभावमापन्नयोरनयोः वृत्त्यवच्छिन्नानवच्छिन्नचैतन्ययोराभासेन स्फुरितोऽथवा तेनैव सहास्वा-द्यतां नीयमानो रत्यादिस्थायिभाव एव रसतामञ्चति। तदुक्तम्—

"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।" इति।

अत्र व्यक्त इत्यस्यार्थो व्यक्तिविषयीकृतः। व्यक्तिश्च भग्नावरणा चित् तदास्वादौपयिकभूतव्यञ्जनव्यतिरिक्ता। स च रसश्चर्व्य-माणतैकप्राणो विभावादिजीवितावधिः काव्यार्थमात्रसंभेदादा-त्मानन्दसमुद्भवः। चर्वणा चानन्दांशाभिव्यक्तिः। लौकिकज्ञानान्तरं

तु न तथा, तत्रावरणभंगस्य वक्तुमशक्यत्वात्। अन्यो हि मोदकस्यास्वादोऽन्यश्च प्रत्ययो रसस्य। अतोऽयमतिरिच्यते लौकिकविषयास्वादात्। लौकिकसुखसाक्षात्कारे रजस्तमसोरनभिभवात् तत्र सुखदुःखभानं नैसर्गिकम्। काव्यरसास्वादे तु रजस्तमसोः निगीर्णतया सुखास्वाद एव केवलमिति विशेषः। तदुक्तं पण्डितराजेन-"आनन्दो ह्ययं न लौकिकसुखान्तरसाधारणः अनन्तःकरणवृत्तित्वात्। अस्यायं भावः—घटादिलौकिकविषयप्रत्यक्षस्थले इन्द्रियप्रणालिकया बहिर्गतस्यान्तःकरणस्य विषयाकारता सम्पद्यते। विषयाकारेण परिणतमप्यन्तःकरणं शरीराभ्यन्तरं वर्तमानं सत् शरीरविषययोर्मध्ये मानमिवावतिष्ठते। अयं दण्डायमानो मध्यभागो वृत्तिज्ञानमित्युच्यते। एतत् भागत्रयावच्छिन्नेऽन्तःकरणे अतिस्वच्छकाचोपरि सौरप्रकाश इव आत्मचैतन्याभासः पतति। अत्र नेदं विस्मर्तव्यं यदत्रौपाधिकं चैतन्यद्वयं वर्तते। एकन्तु अन्तःकरणावच्छिन्नं प्रमातृचैतन्यम्, अपरञ्च विषयावच्छिन्नं चैतन्यम्। अनयोश्चैतन्ययोर्वृत्तिज्ञानद्वारा ऐक्यं सम्पद्यते। यथा घटमठयोः सम्मेलने घटाकाशमठाकाशयोरेकीभवनं सम्पद्यते, तथैव विषयप्रदेशे इन्द्रियप्रणालिकया गतेऽन्तःकरणे विषयान्तःकरणयोरुपाध्योरेकत्रीभवने अन्तःकरणावच्छिन्नचैतन्यं विषयावच्छिन्नचैतन्यश्चैक्यमापद्यते एव। ततश्च विषयावच्छिन्नचैतन्येऽध्यस्ता विषयाः, विषयावच्छिन्नचैतन्याभिन्नान्तःकरणावच्छिन्नप्रमातृचैतन्येप्यध्यस्ता भवन्ति। अत एव प्रमातृचैतन्यद्वारा भवति विषयस्यापरोक्षज्ञानम्।

लौकिकसुखादिविषयाणां प्रत्यक्षे उपर्युक्तप्रक्रियाया नान्तरीयकतया तत्रान्तःकरणवृत्त्यवच्छिन्नचिद्रूपता स्वयं सिद्धा। रसरूपानन्दस्तु शुद्धचैतन्यस्वरूपः। तदीयानुभवे तु चित्तवृत्तिरानन्दरूपतयैव परिणमते। नात्रान्तःकरणरूपमवच्छेदकमवतिष्ठते इति निरवच्छिन्नतया रसरूपानन्दस्यानन्तःकरणवृत्तिरूपत्वमुक्तम्। रज्जौ सर्पाध्यास इव, चेतने ब्रह्मणि प्रपञ्चस्याध्यासो वर्तते। तेनैव चेतनेन भवति प्रकाशः प्रपञ्चस्य। परन्तु चैतन्यं तत् आवृतमविद्यया। अतोऽज्ञानावरणमपाकर्त्तुं यथा भवत्यावश्यकता श्रवणमननादीनां तथैव काव्यक्षेत्रे साधरणीकृतविभावादिभिरुत्पादितेन भावकत्वापरपर्यायेणालौकिकव्या-

पारेण व्यञ्जनध्वननप्रत्यायनादिशब्दव्यवहार्येणापाकृत्याज्ञानावरणं रस-श्चर्व्यते । अतएव भग्नावरणचिद्विशिष्टस्य स्थायिनः, स्थायिविशिष्ट-भग्नावरणचैतन्यस्य वा रसत्वं प्रत्यपीदत् पण्डितराजो जगन्नाथः ।

इदमत्र तत्त्वम्—अनावृतात्मचैतन्यप्रकाशितः स्थायिभावो रसः । यद्यपि वासनारूपतया स्थितस्य स्थायिनश्चैतन्यभास्यत्वमयोग्यतया न संभवति, तथापि विभावादिसमवधाने सूक्ष्मरूपस्य तस्य स्थूलरूपत्वं भवतीति कल्पनीयम् । अतएव व्यक्तो दध्यादिन्यायेन रूपान्तरं परिणत इत्यवोचत् दर्पणकारो विश्वनाथः । यथा शरावादिना पिहितो दीपोऽप-सारिते आवरके स्वभासा घटपटादीन् प्रकाशयति स्वयं च प्रकाशते, एवमात्मचैतन्यमपगतेऽज्ञानावरणे विभावादिसम्बद्धान् रत्यादिस्थायि-भावान् चर्वणागोचरीकुर्वन् स्वयं चास्वादविषयो भवति । न च रत्यादि-स्थायिभावाः, अन्तःकरणधर्मत्वेन भासन्तां साक्षिभासा, किन्तु ये खलु विभावादयोऽनन्तःकरणधर्मास्ते कथं भासिष्यन्ते साक्षिणो भासा इति चेदत्रोच्यते—यथा स्वप्नदशायां प्रत्यक्षीक्रियामाणास्तुरगा-दयो बाह्यपदार्थाः कल्पनापोढास्तदानीमिन्द्रियव्यापारविगमेऽपि साक्षा-दात्मना भास्यन्ते तथैव नायिकादयोऽपि बाह्यपदार्था भावनालम्बिताः साक्षादात्मभासा भास्या इति न कोऽपि विरोधः ।

नन्वेवमात्मचैतन्याभिन्नश्चेत् रसस्तदा तस्य नित्यत्वे निर्बाधे, उत्पन्नो रसः विनष्टो रसः इत्यादयो व्यवहाराः कथं सम्पाद्यन्तामिति चेदत्रोच्यते—रसस्य व्यञ्जिका विभावादिचर्वणा । सा च जायते आवरण-भंगात् । एवञ्च चर्वणायाम्, आवरणभंगे चोत्पत्तिविनाशौ तु वर्तेत एव तावेव रसे समारोप्य जायते उपर्युक्तो व्यवहारः । यथा वर्णानां नित्यत्वं व्याचक्षाणा वैयाकरणाः कण्ठताल्वादिव्यापारगतमनित्यत्वं वर्णेष्वारोप्य उत्पन्नो गकारो विनष्टो गकार इति ब्रुवते । वस्तुतस्तु चर्वणा अपि रसानतिरिक्ता इति तत्राप्युत्पत्तिविनाशयोः प्रतिपादनमसा-म्प्रतमेव तथापि घटादिकार्येषु दृष्टिं गतावुत्पत्तिविनाशौ कादाचित्कत्व-साधर्म्येण रसादिचर्वणायां समारोप्य पश्चात् तद्विषयतया रसेऽप्यारो-प्येते इति न काप्यनुपपत्तिः ।

अथवैवं वाच्यम्—भग्नावरणचिद्विशिष्टो रत्यादी रसः । किंवा—

'रसो वै सः' इति श्रुतिस्वारस्येन रत्याद्यवच्छिन्नभग्नावरणा चिदेव रसः, इति विशेषणविशेष्यभावव्यत्यासमादाय "चित् स्थायी" चेति रसस्यांशद्वयम्। तत्र चिदंशमादाय रसस्य नित्यत्वं स्वप्रकाशत्वञ्चास्ति। रत्याद्यंशमादाय तु तस्यानित्यत्वमितरभास्यत्वञ्च वेदनीयम्।

इयं रसचर्वणा समाधावनुभूयमानपरब्रह्मास्वादात् विलक्षणा। तत्र चायं हेतुः—परब्रह्मास्वादो विषयासम्पृक्ततया विशुद्धब्रह्मविषयकः श्रवणमननाद्युपायसाध्यश्च, रसास्वादस्तु विभावादिसम्बलितत्वात् विशिष्टरसविषयको व्यञ्जनाव्यापारवेद्यश्चेति विषयकारणयोः पार्थक्यम्। न चैवं "रसो वै सः, ब्रह्मैव रसः" इति श्रुतिविरोध इति वाच्यम्? "आदित्यो यूपः" इत्यादाविवास्य प्रयोगस्य स्वीकारेणादोषात्। यथा आदित्यार्थं यूपा अपि आदित्यपदेनोच्यन्ते तथैवाप्राकृतरसोपायभूतो लौकिकोऽपि रसः "रसो वै सः" इति श्रुत्योच्यत एव। सर्वेषां शास्त्राणां महातात्पर्ये परमात्मनि सच्चिदानन्दादिरसानन्दादिशब्दानां साक्षात्प्रवृत्तिसत्त्वेऽपि विषयविशेषेऽपि यथा प्रयुज्यते सत्ताशब्दः, चैतन्यशब्दश्च, तथैव रसानन्दादिशब्दानां विषयविशेषे प्रयोगे न काप्यनुपपत्तिः।

'सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियमि'-ति भगवदुक्तिमनुसृत्य समाधौ सुखोपलब्धिवत् 'रसं ह्येवायं लब्ध्वा आनन्दी भवतीति'-श्रुतिप्रामाण्यात् सकलविदग्धजनानुभवप्रामाण्याच्च रसचर्वणायामपि आनन्दोपलब्धौ नास्ति कश्चन प्रत्यवायः। इयं खलु या रसचर्वणा सा काव्यशब्दव्यापारभाव्यत्वात् शाब्दी, तथा प्रत्यक्षविषयीभूतं यत् सुखमानन्दात्मकं तदालम्बनत्वाच्चापरोक्षात्मिका च भवति। न चैवमेकत्र शाब्दत्वं प्रत्यक्षत्वं चेति ज्ञानद्वयं विरुद्धमिति वाच्यम्? भवेन्नाम न्यायादिनये शाब्दत्वप्रत्यक्षत्वयोर्विरोधः, किन्तु वेदान्तनये यथा तत्त्वमसीति महावाक्याज्जायमानायां जीवब्रह्मैक्यप्रतीतौ शब्दजन्यत्वात् शाब्दत्वम्, अपरोक्षब्रह्मविषयकत्वाच्च प्रत्यक्षत्वं स्वीकृतं तथैव अत्रापि शाब्दत्वप्रत्यक्षत्वयोर्न विरोधः। न चैवं प्रपौत्रं प्रति [प्र] पितामहस्य घटं प्रति रासभस्य च कारणत्वं यथा नोपपद्यते अन्यथासिद्धित्वात्, तथैव काव्यशब्दस्यापि रसास्वादं प्रतीति वाच्यम्। नहि घटमि [ट इ] व रसमु [स उ] त्पित्सते, न वा प्रपौत्रमि [त्र इ] व रसोऽपि

बाह्यसत्तासमाविष्टत्वेनोत्पाद्यते। चित्तवृत्तिविशेषस्य केवलं प्रतीतिपथ-गोचरीक्रियमाणस्य रसस्य काव्यनिष्ठोत्थापकतानिरूपितोत्थाप्यैकमात्रत्वात्। उत्थापकतोत्पादकतयोश्च दूरं विभेदसत्त्वेन दृष्टान्त-दार्ष्टान्तिकभावस्यात्र शिथिलप्रायत्वात्। शब्दश्रुतेरनन्तरं जायमान-बोधस्य शाब्दत्वे 'चैत्र पुत्रस्ते जातः' इत्यादौ हर्षशोकादीनामपि शाब्दत्वाशंकनं भ्रान्तिरेवास्थाने। उच्चारिते तस्मिन् वाक्ये जायमान-श्चैत्रनिष्ठो बोधस्तु शाब्द एव। शाब्दज्ञानान्तरं तत्र जायमाना हर्षादय-श्चेष्टादिलिंगैरनुमीयमानाः "चैत्रः सहर्षः सशोकश्च मुखप्रसन्नता-मुखमालिन्याभ्याम्। अत्र शाब्दं ज्ञानं चैत्रनिष्ठं प्रहर्षाद्यनुमितिस्तु अनुमातरि इत्याश्रयभेदाद्भिन्नयोर्ज्ञानयोरैक्यापादनं नातिरिच्यतेऽन्यदा [ च्यत आ ] काशकुसुमान्वेषणात्।

स चायमलौकिकरसास्वादो विभावादिचर्वणाप्राणः, प्रपाणक-रसन्यायेनास्वादपदवीं नीयमानः स्वप्रकाशात्मानन्दमहोदधौ संभिन्न इव ततः पार्थक्येनाननुभूयमानः ख्यापयति स्वकीयां सुखात्मकताम्। तदुक्तं श्रीमधुसूदनसरस्वतीपादैः—

नित्यं सुखमभिव्यक्तं रसो वै स इति श्रुतेः।
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका॥

एवं रसस्य स्वप्रकाशत्वे आवरणभंगादेवानन्दोपलब्ध्या रसं लब्ध्वा आनन्दी भवतीति कथनं व्यर्थमिति वाच्यम्? अनवच्छिन्नचैतन्यस्या-वरणभंगात् रसरूपतां गतेऽपि कान्तादितत्तदवच्छेदकगतदोषगुणानां सम्मिश्रणेनावरणभंगमात्रादेव न भवितुमर्हति आनन्दोपलब्धिरत आनन्दोपलब्धये रसोपलब्धेर्नान्तरीयकत्वं प्रत्यपीपदत् श्रुतिः। न चैव-मपि रसं ह्येवायं लब्ध्वा आनन्दी भवतीति श्रुत्या अयंपदार्थकर्तृक-लाभकर्मैव रसपदेनोक्तम्। तत्र भग्नावरणचैतन्यमेवायंपदार्थः, स एव च कर्मापीति कर्तुः कर्मणश्चैक्यमेव सम्पन्नं, तच्च सर्वथैव विप्रति-षिद्धमिति वाच्यम्? सावरणचैतन्यमयंपदार्थो, निरावरणचैतन्यञ्च कर्मपदार्थ इत्यौपाधिकभेदस्वीकारेणादोषात्। तथा च रससिन्धु-बिन्दुस्थानीयः सोपाधिको जीवः रससिन्धुस्थानीयमनवच्छिन्नं परमात्मानमवाप्यानन्दीभवतीत्यर्थः सम्पद्यते। अत्रैव च एतस्यैवानन्द-

स्यान्यानि भूतानि मात्रामुपजीवन्ति। एष एवानन्दयतीत्यादिश्रुतीनां महातात्पर्यमवतिष्ठते । इमां दार्शनिकपृष्ठभूमिमवलम्ब्य निरतिशयसुखोन्मुखीकरणपरायणमलंकारशास्त्रं जागतिकबिम्बानि विभावादिरूपेणोपकल्प्य, विभावानुभावव्यभिचारिसंयोगात् अभिव्यक्तः स्थायिभावः सभ्याभिनेयभेदमपाकृत्य सभ्येष्वेव तिष्ठन् परमानन्दसाक्षात्कारद्वारा रसस्वरूपतामञ्चतीति प्रतिपादयति। तदर्थञ्च हृदयसंवादापरपर्यायसहृदयत्वभावनयाऽपाकृत्य रजस्तमसी शुद्धसत्त्वोद्रेक एव सरणिरिति तत्त्वविदामाकूतम् इत्यलं पल्लवितेन ।[1]



१. राजस्थानसाहित्याकादमीद्वारा बीकानेरस्थहिन्दीविश्वभारत्यास्तत्त्वाधाने २२।१२।७४ तथा २३।१२।७४ दिनाङ्कयोः समायोजितायां संस्कृतोपनिषदि पठितश्चर्चितश्चायं निबन्धः ।

# कारुण्यं कालिदासस्य

*डॉ० राधावल्लभः त्रिपाठी*

## प्रास्ताविकम्

कालिदासीयकाव्यगतकरुणरसविवेचनात् प्राक् को नाम करुणो रसः किं च तत्स्वरूपमिति प्रश्नः परामर्शमपेक्षामाणस्तिष्ठति। तत्र रससिद्धान्तसूत्रधारो भरतो मुनिः करुणरसस्वरूपमित्थं व्याचष्टे—

> अथ करुणो नाम शोकस्थायिप्रभवः। स च शाप-क्लेश-विनिपतितेष्टजनविप्रयोग-विभव-नाश-वध-बन्ध-विद्रवोपघात-व्यसन-संयोगादिभिर्विभावैः समुपजायते।' ( ना० शा० पृ० ५८० )

अत्र 'आदिभिर्विभावै'—रिति कथयता महर्षिणा करुणरसस्य व्यापकता ऊरीकृता। अत एवात्र परिगणिताः शाप-क्लेशादय एव न करुणरसनिष्पत्त्यै विभावाः, अन्येऽपि सम्भवन्त्येव।

करुणो रसः शोकस्थायिनः प्रभवति। को नाम शोकः? 'पुत्रादिवियोगमरणादिजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषः शोक' इति कथयति उद्भट आलंकारिको जगन्नाथपण्डितः।[1] अत्रापि मरणादिति कथयतोऽस्य विभावानां निःसीमत्वं शोकोत्पत्त्यै समीहितमिति मन्यामहे।

तदेतदत्र विमृशामः। शोकस्थायिप्रभवः करुणः। स च तैस्तैर्विभावैरुपजायते, विभिन्नैश्च व्यभिचारिभिः समुपपोष्यते। न च तत्र क्वचिदपि शोकप्रभवाय तेषामैकान्तिकत्वमसाधारण्यं वा, अतोऽसंख्यानि भवितुमर्हन्ति करुणरसनिष्पत्तेः साधनानि। तेन च एभिरेव विभावैरेतावद्भिरेव व्यभिचारिभिरनुभावैश्च करुणो रसरूपतामापादनीय इत्येतादृशी संकीर्णा मतिरत्र नोपोद्बलनीया। वस्तुतः करुणो हि नाम कवेरन्तर्मानसगतकारुण्यस्योच्छलनम्, तच्च कारुण्यं यत्र यत्र प्रकर्षं प्राप्नोति, तत्र तत्र करुणो रस इति मन्तव्यम्।

---

१. रसगंगाधरे, पृ० १३०

तत्त्वतस्तु कारुण्यं हि नाम सर्वेष्वेव रसेषु भावेषु वा अनुस्यूतं तत्त्वम्, अत एव 'एको रसः करुण एव निमित्तभेदाद्, भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्' इति सुविचारितं सुकविना भवभूतिना भणितम्। कवेर्मानसं शोकेन कारुण्येन वा आलोडितं सदेव सत् काव्यं सृजति। अत एव सहृदयानन्दवर्धन आनन्दवर्धनः काव्यात्मानं विवृण्वन् शोकप्रभवकाव्यस्यैव उदाहरणत्वेन सस्मार— (ध्वन्यालोके, १।५)

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥ इति।

अत्रेदमाकूतम् कारुण्यं हि नाम सर्वेषु रसेषु अन्तःस्तिमिततया विद्यमानं नितरामनिवार्यं तत्त्वम्। तेनैव रसा रसा इति व्यपदिश्यन्ते। करुणरसाभिव्यक्तौ तु विशिष्य अस्योपस्थितिः अभिप्रेता। वस्तुत एतदेव निकषोपलतया चकास्ति रससिद्धेः। अतएव कालिदासीये काव्ये करुणरसपरिपाकं विमर्शयन्तो यत्र तत्र कारुण्यधारा प्रकर्षेण प्रवहमाणा वरीवर्ति तत्र तत्र विशिष्य दृष्टिक्षेपं प्रकृतप्रबन्धे कर्तुमिच्छामः। रसनिष्पत्तेः शास्त्रीयाः परिभाषाः न यथायथमस्माभिरङ्गीकृतास्तर्हि मा तावत् टिड्ढाव्णपण्डितानां मक्षिकास्थाने—मक्षिकेति—दुराग्रहशीलानां चेतांसि कषायितानि स्युरित्येवास्त्यस्मत्समीहा। शास्त्रीयामेव परिभाषां सर्वथा स्वीकृत्य समालोचनेन समीक्षापद्धतिः संकीर्णा जायते। एतन्न खलु रससूत्रप्रणेतॄणाम् अनूचानानां च काव्यतत्त्वविदां [1]प्रत्यस्मदनास्थानिबन्धनम्, तलावगाहिदृशा तत्कृतसिद्धान्तेषु दृष्टिपातपूर्वकं समुपलभ्यमान-सूक्ष्मं तत्त्वं प्रत्यस्माकं सावधानं जागरूकत्वात्। तस्य सूक्ष्मतत्त्वस्य विचारोपरोधो मा भूदिति शास्त्रीया मानदण्डाः क्वचिदस्माभिः शिथिलीकृता इत्येवास्ति पूर्वनिवेदना।

वस्तुतः करुणो हि नाम रसः कवेर्जीवनदृष्टिः। करुणरसपरिपाकं विदधत् कविः जीवनस्य तांस्तान् प्रसंगान् मर्मस्पृशा दृशा समुन्मीलयति, मानवजीवने अन्तःप्रवहमाणां कारुण्यधारां चोद्घाटयति। इत्थं चास्मन्मतेन पुरातनसिद्धान्तस्वारस्येन च करुणरसाभिव्यक्तिस्तत्रैव भवति यत्र—

---

१. प्रति–योगे षष्ठी नूत्नः प्रयोगः।

(१) कविमानसगतः कारुण्यभावः प्रकटितः स्यात्,

(२) यत्र कविः जीवनस्य विषमदशां समुद्घाटयति, तद्गतोच्चावचत्वं समालोचयन् जीवनगतां विशिष्टां कामपि स्थितिमधिकृत्य सहृदयहृदयं संवेदनमयं विदधाति,

(३) यत्र च तैस्तैर्विभावानुभावव्यभिचारिभिः शोकः स्थायी रसतामुपैति ।

एतांश्च मानदण्डानूरीकृत्य करुणरसदृष्ट्या कालिदासकृतीः निकषयितुमिच्छामः ।

## कारुण्य-धारा

एतदत्र विदाङ्कुर्वन्तु दरमुकुलितलोचना विवेचकाः—शृङ्गारी कविः कालिदास इति समाम्नायते । तथापि बहुशः समायान्ति तस्य सर्जने तादृशाः क्षणा येष्वसौ शृङ्गाराभिनिवेशविरतो करुणाया अगाधसरसि निमज्जति, अस्य अन्तर्मानसगता मनउन्माथिनी व्यथा आभिव्यक्त्यै उत्कायते, सहृदयांश्चासौ कारुण्यधारया स्नपयति । कारुण्यप्रवाहस्तदानीं तत्काव्ये निरर्गलं प्रवहति, घनीभूतः शोकः श्लोकत्वं प्राप्नोति । तद्यथा लुण्ठितजीवननिधिः विनष्टसर्वस्वः सकरुणं सुचिरमजो विलपति—

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥
(रघु० ८।५५)

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥
गृहिणी सचिवः सखी मिथः प्रिय-शिष्या ललिते कलाविधौ ॥
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥
(रघु० ८।६६, ६७)

अत्र सञ्जाते सर्वनाशे मानवहृदयस्य हाहाकारः श्रूयते, विषादस्य तिमिरमयी छाया दृष्टिं च स्थगयति । एतादृशप्रसंगेषु महाकविः

करुणाविगलितमिव द्रवीभूतमिव शोकाकुलितमिव विदधाति रसिक-हृदयम्। स्वल्पैरक्षरैः प्रकटितो भूयान् अभिप्रायो भूयो-भूयोऽस्मद्हृदयं विदारयति कालिदासकृतौ। एकेन पद्येनैव महाकविर्व्यसनोपनिपीडिताया: सीतायाः सम्पूर्णां दुरवस्थां समवतारयति—

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः॥
( रघु० १४। ५६ )

सीतायाः शोकगर्भे संक्षिप्तेऽपि सन्देशे एकैकः शब्दः सममर्दारणं हृदयं विशति—

वाच्यस्त्वया मद्वचनात् स राजा वह्नौ विशुद्धामपि यत्समक्षम्।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य॥
( रघु० १४। ६१ )

कालिदासकाव्ये शोकः अन्तस्तलादुद्गतः हार्दिकानुभूत्या संवलितो विद्यते। तद्यथा प्रतिष्ठमानायां शकुन्तलायां कण्वस्य ऋषेरियमुक्तिः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः॥

( अभि० ४।५ )

अत्र शकुन्तलागमनविभावजनितः चिन्तोत्कण्ठावैक्लव्यादिसहचारिभिरुपचितः स्तम्भितबाष्पवृत्तिकलुषकण्ठत्व - चिन्ताजडदर्शनादिभिरनुभावैरनुभावितः शोकः करुणतां प्राप्नोति। अथ च जागर्त्यत्र प्रश्नः—अत्र शकुन्तलां प्रति वात्सल्यप्राधान्यात् भावध्वनिरेवास्तु, किन्त्वस्मन्मते कवेर्मनोगतं कारुण्यं प्रवहमाणमत्र तिष्ठति, अतएव शास्त्रीयनामसंज्ञादिवादविवादं विहाय करुणो रस एव अस्माभिरूह्यते। शोकस्यैव प्रकर्षः कवेरत्राभिप्रेतः "वैक्लव्यं मम तावदीदृशमि"त्यादिकथनात्। अस्मिन्नवसरे अनुसूयाप्रियंवदयोः 'अयं

जनः कस्य हस्ते समर्पितः' (अभि० पृ० ११४) इति बाष्पाक्षरविक्लव उपन्यासः, कण्वस्य सनिःश्वसितमिदं कथनं च—

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः॥ अभि० ४।२०॥

सर्वमेतत् स्थितेः कारुणिकतां परिवर्धयति। गच्छन्तीं शकुन्तलामनुपश्यन्त्योः सख्योः 'हा धिक् हा धिक्, अन्तर्हिता शकुन्तला वनराज्या' (अभि० पृ० १२४) इति स्नेहव्याकुलो व्याहारः हृदयं शोकाप्लुतं प्रकरोति। वस्तुतः कालिदासकृतिषु शाकुन्तलं रमणीयतममिति यत् समाम्नायते, शाकुन्तलेऽपि चतुर्थोऽङ्क उत्कृष्टतम इति च यन्मन्यते मार्मिकैस्तत्सर्वं शाकुन्तलस्य विशिष्य तद्गतचतुर्थाङ्कस्य च कारुण्यप्रकर्षादेवेति मन्यामहे। प्रथमाङ्के प्रियंवदादीनां स्नेहगर्भा नर्मालापाः, दुष्यन्तस्य शकुन्तलादर्शनं, शकुन्तलायास्तपस्विजनविरोधिविकारगमनीयत्वं, तयोर्गान्धर्वविवाहः सर्वाणि चैतानि वृत्तानि शाकुन्तलगतकरुणरसभूमिकां प्रस्तुवन्ति।

## करुणाया दर्शनम्

सुखेन सह दुःखमपि जीवनं सर्वथा अनुबध्नाति। प्रहर्षेण सह शोकोऽप्यत्रानुस्यूतः। जीवने अपूर्णता विद्यते। अपूर्णतामिमां पर्यालोचयन् महाकविराह—

वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः॥

(कु० ३।२८)

श्लोकोऽयं कालिदासीयं करुणायाः जीवनदर्शनं समुद्घाटयति। जीवने सुखेन सह विद्यमानं दुःखं, सौन्दर्येण सह विद्यमानमस्थैर्यम् च कालिदासः पश्यति।

मरणं प्रकृतिः शरीरिणां
विकृतिर्जीवितमुच्यते बुधैः॥

अत एवासौ वसन्तावताररमणीये काले सर्वत्र विकीर्यमाणे रामणीयके मदनदहनप्रसंगमवतारयति। प्रस्फुरति सौन्दर्ये प्रसरति चोल्लासे सहसैव वज्रपातः संजायते, किमिदमाकस्मिकं परापतितमिति झटित्यनाकलयन्त्या रत्या—

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥

( कु० ४।३ )

पार्वत्याः हृदयं हताशं संजायते, आकांक्षाणां भवनं सहसैव धूलिसाज्जायते। अद्वितीयमपि सौन्दर्यं क्षणेन विनष्टं भवति—

उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया।
तदिदं गतमीदृशीं दशाम् ॥ ( कु० ४।५ )

परिस्थितीनां संघातेन कथं जीवनस्य दशापरिणामः दारुणः सञ्जायत इति कविः सकरुणं परामृशति। सौन्दर्य-स्नेह-सम्भृते लोके रममाणोऽजः क्षणेनैव करालकालं प्रत्यक्षीकरोति। दुर्भागधेयेन कथं विषमा जीवनगतिः सञ्जायत इति कवीश्वरः मार्मिकतया प्रदर्शयति—

कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥

( रघु० ८।४४ )

अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ॥

( रघु० ८।४७ )

कालिदासः स्वीयतलस्पर्शिदृशा जीवनेऽनुस्यूतं कारुण्यं करुणापूर्णप्रसंगांश्च समुद्घाटयति। शाकुन्तलस्य पञ्चमाङ्के विशिष्य वर्तते दुःखदं दृश्यम्। एकतस्तिष्ठति प्रत्याख्यानकातरा शकुन्तला क्वचित् स्वभागधेयानि निन्दन्ती क्वचिद् रोषरूषितनयना च; पुरतस्तस्यास्तिष्ठति दुष्यन्तः कण्वशिष्याभ्यां भर्त्स्यमानः, 'इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेत्यध्यवस्यन्'; सोद्वेगहृदया तपस्विनी गौतमी च तत्रैव स्थिता तदेतत् सर्वमपि विवादगर्भं करुणाप्लुतं च वरीवर्ति। दुष्यन्तस्य कथनानि—

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरु च ॥ ५।२१
इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।[1]

एवमादिभिरात्मकामनिर्वर्तिनीनामनृतमयवाङ्मधुधाराभिराकृष्यन्ते विषयिणः ।[1]

इत्यादीनि शकुन्तलाया हृदयमर्मव्रणं परिस्फोटयन्ति पुनः पुनः । तथैव शार्ङ्गरवस्य—

इत्थमात्मकृतमप्रतिहतं चापलं दहति ।
अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ ५।२४

तथा च—'आजन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य'—

इत्यादिव्यङ्ग्यगर्भा भणितयः स्थितेर्मार्मिकतां परिवर्धयन्ति ।

## नारीजीवनम्

वस्तुतः अस्मिन्नङ्के नारीजीवनस्य दुःखान्तिका (Tragedy) सममर्घातं महाकविना समुद्घाटिता । हृदयन्तुदः खलु शार्ङ्गरवस्यायं कथनोद्घातः—

अनुष्ठितो गुरोः सन्देशः । प्रतिनिवर्तामहे ।

( राजानं प्रति )—

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ ५ । २६[2]

'प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु इति करुणकरुणं गौतम्या आह्वानं शार्ङ्गरवस्य च सरोषं निवृत्य, किं पुरोभागिनि

---

१. आभि० पृ० १४५

२. अभि० पृ० १५२

स्वातन्त्र्यमवलम्बसे' इति भर्त्सना शकुन्तलाया दारुणां दशां निदर्शयति। अन्ततश्च—

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पितुरुत्कुलया त्वया।
अथ तु वेत्सि शुचिव्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ अभि ५।२७

इति शार्ङ्गरवोपन्यासः स्त्रीजीवनस्य शोकसमवेतां सन्त्राससंकुलां विभिषिकां नितान्तकारुणिकतया प्रत्युपस्थापयति।

नारीजीवनस्यैषा कारुणिकी विभीषिका महाकवेः त्रिष्वेव रूपकेषु निदर्शनं प्राप्ता। विक्रमोर्वशीये काशिराजपुत्री यथाशक्यं वज्रमयमिव स्वहृदयं कृत्वा अकथयत्—'अद्य प्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते या आर्यपुत्रस्य समागमप्रणयिनी तया तया प्रीतिबन्धेन वर्तितव्यमिति।'[1] वस्तुतः कयापि स्त्रिया एतद्वचनं वैवश्य-नैराश्यतमोग्रस्तहृदयतयैव कर्तुं शक्यते। मधुकरीप्रणयक्रीडायां निमग्नेषु नागरिकेषु पूर्वपरिणीतानां कुलवधूनां कीदृशी दुरवस्था संजायते स्म इति त्रासदो भूतार्थः अत्र सकरुणं प्रकटितः। काशिराजपुत्री यत् स्वातन्त्र्यं नरपतये प्रददौ, तत् स्वतः समुपलब्धं तस्य आसीत्, न तत्र तस्यास्त्यागः, अपितु विवशभावेन प्रकटिता कृत्रिमा उदारतैव। विदूषकः सम्यगिमां स्थितिं विश्लेषयति—'छिन्नहस्तो मत्स्ये पलायिते निर्विण्णो धीवरो भणति—धर्मो मे भविष्यतीति। भवति किं तादृशः प्रियस्तत्रभवान्[3] अन्यत्रापि—'असाध्य इति वैद्येन आतुर इव स्वैरं मुक्तो भवांस्तत्रभवत्या' इति।

मालविकाग्निमित्रेऽपि नारीजीवनस्य इयं दुःखदा दुरवस्था दृश्यते। प्रणयविमुखे राजनि इरावत्या अयं व्याहारः—'अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयं ततोऽहं हास्या भवेयम्'[4] तस्या मनोविषादं प्रकटीकरोति।

---

१. विक्र० पृ० ८८
२. विक्र० पृ० ५०
३. विक्र० पृ० ९२
४. माल० पृ० १२०

## कारुणिकी दशा

परिस्थितिः भाग्यं वा कथं मानवजीवनं संचालयति, तेन च कथं मर्मदारुणा दशास्तत्र परापतन्तीति दुष्यन्तस्य स्थितिं परामृशन् षष्ठेऽङ्के कविश्चित्रयति। दारुणा खल्वियं विडम्बना—

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहुमन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम्॥

(अभि० ६।१६)

शास्त्रीयदृशा अत्र विप्रलम्भ एव विराजते, अस्मन्मते तु करुण एव, जीवनगतविषमदशायाः समुद्घाटनात्।

## पुनर्मिलनं शोकसम्पृक्तम्

विषादगर्भं विद्यते जीवनम्। सुखेन सह दुःखस्याप्यत्र अवस्थितिर्वर्तत एव सन्ततम्। अत एव 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इति महाकविर्जगाद। मिलनेऽपि करुणा परिव्याप्ता भवति। मालविकापरिव्राजिकाभ्यां चेटीद्वयस्य मिलने पूर्वजीवनस्य करुणकरुणाः शोकसम्पृक्ताः स्मृतयोऽविभाज्यतया संयुक्ताः सन्ति। अत एव पुनर्मिलनमलोक्य सहृदयानां हृदयं सुखोच्छ्वासेन सह पूर्वस्मृतिगतशोकेन सम्पृक्तं न जायते किं? शाकुन्तलेऽपि नायकयोः पुनर्मिलनमीदृशमेव। दुर्भागधेयप्रधर्षिते कथं तौ नितरां क्लेशं जग्मतुरिति स्मृतिस्तत्र संयुक्तैव तिष्ठति। अत एव 'मातः क एष' इति पृच्छन्तं तनयं भरतं शकुन्तला कथयति 'वत्स, ते भागधेयानि पृच्छ' इति।[1] शकुन्तलाया अस्मिन् स्वल्पाक्षरे वाक्ये असह्यसन्तापः दारुणशोकश्चाभिव्यक्तिमुपागतौ।

---

१. अभि० पृ० २३२

## कारुण्यस्य प्रसारः

कालिदासीयकाव्ये करुणा सुवितता प्रसृता दृश्यते। जडपदार्थेष्वप्यस्याः प्रसारो महाकविना प्रत्यक्षीकृतः। तथा हि—रामस्य वियोगदशायाम्—

सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम्॥—रघु० १३।२३

त्वं रक्षसा भीरु यतोऽपनीता
तं मार्गमेताः कृपया लता मे।
अदर्शयन् वक्तुमशक्नुवत्यः
शाखाभिरावर्जितपल्लवाभिः॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन् माम्।
व्यापारयन्त्यो दिशि दक्षिणस्या-
मुत्पक्ष्मराजीनि विलोचनानि॥ रघु० १३। २४ २५

सीतानिर्वासनकाले करुणाविष्टा भागीरथी लक्ष्मणं न्यवारयत्—

गुरोर्नियोगाद् वनितां वनान्ते
साध्वीं सुमित्रातनयो विहास्यन्।
अवार्यतेवोत्थितवीचिहस्तै-
र्जह्नोर्दुहित्रा स्थितया पुरस्तात्॥ रघु० १४। ५१

विजने वने कुररीव विलपन्तीं विलोक्य मैथिलीं स्थावरजङ्गमाः सर्वेऽपि भावाः करुणायाः शाश्वतिकभावेन समाविष्टाः—

नृत्यं मयूराः कुसुमानि वृक्षा
दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभाव-
मत्यन्तमासीद् रुदितं वनेऽपि॥ रघु० १४।६९

शोकस्य एतादृशः प्रसारः शकुन्तलायाः पतिगृहप्रस्थानावसरे सर्वत्र तपोवने बभूव—

उग्गलिअदब्भकवला मिआ
परिच्चत्तणच्चणा मोरा।
ओसरिअपण्डुपत्ता मुअन्ति
अस्सू विअ लदाओ ॥—अभि० ४।११

तथा च—

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं नः पुत्रकृतकः पदवीं मृगस्ते ॥ ४।१३

## दुःखदस्मृतीनामनुबन्धनम्

जीवने किमपि सहसैव तादृशं परापतति येन अतीतगताः शोकसमवेताः स्मृतयो मानसे परिस्फुरन्त्यहमहमिकया, जनयन्ति च मनोवेदनाम्। तथा हि कुशलवयोः रामस्य राजसभायामागमने—

तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।
हिमनिष्यन्दिनी प्रातर्निर्वातेन वनस्थली ॥
वयोवेषविसंवादि रामस्य च तयोस्तदा।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥

( रघु० १५।६६,६७ )

स्वकृतानां स्खलितानामपराधानां च स्मृतिर्जनं यदा व्यथयति, तदा तस्य मनोऽनुशयेन ग्रस्तं संजायते। एतादृशी त्रासदायिनी स्मृतिर्जागर्ति दुष्यन्तस्य दुःखकर्षितायां चेतनायाम्—

इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं वाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत् तत् सविषमिव शल्यं दहति माम् ॥

( अभि० ६।६ )

स्वसंस्खलनादेवात्मानम् अनाविद्धान्महार्घरत्नाद् अखण्डात् पुण्यानां फलात् प्रवञ्चितं मन्यमानः पश्चात्तापदह्यमानहृदयः वर्तमानं सर्वथा शून्यमिव पश्यन्नसौ चिन्तयति—

असन्निवृत्त्यै तदतीतमेव
मनोरथानामतटप्रपाताः ॥ ६।१०

यदतीतं तस्य कथां कुर्वन् पुनः पुनरसौ शोकवलितः सञ्जायते—

'राजा—श्रूयताम्। स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह।

विदूषकः—तदो तदो।

राजा—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता—

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।'[1]

## कालिदासस्य वैशिष्ट्यम्

कालिदासः स्वल्पैरेव शब्दैः गहनगहनान् भावान् प्रकटयितुं समर्थः, अत एव तत्कृतकारुण्ये 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदय'-मिति भवभूतेर्भणितिश्चरितार्था भवति। करुणप्रसंगेषु महाकवेः शोक-समीरणमन्तस्तलादुद्गतमिव नितरां मार्मिकं समजनि।

कालिदासीयकरुणरसे कलात्मकः संयमः सर्वत्र राजते। भवभूति-मिव भूयसी व्यथार्तिं नासौ निरर्गलं तनोति विस्तृतशब्दविन्यासैः अभिव्यक्तेः कौशलेन स्वल्पावकाशे भूरिभावभरितां भारतीं समुल्ला-सयति। भवभूतिना उत्तररामचरिते सीतावियोगिनो रामस्य शोकः शताधिकैः पद्यैः प्रकटितः, कालिदासेन तु सीतानिर्वासनानन्तरं रामस्य कष्टावस्था एकेनैव श्लोकेन सम्यक् प्रकटिता—

---

१. अभि० १८४

बभूव रामः सहसा सबाष्प-
स्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता
न तेन वैदेहसुता मनस्तः ॥

( रघु० १४।८० )

अभिव्यक्तेः संयमस्य इयं विशिष्टता कालिदासस्य यथा शक्ति-रपि विद्यते, तथैव तदीया दुर्बलतापि । भवभूताविव कारुण्यस्य प्रबलं समुच्छलनं न तस्मिन् विद्यते । करुणाया अमन्दा धारा कालि-दासेन संयमसाधनया नियमिता ।

जीवनस्य घातप्रतिघातानां दुःखद्वन्द्वानां चित्रणे वाल्मीकेर्यादृशी सूक्ष्मा दृष्टिः परिस्फुरति, न तथा कालिदासस्य । कैकेयीयाचितौ वरा-वुपश्रुत्य दशरथः कीदृशीं शोकाकुलतां जगाम, इति वाल्मीकिरेव समग्रतया सम्यक् प्रकटयितुं प्रभवति, कालिदासस्तु एतादृशं मार्मिकं प्रसङ्गं सर्वथैव परित्यजति । कालिदासे सौन्दर्यमेव समधिकतया परि-स्फुटति, न करुणायाः तीव्रा शक्तिस्तत्र तथा प्रकटीभूता यथा वाल्मीकौ भवभूतौ वा । वाल्मीकिः जीवनस्य उच्चावचत्वं संवेदनमय-हृदा सर्वथा समुद्घाटयति, तत्कृतकरुणाप्रसंगेषु बलशालिता (Vigour) गतिश्च यथा प्रकटीभवतो न तथा कालिदासकाव्ये । रावणो यदा सीतां जहार तदा वाल्मीकिः समापतितं सर्वनाशं हृदयेन अनुभवन्निव तत्सर्व-मपि प्रसंगमवतारयति—

तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमम् ।
मुञ्च मुञ्चेति बहुशः प्राप तां राक्षसाधिपः ।

क्रोशन्तीं राम रामेति रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसंन्निभः ॥

प्रधर्षितायां वैदेह्यां बभूव सचराचरम् ।
जगत्सर्वममर्यादं तमसान्धेन संवृतम् ॥
न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः ।

स तु तां राम रामेति रुदतीं लक्ष्मणेति च ।
जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥

( अरण्य० ५२।७-१३ )

सीताहरणस्येमं मार्मिकं प्रसंगं रघुवंशे कालिदास उपैक्षिष्ट। अशोकवाटिकास्थितसीताया इदं परमकरुणं चित्रमपि कालिदासे दुर्लभमेव—

दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः।
ददर्श दीनां दुःखार्तां नावं सन्नामिवार्णवे॥
असंवृतायामासीनां धरण्यां संशितव्रताम्।
छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः।
मलमण्डनदिग्धाङ्गीं मण्डनार्हाममण्डिताम्।
मृणालीपंकदिग्धेव विभाति न विभाति च॥
अभूतेनापवादेन कीर्तिं निपतितामिव।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव॥
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम्।
प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव।
पौर्णमासीमिव निशां तमोग्रस्तेन्दुमण्डलाम्॥

( सुन्दर १६।४-१३ )

शोकस्य तादृशी व्यापका गहना चाभिव्यक्तिर्न कालिदासकाव्ये सञ्जाता यथा भवभूतेः कवितायाम्। उत्तरचरिते सीतानिर्वासनपश्चात्तापदग्धहृदयः शोकाकुलो यथा रामो वर्तते तथैव शाकुन्तले प्रत्याख्यानापराधक्लिष्टोऽनुशयपीडितो दुष्यन्तो दृश्यते। किन्तु रामस्य पुटपाकप्रतीकाशः करुणो रसो नितरामसह्यः। अतीतगता स्मृतयो दुष्यन्तमानसमप्यभिद्रवन्ति, किन्तु स्मृतीनां घातप्रतिघातेन मनोगतां व्याकुलतां प्रकटयितुं भवभूतिरेव अलम्। शकुन्तलादुष्यन्तयोः पुनर्मिलनं कारुणिकं विद्यते, किन्तु उत्तरचरिते सीतारामयोः पुनर्मिलनं कारुण्येन सर्वथा द्रवीभूतमेव विदधाति हृदयम्।

वस्तुतः शृङ्गारे ललितोद्गारे यथा कालिदासस्य मनो रमते न

तथा गहनविषादमयकरुणप्रसंगेषु। करुणरसप्रसंगेष्वपि शृङ्गारलिप्तः क्वचिदयं कविरवलोक्यते। यथा रतिविलापे--

शिरसा प्रणिपत्य याचिता-
न्युपगूढानि सवेपथूनि च।
सुरतानि च तानि ते रहः
स्मर संस्मृत्य न शान्तिरस्ति मे ॥ कु० ४।१ ॥

विबुधैरसि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृतः।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ ४।१९ ॥

यथा वाऽजविलापे--

सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते।

रघु० ८। ५१

इत्थं यद्यपि न विद्यते कालिदासे वाल्मिकिसदृशी करुणाया जीवनदृष्टिः, न भवभूतेः प्रगाढशोकभरिता वाणी, तथापि तदीय-कृतिषु करुणरसपरिपाकः बहुशः समजनीति न संशीतिलेशः। अजवि-लापरतिविलापसीतासन्देशादिप्रसंगाः करुणरसदृष्ट्या अद्वितीया एव विलसन्ति।

# आयुर्वेद-सारः

*प्रियव्रत-शर्मा*

शरीरेन्द्रियसत्त्वात्मसंयोगो ह्यायुरुच्यते ।
नित्यगश्चानुबन्धश्च धारि जीवितमेव च ॥ १ ॥

तद्वेत्ति विन्दते येन विद्यते यत्र सर्वशः ।
उपवेदेषु मूर्धन्य आयुर्वेदः स उच्यते ॥ २ ॥

ब्रह्मास्यनिःसृतः सोऽयं शाश्वतः परिकीर्तितः ।
सृष्टेः प्रागेव संजातः सुश्रुतेन यथेरितः ॥ ३ ॥

अष्टांगो यः पुराः प्रोक्तश्चरकादिमहर्षिभिः ।
विभिन्नो बहुधा सोऽद्य नानांगैरभिवर्धते ॥ ४ ॥

पुरुषः समवायोऽयं भूतपंचकजीवयोः ।
स्वस्थः स तु कथं तिष्ठेद्रोगमुक्त इति क्रिया ॥ ५ ॥

समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ६ ॥

शरीरं मूलतः प्रोक्तं दोषधातुमलात्मकम् ।
साम्यवैषम्ययोगेन वहत्युत विशीर्यते ॥ ७ ॥

वातः पित्तं कफश्चेति त्रयो दोषा उदीरिताः ।
प्रकृत्यारंभकाश्चापि विषमा दुष्टिकारकाः ॥ ८ ॥

रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ ९ ॥

सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु ।
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ १० ॥

गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ११ ॥

रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।
सप्त प्रोक्ताः शरीरस्य धारणात् पोषणात्तथा ॥ १२ ॥

मलाः मूत्रपुरीषाद्याः मलिनीकरणान् मताः ।
बहिर्गमनशीलाश्च धातूनामपि ते स्मृताः ॥ १३ ॥

अग्निः पाककरः काये परिणामकरः स्मृतः ।
जाठराग्निश्च धात्वग्निः भौतिकाग्निस्तथैव च ॥ १४ ॥

त्वक्पर्यन्तस्य देहस्य षडंगस्य समासतः ।
व्यासतश्च शवच्छेदैः ज्ञानमिच्छन्ति पण्डिताः ॥ १५ ॥

दिनचर्यां रात्रिचर्यामृतुचर्यां तथैव च ।
विधिना पालयन् जीवः स्वस्थस्तिष्ठति नान्यथा ॥ १६ ॥

लोके जनपदोद्ध्वंसप्रतिषेधाय धार्मिकैः ।
भूमिवाय्वुदकादीनां विधेयं शोधनं सदा ॥ १७ ॥

विकाराणां समुत्पत्तौ दोषवैषम्यमुद्धरेत् ।
क्षीणानां वर्धनेनाथ वृद्धानां क्षपणेन च ॥ १८ ॥

एवमुक्तं द्विधा कर्म लंघनं बृंहणं तथा ।
अपतर्पणमाद्यं स्यात् परं संतर्पणात्मकम् ॥ १९ ॥

शोधनं शमनं चापि पुनस्तद् द्विविधं स्मृतम् ।
शोधनानन्तरं युक्तं शमनं हि विशिष्यते ॥ २० ॥

संशोधनी क्रिया प्रोक्ता मलनिर्हरणी तु या ।
ऊर्ध्वाधोभागतश्चाथोभयतोभागतस्तथा ॥ २१ ॥

सामान्यतः प्रयुज्यन्ते पंचकर्माणि शोधने ।
वमनं रेचनं नस्यं निरुहं सानुवासनम् ॥ २२ ॥

सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्विशेषश्च विधिः साधारणो मतः ॥ २३ ॥

गुणकर्माश्रयं द्रव्यं समवायेन युज्यते ।
तत्सामान्यविशेषाभ्यां पदार्था इति षट् स्मृताः ॥ २४ ॥

पंचभूतात्मकं द्रव्यं पंचविंशगुणात्मकम् ।
षड्रसं द्विविपाकं च द्विवीर्यं शक्तिमत्क्रियम् ॥ २५ ॥

महाभूतानि खं वायुरग्निरापः क्षितिस्तथा ।
तेषां संयोगवैशेष्यान् नानाद्रव्यगुणोद्भवः ॥ २६ ॥

गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ।
गुणाः ससूक्ष्मविशदाः विंशतिः सविपर्ययाः ॥ २७ ॥

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ।
षड्द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः ॥ २८ ॥

भौतिकेनाग्निना योगाद् यदुदेति गुणान्तरम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २९ ॥

विपाको द्विविधः प्रोक्तो मधुरः कटुकस्तथा ।
यथासंख्यं गुरुलघू बृंहणं लंघनं मतम् ॥ ३० ॥

अग्नीषोमात्मकत्वात्तु वीर्यं हि द्विविधं स्मृतम् ।
शीतं धात्रीफलाद्युक्तं मरिचाद्युष्णवीर्यकम् ॥ ३१ ॥

प्रभावस्तु विशिष्टा या कर्मशक्तिः स्वभावजा ।
शिरीषस्य विषघ्नत्वं यथा हृद्यत्वमर्जुने ॥ ३२ ॥

दीपनादीनि कर्माणि दृष्ट्वा युक्त्याभिषक्तमैः ।
द्रव्याणि हि प्रयुज्यन्ते वह्निमान्द्यादिके गदे ॥ ३३ ॥

सर्वं द्रव्यं विजानीयात पंचभिर्युक्तिपूर्वकम् ।
नामरूपगुणैः कर्म-प्रयोगैर्विविधैस्तथा ॥ ३४ ॥

योगमेषां तु यो विद्याद् देशकालोपपादितम् ।
पुरुषं पुरुषं वीक्ष्य स ज्ञेयो भिषगुत्तमः ॥ ३५ ॥

# व्यञ्जनाविषये राजशेखरः[1]

रेवाप्रसाद-द्विवेदी

आलंकारिकमहत्तरस्तत्रभवानानन्दवर्धनाचार्यो विक्रमसंवत्सरस्य दशमे शतके स्वोपज्ञार्थान्तरप्रत्यायनौपयिकं व्यापारं शब्दगतातिरिक्तव्यापारतया प्रख्याप्य व्यंजनानाम्ना प्रत्यस्थापयत[2] । किन्तु तमिमं तच्छतकीया एव साहित्यवेधसो नाभ्यारोचन्त । राजशेखरस्तच्छतकीय एव[3] । स हि ध्वन्यालोककर्तारमानन्दवर्धनं नाम्नोद्धरति, ध्वन्यालोकगतान् विषयांश्च तत्र तत्रोपनिबध्नाति । यथा चैतत् तदधोनिर्दिष्टेभ्यः संदर्भेभ्यः स्पष्टम् । तथा हि—

१—आनन्दवर्धनो व्युत्पत्त्यपेक्षया प्रतिभां प्रगुणां श्रेयसीं च मनुते-

'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते[4] ॥ इति ।

तमेतं संदर्भं राजशेखर एवं स्मरति--

'प्रतिभाव्युत्पत्त्योः प्रतिभा श्रेयसी--त्यानन्दः[5] ।
सा हि कवेरव्युत्पत्तिकृतं दोषमशेषमाच्छादयति । तदाह--

---

१. लेख एष जबलपुरविश्वविद्यालयसंस्कृतविभागायोजितायां राजशेखरगोष्ठ्यां पठितो विचारितश्च १९७३ फरवरीमासे ।

२. वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यंजकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् [ ध्व० १।१८ ] ।

३. राजशेखराश्रयदाता कान्यकुब्जाधीश्वरः महेन्द्रपालो वि० ९६० वर्षे राज्यमधिरूढः, आनन्दवर्धनाश्रयदाता कश्मीराधिपः अवन्तिवर्मा च ९४१ वर्षे राज्यादवारुरोह । ततश्च पितामहपौत्रवदनयोराचार्ययोर्वयोभेदः ।

४. ध्वन्यालोक ३।६ वृत्तिः

५. काव्यमीमांसायाः पंचमाध्यायारम्भे । बडौदासंस्करणस्य १६ पृष्ठे ।

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासत ॥' इति

२--आनन्दवर्धनो ध्वन्यालोकस्य चतुर्थ उद्योते कवीनां बुद्धिसंवादं-

'संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥ ११ ॥

एवमुदारतया प्रतिज्ञाप्य तद्भेदांश्च—

संवादो ह्यन्यसादृश्यं तत् पुनः प्रतिबिम्बवत् ।
आलेख्याकारवत् तुल्यदेहिवच्च शरीरिणाम् ॥ १२ ॥

एवमुपस्थाप्य तेषां हेयोपादेयतामेवमुपश्लोकयति—

तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः ॥ १३ ॥
आत्मनोऽन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥ १४ ॥
अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी ।
नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति ॥१५॥

अमुमेव संवादवृत्तान्तं राजशेखरोऽप्येवमुपनिबध्नाति—

अर्थः स एव सर्वो वाक्यान्तरविरचना परं यत्र ।
तदपरमार्थविभेदं काव्यं प्रतिबिम्बकल्पं स्यात् ॥
कियतापि यत्र संस्कारकर्मणा वस्तु भिन्नवद् भाति ।
तत् कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम् ॥
विषयस्य यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात् ।
तत् तुल्यदेहितुल्यं काव्यं बध्नन्ति सुधियोऽपि ॥

[ काव्यमी० १२ पृ० ६३ ]

संवादवृत्तान्त एष संस्कृतकाव्यशास्त्रे ध्वन्यालोकोपक्रान्त एव वैशद्येन, वामनेऽस्य सूत्रात्मतामात्रस्यैवोपलम्भात्[1] । भामहदण्डिभ्यामस्पृष्टत्वात्, काव्यालङ्कारसारेतरस्य उद्भटग्रन्थस्य चानुपलम्भात् ।

---

१. अर्थो द्विविधः, अयोनिरन्यच्छायायोनिर्वा [का० सू० वृ० ३।२।७]

३—आनन्दवर्धनः काव्यस्य शरीरं शब्दार्थरूपमुल्लिखति—"शब्दार्थशरीरं तावत् काव्यमि"[1]—ति । राजशेखरोपि काव्यपुरुषस्य शरीरं शब्दार्थरूपतामेव पश्यति ब्रवीति च—"शब्दार्थौ ते शरीरम्" इति।

४—आनन्दवर्धनः काव्यस्यात्मतां "काव्यस्यात्मा ध्वनिरि" ति ध्वनौ पश्यति, ध्वनेरात्मतां च--

काव्यस्यात्मा स एवार्थस्तथा चादि कवेः पुरा ।
क्रौंचद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।। इत्येवं रसे ।

राजशेखरोऽपि काव्यपुरुषशरीरे रसस्यैव आत्मतामूरीकुरुते—"रस आत्मा" इति ।

५—आनन्दवर्धनः—

क—कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भाव्यम्[2]

ख—मुख्या व्यापारविषयाः सुकवीनां रसादयः[3] ।

ग—रसवन्ति हि वस्तूनि सालंकाराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः[4] ॥

घ—दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः[5] ।।

इत्येवं सर्वत्रैव रसपरिग्रहे संरम्भवानालोक्यते । राजशेखरोऽपि रसवत्तां काव्यजीवातुतया नयति, ब्रवीति च लोल्लटमुखेन—

क—अस्तु नाम निस्सीमार्थसार्थः, किन्तु रसवत एवोपनिबन्धो युक्तो न नीरसस्य' इत्यापराजितिः । [का०मी०अ० ६ पृ० ४५]

१. ध्वन्यालोकारम्भ एव ।

२. ध्वन्यालोक ३ पृ० ३३६ चौखं० सं० १९९७

३. ध्वन्यालोक पृ० ३६४

४. ध्वन्यालोक २, पृ० २२२

५. ध्वन्यालोक ४, पृ० ५२८

६. अस्माकं ग्रन्थः 'साहित्यसन्दर्भाः' । तत्रापि साहित्यतत्त्वविमर्शनामा द्वितीयो लेखः ।

ख—रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः ।

[ का० मी० अ० ६ पृ० २० ]

ग—अस्तु वस्तुषु मा वा भूत्, कविवाचि रसः स्थितः ।[1]

घ—रसः कोऽप्यस्तु काप्यस्तु रीतिः कोऽप्यस्तु वा गुणः ।

सर्वं सगर्वं कर्णाटाष्टकारोत्तरपाठिनः ॥[2]

एवमेव आनन्दवर्धनस्तत्र तत्र 'रचना मार्गः, अलंकारः' इत्येवंविधानन्यानपि काव्यधर्मान् स्मरति । राजशेखरोऽप्येषु सर्वेष्वपि विषयेष्ववधत्ते । तत एव च बहुशः "रचनाकविः, अलंकारकविः, उक्तिकविः, मार्गकविः, शास्त्रार्थकविः"[3] इत्यादिषु वचनसंदर्भेषु तस्य नितरां संरम्भः ।

वस्तुतो राजशेखर आनन्दवर्धनस्य निविष्टतमोऽध्येता । आनन्दवर्धनः 'शब्दार्थौ सहितौ काव्यम्' भामहोक्तिमिमामभ्यन्तरीकृत्य—

'अनपेक्षितार्थविशेषाक्षर-रचनैव बन्धच्छायेति नेदं नेदीयः सहृदयानाम् । एवं हि सति अर्थानपेक्षचतुरमधुर-वचन-रचनायामपि काव्यव्यपदेशः प्रवर्त्तेत । शब्दार्थयोः साहित्येन काव्यत्वे कथं तथाविधे विषये काव्यव्यवस्थेति चेत् परोपनिबद्धार्थविरचने यथा तत्काव्यत्वव्यवहारः तथा तथाविधानां काव्यसंदर्भाणाम्'[4]—इति

यदेव साहित्यतत्त्वम् अनवहिततयैव साहित्यशब्दोपन्यासपूर्वमुदगिरत् राजशेखरस्तदेवादाय अलंकारप्रस्थानस्यास्याभिख्यामेवाभिनवामारचयत् 'साहित्यविद्ये'-ति, उज्जगार च प्रथमं वारं कृत्स्नेऽपि साहित्येतिहासे—

'आन्वीक्षिकी-त्रयी-वार्त्ता-दण्डनीतयश्चतस्रो विद्या इति कौटल्यः, पञ्चमी साहित्यविद्येति यायावरीयः । सा हि

१. काव्यमी० अ० ९, पृ० ४६

२. काव्यमी० अ० ८, पृ० ३४

३. काव्यमी० अ० ७, पृ० १७

४. ध्वन्यालोकचतुर्थोद्योते पृ० ५३७–८

चतसृणामपि विद्यानां निष्यन्दः । ८०० । शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या ।[1]

इत्येवं साहित्यविद्यायाः पृथग्विद्यात्वम् । संवादगाथायामिव साहित्यतत्त्वगाथायामप्यस्यामानन्दवर्धनसूत्रमेवासौ व्याचिख्यासति[2], भोज-कुन्तक-साहित्यमीमांसाकृद्भ्यो विचारमार्गं च प्रदिशति बहुविधम् ।

आनन्दवर्धनमसौ नितान्तमेवाभ्यास्यदिति तत्तद्वाक्यघटकीभूत-पद-तदभिव्यक्तिप्रकारा-भ्यामपि सुखमुन्नेतुं शक्यते ।[3] एवं सत्यपि

राजशेखरः शब्दवृत्तिविषये आनन्दवर्धनस्यानन्दं न वर्धयति । यथा चैतत् तदस्यानुषङ्गपतितायाः शब्दार्थमीमांसायाः स्पष्टम् । तत्र—

१. *शब्दः*—शब्दविषये आचार्य एष लिखति-

'व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्टादिभिर्निर्दिष्टः' इति ।[4]

२. *अर्थः*—अर्थविषये पुनरसौ विविधानि दर्शनान्युपस्थापयति । तत्र-

मीमांसा, बौद्धदर्शनं चेति द्वयमेव प्रकृतानुरूपम् । तत्र-

मैमांसिकीयं मतं—

'शब्दस्य सामान्यमभिधेयम् , विशेषश्चार्थः । अत्र—

'सामान्यवाचि पदमप्यभिधीयमानं

मां[5] प्राप्य जातमभिधेय-विशेषनिष्ठम् ।

---

१. काव्यमीमांसा अ० ३, पृ० ४–५

२. अस्माकं ग्रंथः 'साहित्यसन्दर्भः । तत्रापि साहित्यतत्त्वविमर्शनामा द्वितीयो लेखः ।

३. आनन्दवर्धनो वदति–शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ १ ॥
राजशेखरोऽनुवदति– 'शब्दार्थशासनविदः कति नो कवन्ते' इत्यादि [ काव्यामी० अ०—१२, पृ०–७८ ] ।

४. का० मी० अ०–६

५. मां मीमांसकमित्यर्थः । 'सामान्यावच्छादितो विशेषरूप एवासने प्रतिपद्यते' इति मम्मटोपस्थापितोऽन्विताभिधानवादोऽत्र स्पष्टं कृतपदः। अभिहितान्वये सामान्यं जातिः, विशेषश्च व्यक्तिः ।

स्त्री काचिदित्यभिहिते सततं मनो यत्
तामेव वामनयनां विषयीकरोति ।। [1]इति,

बौद्धीयं च मतम्—

'विवक्षापूर्वा हि शब्दास्तामेव विवक्षां सूचयेयुः । अत्र—

भवतु विदितं शब्दा वक्तुर्विवक्षितसूचकाः
स्मरयति यतः कान्ते कान्तां बलात् परिचुम्बति ।
न न न म म मा मां स्प्राक्षीर्निषेधपरं वचो
भवति शिथिले मानग्रन्थौ तदेव विधायकम् ।। [2]इति

संक्षिपति । अत्रेदं निध्येयं यन्मताभ्यामाभ्याम् अन्विताभिधानम् अभिहितान्वयः, तात्पर्यञ्चेति वादत्रयं क्रोडीक्रियते । नास्ति चात्र कुत्रापि व्यंजनायाः स्पर्शोऽपि ।

३. *व्यापारः*—व्यापारमधिकृत्य राजशेखरो यदपि ब्रवीति तत इदमेव केवलमायाति यदसावभिधामेव केवलां शब्दव्यापारतयाभ्युपैति । तथाहि—

क. पदानामभिधित्सितार्थग्रथनाकरः सन्दर्भो वाक्यम् । स त्रिधाऽभिधाव्यापारः वैभक्तः, शाक्तः, शक्तिविभक्तिमयश्चेति[3] ।

ख. शब्दार्थयोश्चाभिधानाभिधेयव्यापारप्रगुणतामवबुध्येत्[4] इति ।

ग. व्याकरणस्मृतिनिर्णीतः शब्दः तदभिधेयश्चार्थः[5] इति

घ. उक्तिगर्भमभिधानम्, सर्वतो रहस्यान्वेषणं च[6] इति,

इति यान्यस्य वचनानि एतेभ्योऽभिधाया एव शब्दवृत्तिता प्रमाणिता भवति, न लक्षणाया नापि च व्यंजनायाः ।

---

१–२. का० मी अ०–८, पृ० ३६

३. का० मी० अ०–६ पृ० २२

४. का० मी० अ०–९, पृ० ४८

५. का० मी० अ–६ पृ० २१

६. का० मी० अ०–१० पृ० ४९

अत्रेदमवधेयम्—

ध्वन्यालोकं प्रातिपद्येनाधीतवानपि राजशेखरो व्यंजनां कण्ठरवेण कथं नोल्लिखति। "असौ रसमूरीकुरुते, तद्गतं विप्रलम्भनामानं भेदमुल्लिखति, रसनिबन्धे नीरसत्वपरिहाणौ च ध्यानातिशयं वितरति किन्तु एतत्सर्वप्राणभूतां व्यंजनां न स्मरति। किमत्र कारणम्।

अर्थविचारे राजशेखरः अर्थयोनिं नवमे, अर्थव्याप्तिं दशमे, अर्थाहरणोपायांश्च त्रयोदशेऽध्याये काव्यमीमांसायां सविस्तरमुपस्थापयति। तत्र अर्थव्याप्तिप्रस्तावे रसं प्रतिगृह्णन्नपि स व्यंजनां, व्यंजनाप्रतिपाद्यतां वा अर्थस्य परिहरति। अर्थहरणप्रसंगे आलेख्यप्रख्यस्य अष्टौ, अष्टौ च तुल्यदेहितुल्यस्य अर्थस्य भेदानुल्लिखति, सभेदप्रभेदोपन्यासं च तानुपपादयति, किन्तु तत्रापि प्रतीयमानतामर्थस्य नोल्लिखति। अस्ति चानयोर्भेदयोर्व्यञ्जनाया एव साम्राज्यम् आनन्दवर्धनमतेन।

एतेन स्पष्टं यद् राजशेखरो ध्वन्यालोककारस्य व्यंजनाख्यं शब्दव्यापारान्तरं प्रति तथैव विप्रतिपत्तिकषायितो यथा तदव्यवहितोत्तरभवो भोजदेवः, यथा च तदव्यवहितपूर्वभवो जयन्तभट्टः। भोजदेवो हि ध्वनिं तात्पर्यरूपं मनुते,[1] जयन्तभट्टश्च तस्य गाथामपि न स्मरति[2]। स हि वैयाकरणमतोपन्यासभूमिकायां स्फोटविचारे स्फोटस्य ध्वनिव्यङ्ग्यतां यद्यपि स्मरति तथापि नास्ति तेन ध्वनिकृतोऽभीष्टसिद्धिः। भिन्न एव हि स ध्वनिः, भिन्नैव च सा व्यञ्जना। नास्ति ताभ्यामानन्दवर्धनोपज्ञयोर्ध्वनिव्यञ्जनयोः सम्बन्धः।

सर्वथा व्यञ्जनायां तस्याः शब्दगतारिक्तव्यापारतायां च राजशेखरो ध्वनिकारेण नास्त्येव संवादभाक्। यत एष तद्विषये वाचंयमः, तत एकतरपक्षनिर्णये यद्यपि नह्येव लभामहे विनिगमनां तथापि साधकबाधकप्रमाणोपन्यास-दृशा क्रियमाणे विचारे तु राजशेखरे साधकप्रमाणसंपन्नतां न वीक्षामहे॥



१—एतदर्थं द्रष्टव्योऽस्माकं 'भोजदेवस्य ध्वनिसम्बन्धिनो विचारा' इतिलेखः 'साहित्यसन्दर्भा' इति ग्रन्थे प्रकाशितः।

# शाब्दबोधः[1]

सीतारामशास्त्री

'वाक्यार्थज्ञाने पदज्ञानं पदार्थज्ञानं च कारणं भवति' इति सिद्धान्तात् 'देवदत्तः ओदनं पचतीति वाक्यार्थज्ञानात्पूर्वं तदन्तर्गतानां पदानां, तेषाम् अर्थानाञ्च ज्ञानमावश्यकम्। तथा च 'सुप्तिङन्तं पदम्' सूत्रानुसारेण यद्यप्यत्र पदत्रयं, तथापि 'शक्तं पदम्' 'वाचकं पदम्' इत्यादि दर्शनरीत्या 'देवदत्त + सु + ओदन + अम् , पच् + अ + ति इत्येवमत्र सप्त पदानि दृष्टिपथमवतरन्ति।

वर्णस्फोटस्वीकर्त्तॄणां वैय्याकरणामपि मते प्रकृतौ प्रत्यये च काल्पनिकं वाचकत्वं सुस्थिरमेव। तथा चोक्तं मञ्जूषायां *भट्टनागेशेन*—

"तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवात्तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य, पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः।......तत्तदवयव-तत्तादर्थ-बोधनेन समुदायस्य समुदायार्थस्य च बोधने तात्पर्य्यम् ऋषीणाम् तत्र शास्त्रप्रकियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययास्तत्तादर्थवाचका इति तदर्थः" इति।

## तिङर्थः

### [ कर्तृ-कर्म-भाव-संख्याकालाः ]

तदेवं पदज्ञानानन्तरं तदर्थज्ञानस्य क्रमप्राप्तत्वेन 'पचति' इति पदघटकतिप्रत्ययार्थज्ञानप्रसङ्गेन 'कः खलु तिङ्प्रत्ययार्थ' इति प्रथमं तावत् विचार्य्यते।

अत्र *वैय्याकरणाः "लः कर्मणि च भावे चाकर्मकेभ्यः* ( ३-४-६७ ) इति सूत्रेण *कर्त्तरि कृत्* ( ३-४-६७ ) इति सूत्रतोऽनुवृत्ताकर्त्तरीतिपदकेन तिङ्-

---

१. लेखस्यास्य पूर्वतनोंऽशः का० हि० वि० वि० प्राच्यविद्यासंकायस्य प्राच्यविद्यायाः १—१ अङ्के प्रकाशितः।

स्थानिनां लकाराणां सकर्मकेभ्यो धातुभ्यः कर्त्तरि कर्मणि, अकर्मकधातुभ्यः कर्त्तरि भावे च विधानात् तिङां कर्तृ-कर्म-भाव-वाचकत्वं सिद्धम्।

तथा च सकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्त्तृवाचकाः, सकर्मकधातुसमभिव्याहृतयगाद्युत्तरलकाराः कर्मवाचकाः। एवम् अकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्त्तृवाचकाः, अकर्मकधातुसमभिव्याहृतयगाद्युत्तरलकाराः भाववाचकाः इति विवेकः। देवदत्त ओदनं पचति, पच्यते देवदत्तेन ओदनः, शेते चैत्रः, शय्यते चैत्रेण, इत्यादीनि क्रमादुदाहरणानि। पचतीत्यत्र तिपः कर्त्रर्थक-शप्प्रत्ययाव्यवहितोत्तरत्वेन यगादिप्रत्ययानुत्तरत्वात् कर्त्तृवाचकत्वम्। पच्यते इत्यादौ च 'ते' इत्यस्य यक्प्रत्ययाव्यवहितोत्तरत्वेन कर्मवाचकत्वम्, पच्धातोः सकर्मकत्वात्। एवमेव शेते इत्यत्र 'ते' इत्यस्य कर्त्तृवाचकत्वम्, शय्यते इत्यत्र च यक्प्रत्ययोत्तरत्वेन भाववाचकत्वं 'ते' इत्यस्यावधार्य्यम्" इत्याहुः।

तदुक्तं *वैयाकरणभूषणसारे*—

*फलव्यापारयोर्धातुः, आश्रयेतु तिङः स्मृताः*

धात्वर्थं निरूप्य तिङर्थमाह आश्रयेत्विति। फलाश्रये व्यापाराश्रये चेत्यर्थः। फलाश्रयः कर्म, व्यापाराश्रयः कर्त्ता। फलव्यापारयोर्धातुलभ्यत्वान्न तिङः तदंशे शक्तिः, अन्यलभ्यत्वात्' इति।

वर्त्तमाने लट् परोक्षे लिट्, भूते लुङ् इत्यादिना तेषु तेषु कालेषु, तान्येकवचन-द्विवचनेत्यादिना लब्धैकवचनद्विवचनादिसंज्ञकानामेषां द्व्येकयोर्द्विवचनैकवचने, 'बहुषु बहुवचनम्' इत्याभ्यामेकत्वद्वित्वाद्यर्थे विधानाच्च संख्याकालबोधकत्वमपि तिङां निर्विवादम्। तदेवं तिङर्थाः कर्त्तृ-कर्म- भाव-संख्या-कालाः पञ्च संवृत्ताः।

ननु लः कर्मणि चेत्यादिना सूत्रेण लकारस्यैव कर्त्तृकर्मभाववाचकत्वमादिष्टं न तु तिङः इति तु नाशङ्कनीयम्। 'उच्चारित एव शब्दः प्रत्यायको नानुच्चारित' इति सिद्धान्तात् प्रत्यायकत्वशक्तेः उच्चार्य्यमाणेषु तिबादिष्वेव (न लडादिषु) सिद्धत्वेन तिबादिनिष्ठशक्तेरेव लडादिष्वारोप इत्यत्रैव सूत्रतात्पर्य्यावधारणात्। तथा चोक्तम् भूषणसारे—

बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य, लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते, नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवदिति।

तथा च आदेशभूतानां तिङादीनामेव वाचकत्वं न तु स्थानिभूतानां लडादीनामिति वैयाकरणानुमतः पन्थाः। नैयायिकास्तु स्थानिनामेव वाचकत्वमामनन्ति।

भट्टनागेशास्तु 'वास्तविकवाचकत्वस्य वाक्ये एव सत्त्वेन लाघवानुरोधेन कल्पितेषु पद-प्रकृति-प्रत्ययादिषु वाचकत्वमपि काल्पनिकमेवेति सिद्धान्तिततया आदेशानां वाचकत्वं स्थानिनां वा इत्याग्रहपूर्णविचारः काकदन्तपरीक्षावन्निष्फल एवे' त्याहुः।

तथा च मञ्जूषा—

"तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययाः तत्तदर्थवाचका इति तदर्थः। उपसर्ग-निपात-धात्वादि-विभागोऽपि एवमेव काल्पनिकः। तस्यैवान्वाख्यानस्य लाघवेन निर्वाहाय स्थानिनो लादयः, आदेशाः तिबादयश्च कल्पिता एव। तेषामर्था अपि कल्पिता एव तत्र स्थानिनामर्था ऋषिभिः कण्ठत उक्ताः। आदेशानाञ्च स्थान्यर्थाभिधानसमर्थस्यैव आदेशता इति न्यायेन ते। मुख्यं वाचकत्वं तु तथा कल्पनया बोधिते तत्समुदायरूपे पदे, वाक्ये वा, लौकिकानां तत एव बोधात्।.....'एवं च स्थानिनां वाचकत्वमादेशानां वेत्यादिविचारो निष्फल एव। कल्पितवाचकत्वस्य उभयत्रापि सत्त्वात्। व्याकरणभेदेन स्थानिनां भेदेऽपि न क्षतिः लिपीनां भेद इवेतिदिक्" इति

तथा च देवदत्तः ओदनं पचतीत्यत्र कर्तृप्रत्ययस्थले तिङर्थयोः आश्रयाभिन्नकर्तुः कालस्य च धात्वर्थभावनायां विशेषणत्वं, तिङर्थभूते आश्रये कर्तृरूपे तिङर्थसंङ्ख्यायाः समवायेन विशेषणत्वं, पच्यते ओदनो देवदत्तेनेति कर्मप्रत्ययस्थले च तृतीयार्थस्य कर्तुः तिङर्थभूतस्य कालस्य च धात्वर्थभावनाविशेषणत्वं, तिङर्थ-संख्या-विशेष्यस्य तिङर्थकर्मणश्च धात्वर्थफलविशेषणत्वं तथाभूतस्य फलस्य चानुकूलत्वसम्बन्धेन धात्वर्थभावनाविशेषणत्वं चाश्रित्योभयत्र क्रमात्—

(१) समवायसम्बन्धेनैकत्वविशिष्ट – देवदत्ताभिन्नाश्रयवृत्तिः ओदननिष्ठविक्लित्त्यनुकूला वर्त्तमानकालावच्छिन्ना भावना, (२) देवदत्ताभिन्नकर्त्तृनिष्ठा समवायेनैकत्वविशिष्टकर्मभूततण्डुलाभिन्नाश्रयनिष्ठविक्लित्त्यनुकूला वर्त्तमानकालावच्छिन्ना भावना-इति भावनामुख्यविशेष्यकमेव शब्दबोधमामनन्ति प्राचीनवैयाकरणाः।

नव्यास्तु कर्मार्थकक्तप्रत्ययस्थले 'पक्वः' इत्यादौ पचधात्वर्थफूत्कारादिरूपव्यापारजन्यविक्लित्तिरूपफलाश्रय इति बोधोदयेन तदनुरोधात् कर्मार्थकतिङन्तस्थलेऽपि फलविशेष्यकबोधस्यैवोचिततया धात्वर्थे फले जन्यत्वसम्बन्धेन व्यापारस्य विशेषणत्वमाश्रित्य देवदत्ताभिन्नाश्रयरूपकर्त्तृवृत्तिवर्त्तमानकालावच्छिन्नव्यापारनिष्पाद्या एकत्वविशिष्टतण्डुलाभिन्नाश्रयनिष्ठा विक्लित्तिरित्येवं फलमुख्यविशेष्यकमेव शाब्दबोधमाहुः।

नैयायिकास्तु कर्त्तृनिष्ठे प्रयत्ने कृतिरूपे एव तिङः शक्तिर्न तु कर्त्तरि, गौरवात्-इत्याहुः। तथा हि कर्त्तरि तिङः शक्तत्वे शक्यः कर्ता, शक्यतावच्छेदको धर्मः कर्त्तृत्वं तच्च कृतिमत्त्वपरपर्यायं कृतिरूपमेव। एवं च शक्यतावच्छेदिकायाः तस्याः कृतेः प्रतिकर्त्तृ भिन्नतया शक्यतावच्छेदकधर्माणामानन्त्येन उपस्थितिकृतगौरवस्य वज्रलेपायमानत्वात्। किञ्च जातेरेव स्वरूपतो भाननियमात् कृतेः स्वरूपतः शक्यतावच्छेदकत्वापत्तौ विपुलगौरवस्य शिरसि पातात्, प्रथमान्तदेवदत्तादिपदेन कर्त्तृरूपार्थलाभाच्च। कृतौ शक्तिस्वीकारे तु सर्वासु कृतिषु अनुगतताया एकस्या एव कृतित्वजातेः शक्यतावच्छेदकतया लाघवस्यास्पष्टत्वात्।

नच फलव्यापारयोर्धातुलभ्यत्वेन आश्रयमात्रं तिङर्थः। तदवच्छेमाश्रयत्वञ्चाखण्डोपाधिरिति नात्र मते शक्यतावच्छेदकानन्त्यप्रसक्तिः 'लः कर्मणि च भावे' इति सूत्रेऽनुवृत्तस्य कर्त्तरीतिपदस्यापि आश्रय एवार्थ इति नव्यवैयाकरणमतं सर्वथा निरवद्यमेति वाच्यम्। "स्वतन्त्रः कर्त्ता" इति संज्ञाशास्त्रारम्भबलाद् व्याकरणशास्त्रे क्रियायां स्वातन्त्र्येण विवक्षितस्यैवार्थस्य, न तु आश्रयरू पार्थस्य, कर्त्तृपदार्थत्वेन, स्वातन्त्र्यस्य च कारकान्तरव्यापारानधीनव्यापारवत्त्वरूपतया अतिगौरवग्रस्तत्वात्।

किञ्च आश्रयत्वस्य अखण्डोपाधित्वे प्रमाणाभावत्, आधारतारूपस्य तस्य स्वरूपसम्बन्धानतिरिक्तत्वेनाननुगतत्वाच्च ।

किञ्च पचतीत्यस्य पाकं करोतीति यत्नार्थककरोतिना विवरणदर्शनात् तिङः यत्नार्थकत्वमेवोचितम् । न च कृतेः चेतनधर्मतया रथो गच्छतीत्यादौ का गतिरिति तु नाऽऽशङ्कनीयम् । अचेतनरथादिनिष्ठविशेष्यताकतिङर्थप्रकारताकशाब्दबोधस्थले तिङोऽनुकूलव्यापारे निरूढलक्षणात्वाभ्युपगमात् ।

नव्यास्तु रथनिष्ठगमनानुकूलनोदनव्यापारवति निश्चलपुरुषादौ रथो गच्छतीतिवत् पुरुषो गच्छतीति प्रयोगवारणाय, तथा च जानाति इच्छति, यतते, द्वेष्टि, विद्यते, निद्राति इत्यादौ क्रियानुकूलकृतेः तदनुकूलव्यापारस्य वा अनुभवाभावात् गतिज्ञानादिमत्त्वमात्रप्रतीतेश्च न तदनुकूले व्यापारे, अपितु आश्रयत्वे घटो नश्यतीत्यादौ च प्रतियोगित्वे निरूढा लक्षणेति प्राहुः ।

तथा चोक्तम्—'आख्यातस्य यत्नो वाच्यः, पचति पाकं=करोतीति यत्नार्थककरोतिना सर्वाख्यातविवरणात् ।......व्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः । किङ्करोतीत्यादियत्नप्रश्ने पचतीत्याद्युत्तरस्य यत्नार्थकत्वं विनाऽनुपपत्तेश्च । अचेतने रथो गच्छतीत्यादौ च अनुकूलव्यापारे लक्षणेति प्राञ्चः ।

अन्यदपि गमनानुकूलनोदनादिमति गच्छतीत्यप्रयोगात् , जानाति, इच्छति, यतते, द्वेष्टि, विद्यते, निद्रातीत्यादौ च क्रियानुकूलकृतिव्यापारयोरप्रतीतेर्गत्यादिमत्त्वमात्रप्रतीतेश्च आश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढा लक्षणा । 'चैत्रः पचति तण्डुलः मैत्रः, पच्यते तण्डुलः' इत्यादावन्वयाबोधात् धात्वर्थप्रातिपदिकार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया सम्बन्धमर्य्यादया तद्भानस्यासम्भवादिति तु नव्याः' इति ।

सा च तिङर्था कृतिः शब्दबोधे देवदत्तादौ कर्त्तरि प्रकारीभूय भासते । अर्थात् कृतिः देवदत्तादिनिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नविषयतावती जायते । अत्र प्रथमान्तार्थमुख्यविशेष्यताकशब्दाबोधो जायते । तथा च देवदत्त ओदनं पचतीत्यत्र ओदनकर्मकपाकानुकूल-

वर्त्तमानकालावच्छिन्नकृतिमानेकत्वविशिष्टो देवदत्तः' इत्याकारको नैयायिकराद्धान्तसिद्धः शाब्दबोधः कृतिप्रकारकदेवदत्तादिविशेष्यक :।

## आख्यादपदार्थः

'आख्यातस्य यत्नो वाच्यः' इत्यत्र आख्यातपदं तिङाम्बोधकं नैयायिकानाम्। तथाचोक्तम् श्रीजगदीशेन शब्दशक्तिप्रकाशिकायाम्—

'धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने।
समर्थः स्वार्थयत्नस्य शब्दो वाऽऽख्यातमुच्यते ॥

धात्वर्थावच्छिन्नविधेयताकान्वयबोधसमर्थः शब्दो वा आख्यातम्। तदेव च तिङ् इत्यर्थाल्लभ्यते। तिङाख्यातयोः पर्य्यायत्वात्' इति

वैय्याकरणास्तु—'चत्वारि शृङ्गा त्रयो अस्य पादा' इति मन्त्रव्याख्यावसरे चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च इतिं भाष्यात्, निरुक्ताच्च आख्यातपदस्य धातावेव शक्तिरित्यभ्युपगच्छन्ति। तथा हि तत्र नाम पदेन यथा असुबन्तस्य 'राम' इति प्रातिपदिकमात्रस्य बोधः,' तथैव आख्यातपदेनापि प्रकृतिमात्रस्य अतिङर्थस्य पचादेर्धातोरेव बोधः समुंचितः। अत एव 'सर्वं नाम च धातुजमाह शकटस्य च तोकम्' एतन्मूलभूतं 'नामानि आख्यातजानीति शकटायनः' इति वाक्यमपि संगच्छते। नाम्नां प्रकृतिरप्रत्ययान्तो धातुरेव न तु तिङन्त इति नात्र कस्यापि विवादः। एवमेव भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि, इत्यत्रापि नामपदसाहचर्य्यादाख्यातपदेन केवलो धातुरेव बोध्यो न तु तिङन्तः।

'अश्नीतपिबता' 'खादतमोदता' इत्यादौ समासविधायके 'आख्यातमाख्यातेन क्रियासातत्ये' इति गणसूत्रे तु आख्यातपदस्य तिङन्ते लक्षणा न इति न कापि विप्रतिपत्तिः।

ते विभक्त्यन्ताः पदम्' (२।२।६०) इति गोतमसूत्रे न्यायवार्त्तिककृता उद्योतकारेण 'विभक्तिर्द्वयी, नामिकी, आख्यातिकी च। नामिकी स्वादयः, आख्यातिकी तिबादय। तया विशिष्यमाणं पदं द्वेधा भवति नाम च आख्यातञ्च। अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः

शब्दो नाम। यथा 'ब्राह्मण' इति क्रियाकारकसमुदायः कारकसंख्या विशिष्टः। क्रियाकालयोगाभिधायिक्रियाप्रधानमाख्यातम् पचतीति यथा। इत्यादिना धातोरेव आख्यातार्थकत्वमूरीकृतम्। न्यायभाष्यकाराणामप्यत्रैव सम्मतिः तथाहि भाष्यम्—

यथा दर्शनं विकृता वर्णाः विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी नामिकी आख्यातिकी च। ब्राह्मणः पचतीत्युदाहरणम्। इति' 'नाम प्रातिपदिकं, लिङ्गमित्यप्युच्यते व्याकरणप्रभेदे, तत्सम्बधिनी नामिकी, आख्यातं=धातुः, तत्सम्बन्धिनी आख्यातिकी' इति इत्यादिना न्यायभाष्यचन्द्रिका अपि अमुमेवार्थमनुवदति।

नागेशभट्टास्तु 'नामपदेन सुबन्तम्, नमति आख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्तेः। आख्यातम् = तिङन्तम्। 'इत्येवं बृहच्छब्देन्दुशेखरस्य तत्पुरुषप्रकरणे, आख्यातशब्दो तिङन्ते शक्तो लोकव्यवहारात् (५।३।६६) इत्येवमुद्योते, 'तत्रैतन्नामाख्यातयोर्लक्षणं सत्त्वप्रधानानि नामानि, भावप्रधानमाख्यातम्"........तत्राख्यातशब्देन नियमतो जनकाकाङ्क्षं विभक्त्यन्तम्'......भावकालकारक-संख्याः चत्वारोऽर्थाः आख्यातस्य, तत्र भावः प्रधानमिति भाष्याच्च नामान्याख्यातजानीत्यत्र आख्यातपदं तदवयवधातुपरम्' इत्यादिग्रन्थेन तिङर्थनिरूपणे मञ्जूषायाञ्च आख्यातपदस्य तिङन्ततार्थतामेव प्रत्यपीपदन्।

ननु करोतेः व्यापारसामान्यार्थकत्वेऽपि यत्नार्थकत्वे मानाभावेन पचतीत्यस्य पाकं करोतीति विवरणबलादपि तिङो न कृत्यर्थकमपितु व्यापारार्थकत्वमेव सिद्धमिति मीमांसकमतप्रवेशः, वातरोगादिना कम्पमानेनाहं स्पन्दं करोमि इति व्यवहारस्तु व्यापारमध्ये कृतेरपि प्रवेशात् तदभावेन समुदायाभावतात्पर्यक इति चेन्न। घटः कृतः, पटः कृतः, अङ्कुरो न कृतः इति लोकव्यवहारस्यैव करोतेर्यत्नार्थकत्वे दृढतरप्रमाणत्वात्।

अन्यथा कृञो व्यापारमात्रार्थकत्वे 'कृतः' इत्यस्य 'क्रियाजन्यत्वविशिष्टः' इत्येवार्थत्वेन घटपटाविव अङ्कुरेऽपि कृतव्यवहारप्रसक्तिः स्यात्। यत्त आरम्भकसंयोगादिरूपक्रियाजन्यत्वानुसन्धानस्य व्यवहर्त्तव्यता-

वच्छेदकविशिष्टज्ञानविषया कृतव्यवहारकारणस्य तत्रापि सत्त्वात् ।
तदुक्तम्—

कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
कृञो यत्नाभिधायित्वं न व्यापारप्रसक्तता । इति ।

किञ्च कृञो यत्नार्थकत्वाऽभावे यथा कर्त्रर्थकतृजन्तस्य 'ज्ञाता' इति पदस्य 'ज्ञानाश्रय' इत्यर्थस्तद्वत् 'कर्त्ता' इत्यस्यापि व्यापाराश्रय इत्यस्यैवार्थसम्भवेन कर्तृपदात् सर्वानुभवसिद्धस्य यत्नाश्रयरूपार्थबोधो न स्यात् ।

तदाह श्रीरघुदेवः—ज्ञाता चैत्र इत्यादौ यथा आश्रयबोधकतृच्पदसमभिव्याहृतज्ञाधातुपदाज्ज्ञानाश्रयश्चैत्र इति बोधः, तद्वत् 'कर्त्ता' इत्यत्रापि आश्रयबोधकतृच्पदसमभिव्याहृतकृधातुपदात् 'कृत्याश्रयः' इति बोध उत्पद्यते । स च कृञो यत्नार्थकत्व विना न सम्भवती' ति ।

मीमांसकास्तु रथो गमनं करोति, बीजादिना अङ्कुरः कृतः' इत्यादौ विनाऽपि यत्नं कृञः प्रयोगसत्त्वेन, किंवा अचेतनेऽपि 'स्थालिः पचतीत्यादौ पचतीति प्रयोगदर्शनाच्च न तु कृञो, न वा तिङो यत्नोऽर्थः, अपि तु जनकव्यापार एव । व्यापारे तिङः शक्तिकल्पने बाधकम् विना लक्षणाकल्पनाया अन्याय्यत्वात् कुत्रचित् कृतिः कुत्रचिद् व्यापारस्तिङर्थ इत्यर्धजरतीयस्यानौचित्यात्—इत्यादि सङ्गिरन्ते ।

"तिङः उत्पादनरूपायां भावनायामेव शक्तिर्न तु यत्ने, न वा व्यापारे । तथा च चेतनकर्तृके देवदत्तः पचतीत्यादौ, अचेतनकर्तृके रथो गच्छतीत्यादौ वा सर्वविधप्रयोगे धात्वर्थोत्पादकत्वसत्त्वेन शक्त्यैव कार्यसिद्धौ न लक्षणायाः प्रयोजनम् । पचतीत्यत्र पाकमुत्पादयति, गच्छतीत्यत्र गमनमुत्पादयति, 'यतते' इत्यत्र यत्नमुत्पादयति—इत्याद्यर्थसत्त्वादिति तु रत्नकोषकारा व्यवस्थापयन् ।

# जैनदर्शने प्रमाणविचारः

गोकुलचन्द्रजैनः

भारतीयप्रमाणशास्त्रे जैनदार्शनिकानां महत्त्वपूर्णं योगदानं वर्तते। प्रथमशतकात् प्रारम्याष्टादशशताब्दीपर्यन्तं जैनदार्शनिकानामविच्छिन्न-परम्परा दरीदृश्यते। तैः तैराचार्यैः ये सहस्राधिकाः ग्रन्थाः विरचिताः तेषां सामान्यसर्वेक्षणमपि न सुकरं किं पुनः तेषां विषयविवेचनम्। एतेषु ग्रन्थेषु यः प्रमाणविचारः विद्यते तस्य परिशीलनेन ज्ञायते यत् जैनदर्शने प्रमाणविचारः कालक्रमेण विकासकोटीमाटीकते।

जैनवाङ्मये प्राकृतागमानां महत्त्वपूर्णं स्थानम्। एतेषु प्रमाणचर्चा ज्ञानमीमांसेति कृता वर्तते। आचार्यपादैः उमास्वामिमहोदयैः तत्त्वार्थ-सूत्राख्ये ग्रन्थे तत्सर्वं साररूपेण निबद्धम्। ततः परमाचार्यसमन्तभद्रा-दारभ्य सिद्धसेनदिवाकरभट्टाकलंकदेव-विद्यानन्द माणिक्यनंदि-प्रभाचन्द्र-हेमचन्द्र-यशोविजयप्रभृतिभिः तेषु तेषु ग्रन्थेषु प्रमाणविचारः कृतः। आप्तमीमांसा-न्यायावतार-सिद्धिविनिश्चय-लघीयस्त्रय-प्रमाणसमुच्चय-अष्ट-सहस्री–प्रमाणपरीक्षा–सत्यशासनपरीक्षा–पत्रपरीक्षा–आप्तपरीक्षा-परीक्षा मुखसूत्र–न्यायकुमुदचन्द्र–प्रमेयकमलमार्तण्ड–प्रमाणमीमांसा – जैनतर्क-भाषा-न्यायदीपिकाप्रभृतयः जैन-प्रमाणशास्त्रस्य महनीयाः ग्रन्थाः। एतेषु सामान्येन प्रमाणविचारः चतुष्कोटीमवलम्ब्य कृतः। तद्यथा—

१. प्रमाणस्य स्वरूपम्।

२. प्रमाणस्य भेदप्रभेदाः।

३. प्रमाणस्य विषयाः।

४. प्रमाणस्य फलम्।

*अथ प्रमाणस्य स्वरूपम्*

उमास्वामिमहोदयैः चतुर्भिः सूत्रैः प्रमाणस्य स्वरूपं भेदाश्च प्रतिपादिताः। यथा—

"मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्।

तत्प्रमाणे।

आद्ये परोक्षम्।

प्रत्यक्षमन्यत्।"

एतेषां पञ्चविधज्ञानानां च पुनः विस्तरेण विवेचनम्। उत्तरकालीनाचार्यैरपि ज्ञानस्यैव प्रमाणत्वं समर्थितं न्यायसरणिं चावलम्ब्य तस्य विवेचनं कृतम्। तद्यथा—

'तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम्।'

इत्याप्तमीमांसायां समन्तभद्राचार्याः

'स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षम्।'

इति बृहत्स्वयंभूस्तोत्रे स एव।

प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम्।'

इति न्यायावतारे सिद्धसेनः।

'प्रमाणमविसंवादि ज्ञानम्, अनधिगतार्थाधिगमलक्षणत्वात्।

इति अष्टशत्यां भट्टाकलंकदेवः।

'स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्।'

इति परीक्षामुखसूत्रे माणिक्यनन्दिः।

'तत्स्वार्थव्यवसायात्मज्ञानं मानमिती मतम्।
लक्षणेन गतार्थत्वात् व्यर्थमन्यद्विशेषणम्॥'

इति विद्यानन्दः तत्त्वार्थश्लोकवार्तिके।

'प्रमाणं स्वार्थनिर्णीतिस्वाभावं ज्ञानम्।'

इति सन्मतिटीकायाम् अभयदेवः।

'स्वपरव्यवसायिज्ञानं प्रमाणम्।'

इति प्रमाणनयतत्त्वालोके देवसूरिः।

'सम्यगर्थनिर्णयः प्रमाणम् ।'

इतिप्रमाणमीमांसायां हेमचन्द्रः ।

'सम्यग्ज्ञानं प्रमाणम् ।'

इति न्यायदीपिकायां धर्मभूषणः ।

एवं जैनप्रमाणशास्त्रे सर्वैराचार्यैः ज्ञानस्यैव प्रमाणत्वं प्रतिपादितम् । किं विशिष्टं ज्ञानं इत्यत्र सम्यक् विशेषणम् ।

माणिक्यनन्दिसूरिणा प्रस्तुतं स्वपूर्वार्थव्यवसायात्मकं ज्ञानम् प्रमाणम्' जैनसम्मतप्रमाणस्वरूपम् विशेषेण व्यनक्ति । इत्यत्र स्व-अपूर्वार्थ-व्यवसायात्मकं चेति त्रीणि विशेषणानि ज्ञानस्य ।

लघु अनन्तवीर्यमहाभागैः प्रमेयरत्नमालायामेवम् मीमांसितम्-'प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत् प्रमाणम् । तस्य च ज्ञानमिति विशेषणमज्ञानरूपस्य सन्निकर्षादेर्नैयायिकादिपरिकल्पितस्य प्रमाणत्वव्यवच्छेदार्थमुक्तम् । तथा ज्ञानस्यापि, स्वसंवेदनेन्द्रियमनोयोगिप्रत्यक्षस्य निर्विकल्पकस्य प्रत्यक्षत्वस्य प्रामाण्यं सौगतैः परिकल्पितम्, तन्निरासार्थं व्यवसायात्मकग्रहणम् । तथा बहिरर्थापह्नोतृणां विज्ञानाद्वैतवादिनां पुरुषाद्वैतवादिनां पश्यतोहराणां शून्यैकान्तवादिनाञ्च विपर्यासव्युदासार्थमर्थग्रहणम् । अस्य चापूर्वविशेषणं ग्रहीतग्राहिधारावाहिज्ञानस्य प्रमाणतापरिहारार्थमुक्तम् । तथा परोक्षज्ञानवादिनां मीमांसकानामस्वसंवेदनवादिनां सांख्यानां ज्ञानान्तरप्रत्यक्षवादिनां योगानाञ्च मतमपाकर्तुं स्वपदोपादानम् । इत्यव्याप्त्यतिव्याप्तसम्भवदोषपरिहारात् सुव्यवस्थितमेव प्रमाणलक्षणम् ।

समन्तभद्राचार्यैः 'तत्त्वज्ञानं प्रमाणम्' इत्युक्त्वा तस्य स्वपरावभासकं विशेषणं दत्तम् । सिद्धसेनाचार्यैः तत्र 'बाधविवर्जितम्' इति पदं समायोजितम् । भट्टाकलंकदेवैः अविसंवादित्वम् अनधिगतार्थत्वं चेति विशेषणं दत्तम् । माणिक्यनन्दिमहोदयैरेतेषां सर्वेषां समाहारः 'स्वापूर्वाव्यवसायात्मकं ज्ञानं प्रमाणम्' इत्यस्मिन् सूत्रे कृतम् । आचार्यहेमचन्द्रैः सर्वान् विशेषान् निरस्य 'सम्यगर्थनिर्णयः प्रमाणम्' इत्येव कथितम् । स च सम्यगर्थनिर्णयः सम्यग्ज्ञानेनैव भवति इति न्यायदीपिकायां धर्मभूषणैः 'सम्यग्ज्ञानं प्रमाणम्, इति प्रमाणलक्षणं प्रदत्तम् ।

*अथ प्रमाणभेदाः*

जैननैयायिकैः प्रमाणस्य द्वौ भेदावुररीकृतौ । प्रत्यक्षं परोक्षञ्चेति । तत्त्वार्थसूत्रे 'मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्' इत्युक्त्वा'तत्प्रमाणे' 'आद्ये परोक्षम्' 'प्रत्यक्षमन्यत्' एभिः सूत्रैः प्रमाणस्य द्वौ भेदौ प्रतिपादितौ । तदेव च परीक्षामुखसूत्रे 'तद् द्वेधा' प्रत्यक्षेतरभेदात्' आभ्यां सूत्राभ्यां प्रतिपादितम् । प्रत्यक्षस्य च पुनः द्वौ भेदौ—सांव्यवहारिकप्रत्यक्षम्, पारमार्थिकप्रत्यक्षञ्चेति । सांव्यावहारिकं लौकिकप्रत्यक्षमप्युच्यते । एवं पारमार्थिकप्रत्यक्षं मुख्यप्रत्यक्षमपि कथ्यते ।

किंचेदं प्रत्यक्षप्रमाणम् । 'विशदं प्रत्यक्षम्' । किंचात्र वैशद्यमित्यत्रोच्यते प्रतीत्यन्तरा व्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम् ।' सांव्यवहारिकं च 'इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम् । ' देशतः विशदं ज्ञानं साव्यवहारिकमित्यर्थः । पारमार्थिकप्रत्यक्षं च 'सामग्रीविशेषविश्लेषिताखिलावारणमतीन्द्रियमशेषतो मुख्यम् ।' एवं च केवलज्ञानम् । अतीन्द्रियज्ञानस्य वैशद्यं कथम्, इत्यत्र उदाह्रियते—

पिहिते कारागारे तमसि च सूचीमुखाग्रदुर्भेद्ये ।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥

एवं प्रत्यक्षस्य भेदद्वयं सर्वप्रथमं भट्टाकलङ्कदेवैः प्रतिपादितम् । तदेव च पश्चाद्वर्तीतराचार्यैः विवेचितम् । एवं प्रकारेण मतिश्रुतावधिमनःपर्ययज्ञानानि सांव्यवहारिके प्रत्यक्ष आयान्ति । केवलज्ञानं च पारमार्थिकम् ।

प्रत्यक्षेतरज्ञानं परोक्षमिति 'परोक्षमितरत्' इत्यनेन सूत्रेण प्रतिपादितम् । तच्च स्मृति--प्रत्यभिज्ञान–तर्क-अनुमान--आगमभेदेन पञ्चविधम् । तथा चोक्तम् प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदात् । तत्र च

संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः । स देवदत्तो यथा ।

दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानम् । 'तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि । यथा स एवायं देवदत्तः, गोसदृशो गवयः इत्यादि ।

उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानसमूहः ।
इदमस्मिन् सत्येव भवत्यसति न भवत्येवेति च ।
यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ।
साधनात्साध्यविज्ञानमनुमानम् । तच्च द्वेधा ।

स्वार्थपदार्थभेदात् ।

अयमत्र विशेष :—

साध्याविनाभावित्वेन निश्चितं साधनम् । इष्टमबाधितमसिद्धं च साध्यम् । त्रैरूप्यादिकं न साधनस्य लक्षणम् । तत्सद्भावेऽपि मैत्रीतनयत्वादेर्हेतोरगमकत्वात् । तदभावेऽपि च कृत्तिकोदयादेर्गमकत्वाभ्युपगमात् । तदुक्तम्—

अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ।
नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ।

अन्यथानुपपन्नत्वं यत्र किं तत्र पञ्चभिः ।
नान्यथानुपपन्नत्वं यत्र किं तत्र पञ्चभिः ।

अन्यथानुपपन्नत्वमविनाभाव इत्यर्थः ।

आप्तवचनादिनिबन्धनमर्थज्ञानमागमः । यो यत्रावञ्चकः स तत्राप्तः । आप्तस्य वचनम् । आदिशब्देनाङ्गुल्यादिसंकेतग्रहः । तन्निबन्धनं यस्यार्थज्ञानस्य तदागमः । इत्यत्राप्तशब्दोपादानादपौरुषेयत्वव्यवच्छेदः । अर्थज्ञानमित्यनेनान्यापोहज्ञानस्याभिप्रायसूचनस्य च निरासः ।

*प्रमाणविषयः—*

जैनन्याये प्रमाणस्य ज्ञेयविषयो न केवलं सामान्यम्, न केवलो विशेषः नापि परस्परनिरपेक्षसामान्यविशेषोभयम् । किन्तु सामान्यविशेषात्मकं सर्वं वस्तुजातं तदेव प्रमाणस्य विषयः । प्रत्यक्षतः परोक्षतो वानेकान्तात्मकं वस्त्ववगम्यते । अयं घट इति हि ज्ञाने मृत्तिकाद्रव्यान्वित एव घटपर्यायः प्रतिभासते, 'गामानय' इत्युक्ते गोसामान्यवशिष्टं श्यामादि गोविशेषमेवावगच्छति श्रोता । नहि केवलस्य गोत्वस्यानयनं सम्भवति । तथाप्रतीतेः । नापि गोत्वरहितस्य केवलस्य श्यामादिगोविशेषस्यानयनं

तथासंभवात्। ततः सामान्यविशेषात्मकमेव वस्तु प्रमाणस्य विषयः। एतदेव माणिक्यनन्दिभिः प्रतिपादितम्--

सामन्यविशेषात्मा तदर्थो विषयः।

*प्रमाणस्य फलम्*

प्रमाणस्य किं फलमिति प्रतिपादनावसरे माणिक्यनन्दिभिरुक्तम्—

"अज्ञाननिवृत्तिर्हानोपेक्षाश्च फलम्। प्रमाणादभिन्नं भिन्नं च। यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः।

प्रमाणस्य फलं प्रमितिः सा चाज्ञाननिवृत्तिरूपा। प्रमेयं हि ज्ञात्वा प्रथमं प्रमेयसम्बन्धिनोऽज्ञान्निवर्तते। तदनन्तरमुपादेयमुपादत्ते हेयं जहात्युपेक्षणीयं चोपेक्षते। अतएवाज्ञानान्निवृत्तिः साक्षात्फलं हानोपादानोपेक्षाश्च पारम्पर्येण फलम्। तथाचोक्तं प्रमेय-रत्नमालायाम्—द्विविधं हि फलं साक्षात्पारम्पर्येणेति। साक्षादज्ञाननिवृत्तिः पारम्पर्येण हानादिकमिति, प्रमेयनिश्चयोत्तरकालभावित्वात्तस्येति। तथा चाकलंकदेवाः —

प्रमाणस्य फलं तत्त्वनिर्णयादानहानधीः।
निश्श्रेयसं परं वेति केवलस्याप्युपेक्षणम्॥

एवं च समन्तभद्राचार्याः —

उपेक्षा फलमाद्यस्य शेषस्यादानहानधीः।
पूर्वा वाज्ञाननाशो वा सर्वस्यास्य स्वगोचरे॥

—इति।



# बौद्धदर्शनस्य मूलसिद्धान्ताः

उदयचन्द्रो जैनः

सर्वेषामेवैतत् सुविदितं यत् वर्तमानबौद्धधर्मस्य जन्मदाता महात्मा बुद्ध आसीत् । येन प्रकारेण 'जिन' इति पदमस्ति तेनैव प्रकारेण 'बुद्ध' इत्यपि पदमस्ति । तथा प्रत्येकं प्राणी तस्य पदस्य प्राप्तये समर्थोऽस्ति । एवं प्रकारेण त्रिषु कालेषु अनेके बुद्धा उत्पद्यन्ते । तथा चोक्तम्—

ये च बुद्धा अतीता ये
ये च बुद्धा अनागता ।
पच्चुपन्ना च ये बुद्धा ।
अहं वंदामि सव्वदा ॥

येन प्रकारेण जैनदर्शने तीर्थङ्करप्रकृतेः बन्धनस्य कारणानि दर्शन-विशुद्ध्यादिषोडशभावनाः सन्ति तेनैव प्रकारेण बौद्धदर्शनेऽपि दान-शीलप्रज्ञादयः दश पारमिताः बुद्धत्वप्राप्तेः कारणानि भवन्ति । बुद्धत्व-प्राप्तये पारमितानामभ्यासः परमावश्यको विज्ञेयः ।

भगवतो बुद्धस्य सिंहपुर्यां (अधुना'सारनाथ' इतिनाम्ना प्रसिद्धायां) प्रथमोपदेशोऽभवत् । तस्योपदेशस्य नाम धर्मचक्रप्रवर्तनमस्ति । बुद्धेन प्रतिपादितं यत् प्रत्येकं नरेण चतुर्णामार्यसत्यानां दुःखसमुदयनिरोध-मार्गाणां ज्ञानमवश्यमेवोपार्जनीयम् । आर्यजना एवैतानि सत्यानि जानन्ति । अस्मिन् विषये आचार्यचन्द्रकीर्तिना माध्यमिककारिका-वृत्तौ अत्यन्तं रमणीयं सत्यं च कथितमस्ति । तथाहि—

ऊर्णापद्म यथैव हि करतलसंस्थं न विद्यते पुंभिः ।
अक्षिगतं तु तदेव हि जनयत्यरतिं च पीडां च ॥
करतलसदृशो बालो न वेत्ति संस्कारदुःखतापद्म ।
अक्षिसदृशस्तु विद्वान् तेनैवोद्वेजते गाढम् ॥

अस्मादेव कारणादेतानि दुःखादीनि 'आर्यसत्य'—इति–नाम्ना कथ्यन्ते।

*चतुरार्यसत्यम्*

संसारोऽयं दुःखमयोऽस्ति। जन्मजरामरणक्षुधातृषादिभिः दुःखैः संसारः परिपूर्णो दृश्यते। परिवर्तिनि संसारेऽस्मिन् किञ्चिदपि सुखं नास्ति। जना यत् सुखं कल्पयन्ति तदपि दुःखमेव। इदं दुखार्यसत्यं विज्ञेयम्। एतस्य दुःखार्यसत्यस्य ज्ञानं परमावश्यकमस्ति। येन कारणेन दुःखं समुत्पद्यते तस्य कारणस्य नाम समुदयोऽस्ति। दुःखं समुदेत्यस्मादिति समुदयः। एवं प्रकारेण दुःखस्य कारणानां नाम समुदयो विज्ञेयः। यद्यपि दुःखस्य कारणानि अनेकानि सन्ति तथापि तेषु तृष्णा प्रधानं कारणमस्ति। कामतृष्णा-भवतृष्णा - विभवतृष्णा-भेदेन तृष्णा त्रिविधा भवति। अतः तृष्णा एव दुःखस्य प्रधानं-कारणं विज्ञेयम्। इदं समुदयार्यसत्यं कथ्यते। अस्य ज्ञानमवश्यमेवो-पार्जनीयम्। दुःखानां नाशोऽभावो वा निरोधः कथ्यते। यत्र तृषाक्षुधा जन्ममरणादीनां समस्तानां दुःखानाभावो वर्तते तन्निर्वाणं 'निरोध' इति नाम्ना व्यपदिशन्ति विज्ञाः। इदं निरोधार्यसत्यं विज्ञेयम्। अस्यापि ज्ञानं नितान्तमावश्यकं वर्तते। दुःखनिरोधोपायो हि मार्ग उच्यते। यदि दुःखानां निरोधः संभवति तर्हि तस्य निरोधस्योपायोऽपि अवश्मेव विद्यत एव। निरोधस्योपायः कः? अथवा निर्वाणस्य प्राप्तिः कथं भवति? एतद्विषयकज्ञानस्य प्राप्तये बुद्धेन मध्यमार्गोऽष्टाङ्गमार्गो वा प्रतिपादितः। अष्टाङ्गमार्ग एव मार्गार्यसत्यम्। अष्टाङ्गमार्गस्य नामानि त्वेतानि— १. सम्यग्दृष्टिः, २ सम्यक् संकल्पः, ३. सम्यक् वचनम् ४. सम्यक् कर्मान्तः, ५. सम्यक् आजीवः, ६. सम्यक् व्यायामः ७. सम्यक् स्मृतिः ८. सम्यक् समाधिः।

अस्माभिः एतेषां चतुरार्यसत्यानां ज्ञानमवश्यमेवोपार्जनीयम्। एतेन विना निर्वाणस्य प्राप्तिः दुर्लभा। यथा भैषज्यं विना आरोग्यं न भवति तथैव निर्वाणोपायं (मार्गं) विना निर्वाणं न संभवति। यथा चिकित्सा-शास्त्रे आरोग्यादीनां प्रतिपादनं वर्तते तथैव अध्यात्मशास्त्रे मोक्षादीनां प्रतिपादनं भवति। तथा चोक्तं महर्षिव्यासेन व्यासभाष्ये—

यथा चिकित्साशास्त्रं चतुर्व्यूहं–रोगो, रोगहेतुः, आरोग्यं, भैषज्यं चेति। एवमिदमपि शास्त्रं चतुर्व्यूहं–तद् यथा संसारः, संसारहेतुः, मोक्षः, मोक्षोपायश्चेति।

चतुरार्यसत्यज्ञानमाहात्म्यज्ञापनार्थं बुद्धेन प्रतिपादितम्, भिक्षवः! एतेषां चतुरार्यसत्यानां ज्ञानस्य प्राप्तौ सत्यामेव नराः सर्वज्ञा भवन्ति। मया चतुरार्यसत्यानां ज्ञानं प्राप्तम्। अतोऽहं सर्वज्ञोऽस्मि। यः पुरुषः उपायसहितानि हेयोपादेयतत्त्वानि जानाति स एव सर्वज्ञः। कीटादिसंख्यापरिज्ञानं सर्वज्ञत्वे कारणं नास्ति। दूरदेशस्थपदार्थस्य ज्ञानं वापि सर्वज्ञत्वे कारणं न भवति। किन्तु इष्टतत्त्वज्ञानमनुष्ठेयगतं ज्ञानं वा सर्वज्ञत्वस्य आवश्यकं कारणं विज्ञेयम्। तथा चोक्तमाचार्य - धर्मकीर्तिना प्रमाणवार्त्तिके—

तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम्।
कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते॥
हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः।
यः प्रमाणसमाविष्टो न तु सर्वस्य वेदकः॥
दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु।
प्रमाणं दूरदर्शी चेदेत गृधानुपास्महे॥

*अनात्मवाद* :

न्यायवैशेषिकसांख्यजैनादिभारतीयदर्शनेषु आत्मनः सत्ता स्वीकृता वर्तते। नैयायिकादयः अध्यात्मवादिनः सन्ति। चार्वाकदर्शने पृथिव्यादिभूतानामेव सत्ता, भूतेभ्यश्चैतन्यमुत्पद्यते इति वचनात् न तत्र भूतादन्य आत्मास्ति। अत एव चार्वाकाः शुद्धाः भौतिकवादिनः। बौद्धदर्शनेऽपि आत्मनः सत्ता नाभिमता। तथापि बौद्धा न भौतिकवादिनः किन्तु अध्यात्मवादिन एव। आत्मनोऽस्वीकारेऽपि तत्र विज्ञानस्य स्वीकृतत्वात्।

बुद्धेन कथितं यदात्मा नास्ति। यतो हि आत्मतत्त्वदर्शनस्य कल्पितसमस्यासु पतिता जनाः स्वजीवनस्य समुपस्थितां प्रत्यक्षसमस्यां विस्मरन्ति। अस्मादेव कारणात् तेषां नैतिकपतनं भवति। अतः स्वसमयवर्तिनः जनसमाजस्य मनोवैज्ञानिकविश्लेषणं कृत्वा क्रान्तिदर्शिबुद्धेन

इदमेव प्रतिपादितं यदात्मपरात्मेश्वरादितत्त्वानां विषये विचार आवश्यको नास्ति। सर्वेषां दोषाणामुत्पत्तेः मूलकारणमात्मदृष्टिरेव। ममेदं तवेदं चेदमेव सर्वेषां कलहानां कारणमस्ति। यदि कलहकारणस्य मूलोत्पाटनं कृतं स्यात्तर्हि सुखस्य शान्तेश्च प्राप्तिः संभवा भवति। अस्मिन् विषये आचार्यनागार्जुनेन बोधिचर्यावतारपञ्जिकायां कथितं वर्तते—

य: पश्यत्यात्मानं तस्याहमिति शाश्वतः स्नेहः।
स्नेहात् गुणेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते॥
गुणदर्शी परितृष्यन् ममेति तत्साधनमुपादत्ते।
तेनात्माभिनिवेशो यावत् तावत्तु संसारो॥
आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ।
अनयोः संप्रतिबन्धात् सर्वे दोषाः प्रजायन्ते॥

तत्त्वसंग्रहपञ्जिकायामप्युक्तम्—

साहंकारे मनसि न शमं याति जन्मप्रबन्धो
नाहंकारश्चलति हृदयादात्मदृष्टौ च सत्याम्।
नान्यः शास्ता जगति भवतो नास्ति नैरात्म्यवादी
नान्यस्तस्मादुपशमविधेस्त्वन्मतादस्ति मार्गः॥

माध्यमिकावतारेऽपि द्रष्टव्यं वर्तते—

सत्कायदृष्टिप्रभवानशेषान्
क्लेशांश्च दोषांश्च धिया विपश्यन्।
आत्मानमस्या विषयं च बुद्ध्वा
योगी करोत्यात्मनिषेधमेव॥

अस्मादेव कारणात् बुद्धेनाभिहितं यदात्मा नास्ति। बौद्धदर्शने आत्मनोऽभावेऽपि पुनर्जन्म भवति। यदि आत्मा नास्ति तर्हि कस्य जन्म भवति? अस्य प्रश्नस्य समाधानं बसुबन्धुना अभिधर्मकोशे निम्नरीत्या कृतम्—

स्कन्धपञ्चकमात्रं तु कर्मक्लेशाभिसंस्कृतम्।
अन्तराभवसंतत्या कुक्षिमेति प्रदीपवत्॥

रूपवेदनासंज्ञासंस्कारविज्ञानेति-पञ्चस्कन्धमात्रं कर्मक्लेशैः सम्बद्धं सत् अन्तराभवसन्ततिक्रमेण जन्मधारणं करोति। मृत्योर्जन्मनश्चान्तरालवर्तिकालस्य नाम 'अन्तराभवः' अस्ति, अनेन प्रकारेण पञ्चस्कन्धमात्रमेव जन्म गृह्णाति मरणं च प्राप्नोति, सन्तानक्रमेण च परलोकमपि गच्छति। 'मिलिन्दप्रश्न' – नामके ग्रन्थे भदन्तनागसेनद्वारा राज्ञे मिलिन्दाय अनात्मवादविषयः अनेकैः दृष्टान्तैः सम्यक्रीत्या प्रतिपादितो वर्तते।

*पञ्चशीलम्*

बौधधर्मे शीलं प्रज्ञा समाधिश्चेति त्रीणि आध्यात्मिकोन्नतेः मुख्यानि साधनानि सन्ति। तेषु शीलस्य प्रधानता वर्तते। 'अहिंसासत्यास्तेयब्रह्मचर्यमद्यत्यागाः' एतानि पापाचरणाद् विरतिरूपाणि कार्याणि 'पञ्चशील' इति नाम्ना व्यपदिश्यन्ते। पञ्चशीलस्य आचरणं साधारणजनैः भिक्षुभिश्चापि करणीयं वर्तते। एतदतिरिक्तं भिक्षूणां कृते अपराह्णभोजनत्यागः, मालाधारणत्यागः, संगीतत्यागः, सुवर्णरजतत्यागः, तथा महार्घशय्यात्यागः एतानि अपराणि पञ्चशीलानि प्रतिपादितानि। एवं प्रकारेण दश शीलानि भवन्ति।

*प्रतीत्यसमुत्पादः*

प्रतीत्यसमुत्पादस्यार्थः सापेक्षकारणतावादोऽस्ति। ततश्च हेतुप्रत्ययसापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादार्थः। अस्मिन् सति इदं भवति, अस्योत्पादादयमुत्पद्यते इतीदं — प्रत्ययार्थः प्रतीत्यसमुत्पादार्थः। अयं कार्यकारणनियमः सर्वत्र दृश्यते। कारणं विना किमपि वस्तु नोत्पद्यते। प्रतीत्यसमुत्पादस्य द्वादश अङ्गानि सन्ति। तथाहि—

१. अविद्या, २. संस्कारः, ३. विज्ञानम्, ४. नामरूपम्, ५. षडायतनम्, ६. स्पर्शः, ७. वेदना, ८. तृष्णा, ९. उपादानम्, १०. भवः, ११. जातिः, १२. जरामरणं चेति। एतेषामङ्गानां संज्ञानिदानमप्यस्ति। पूर्वयोः द्वयोः अङ्गयोः सम्बन्धोऽतीतजन्मना सहास्ति। अन्तिमयोः द्वयोः सम्बन्धः भविष्यजन्मना सह विद्यते। शेषाणामष्टानामङ्गानां सम्बन्धो वर्तमानजीवनेन सह वर्तते। अत एव वसुबन्धुना अभिधर्मकोशे प्रतिपादितं यत्—

स प्रतीत्यसमुत्पादः द्वादशाङ्गः त्रिकाण्डकः ।
पूर्वापरान्तयोः द्वे द्वे मध्येऽष्टे परिपूरणाः ॥

*क्षणभङ्गवादः*

क्षणभङ्गवादो बौद्धदर्शनस्य महत्त्वपूर्णः सिद्धान्तोऽस्ति । 'सर्वं क्षणिकं सत्त्वात्' इत्येवं प्रकारेण बौद्धदर्शनानुसारेण कोऽपि पदार्थः एकस्मिन्नेव क्षणे तिष्ठति । प्रथमक्षणानन्तरं कस्यापि पदार्थस्य स्थितिर्नास्ति । अस्य कारणमिदं वर्तते यत् सत्त्वं हि अर्थक्रियाकारित्वं कथ्यते । अर्थक्रियासामर्थ्यलक्षणत्वाद् वस्तुनः । अर्थक्रियाकारित्वं च क्षणिके एव विद्यते । न च नित्ये पदार्थेऽर्थक्रियाकारित्वं कथमपि संभवति । यदिहि नित्यः पदार्थोऽर्थक्रियां कुर्यात् तर्हि स युगपत् क्रमेण वा अर्थक्रियां कुर्यात् । युगपदर्थक्रियाकरणे एकस्मिन्नेव क्षणे सर्वेषां वस्तूनामुत्पादात् द्वितीयक्षणे किमपि करणीयं न स्यात् । अतोऽर्थक्रियाकारित्वाभावेन तस्यावस्तुत्वं प्राप्नोति । क्रमेणार्थक्रियाकरणे हि कारणान्तरापेक्षायां तस्य नित्यत्वं हीयते । कारणान्तरानपेक्षायां च पूर्वक्षणवदुत्तरक्षणेऽपि अर्थक्रिया न भवेत् । सत्त्वमर्थक्रियया व्याप्तम्, अर्थक्रिया च क्रमयौगपद्याभ्याम्, ते च नित्यान्निवर्तमाने स्वव्याप्यामर्थक्रियामादाय निवर्तेते । सापि स्वव्याप्यं सत्त्वमिति नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविशेषात् क्षणिके एवार्थक्रिया विद्यते अर्थक्रियासमर्थं हि स्वलक्षणं भवति । तदेव परमार्थसदुच्यते । तदुक्तं प्रमाणवार्तिके—

अर्थक्रियासमर्थं यत् तदेव परमार्थसत् ।
अन्यत् संवृतिसत् प्रोक्तं ते स्वसामान्यलक्षणे ॥

*अन्यापोहवादः*

बौद्धदर्शने शब्दार्थयोः कश्चिदपि सम्बन्धो न स्वीकृतः । शब्दैरर्थस्य प्रतिपादनं कथमपि न संभवति । असत्यप्यर्थेऽतीतानागतादौ रामशङ्खचक्रवर्त्यादिशब्दस्य प्रवृत्तेर्नास्यार्थाभिधायकत्वम् । अग्नि शब्दं श्रुत्वा अग्नेः यादृशं ज्ञानं जायते न तादृशमेव ज्ञानं अग्नेः स्पार्शनप्रत्यक्षेण चाक्षुषप्रत्यक्षेण वा भवति । तदुक्तम्—

अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः ।
शब्दात् प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥
अन्यथैवाग्निसम्बन्धाद् दाहं दग्धोऽभिमन्यते ।
अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते ॥

अतएव शब्दैरर्थप्रतिपादनं न भवति । तर्हि ते शब्दाः किं कुर्वन्ति इति चेदुच्यते—ते हि शब्दाः वक्तुरभिप्रायस्य ( विवक्षायाः ) सूचकाः सन्ति, तदन्वयव्यतिरेकानुविधानात् । विवक्षा यथार्थं न भवति, विसंवादजाभिप्रायादज्ञानाद्वा अन्यथापि विवक्षासंभवात् । तदुक्तं प्रमाणवार्तिके—

नान्तरीयकताऽभावाच्छब्दानां वस्तुभिः सह ।
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः ॥

अस्मात् कारणात् बौद्धदर्शने शब्दस्य वाच्यो नार्थः, किन्तु अन्यापोह एव शब्दैरुच्यते । अन्यस्यापोहः व्यावृत्तिरित्यन्यापोहशब्दार्थः । शब्दैरर्थप्रतिपादनमकृत्वा अन्येषां पदार्थानां व्यावृत्तिरभावो वा प्रतिपाद्यते । घटशब्दस्य प्रतिपाद्यो घटो नास्ति किन्तु अघटव्यावृत्तिः घटशब्देन कथ्यते । 'अयं घटो न', 'अयं घटो न' इत्येवं प्रकारेणान्येषां घटभिन्नानां सर्वेषां पदार्थानां व्यावृत्तौ क्रियामाणायां सत्यां यः शेषो वर्तते स एव घट इति अघटव्यावृत्त्या घटज्ञानं जायते । एवमेव गोशब्देन नहि पुरःस्थिता गौः प्रतिपाद्यते किन्तु अगोव्यावृत्तिः कथ्यते । या नागौः सा गौरित्यगोव्यावृत्तिमुखेन गोप्रतिपत्तिः भवति । एवमेव सर्वत्र योज्यम् । अत एव अन्यापोहस्य वाचकः शब्दः, न तु अर्थस्य वाचकः । तदुक्तं धर्मकीर्तिना—

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते ।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥

विकल्प – प्रतिबिम्बेषु तन्निष्ठेषु निबध्यते ।
ततोऽन्यापोहनिष्ठत्वादुक्तापोहकृच्छ्रुतिः ॥

*बौद्धदर्शनस्य सम्प्रदायाः*

बौद्धदर्शनस्य वैभाषिक–सौत्रान्तिक-योगाचार-माध्यमिकभेदेन

चत्त्वारो मुख्याः सम्प्रदायाः सन्ति । एतेषां मतानां सिद्धान्ताः निम्न-श्लोकद्वारा सूत्ररूपेण प्रतिपादिताः विज्ञेयाः —

मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्
योगाचारमते तु सन्ति गतयस्तासां विवर्तोऽखिलः ।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितिर्बुद्ध्येति सौत्रान्तिकाः
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते ॥

इत्येवं प्रकारेण बौद्धदर्शनस्य मौलिकसिद्धान्ताः संक्षेपेण प्रतिपादिताः ।

एतेषां च बुद्धवचनानां माहात्म्यमित्थमुपस्थाप्यते—

जयन्ति जातिव्यसनप्रबन्धप्रसूतिहेतोर्जगतो विजेतुः ।
रागाद्यरातेः सुगतस्य वाचो मनस्तमस्तानवमादधानाः ॥



# कालिदासः : विदित-वेद्यः कवीन्द्रः

*गजाननशास्त्री मुसलगाँवकरः*

दुरवगाह-भगवन्महिमेव महिमवती, दोषाभाववती, भाववती, गुणवती, रसवती सुधाधारेव कर्णकुहरं तर्पयन्ती सन्तापपरीतमान्तरं सान्त्वयन्ती च कविता भगवती सहृदय-हृदये सन्तनोति किमपि गौरवं यशस्तनुभृताम् । तदङ्के खेलन्तो वयमनुभवामोऽतीतं लोकैः प्रतीतं सद्भिःसुगीतं निजगौरवम् ।

स्वापमितानस्मान् का जागरयति ? विषण्णमानसे का वा जनयत्य-मन्दमान्दनम् ? का वा गमयति विभूतिसानावस्मान् ? का चास्माकं चरित्रसरणिं शोधयति ? इत्यादीनां नैकविधप्रश्नानामेकमेव 'कविते'-त्युत्तरम् ।

यथा कश्चिद् रङ्गाजीवश्चित्रपटे स-हाव-भावविन्यासमालिखति चेतोहराणि चित्राणि विविध-वर्ण-रञ्जितानि, यान्यवलोक्य मुग्धोऽपि सम्मुग्धः समधिकं भावमवबुद्ध्य चित्रकरं श्लाघते एवमेव सु-कवि-रचितां कवितां वर्ण-परिमितां भाव-विलसितां समीक्ष्य रसिको जनः कविं रचयितारं नितरां प्रशंसति । अतएव समुचितैरेव वर्णविन्यासैः परिकलितां चित्रकलां चैकयैव तुलया तोलयते जनः । रसिकलोक-वृन्दस्य विविधतावतप्तं स्वान्तमावर्ज्य तत्र किमपि नूतनं वैभवमातन्वतो-रपि, विलक्षणं भावं पश्यतां मनसि सम्पादयतोरपि प्रत्नां शैलीम्प्रबोधय-तोरपि, लोकोत्तरयोग्यताम्प्रकटयतोरपि चित्र-कवित्वयोर्विद्यमानः कश्चिद् विशेषो विवेकिभ्यो न तिरोहितः । चिरान्महाकविभिः स्वतन्त्रतया स्थिरया कवितया रामकृष्णादीनामादिपुरुषाणां चरित्रं प्रकटीक्रियते । एतामेवाश्रित्य महाकवयोऽस्माकं सन्तप्तं हृदयं शीतलैः रसैः शान्तं विधाय, तत्र च गुणानास्तीर्य इदानीमपि यशःपात्रतामुपयान्ति । रसिकैः समा-राध्यमाना कविता देवता, यस्याश्चरण-कमलेन हृत्कोरकमलङ्कृत्य सुखेन

वाग्विस्तरे विहरतां तेषामेव कालिदासादीनां सतां मतां ततां योग्यतां न पुरतः सानुरागं गायति ।

पुण्यतमेऽस्माकं भारतेऽसंख्येया महाकवयः प्रादुरभवन् परं तेषां कवि-कुल-तिलकायमानः कालिदास एव प्रथमगणनामर्हतीति न केऽपि संशेरते । महाकविरयं न केवलमनितरसाधारणेन वाक्पाटवेन मुखरायते, किन्तु अवर्णनीयं कमपि अधरित-सुधारसं रसं वर्षितुमेव स्निग्ध-गम्भीरं गर्जनं विदधद् बहुविधतापमापन्नस्य नृकुलस्य व्यथितं हृदयं सदयामावर्ज्य करे कृत्वैव तत्र तत्र समुचितान् विषयान् चित्राणि चित्रफलक इव समुट्टङ्कयति । रुचिरेण विचारवैचित्र्येण शासनीयानां हृदयं पवित्रं, निर्मलं कोमलञ्च कुरुते ।

एतादृशोऽयं महाकविर्न केवलमुदारतां बुद्धिमत्तां स्वीयां प्रकटयितुं यतते परं ताभ्यां सह अविवेक-कर्दमस्खलितान् उद्दिधीर्षुरवलम्बयति तद्विचारकरान् । कविकौस्तुभोऽयं स्वीयामुच्चैस्तरां योग्यतामुदारताञ्च न वाचा; किन्तु कार्येण, ते च न केवलं; परं ताभ्यां सार्धं धर्मप्रपञ्चपटुतां; वेदान्तापरपर्यायोपनिषत्तत्त्वं विज्ञानञ्च, ते च न केवलं परेषामुपदेशाय, किन्तु स्वाचरणाय प्रतिपाद्य यत्र तत्र च न्याय-सांख्य-योग-मीमांसादि-दार्शनिकसिद्धान्तांश्च महता कौशलेन प्रकटय्य महाकविपीठमलमकार्षीत् ।

महाकविमेनमधिकृत्य अनेकाः कथा लोके प्रसृता वर्तन्ते । यथा "कालिदासः मूर्ख आसीत्, वृक्षस्य शाखायां यस्यामुपविष्टस्तामेव मूलत उच्छेत्तुमैच्छत् । केवलं भगवत्या जगदम्बाया अनुग्रहेण कविकर्मणि अनितरसाधारणम्प्रावीण्यमाप" इत्यादीनां निर्मूलानां प्रामाण्यमभ्युपगन्तुं नोत्सहते मामकीनमान्तरं करणम् । स्वकीयेषु काव्येषु वैदिकानां शास्त्रीयाणां च प्रस्तावे तानेव वैदिकान् पारिभाषिकांश्च शब्दान् प्रयुङ्क्ते । भगवत्या अनुग्रहः तस्य प्रतिभाप्रसरे विशिष्टं साधनमित्यत्र न वयं विप्रतिपद्यामहे, यतोहि सर्वथा इष्टदेवताया अनुग्रहः प्रसादश्च तत्तद्विद्या-विद्योतनाय भवतीति निश्चप्रचम् ।

एतत्प्रणीतेषु दृश्य-श्रव्यभेदेन द्विधावस्थितेषु काव्येषु तदीयोपदेशस्फूर्तिः कियतीव विशिष्टाऽभिव्यज्यते । तत्र तावद् 'रघुवंशे' एव दृश्यताम्-

कविवरोऽयं सूत्रभूतैः कैश्चिच्छ्लोकैः कृतविद्याय आचार्यकुलात् समावर्तमानाय शिष्याय, तदीयाचार्येण कृतानामनुत्तमानामनुशासनानां स्मारयतीव। यथा—"श्रद्धया देयम्", "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः", इत्यनुशासनं—"त्यागाय संभृतार्थानाम्" इत्यनेन पद्येन स्पष्टयति। कौत्सोपाख्यानेन तमेवार्थं विवृणोति–वरतन्तोराचार्यात् सर्वान् वेदान् सर्वाणि च शास्त्राणि कौत्सः अध्यैष्ट, समावर्तनावसरे च प्रियस्य धनस्य कथनाय, यत्सम्पाद्य कृतार्थीबुभूषाम्यहमिति आचार्यं सम्प्रार्थयामास। श्रुत्वा च तां वाचमेवम्प्रत्युवाच आचार्यः—"त्वदीयया शुश्रूषया प्रतिपत्त्या चैव अहमतीव सन्तुष्टो भवामि; न चाहं कामये ततोऽतिरिक्तं किञ्चिदपि धनादिकमिति"। इत्येवमुक्तोऽपि नाम स निर्बबन्ध आचार्यप्रियस्य धनस्य निवेदनाय। तस्य निर्बन्धं श्रुत्वा महर्षिर्वरतन्तुः भृशं चुक्रोध, प्रत्युवाच चैवमिति कौत्सवचसा कविर्वर्णयति—

निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति॥

ततो याचित्वाऽपि गुरोरादेशः परिपालनीय इति कृतमतिः कौत्सः वदान्यावतंसं दिनमणिकुलप्रसूतं रघुं महाराजमुपेयिवान्। महाराजो रघुस्तदानीं प्रत्यग्रनिर्वर्तितविश्वजिदध्वरः अर्थिसात्कृतसर्वस्वः मृण्मयपात्रावशिष्टः कौत्सम्प्रत्यगात् अकरोच्च अर्घ्यपाद्यादिकं तेनैव मृण्मयेन पात्रेण। तदेव शृणुमो वयं कविवरवचसा—

स मृण्मये वीतहिरण्मयत्वात् पात्रे निधायार्घ्यमनर्घ्यशीलः।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः॥

कौत्सस्य मुखात् सर्वमप्युदन्तमवगम्य महाराजो रघुः कुबेरं जित्वा अर्थिनः इच्छाम्पूरयिष्यामीति निश्चिकाय, समकल्पयच्च परेद्युः प्रयाणं कुबेराभियोगाय। अमानुषात् तदीयविक्रमाद् भीतः कुबेरः तस्यामेव रात्रौ हेमवर्षमवर्षत् तत्कोषगृहे।

प्रातः सर्वमपि धनं त्वयैव नेतव्यमिति वदन् महाराजः, गुरुप्रदेयादधिकं किमपि नाददीयेति प्रत्युत्तरयन् कौत्सश्चाभिनन्द्येते—

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च॥ इति॥

इत्थं "प्रजायै गृहमेधिना" मिति सूत्रितमर्थं दिलीप-सुदक्षिणयोः सुरभिपूजनव्रतादिना विशदयति। तथैव 'सत्यं वदे' – तिश्रौतार्थप्रतिपादकं "सत्याय मितभाषिणाम्" इति वाक्यं दशरथस्य भगवतो रामचन्द्रस्य च चरितेन व्याख्याति।

तथैव "यौवने विषयैषिणाम्", "प्रजायै गृहमेधिनाम्" इत्यनयोः पद्यखण्डयोः धर्माऽविरोधेन तृतीयः पुरुषार्थः कामः सेवनीयः इति सारिष्ठमर्थं बहूनां राज्ञाम्, अग्निवर्णस्य चोपाख्यानेन अन्वयव्यतिरेकाभ्यां विशदीकरोति। इत्थं स्वसूत्रिता अर्थाः स्वकीये काव्ये एव वर्णिता ते च सर्वे श्रुतिविहिता इति स्फुटमेव।

सर्वेष्वपि लौकिकेषु वैदिकेषु च कर्मसु दम्पत्योः सहाधिकारः इति श्रौतः सिद्धान्तः उभयोः साम्यं सूचयति। "अर्धो वा एष आत्मनः यत्पत्नी" इति, "पत्नीहि पारणिह्यस्येशे" इति च श्रुतिः पत्न्याः पत्यर्धत्वं तस्या गृहोपकरणादिसम्पादनपर्यवेक्षणादिकार्येषु अधिकार इति प्रतिपादयति। "अर्थस्य संग्रहे चैव व्यये चैव नियोजयेत्" इति मानवी स्मृतिरपि तस्यैव अर्थस्य विशिष्य स्मारयति। श्रुतिस्मृतिप्रतिपादितमिमं सिद्धान्तं शाकुन्तले प्रतिपादयति। गान्धर्वेण विधिना ऊढां शकुन्तलां महर्षेर्दुर्वाससः शापमहिम्ना प्रतिहतस्मृतिः दुष्यन्तः यदा न स्वीचकार, तदा राजानमेवं वदति कण्वशिष्य :—

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी॥

अनेन भर्तुः भार्याया विषये सर्वतोमुखं प्रभुत्वं प्रतिपादयति। तथा स्वर्गे लोके शकुन्तलां दृष्ट्वा तया सपुत्रया सह महर्षिमारीचं प्रणमति दुष्यन्तो यदा, तदा स भगवान् मारीचः शकुन्तलामेवं वदति—

शापादसि प्रतिहता स्मृतिरोषरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव॥ इति॥

अत्र तमेव 'प्रभुता' शब्दं प्रयुञ्जानो रसिकवरः कालिदासः भर्तुर्विषये भार्यायास्तुल्यं प्रभावमाविष्करोति, मोहदशायां पुंसां प्रभुत्वं, तदपगमदशायां तु स्त्रीणां तदित्यपि अभिसन्धत्ते।

तथैव गाङ्गप्रवाहेण मिलन्त्यः सरिदन्तरधारा इव महाकवेरस्य रचनासु लौकिकविज्ञानप्रवाहेण आमुष्मिकतत्त्वविचारनिर्भरा आमिलन्ति। यथा कुमारसंभवे भगवत्याः पार्वत्या मुखवर्णनावसरे—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥ इति॥

अत्र प्रथमक्षणे स्फुटीभवता वाच्यार्थेन सह 'यथा शोभालक्ष्मीः उमामुखं संश्रित्य द्विसंश्रयां प्रीतिमवाप, तथा संस्कृतकवितालक्ष्मीः कालिदासस्य उमासरूपां काव्यलक्ष्मीं बिभ्रती पद्माश्रयां (ऐहिकविषयसंबंधिनी) चन्द्रश्रितां (अलौकिकार्थान्वितां) च प्रीतिं समश्नुते' इति व्यवहारप्रवणानामिव परमार्थधियामपि उपादेया भवति कालिदासभारतीति प्रतीयते सहृदयानाम्।

रघु-कौत्सप्रसङ्गे एव रघुमुपगम्य न कोऽपि अर्थी दात्रन्तरं गतः, न च अकिञ्चनेऽपि तस्मिन् तथा भवितुमर्हतीति वाच्यार्थमनु 'वरतन्तुगुरोः सकाशात् अवाप्तैहिक-पारलौकिकविद्यः कौत्स इव कालिदासकृतौ अपि धर्मार्थकामशास्त्राणीव मोक्षविद्यामपि लब्धुं पारयत्येवेति गूढोऽर्थः स्फुरति। तथाहि—

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकासादनवाप्य कामम्।
गतो वदान्यान्तरमित्ययं मे माभूत् परीवादनवावतारः॥

इमं विषयं स्वयमेव प्रचिकाशयिषुरिव कविवरोऽयं कवयति—

स त्वं प्रशस्ते महिते मदीये वसन् चतुर्थोग्निरिवाग्न्यगारे।
द्वित्राण्यहान्यर्हसि सोढुमर्हन् यावद् यते साधयितुं त्वदर्थम्॥

अत्र कविः प्रत्याययति—हे काव्यपाठक! मोक्षशास्त्रकृतमते! अग्निशरणमिव पवित्रभावभासितमिदं काव्यं सधैर्यं प्रविशसि चेत् तर्हि त्वदभिलषितं वेदान्तविषयमपि लप्स्यसे। अर्थात् पूर्वं लौकिकार्थं गृहीत्वा विमर्शशाली सन् अस्मात् काव्यात् पारलौकिकमपि अर्थं लब्धुमर्हसि। "कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः" एवमाद्याः सूक्तयः कवेः तत्त्वविज्ञान-विज्ञतां स्फुटमावेदयन्ति। तत्त्वज्ञानाभिलाषुकेण तावत् पूर्वं निरभिमानिना भाव्यम्। निरभिमानिता च पापप्रणुदनेन प्रादुर्भवति।

पापप्रणाशश्च पश्चात्तापं विना न भवति। स पश्चात्तापोऽपि चेतःशुद्धि-सम्पादकेन सत्समागमेन उद्भवति, इत्येवं कारणपरम्पराप्रविष्टो मोक्ष-मार्गः कालिदासविरचितशाकुन्तलकथांशैर्व्यङ्ग्यार्थमुखेन प्रकटीभवति। तथाहि—दुष्यन्तस्य, मृगयार्थं मृगमनुधावनेन नाटकीयवस्तुनः आरम्भो भवति। तत्र च उपक्षिप्यमाणा विषयाः—

१. आश्रम-मृगहननार्थम् अश्व-वेगवर्धनाय सारथिप्रेरणम्।
२. स्यन्दन-वेगवर्धनमनु हिंसा-प्रवृत्ति-तत्परता।
३. प्राणत्राणैकमतेः मृगस्य अतिवेगेन प्रधावनम्।
४ तपोवनद्वारमुपगतस्य मृगस्य तपोधनैः संरक्षणम्।
५. चापतोऽपगतशरतामुपनयतो राज्ञो हिंसानिवृत्तिः।
६. अनुपदमेव तदीयाऽहिंसाव्यापारमभिनन्दतां मुनीनामाशीर्वचनम्
७. तपस्विनाम्प्रार्थनां स्वीकृत्य नृपतेराश्रमप्रवेशः।
८. ससख्याः शाकुन्तलायाः सन्दर्शनम्, परमानन्दाऽनुभवश्च।

उपरिनिर्दिष्टैरंशैर्ग्रथितं कथाभागं यदि तत्त्वजिज्ञासया सूक्ष्मदृष्ट्या पर्यालोचयामः तदा अर्थान्तरमपि बुद्धिगतं भवति। तथाहि—मनुष्यः निजेन्द्रियवाजिभिः विषय-मृग-ग्रहणाय यावद् धावति तावत् तं विषयवशगं मनुष्यं ते विषयमृगाः दुष्यन्तं मृग इव विषयकानने सुदूरं कर्षन्ति। एवमाकृष्टस्य मनुष्यस्य अहंकारावृतो हिंसाभावः विवर्धमानो भवति। तादृश्यामवस्थायां प्राप्तो मनुष्यः हिंसाऽहंकारवृत्तिभिः प्रेर्यमाणः इन्द्रिवशं गतो यदि केनाऽपि तत्त्वनिष्ठेन विदुषा प्रबोध्यमानो भवति चेत् स्वीयां तामसीं राजसीं च प्रवृत्तिं परित्यज्य शकुन्तलारूपिणी प्रसाद-समृद्धिं लभते परमानन्दञ्चानुभवति।

दुर्वाससः शापादपगतस्मृतिर्दुष्यन्तः स्वगृहमुपगतां अभ्युदयलक्ष्मी-मिव कुललक्ष्मीं शकुन्तलामवधीरितवान्। अवधीरिता च सा निराश्रया सती स्वजननीगृहम्प्रपेदे। तदनन्तरं दुर्वाससः शापस्य अभिज्ञान-दर्शना वधिकत्वात् राज्ञा अभिज्ञानाङ्गुलीयके अवलोकिते तदवधीरणया समुत्पन्नः दुःखोद्रेकः प्रादुरभवत्। स्वकीयमनार्यमाचरणं महर्षिणा कण्वेन शकु-न्तलायाः पत्युः समीपे प्रेषणकाले तया सह तत्संरक्षणार्थं प्रेषितस्य

शिष्यस्य मुखेन नृपाय सन्दिष्टं "अस्मान् साधु विचिन्त्य संयमधनान् उच्चैः कुलं चात्मनः" इति वाक्यं च मुहुर्मुहुः सस्मार दुष्यन्तः। तेन पश्चात्तापाग्निना प्रदग्धान्तःकरणस्य नृपस्य मनः अग्नि-प्रतप्तं सुवर्णमिव शुद्धिमवाप। निर्मलान्तःकरणस्य नृपस्य महर्षिणा मारीचमुनिना समागमः। भगवान् मारीचमुनिः कथयति—

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा॥

निर्मले दर्पणे वस्तुच्छायेव पश्चात्तापेन निर्मलीभूते मनसि परमात्मतत्त्वस्य वस्तुनश्छाया यथावत् प्रतिफलत्यवश्यमेवेति कविरत्र सूचयति। विगताऽज्ञानेन मुक्तिरिव विगतमोहेन नृपेण शकुन्तला समुपलब्धा।

नास्ति तस्य नृपतेर्दुष्यन्तस्य अन्यत् किमपि अभिकांक्षणीयम्। अस्मिन् नाटके कालिदासोऽपि स्वप्रतिभाप्रभावेण भूतलं देवलोकादपि अधिकतरं परिणमय्य अवाप्तसकलमनोरथः दुष्यन्त इव कृतार्थोऽभूत्। अत एव भरतवाक्ये दुष्यन्तमुखेन स्वाभिप्रायं जन्मराहित्यलाभं उमारमणशरणलाभरूपं प्रकटीचकार।

अस्य कवेः मनोभावपरिपाकप्रकाशका अन्येऽपि नैके प्रसंगाः अस्मिन् नाटके संलक्ष्यन्ते। सर्वप्रथमं शकुन्तलां पश्यन् नराधिपो मनसि विचारयति—

इदं किलाव्याजमनोहरं वपुः तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति॥

अभिनवकमलकोमलाऽपि शकुन्तला महर्षिणा कण्वेन प्रवर्तिता अनुनुरूपे इव परिश्रमसाध्ये कर्मणि सफलं व्यापृताऽभवत् तथैव शृंगारप्रबन्धरूपेण अननुरूपेण इव प्रतीयमानेन रूपकेण कविरयं मुक्तिपथं सफलं सन्दिशतीति अर्थान्तरं प्रकाशते—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

अत्र पुष्प-रत्न-मधु-फलादीनि वस्तूनि ज्ञानेन्द्रियग्राह्याणि सन्ति । तैः अस्पृष्टं शकुन्तलारूपं ज्ञानेन्द्रियाग्राह्यमेव । अर्थात् स्थूलदृष्ट्या शाकुन्तल-प्रतिपाद्यं अग्राह्यम्, किन्तु अलौकिकतया प्रातिभेन चक्षुषा ग्राह्यमिति कविः मन्यते । तदेव दुष्यन्तस्य उक्त्या प्रकाशयति—"सखे ! अनवाप्त-चक्षुःफलोऽसि, येन द्रष्टव्यानां परं न दृष्टम्, शकुन्तलारूपमनिरूपितवन्तं विदूषकं प्रति नृपतिः व्यक्त्या एवं बोधयति अस्य नाटकस्य कथावस्तुतत्त्वं ऐहिकेषु समस्तेषु ज्ञातव्येषु परं तत्त्वात्मकवस्तुतया तत्त्वमिव चरमपुरुषार्थः अवगन्तव्यः । एतद्वचः 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इति वेदान्तसिद्धान्तवचसः प्रपञ्चरूपमस्ति । विदूषक इव मूढो जनः चित्तशुद्ध्या तमसोऽपनोदनेन ज्ञातव्यं परं वस्तु ज्ञात्वा जीवनसुखं शान्तिं च लभते इति महाकविः प्रतिश्रृणोति ।

प्रभुसम्मितोपदेशायां श्रुतौ विहितानर्थानेव कथाविशेषकथनमिषेण अनायासेन विज्ञापयति कविवरः । क्वचित् उपमामुखेन क्वचित् अर्थान्तरेण समासोक्तिविधया च बहून् धर्मान् उपदिशति ।

तथैव विविधान् शास्त्रीयान् विषयान् विवक्षुरयं प्राचीनान् वैदिकान् सम्प्रदायानुगतांश्चैव शब्दान् प्रयुञ्जानः कविवरोऽयं धर्मावबोधने नियतमितरानतिशेते । रघुवंशस्य प्रथमश्लोके एव पार्वतीपरमेश्वरौ वागर्थाभ्यामुपमिमानः "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति शब्दार्थयोर्नित्यं सम्बन्धं बोधयन् तयोरभेदमपि ज्ञापयन् शक्तिशक्तिमद्रूपयोर्जगत्पित्रोस्तादृशं सम्बन्धं प्रतिपिपादयिषति ।

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥

इत्यनेन वनान्तरात् प्रतिनिवृत्तान् ऋषीन् 'अदृश्याग्निप्रत्युद्यातान्' वर्णयन् कविवरोऽयं "प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति ।" इति श्रुतिं श्रुतिपथमुपनयति ।

"विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।" इति वदन् कवि-रयं "जपं होमञ्च कुर्वाणो नाभिवाद्यो द्विजो भवेत्" इति निषेधस्य स्मारयति ।

"श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" इत्युपमानेन श्रुतिद्वारा स्मृतेः प्रामाण्यमिति मीमांसकसिद्धान्तमुपस्थापयति कविवरः ।

"दिनान्ते निहितं तेजः सवित्रेव हुताशनः" इत्यनेन "अग्निं वा आदित्यः सायंप्रविशति" इत्यग्निहोत्रमन्त्रविधिशेषमर्थवादमनुवदति कवितल्ल-जोऽयम् ।

"सोऽभवत् वर-वधूसमागमः प्रत्यय-प्रकृतियोगसन्निभः" इत्यनेन वर-वधूसम्बन्धं प्रत्यय-प्रकृतियोगेन उपमिमानः 'प्रकृति-प्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन" इति वैयाकरणप्रक्रियां सुस्पष्टम्प्रतिपाद-यति कविः ।

"इतरो दहने स्वकर्म्मणां ववृते ज्ञानमयेन वह्निना" इत्यनेन रघोः ज्ञानिनोऽवस्थां वर्णयन् कालिदासः "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथा" इति श्रीमद्भगवद्गीतार्थं तदनन्तरपद्ये "समलोष्टाश्म काञ्चनमि"ति गीताशब्दानेव प्रयुञ्जानः स्वस्य वेदान्तदर्शनपरिचयम-भिव्यनक्ति ।

"मारुतिः सागरं तीर्णः संसारमिव निर्ममः ।" इत्यनेन विरक्तो मम-ताहीनोऽविद्याबन्धमिवेति वर्णयन् कविरयं स्वीयमौपनिषदसिद्धान्तबोध-मभिव्यनक्ति ।

इन्दुमतीस्वयंवरे अन्येषां राज्ञां स्वरूपं गुणांश्च सुनन्दामुखेन वर्णयन् अजविषये परं ककुत्स्थदिलीपरघूणां वर्णनेन विवाहे त्रिपुरुषप्रवरप्रवचन-मवश्यमनुष्ठेयमित्युपस्थापयति ।

"हस्तेन हस्तं परिगृह्य" इति इन्दुमतीविवाहे कन्याया हस्तं स्वहस्ते परिगृह्य इति वर्णयन् 'वध्वाऽङ्गुलिग्रहणे दुहितृत्पत्तेः हस्तग्रहणे पुत्रोत्पत्ते-श्चे'ति बोधकानां गृह्यसूत्राणां स्मारयति ।

"विषयेषु विनाशधर्मिषु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत्" इति रघुं वर्णयन् मुमुक्षुणा इहाऽमुत्रफलभोगविरागमवश्यमनुष्ठेयमिति विशदं

विज्ञापयति । इत्थमनेके श्रौताः स्मार्ताश्चार्थाः स्वीयकाव्येषु प्रतिपादिताः ।

भारतीयादर्शेषु धृतादरः कविरयं दाम्पत्यभावस्य पवित्रतां श्रेष्ठताञ्च प्रतिपिपादयिषुः भगवतो भूतभावनस्य शिवस्य शक्तिरूपायाश्च उमायाः जगच्छ्रेयसे प्रकल्पितं परिणयं वर्णयन् स्वीयं भक्तिभावमपि द्योतयति । कविरयं शिवभक्तोऽपि परमेश्वरस्य विभिन्नरूपेषु कृतादरः अन्यदेवताः अपि तथैव भक्तिविभवेन वर्णयति । कुमारसंभवे देवैः कृता प्रजापति-स्तुतिः, शाकुन्तले सप्तमाङ्के वामनपादाक्रान्तिवर्णनं, पदार्थानां प्राणिनां प्रकृतेश्च परामर्शः निरूपणञ्च कवेः अलौकिकीं सूक्ष्मदृष्टिं प्रतिपादन-शक्तिञ्च ब्रूतः । तथाहि शाकुन्तले—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्याम्प्रयाति ॥

अत्र हरिणगतेर्वर्णनस्य कियती स्वाभाविकताऽनुभूयते । तथैव सर्व-दमनस्य बालकस्य वर्णनेन बालस्वभावस्य नैसर्गिकं वर्णनं कियन्मनो-हारि जातमिति दृश्यताम्—

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचः-प्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

प्रणयचेष्टावर्णनेऽपि कविवरस्य कौशलम्प्रेक्षणीयं वर्तते—

हेम-तामरस-ताडितप्रिया
तत्कराम्बुविनिमीलितेक्षणा ।
सा व्यगाहत तरङ्गिणीमुमा
मीनपंक्तिपुनरुक्तमेखला ॥ [कु. सं. स. ८]

तथैव तिरश्चामपि व्यवहारं कीदृशेन कौशलेन विशदयति—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमिलिताक्षीं मृगीमकण्डूयत कृष्णशारः ॥

तथैव शाकुन्तलेऽपि—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥

[ शा. ना. अं. ६ ]

कण्व-मारीच-वशिष्ठ-अगस्त्यादिचरितनिरूपणेन ऋष्यादीनां महिमवर्णने भावोद्रेकेण उत्पीडनमिवानुभवति कवीन्द्रस्य अन्तःकरणमिति सूच्यते। स्वल्पैरेव शब्दैः वर्णनचातुर्यं संवादसामर्थ्यञ्च सविशेषं मानसं कर्षतः। शब्दैः स्वल्पमभिधाय व्यञ्जनयाऽनल्पभावप्रख्यापने कविवरस्य अनुपममेव सामर्थ्यं वर्तते। कुमारसंभवे पार्वतीवर्णनं, रघुवंशे गंगायमुनयोः संगमवर्णनं, सिंह-दिलीपयोः, रघु-देवेन्द्रयोः, पार्वती-बटुकयोश्च संवादवर्णनं, शाकुन्तले दुष्यन्तादि-भाषण-प्रतिभाषणादिवर्णनं च कवीन्द्रस्य संवादमार्मिकतानिरूपणशक्तिं प्रकटयन्ति। मेघदूतं तावत् विरहिहृदयस्य शाश्वतीं वेदनां प्रकटयति, रघुवंशे चतुर्थसर्गश्च कवेर्भूगोलज्ञानं प्रकाशयति।

प्रसादगुणाऽलंकृतया वाण्या, गम्भीरार्थकल्पनया, अनन्यसामान्यया व्यंग्यभंग्या, कविवरस्य अप्रतिमप्रतिभाप्रसूतानि काव्यानि सन्ति। आनन्दवर्धनाचार्यस्य भणितिः कालिदासस्य महाकवेरुक्तिषु कार्त्स्न्येन संघटते—

सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तम्प्रतिभाविशेषम्॥

अतः सर्वविद्वत्सपर्यार्हः कविवरोऽयं विदितवेद्य इति नास्ति संशीतिलेशः कस्यापि। अत एव—

विश्ववन्द्यकवीन्द्रस्य वर्धते धवलं यशः।
कालिदासजयन्तीयं भवत्यत्र निदर्शनम्॥



# नाट्यशास्त्रे भावलक्षणपाठः

डा० प्रेमस्वरूपगुप्तः

भरतीये नाट्यशास्त्रे सप्तमाध्यायारम्भे भावलक्षणमित्थमुपलभ्यते—

भावानिदानीं व्याख्यास्यामः। अत्राह—भावा इति कस्मात्। किं भवन्तीति भावाः, किं वा भावयन्तीति भावाः। उच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावा इति।

भू इति करणे धातुः। तथा च भावितं वासितं कृतमित्यनर्थान्तरम्। लोकेऽपि च प्रसिद्धम्—अहो ह्यनेन गन्धेन रसेन वा सर्वमेव भावितमिति। तच्च व्याप्त्यर्थम्। श्लोकाश्चात्र—

विभावेनाहृतो योऽर्थो ह्यनुभावैस्तु गम्यते।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥
वागङ्गमुखरागेण सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥
नानाभिनयसम्बद्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥ इति॥

सूक्ष्मेक्षिकया पर्यालोचनेन लक्ष्यन्त एवात्र अर्थविसंगतयः। आरम्भे 'किं भवन्तीति भावा, भावयन्तीति वे'ति प्रश्नमुत्पाद्य भाव—शब्दस्य व्यापनार्थिकां व्युत्पत्तिं मनसिकृत्य वागङ्गेत्यादिशब्दैर्भाव-स्वरूपं व्याख्यातम्। तदनु'भू इति करणे धातुरि'ति करणार्थिका व्युत्पत्तिः प्रस्तुता। ततो 'भावितं वासितं कृतमित्यनर्थान्तरमि'-ति द्वयोर्व्युत्पत्त्योः सामञ्जस्यं विहितम्। पुनश्च व्यापनव्युत्पत्त्यर्थो व्याख्यातः। तदनन्तरं करणार्थव्युत्पत्तिपक्षीयो 'विभावेनाहृत' इत्यादिः श्लोकः, तत्परं व्यापनार्थव्युत्पत्तिपक्षीयौ द्वौ श्लोकाविति स्थितिः। अत 'भू इति करणे धातुरि'ति शब्दाः केवलं 'विभावेनाहृत' इति श्लोकेनैव संगच्छन्ते, व्याप्त्यर्थप्रतिपादकेन शेषेण तु विसंगता एव। अथ च व्याप्त्यर्थप्रतिपादिका व्युत्पत्तिरपि न काचिदत्र शब्दतो विहिता।

वस्तुतस्तु पाठोऽयं व्युत्पत्तिद्वयमूलस्य परम्पराद्वयस्य शबलनमस्ति। भावितविसंगति–रूपता स्वाभाविक्येव।

विसंगतिरियमभिनवगुप्तस्य दृष्टिपथेऽपि समायातैव। सुस्पष्टमेव तेनात्र प्रसङ्गे व्युत्पत्तिद्वय–परस्य निरूपणस्य समावेशः स्वीकृतः।[1]श्लोकेष्वपि प्रथमः करणार्थव्युत्पत्त्यनुसारी, शिष्टौ च द्वौ व्यापनार्थक–व्युत्पत्त्यनुसारिणाविति तेन सुस्पष्टमेव प्रतिपन्नम्।[2] किन्तु तन्मते सर्वमिदं दृष्टिभेदमिश्रणं स्वयं भरतप्रणीतमेव। अन्यासां पाण्डुप्रतीनामनुपलम्भात् पाठविज्ञानप्रक्रियायास्तत्समक्षं विकासाभावाच्च अभिनवगुप्तो निर्णेतुं न शशाक यन् मिश्रणमिदं न भरतकृतम्, अपितु परवर्तिचिन्तनपरम्पराद्वयविकास-जन्यम्। वस्तुतस्तु तत्समक्षं यत्किञ्चित्पाठ्यमायाति, तत्पाण्डित्यपरामर्शेन भवत्येव सुव्याख्यातं, दुर्व्याख्यातं वा। सर्वमेव वाङ्मये विश्वात्मनः स्तोत्रं मन्यमानस्य तस्य किमग्राह्यं स्यात्।[3]

*पाठ-परीक्षा*

प्रस्तुत-प्रसङ्गस्य परीक्षणार्थम् अस्माभिः प्रकाशित–पुस्तकातिरिक्ता एकादश-पाण्डुप्रतिकृतिभ्यः पाठांशा सङ्कलिताः। प्रतिकृतयश्च तिस्रो नेपाल–प्रदेशात्, पंच मद्रासात्, द्वे मैसूरत, एका च वटोदरातः सङ्कलिताः।

---

१. ना० शा० भा० १, सं० २, पृ० ३४४ 'तन्त्रेण व्युत्पत्त्यन्तरं दर्शयन् तमाह—लोकेऽपि चेति।'

२. तत्रैव, पृ० ३४५ 'अथ व्युत्पत्त्यन्तरमपि दर्शयितुं प्राक्तनीं च व्युत्पत्तिमाह—श्लोकश्चात्रेति।

२. तत्रैव, पृ० ३४५ 'एवं लोकानुसारेण कविनटशिक्षोपयोगिना व्युत्पत्त्यन्तरमभिधाय सामाजिकाभिप्रायेण व्युपत्तिद्वयनिरूपितोऽर्थः, तत्संग्रहाय श्लोकद्वयमाह—वागङ्गमुखरागेणेति।'

३. ना० शा०, भा० २ अ० ११, अभि० भा०, गायकवाड ओ० सी०, प्रस्तावना—श्लोक २ :

'स्वल्पेऽपि पाठ्ये न त्याज्यः कोऽप्यध्यायो मया यतः।
विभोर्विश्वात्मनः स्तोत्रं मुख्यमन्यत् प्रसङ्गतः॥

एताः प्रतयो व्युत्पत्तिमनुलक्ष्य परम्पराद्वये विभाजयितुं शक्याः एका परम्परा 'भाव इति करण–साधनम्' इति प्रतिपादयन्ती अभिनयाङ्गानां करण–साधनता–सहकारेण व्यापन–व्युत्पत्तेः पोषिका, अपरा च 'भू इति करणे धातुरि'–ति पुरस्कुर्वन्ती करोत्यर्थ–व्युत्पत्ति–समर्थिका। त्रि-नव-दश-संख्याकाः प्रतयः पूर्वस्याः परम्परायाः, शेषा अपरस्याः।

'भावितं वासितं कृतमित्यनर्थान्तरमि'ति पाठे व्यापन-करणयोः द्वयोरर्थयोरभेदः सामञ्जस्यात्मकं प्रयत्नमुपलक्षयते। ततः पूर्वं 'यथा भावितं वासितं ( तथा ? ) कृतमित्यर्थान्तरमि'–ति वादनीषु प्रतिषु परम्पराद्वयस्य पार्थक्येन एकत्रोपस्थापनं प्रोच्यते। ततोऽपि पूर्वं ताः प्रतयः स्युः यासु केवलस्यैकस्यैव स्वपक्षस्याग्रहो दृश्यते। एवंविधासु प्रतिषु 'भावितं वासितमि'–ति परम्परायाः प्रतयो नास्मत्समक्षं विद्यन्ते। करणपरम्परायाः क्रमशः प्रभावाधिक्येन ता विलुप्ता भवेयुरिति सुखमनुमीयते।

इत्थं पक्षद्वयस्य समावेशो न मूल–गतः, अपितु परवर्ति–भाष्य–टीकादिभ्यः समुल्लसितो भवेत्। यदिदं सर्वं मूलगतं स्यात्, निरूपणं शबलीकृतं न स्यात्, परिवर्तिनः पाठ–सम्मर्दस्य चानवकाशः स्यात्। प्रामाणिके मूले समुपलब्धे एतादृशो विकल्पा न जायेरन्। इत्थं पक्षद्वयस्य विकासे परकालीने सिद्धे, 'किं भवन्तीति भावाः, किं भावयन्तीति भावा' इति शङ्कोत्थापनस्यापि मूले नावसरो लभ्यते। तदपि परवर्त्येव।

( ८ ) अष्ट-संख्याका प्रतिरस्माकं दृष्टिं विशेषेण प्रबध्नाति। अत्रत्यः पाठ इत्थमुपलभ्यते 'भावानिदानीं वक्ष्यामः। अत्राह—भाव इति कस्मात्। किं भवतीति भावः, किं भावयतीति भावः। अत्रोच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयतीति भावः। भवति चात्र श्लोकः—

'वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥

भू इति करणे धातुः। यथा भावितं वासितं, कृतमित्यर्थान्तरम्।

लोकेऽपि च सिद्धम्—अहो अनेन गन्धेन रसेन वा सर्वमेव भावितमिति तस्य व्याप्त्यर्थे। भवति चात्र श्लोकः—

विभावेनाहृतो योऽर्थस्त्वनुभावैश्च गम्यते।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥

अत्रोल्लेखनीयमस्ति यदत्र श्लोकद्वयमेव पठ्यते, पूर्वं व्यापन-व्युत्पत्ति-समर्थकस्य श्लोकस्य पाठः, पश्चाच्च करण-व्युपत्ति-समर्थकस्य। उल्लेखश्च द्वयोः पृथक्श एव। 'यथा भावितं वासितं, कृतमप्यर्थान्तरमिति द्वयोः परम्परयोः स्पष्टा स्वीकृतिः। यद्यप्यत्र 'भू इति करणे धातुरि' ति व्युत्पत्तेरेवोल्लेखः, तथापि पूर्वव्यापन-पक्षीयस्यैव श्लोकस्य समावेशः। अतः सर्वतोऽनुमीयते यदयं पाठः केनापि व्यापनसमर्थकेन सामंजस्यविधित्सुना मिश्रीकृत्योपस्थापितः स्यात्, पश्चात् केनापि करण-व्युत्पत्ति-पक्षधरेण 'भाव इति करणसाधनमि' ति स्थाने स्वपक्षीयां 'भू इति करणे धातुरिति व्युत्पत्तिं संनिवेश्य प्रचारितः स्यात्। इदमपि स्पष्टं भवति यत् नानाभिनयेत्यादिः श्लोकः व्यापन-पक्षधरैः पश्चात् पुरस्कृतः स्यात् श्लोकानां क्रमोऽपि करण-व्युत्पत्ति-वादिभिः स्वानुकूलं पश्चात् विपरिवर्तितः, यः सर्वैः स्वीकृतोऽभूत्।

अस्याः प्रतेः व्यापन-पक्ष-विकासस्य पूर्वभाविताप्यायाति। करण-व्युत्पत्तिपक्षस्य तदनन्तरं विकासोऽभूत्। वागङ्गसत्त्वोपेतान्········ कवेरन्तर्गतं भावं भावयन् भाव उच्यते इति स्वेतर-पक्षीयं पाठं करण-व्युत्पत्तिका अवधीरयितुं नाशक्नुवन्निति तथ्यमेतेषां शब्दानां मूल-पाठ-गतामवस्थितिं निगमयति।

एवं भरत-लक्षणस्य मूल-पाठ इत्थं निर्धार्यते—

भावानिदानीं वक्ष्यामः। अत्राह—भावा इति कस्मात्? उच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। भवति चात्र श्लोकः—

वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते।

एतस्यैव विकसितं रूपमद्य अभिनव-स्वीकृते पाठे समुलभ्यते।

*पाठ-विकासः*

मूलपाठादभिनव-स्वीकृत-पाठ-पर्यन्तं पाठ-विकासस्य षोडश पद-क्रमास्तर्क्यन्त । संक्षेपेण त एवम्—

( १ ) मूल पाठः ।

( २ ) तदुपरि व्यापन-व्युत्पत्ति-पक्षीया 'भू इति करणे धातुरि' ति टीका ।

( ३ ) टीका-पाठस्य मूल-पाठे समावेशः ।

( ४ ) तदुपरि 'भू इति करणे धातुरि' ति पक्षान्तरोद्भाविनी अपरा टीका ।

( ५ ) अस्याः टीकाया अपि मूले समावेशः, भाव इति करण-साधनमित्यस्य स्थाने 'भू इति करणे धातुरि' त्यस्य प्रस्थापनम् ।

( ६ ) केनापि सामंजस्यविधित्सुना 'भू इति करणसाधनमि'ति पक्षमुल्लासयैव द्वयोः पाठयोः सामंजस्य-विधानम् ।

( ७ ) तदसहमानेन केनापि करणव्युत्पत्ति-पक्षधरेण 'भू इति करणे धातुरि'ति पक्षस्य प्रतिष्ठापनम् । अस्या एवावस्थितेः प्रतिनिधिः ( ८ ) संख्याका प्रतिरस्मत्समक्षं विद्यते ।

( ८ ) अथ व्यापनव्युत्पत्तिपक्षधरेण षष्ठाध्याये समुद्धृतमानुवंश्यं नानाभिनयेत्यादिश्लोकमतिरिक्त-प्रमाण-रूपेण प्रस्तूय स्वपक्ष-समर्थनम् । अनन्तरं तस्यापि श्लोकस्य मूले समावेशः ।

( ९ ) करणव्युत्पत्तिधरैस्त्रयाणां श्लोकानां समूहनं स्वपक्षीयस्य विभावेनाहृत इत्यादिश्लोकस्य पूर्वप्रतिष्ठा, वासितमिति शब्दमपि निरस्य 'भू इति करणे धातुः' । भावितं कृतमित्यर्थान्तरमित्याग्रही पाठः । एवमेव चिन्तनं पुरस्कुर्वन्ती ( १ ) संख्याका प्रतिरस्मत्समक्षं विद्यते ।

( १० ) अन्येन सामञ्जस्यविधायिना करणपक्षीयेण वस्तुस्थितिं स्वीकृत्य 'भू इति करणे धातुः' । भावितं, वासितं ( तथा ) कृतमित्य-र्थान्तरमिति पाठ-स्वीकृतिः । अत्रैव प्रतिपादिके ( २ ) ( ११ ) संख्ये प्रती ।

( ११ ) अस्यां स्थितौ 'भू इति करणे धातुरि'ति स्थाने 'भाव इति

करणसाधनमि'ति स्वपक्षस्याग्रहः, किन्तु करण-पक्ष-विकृतस्यैव श्लोक-क्रमस्य परिस्वीकृतिः।

( १२ ) पुनः करणपक्षीयाणां रूढदृष्टेराग्रहः। 'भावितं कृतमि' त्यत्रैवास्यानर्थान्तरत्वमेकार्थतेति 'वासितमि'त्यस्य समावेशो नावश्यक इति। 'भावाः काव्यार्थान् भावयन्ति कुर्वते॰ इति मानसि कृत्य' 'भू इति करणे धातुः', भावितं कृतमित्यनर्थान्तरमि' ति पाठः। अत्रैव वयं ( ५ ) ( ६ ) ( ७ ) संख्याकाः प्रतीः प्राप्नुमः।

( १३ ) ततोऽपरेण सामञ्जस्यपरेण करणवादिना 'यथा च भावितं वासितं कृतमित्यनर्थान्तरमि' ति समन्वित-पाठस्य प्रस्तुतिः। अत्र ( ३ ) संख्याका प्रतिः प्राप्यते।

( १४ ) व्यापनव्युत्पत्तिकैः केवलं स्वव्युत्पत्तेराग्रहः, शेषं परस्य पक्षस्य स्वीकरणम्। तदेव ( ४ ) संख्यायां प्रत्यामुलभ्यते।

( १५ ) एवं व्यापनपक्षस्य क्रमशः क्षीणतायां करणपक्षस्य च

---

४. भाव इति करणसाधनमित्यस्य तात्पर्यमित्थम्—वागङ्गसत्त्वादयो करणत्वेन साधनानि यत्र। यथाह अभिनवगुप्तः—'वर्णनात्मना वाचिकत्वेन सन्निवेशवलनादिनाङ्गिकेनान्तर्बहिरात्मना सात्त्विकेन करणभूतेनोपेतान् संबद्धान्। करणं हि कर्मणि कर्तरि च यद्यपि संबध्यते, तथापीहास्य प्राधान्यात् सम्बन्धदृशि करणत्वमेव दर्शयितुं तृतीयया निर्दिश्यते। वागङ्गमुखरागेणेति। ना० शा० भा० १, अभि० भा०, पृ० ३४४। इत्थं ये वागादिकरणसाधत्वेन काव्यार्थान् भावयन्तीति भावा इति।

'भू इति करणे धातुरि'–ति व्युत्पत्तौ यद्यपि भू-धातुः करणार्थे धातुपाठे नोपलभ्यते। परस्मैपदिनो भ्वादेः सत्तायाम्, आत्मनेपदिनश्च चुरादेः प्राप्तावेवोपलब्धिः उभयपदिनोऽवकल्कनार्थस्य चुरादेस्तु भुवस्य। किन्तु णिच्परो भू धातुः करणार्थे बहुशः प्रयोगेषूपलभ्यते। अभिनवगुप्तेन 'भू इति करणे धातुरि'तिशब्दान् भरतप्रतीतानेव, परिगृह्य तत्र भू इति—अर्थात् णिजंशभूते इकारप्रत्यये परे भूधातुः करणार्थे वर्तते' इति मन्तव्यः प्रकाशितो भरताभिमतत्वेन च प्रत्युपस्थापितः, तत्सर्वमभिनवगुप्तस्यैव चमत्कारि वैदुष्यं, किन्तु नेयं भारतीया भाषा-शैली। इयं व्युत्पत्तिः परकालीन-टीकाभ्यः समायातेति प्रतिपादितमेवास्माभिः।

प्राबल्ये चतुर्दशस्थितौ लब्धसंस्थस्य पाठस्य अभिनवगुप्तेनापि स्वीकृतो स्वल्पान्तरेण तदीयः पाठः।[5]

*चिन्तन-विकासः*

अनेन पाठ-विकास-क्रमेणैव तन्निहित-चिन्तनविकासस्य क्रमिक-प्रक्रियापि स्फुटीभवत्येव। सप्तमाध्याये भरतेन विभावानुभावसंयुक्तानां स्थायिसंचारिसात्त्विकानां भावत्वं प्रत्यपादि, काव्यार्थस्य भावकाः वासकास्ते सर्व एव भावा इति। नाट्यरसनिष्पत्तावभिनयतत्त्वानां भाव-तत्त्वानां च समायोगो भरतेन बहुशः प्रतिपादितः। 'भावाभिनय-सम्बद्धान् स्थायिभावांस्तथा बुधाः। आस्वादयन्ति मनसा तस्मान्नाट्य-रसाः स्मृताः' इत्यादिष्वपि तदेवोपलभ्यते। भावलक्षणेऽपि वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्ति भावा इति अभिनयतत्त्वानां सह-करणात्मक-सहयोगेन भावस्वरूपं निर्धारितमुपलभ्यते।' वागङ्गमुखरागैश्चेत्यादिकमानुवंश्यं प्रेरणाप्रदमासीदेव। तदनु अभिनयतत्त्वानां करण-रूप-साधनतामुपलक्ष्य भाव इति करण-साधनम्, भावितं वासितमिति, लोकेऽपि च सिद्धम्—अहो, अनेन गन्धेन रसेन वा सर्वमेव भावितमिति सोदाहरणा व्युत्पत्तिर्भाष्यकृद्भिः पुरस्कृता या शनैः शनैः मूले समाविष्टा। अनन्तरं च भू इति करणे धातुरिति 'भावयन्ति कुर्वत' इति वादिनां पक्षः, पूर्वटीकासु, परं मूलेऽपि संमिश्रय्य समुल्लसितः। विभावेनाहृतो योऽर्थ इत्यादिः श्लोकोऽपि तत्पक्षे प्रस्तुतीभूतः।

अनन्तरं व्यापन-पक्षे वरीयस्तया प्रस्तुतीक्रियमाणेऽपि यथा भावितं वासितं तथा कृतमप्येकमर्थान्तरमस्तीति स्वीकृतिरेका वस्तु-स्थितिः सम्पन्ना, किन्तु करणव्युत्पत्तिवादिभिर्येषां पक्ष आरम्भ-दुर्बल एवासीत्, पाठविस्थापनानि पाठविकाराणि चारब्धानि (८) संख्याका

---

५. अत्र पाठक्रम-निर्धारणे केचन सिद्धान्ताः स्वीकृताः। 'यथा भावितं वासितं, तथा कृतमिति' द्वयोः परंपरयोः सामंजस्य-विधायिन्यः प्रतयो यतः पार्थक्येन सामंजस्यं स्वीकुर्वन्त्यस्ता 'भावितं वासितं कृतमित्यनर्थान्तरमि' ति अपार्थक्येन सामंजस्यविधायिनीभ्यः पूर्ववर्तिन्य स्युः केवलमेकपक्षधरास्ताभ्योपि पूर्वतराः। श्लोकद्वयवती प्रतिः श्लोकत्रय-प्रतिभ्यः पूर्वा। अर्थचेतनानुसारेण पूर्वतराणामुपकल्पना।

प्रतिरत्र प्रमाणम्। यद्यपि व्यापनपक्षेण 'नानाभिनये'-त्यादिश्लोकोऽतिरिक्तसमर्थनरूपेण पुरस्कृतः, मूलपाठे मिश्रितश्च, तथापि करणव्युत्पत्त्याग्रहिभिः श्लोकक्रम एव विपरिवर्तितः। (१) संख्याका प्रतिः संकेतयति यत् तेषामतिवाद इयानासीद् यद् व्यापनव्युत्पत्तेर्बहिष्करणमेव तेषामिष्टमासीत्। सकलस्य प्रसंगस्य 'भावयन्ति कुर्वते' इत्यर्थपरा च व्याख्या प्रयतिता यस्या अनुश्रुतिरभिनवस्य विवेचनेऽपि प्राप्यते। किन्त्वतिवादोऽयं नालभत प्रतिष्ठाम्। 'यथा भावितं वासितं तथा कृतमप्येकमर्थान्तरमि'-त्येव समन्वितः पक्षः प्रायेण स्वीकृतोऽभूत्। (२) (११) संख्ये प्रती प्रमाणमत्र।

करणपक्षपातिभिः पुनरतिवादिता हि गृहीता। वासितमित्यर्थमपकृष्य भावितं कृतमित्यनर्थान्तरमिति पक्षस्तैः प्रस्तुतः। अयं पक्षस्तु प्रतिष्ठां न लेभे, किन्तु अनर्थान्तरत्वं भिन्नदृष्ट्या प्रचलनमाप। इदमनर्थान्तरत्वं भावितशब्दस्य वासित-कृतशब्दयोरर्थद्वये प्रतिपन्नमभूत्। अयमपि प्रयासः करणपक्षधराणामेवासीत्। एवमेका अमौलिकी चिन्तनपरम्परा क्रमिका क्रमणप्रक्रियया कालान्तरेण तादृशी प्रमाणिकी संपन्ना यत् भावितं वासितं कृतमित्यर्थगतमनर्थान्तरत्वमेव न केवलम्, सकलस्य प्रसंगस्यापि एकार्थत्वं प्रतिपादयितुं भ्रमस्यावकाशोऽजनि।

अत्रोपलब्धे पाठे एनयोर्द्वयोः परम्परयोः शबलीकृतं रूपमेवोपलभ्यते, अतएव विसंगतिगर्भता। अभिनवगुप्तेनापि अर्द्धसत्यस्यैव ग्रहणं कृतमासीत् यतो विकल्पद्वयं परिकल्प्यापि तस्य भरतसंमतता प्रतिपादिता। वस्तुतस्तु परिवर्तिनश्चिन्तनपरंपराद्वयस्य तत्र शबलनं विद्यते।

अत्रैवं प्रतितर्क्यते—आम्, अस्त्वत्र परंपराद्वयं, किन्तु तद् भरतपूर्वीयमेव यस्य स्वयं भरतेनैव कृतः समन्वयः। आसीत् कोपि प्राचीनः धातुपाठो यस्मिन् करणार्थकस्य भू-धातोरुल्लेख आसीत्, तत एव भरतेन करणार्थो व्युत्पत्तिर्गृहीता। मैवम्—यद्येवं स्याद्, द्वयोर्व्युत्पत्त्यार्वैकल्पिकः समावेशो भरतेन कृतः स्यात्, वासनार्थस्य शब्दैः प्रतिपत्तिरथ च करणार्थस्य धात्वर्थेन व्युत्पत्तिरित्येवंविधा विसंगतिर्न स्यात्। अथ च करणार्थस्य भुवः धातुपाठतो व्युत्पत्तिः साध्या स्याद्, अभिनवगुप्तेन 'भू इति करणे धातुरि' ति शब्देषु णिजंशस्येकारस्य कष्टकल्पना न कृता भवेत्। भुवः करणार्थता प्रयोगेषु तूपलभ्यत एव।

अथ करणपक्ष एव प्राचीनतरो भरताभिमतश्च, वासनपक्षः परं प्रक्षिप्त इत्यप्यसमीचीनमेव। वासनार्थस्य प्रतिपत्तिः सम्पूर्णेऽस्मिन् विवेचने आधारतया समनुगता। 'काव्यार्थान् भावयन्तीति भावाः', 'कवेरन्तर्गतं भावयन्' इत्यादयः प्रयोगा वासनार्थव्युत्पत्तेर्भरतसमक्षतां प्रतिपादयन्ति। भरतपूर्वीयेण[६] वासुकिनापि

नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा।
एवं भावा भावयन्ति रसानभिनयैः सह॥

इत्यत्र भरतोद्धृते श्लोके भावस्य वासनार्थतैव स्वीकृता। विश्लेषिताषु पाण्डुप्रतिषु करणार्थस्य अर्थान्तरत्वेनैव प्रारंभे स्वीकृतिः, वासनार्थस्य तु मूलार्थतयेति प्रतिपादितचरम्। श्लोकानां क्रमपरिवर्तनतः पूर्वं वासनार्थकश्लोकस्यैव पूर्वं समावेशः, तदर्थस्यैव च पूर्वं प्रतिपादनमिति ८-संख्याका प्रतिरत्र प्रमाणमिति सर्वं विवेचितमेवास्माभिः।[७]

६. ना० शा० अ० ६।३५। श्लोकोऽयं भावप्रकाशनकार—शारदातनयस्य प्रामाण्येन वासुकेरस्ति। अत्रापि भावस्य वासनार्थपरकतेति संज्ञापनार्थं वयं श्रीरामसुरेशत्रिपाठिमहाभावानामधमर्णाः।

७. विदुषानेन सर्वस्याप्यस्य विषयस्य विस्पष्टतायै चार्ट-पदवाच्यं चित्रमपि षड् मासान् परिश्रम्य निर्मितं प्रेषितं चास्मभ्यम्, किन्तु मुद्रणकाठिन्यात् तद् इदानीं मुद्रयितुं न पारयामः—संपादकः।

# कालिदाससाहित्ये चित्रकला

रेवाप्रसाद-द्विवेदी

एका कला कलान्तरेऽलङ्कारत्वं व्रजतीति प्रतीतचरं विदुषाम्। तत्र काव्यमपि कला। तस्याः शब्दैकसंवेद्यत्वेऽपि ततश्चापरोक्षज्ञान-विषयत्वेऽपि प्रत्यक्षज्ञानविषया संगीतं, मूर्त्तिः, चित्रञ्चेति तिस्रोऽपि कला अङ्गभावमलङ्कारभावापरपर्यायं व्रजन्त्येव। कालिदासो ह्यस्माकं मूर्धन्यः कविः। तस्य काव्येष्वपि कलान्तराणि निष्प्रयासमेवालङ्कारभावं भजन्ति। तद्यथा चित्रकला।

## १. नामोल्लेखः

कलामिमां कालिदासो नामतोऽप्युल्लिखति, अनेकवारं चोल्लिखति तथाहि—

१. रघुवंशस्य द्वितीये सर्गे दिलीपो गुरोर्वसिष्ठस्य यज्ञधनं नन्दिनीं रिरक्षयिषुः धातुमय्यामधित्याकायामिव पाटलायां तस्यां स्थिते लोध्र-द्रुम इव केसरिणि प्रजिहीर्षति, तदर्थं च तूणीराद् बाणमुद्दिधीर्षति। केसरी च साधारणः केसरी नास्ति। स हि भगवता शिवेन पार्वतीपुत्री-कृतं वन्यद्विपोन्मथितत्वचमतस्सेनान्यमिव पार्वतीशोकविषयं देवदारुं रक्षितुं नियुक्तः लम्भित-तत्परिसरागतजीवभक्षणाधिकारश्च। नन्दिनी च तं परिसरं प्रविष्टवती, ततः केसरिणा सा समाक्रान्ता। उचितं च तदिति प्रजिहीर्षोर्दिलीपस्य बाणमोक्षप्रवृत्तिस्तत्र विफलायते। तस्य दक्षिणः पाणिः सायकपुङ्ख एव सक्ताङ्गुलिस्तिष्ठति। तत्र तस्य दिलीपस्य स्थितिं वर्णयन् कविश्चित्रं स्मरति—

वामेतरस्तस्य करः प्रहर्त्तुर्नखप्रभाभूषितकङ्कपत्रे।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे॥

---

यथाऽवोचामात्मनः काव्यालङ्कारकारिकायाम्—

'यच्च शब्देषु पद्यत्वं सा संगीतकला प्रिया।
कला कलान्तरे यस्मादलङ्कारत्वमश्नुते॥' ३५-उपस्कारकारिका

चित्रार्पिता व्यक्तिरेकरूपैव तिष्ठति, तत्र रूपान्तरं न संभवति। इयमेव दिलीपस्य स्थितिः।

२. कुमारसंभवे भगवतः शङ्करस्य समाधिभङ्गाय, भगवतीं पार्वतीं प्रति च तस्यौन्मुख्याय प्रवर्तितेन कामेन वसन्तवैभवं प्रकटितं शिवाश्रमप्रान्ते। तस्य माधुर्येण शिववननौकसां तपस्विनो विकृतमनस्काः संवृत्ताः, किन्तु प्रयत्नसंस्तम्भितविक्रियास्ते मनसामीशाः कथंचिद् बभूवुरेव। तत्र हरस्तु प्रसंख्यानपर एव स्थितः। गणास्तु कथंचिद् विचलिताः। तस्य वाहनं नन्दी तु कामस्य तद्वसन्तस्य च चापलं न सेहे। स लतागृहद्वारमागत्य मुखार्पितैकाङ्गुलिसंज्ञयैव गणान् 'मा चापलाय' इति व्यनैषीत्। नन्दीश्वरशासनेन किं भवति ? सर्वोऽपि वसन्तविभवश्चित्रार्पितारम्भ इव जायते—

निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥३।४२॥

३. तारकेन बाधिता आदित्या भगवन्तं ब्रह्माणं प्रसादयितुं गताः। तत्र तेषां निस्तेजस्कतां वीक्ष्य ब्रह्मदेवो ब्रूते—

'अमी च कथमादित्याः प्रतापक्षतिशीतलाः।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥' २।२४॥ इति।

एत आदित्याः प्रकाममालोकितुं शक्याश्चित्रार्पिता इव।

४. चित्रस्य कृत आलेख्यशब्दमपि कालिदास उपादत्ते। तत्र तस्य सर्वेऽपि विरहिणः स्वकीयानां प्रेयसीनां चित्राणि निर्माय मनो विनोदयितुमिच्छन्ति। पूरूरवाः स्वकीयां प्रेयसीं चित्रार्पितामपि कर्तुं न क्षमते। स कथयति—

'हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम्।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ वि.२।१०॥' इति॥

५. यक्षस्यापीयमेव स्थितिः। सोऽपि शापितः सन् रामगिरिमधिशिश्रिये। तत्र शिलायां धातुरागैर्यक्षीमालिलेखिषति—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥'

६. मालविकाग्निमित्रस्य नायकोऽग्निमित्रः प्रणयवतीं मालविकां प्रथमां चित्रन्यस्तां पश्यति पश्चाच्च साक्षात् । तत्रासौ ब्रूते—

चित्रगतायामस्यां कान्तिविसम्वादशङ्कि मे हृदयम् ।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ इति ।

७. अजोऽपि स्वर्गतामिन्दुमतीं सादृश्यप्रतिकृतिषु पश्यति—

तेनाष्टौ परिगमिताः समाः कथञ्चिद्
बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥' ८।९२ ॥इति

८. विक्रमोर्वशीये निपुणिका विदूषकम् आलेख्यगतं वानरमिव निभृतं स्थितं पश्यति—

'अहो आलेख्यवानर इव किमपि मन्त्रयन्
निभृत आर्यमाणवकस्तिष्ठति' । इति
[ वि० द्वि० अं० आरम्भे ]

९. कुमारः सुदर्शनो यदा विवाहयोग्यो भवति तदा तस्मै राजकन्यकानां प्रतिकृतय आनीयन्ते । स च तत्र याः सुन्दर्यस्ताः स्वीकुरुते । तत्र कालिदासः मालिकाग्निमित्र इव कान्तिविसंवादं स्मरति—

प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥

इत्थं चित्रस्य कृते कालिदासः प्रतिकृतिशब्दमपि प्रायुङ्क्त ।

१०. शकुन्तला हि स्त्रीरत्नम् । सा विधात्रा कथंकारं निर्मितेति तत्र जिज्ञासा । तत्र दुष्यन्तस्य संभावना—

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ २।६ ॥ इति ॥

विष्णुधर्मोत्तरपुराणे नारायणो मुनिरपि—

सहकाररसं गृह्य उर्व्यां चक्रे वरस्त्रियम् ।
चित्रेण सा ततो जाता रूपयुक्ता वराप्सराः ॥ ३।३५। ३ ॥

११. जन्मनः प्रभृत्येव दीपशिखेव[1] प्रभामहती स्फुरत्प्रभीमण्डला च भगवती पार्वती सर्वावयवानवद्या ।[2] तस्या अभ्युन्नताङ्गुष्ठनखप्रभाभी[3] रागमिवोद्गिरन्तौ चरणौ पृथिव्याम् अपरिच्छेद्यां स्थलारविन्दश्रियमाहरतः । तस्या एकैकस्मिन्नङ्ग एव विधातुर्लावण्यकोषः परिसमापत, ततश्चोत्पाद्येनेव लावण्येन शेषाङ्गनिर्माणं पर्यपूरि ।[4] तस्या मुखे पद्मं चन्द्रबिम्बं चेत्युभयस्यापि श्रियावपहस्तितकलहे यौगपद्येनैव निवसतः ।[5] स्तनबन्धुरे कण्ठे यस्तस्या निस्तलो मुक्ताकलापः सोऽपि भूष्यभावं भजते तेनेव तादृशस्तस्याः कण्ठः ।[6] पार्वत्या विशदं, ताम्रौष्ठपर्यस्तकिरणग्रामं च स्मितं प्रवालोपहितेन पुष्पेण, विद्रुमस्थेन मुक्ताफलेन वोपमातुं शक्यते ।[7] तस्या अस्या भगवत्या आयतलेखयोर्भ्रुवोः कान्तिः शलाकाञ्जनेनेव निर्मिता ।[8] सोऽयं लावण्यकान्तिनिर्भरस्तस्यामस्यां जगन्मातरि बाल्यादेव कृतपदो यतः प्रभृतीयं ज्योत्स्नाप्रपूरितानि कलान्तराणि लब्धोदया चान्द्रमसी लेखेव लावण्यमयानि निजाङ्गरत्नानि पुपोष ।[9] तस्या अस्या यौवनेन चतुरस्रं शोभि वपुः कीदृशं दृश्यते ? 'तूलिकयोन्मीलितं चित्रमिव'—

---

१. कुमारसंभवस्य १।२८ — २. कुमारसंभवस्य १।२४
३. ,, ,, ३।५७ — ४. ,, ,, १।३३
५. ,, ,, १।३५ — ६. ,, ,, १।४३
७. ,, ,, १।४२ — ८. ,, ,, १।४४
९. ,, ,, १।४७ — १०. ,, ,, १।२५

'उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नौवयौवनेने'—[ कुमार० १।३२ ] ति ।

१२. रामादिभिस्तदपत्यैश्च परित्यक्तायामयोध्यायां चित्रलिखितान् द्विपान् सत्यान् मन्यमानाः सिंहास्तेषु प्रहरन्ति—

'चित्रद्विपाः पद्मवनातीर्णाः
करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः
संरब्धसिंहप्रहृतं वहन्ति ॥ रघु० १६।१३ ॥

१३. अयोध्यायाः सद्मानि चित्रवन्ति सन्ति—

तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखान्यभूवन् ॥
[ रघु० १४।२५ ]

१४. अलकाया भवनान्यपि चित्रवन्ति—

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ इति ।

१५. भवनेष्वेषु विद्यमानानि चित्राणि गवाक्षमार्गप्रविष्टैर्मेघैर्विक्रियन्ते । ततश्च तेषां गवाक्षमार्गान्मेघाः शङ्कास्पृष्टा इव निष्पतन्ति—

'नेत्रा नीता सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा जालमार्गाद्
धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥' इति ।

## २. चित्रगता विशेषाः

शाकुन्तले चित्रनिर्माणप्रक्रियापि प्रस्तूयते । तत्र षष्ठेऽङ्के शकुन्तलां

प्रत्यादिश्याङ्गुलीयकलाभेन संजातस्मृतिर्दुष्यन्तस्तद्वियोगनिमग्नहृदयस्तस्याश्चित्रं निर्माति। चतुरिका चित्रमिदमादाय प्रविशति तत्र चित्रगतानां विशेषाणामपि उल्लेखः कण्ठरवेणैव कविना क्रियते। चित्रं दृष्ट्वा विदूषकः कथयति—

साधु वयस्य मधुरावस्थानदर्शनीयो भावानुप्रवेशः, स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु।' इति।

एतच्च चित्रं स्वयं राज्ञैव निर्मितम्। अतएव सानुमती ब्रूते 'अहो एषा राजर्षेर्निपुणता, जाने सखी अग्रतो मे वर्तते इति'। राजापि यदा तच्चित्रं वीक्षते तदा कथयति—

'यद् यत् साधु न चित्रे स्यात्—
क्रियते तद् तदन्यथा।
तथापि तस्या लावण्यं
रेखया किंचिदन्वितम्॥ ५।१४॥ इति।

राज्ञा प्रियम्वदाऽनुसूयाभ्यां सह शकुन्तलाऽऽलिखिता। तत्रायं विशेषो यत् तिसृणामपि तासां रूपलावण्यनिर्माणं समानम्। ततः शकुन्तलामधिकृत्य कृतप्रश्नो विदूषको राज्ञा 'त्वं तावत् कतमां तर्कयसि' इति प्रतिपृष्टो ब्रवीति—

तर्कयामि यस्याः केशान्तः शिथिलबन्धनोद्वान्तकुसुमः, वदनमुद्भिन्नस्वेदबिन्दु, हस्तलतिके विशेषतोऽपसृते, अवसेकस्निग्धपल्लवो यः कोपि सहकारपादपस्तस्य पार्श्वे ईषत्परिश्रान्ताऽऽलिखिता सा शकुन्तला' इति।

अत्र विदूषकः सानुमतीमतौ मोघदृष्टिः, तथापि स यान् यान् विशेषानुपस्थापयति तानधिकृत्य सिद्धहस्तः कोऽपि कुशलः कारुरालेख्यमद्यापि निर्मातुं क्षमते। विदूषकस्य तर्कं साधुरिति ब्रुवता दुष्यन्तेनोच्यते—'भवता आकृतिमात्रं दृष्टं, न तु भावः।' प्रकाशयति च भावलक्षणं स्वयंमपि—'निपुणो भवान्, अस्त्यत्र मे भावचिह्नम्—

'स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।
अश्रु च कपोलपतितं दृश्यमिदं वर्त्तिकोच्छ्वासात्॥ ५।१५॥

अथ अङ्गुलीषु स्विन्नता, तदर्थं प्रान्तेषु मलिनता, वर्त्तिकोच्छ्वासः, तेन च संलक्ष्यः कपोलपतितोऽश्रुबिन्दुः' इत्येते ये विशेषास्ते चित्रकर्मणि कां नु सूक्ष्मतां प्रस्तुवन्तीति कुशलैरुत्प्रेक्ष्येत। तत्रापि राजा कथयति—'चतुरिके अर्धलिखितमेतद् विनोदस्थानम्, गच्छ, वर्त्तिकामानय' इति। मिथ्यात्वं च चित्रस्य प्रतिपद्यमानो यावत्।

'साक्षात् प्रियामुपगतामवमन्यमानश्चित्रार्पितां पुनरिमां बहु मन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य जातः सखे प्रणयवान् मृगतृष्णिकायाम्॥
[ ५।१६ ॥ इति ]

इति ब्रवीति तावत् स्थूलदृष्टिर्विदूषकः कल्पयति किन्न्वत्रावशिष्यते यस्य प्रतिपूर्त्तये वयस्य एष भूयोऽपि वर्त्तिकामानयती'—ति तत्र विदूषकेणैव प्रकाशं 'भोः अपरं किमत्र लिखितव्यम्' इति पृष्टः प्रतिब्रूते—

'कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां सखीम्॥'६।१७॥ इति।

अन्यच्च—शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः—

'कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम्।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे॥
३।१८॥ इति।

अत्र हि मालिन्यादि वस्तुचित्रणं विद्धचित्रनाम्ना प्रसिद्धमेव, हंसमिथुनावतारोऽत्र भावचित्रतायाः प्रभवः, कृष्णमृगस्य शृङ्गाग्रे वामनयनं कण्डूयमानां मृगीं विरच्य च रसध्वनिचित्रताऽत्र महामतिनानेन प्रसूता। मृगः कृष्णः अतः अविश्वास्यः, तस्यापि शृङ्गम्, तेनापि वामनयनस्य कण्डूयनम् अतिनिष्करुणत्वमात्मनो ब्रुवाणे दुष्यन्ते जातविस्रम्भायाः शकुन्तलाया एव प्रतीकभूतमि' ति दुष्यन्तोऽत्रात्मानमेवावतारयति ध्वनिसन्तानसाहस्रीं च प्रस्तुवाना दृश्येऽत्र तत्प्रतिभाकामगवी। सेयं पराकाष्ठां गतवती परिणतिश्चित्रकलायाः।

## ३. चित्रस्य प्रभावः

चित्रस्यास्य प्रभावमपि न न चित्रयति महाकविः। तथाहि भ्रमर-बाधाचित्रं दुष्यन्तेनालिखितम्। तत्र रक्तकुवलयपल्लववत् शोभमानमग्र-हस्तं, तेन मुखापवारणम्, चकितचकितत्वं च तस्या निरूप्य विदूषकः स्पष्टं ब्रूते 'आस्तत्र भवत्या मुखमभिलङ्घति मधुकर' इति। अत्र 'आः' इति पदेन सूच्यते विदूषकः शकुन्तलायाश्चित्रत्वं विस्मृत्य शकुन्तलात्व-मेव पश्यति। सेयमत्र चित्रस्य चित्रणीयतन्मयीभवनक्षमा। सेयमत्र दुष्यन्तमप्यान्दोलयति। स हि 'एष मधुकर' इति कथितमात्रो ब्रूते 'ननु वार्य एष धृष्टः'। इति 'भवानेवाविनीतानां शासितेति भूयोऽपि विदूषके-णोक्तो विस्मृतात्मा दुष्यन्तो मधुकरमामन्त्रयमाणो ब्रूते—' अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि—

'एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु त्वया विना पिबति ॥६।१९॥ इति।

विदूषकोऽपि विस्मृतात्मा दुष्यन्तदशामेव गतः कथयति—'प्रतिवारितापि वामैषा जातिः'। इति। दुष्यन्तो भूयोऽपि भ्रमरमेव शासितुमध्यवस्यति वक्ति—'एवं भोः, न मे शासने तिष्ठसि, श्रूयतां तर्हि संप्रति—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं दशसि चेद् भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ ६।२० ॥

इदानीं विदूषकश्चेतयते, दुष्यन्तस्तु तथैव तिष्ठति। तत्र विदूषको ब्रूते 'भोः चित्रं खल्वेतत्'। वचनेनानेन सानुमती दुष्यन्तश्चेति द्वयोरपि धाराधिरूढा भ्रान्तिर्निवर्त्तते। सानुमती कथयति—'अहमपीदानी-मवगतार्था'। दुष्यन्तस्य शकुन्तलासमाधिरनेन विदूषकवचनेन भज्यते। ततश्चासौ भर्त्सयन् ब्रवीति—

'वयस्य किमिदमनुष्ठितं पौरोभाग्यम्—

'दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥६।२१॥

इति बाष्पं च नयनाभ्यां विसृजति। बाष्प एष मेघदूतस्य यक्षाय स्वं चरणपतितं लेखितुमिव दुष्यन्तायापि चित्रगतां शकुन्तलां द्रष्टुं न ददाति—

प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ ६।२२ ॥' इति।

सोऽयमतिभूमिमारूढः प्रभावश्चित्रस्य।

## ४. चित्रकलोपकरणानि

इत्थं कालिदासे चित्रकलायाः कानिचन उपदानानि कण्ठरवेणैवोल्लिखितानि लभ्यन्ते। तद्यथा—

१. कान्तिः,
२. सादृश्यातिशयः,
३. वैसादृश्यलेशः। एतेषु च कारणभूतः
४. समाधिर्नाम गुणविशेषः, स च चित्तवृत्तिनिरोधः, एकाग्रतारूपा। ततश्च वेद्यान्तरसंस्पर्शराहित्येन तन्मयीभवनद्वारा कारुकर्मणि प्रवृत्तिः,
५. कारोः हृदयस्याभिषङ्गः,
६. प्रभावः,
७. मिथ्यात्वं चेति।

अत्र यन्मुख्यतमं कारणं तद्धि वर्णद्रव्यम्। कालिदास इदानीं यावत् तत्रानधिकमवहितः। शकुन्तलाया एव सप्तमेऽङ्के तदपि सम्यक् चित्रयति। राज्ञो दुष्यन्तस्य पराक्रमं दिवौकसः कल्पलतांशुकेषु लिखन्ति। तत्र प्रश्नः। कथं वा लिखन्ति। तत्र मसी कीदृशी। कविरुदीरयति—

'विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु।
विचिन्त्य गीतिक्षममर्थबन्धं दिवौकसस्त्वच्चरितं लिखन्ति ॥' इति।

अत्रापि चित्रमेव लिख्यते, किन्तु तत्र काव्याक्षराणामेव विषयत्वं न तु कस्यचित् प्रत्यक्षविषयस्य वस्तुनः।

वर्णद्रव्याणां विनियोगाय कविर्नानाविधानर्थानुपस्थापयति। तत्र मेघदूते—दशपुरजनपदवध्वो मेघं दृष्टिमुत्क्षिप्य पश्यन्ति। सोऽयमासा-

मुपरि दृष्टिक्षेपः कविनाऽनेनैवं चित्र्यते—

'तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्री कुर्वन् दशमुखवधूनेत्रकौतूहलनाम् ॥ ५१ ॥ इति ।

मेघदूत एव वल्मीकाग्रात् इन्द्रधनुः प्रभवति । तत्र येऽनेके वर्णास्तानुद्दिश्य कविः सहृदयहृदयहारि किञ्चिदेवं चित्रयति मनोरमतमं चित्रम्—

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुष्खण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः ॥ इति ।

कृष्णवर्णो मेघस्तुषारावृते कैलाशशृङ्गे निषण्णः कीदृशो भाति—

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलाशस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ६२ ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृतद्विरददशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६३ ॥

कृष्णस्य मेघस्य श्यामा छाया अच्छस्फटिकविशदे भागीरथीजले प्रतिबिम्ब्यते । तत्र वर्णयोरनयोर्व्यतिकरमसौ 'अस्थानोपनतयमुनासङ्गमेन' चित्रयति—

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसिच्छाययासौ
स्यादस्थानोपनतयमुना—संगमेवाभिरामा ॥ ५५ ॥

गङ्गायमुनयोः सितासितत्वं रघुवंशे चित्रितवानेवैषः—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव॥
क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव॥

क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य।
पश्यानवद्याङ्गि! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः॥
—[ रघु० १३।५५-५७ ]

एवंविधान्यन्यान्यपि बहूनि स्थलानि कालिदाससाहित्ये सुखेनैव सुमेधोभिर्गवेषयितुं शक्यन्ते। तत्र सानुमतीदृष्ट्या विमृश्यमाने काँस्कान् न विशेषानुपलभामहे, यावद् विदूषकदृष्ट्यापि प्रतिपादितचरया कतिपयान् विशेषानवश्यमेवोपलभामहा एव। तत्र

रूपभेदाः प्रमाणानि भावलावण्ययोजना।
सादृश्यं वर्णिकाभङ्ग इति चित्रं षडङ्गकम्॥

इति कामशास्त्रस्य जयमङ्गलयोपस्थापितया चित्रकारिकया यानिमान् षड् विशेषान् प्रतिपद्यामहे तेषां प्रत्येकं कालिदाससाहित्यस्य नायकानां नायिकानां च विशेषणेषु गवेषयितुं शक्यत एव।

इत्थं कालिदासस्य काव्यकलायां चित्रकला कियन्न अङ्कारत्वमश्नुत इति प्रेक्षावन्तः सुखमुन्नयेरन्।



# नानाजीववादः

*बाबूलालशर्मा*

दार्शनिकैः मनीषिभिः बहुकालात्पूर्वमेव यदेतत्स्थिरीकृतं यदस्मिन् शरीरे भौतिकतत्त्वराशितोऽतिरिक्ता चेतनस्यैकस्य आत्मनोऽपि सत्ता विद्यते, मन्ये तदैव शरीरभेदेन आत्मनो वा जीवस्य वा भेदोऽपि तैः स्वीकृतः। एतस्य आत्मविमर्शस्य परिष्कृतं रूपं मुण्डकोपनिषदि 'द्वा सुपर्णा सयुजा सखाया'[1] इत्यस्मिन्मन्त्रे ईश्वरस्य तथा 'अजोह्येकं जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः'[2] इत्यादिषु च मन्त्रेषु आत्मनः नानात्वदर्शनं परिलक्षितं दृश्यते। आत्मवादिषु दर्शनेषु उपर्युक्तान् मन्त्रान् उपजीव्यभूतान् कृत्वा जीवनानात्वमतं स्थापितम्। सांख्यदर्शने 'पुरुष बहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव'[3] इत्यादिभिः कारिकाभिः तन्नानात्वं स्पष्टमुद्घोषितम्। न केवलमेतावदेव, अपितु न्याय-वैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसादर्शनेषु बाहुल्येनैतस्यैव मतस्य पुष्टिः दरीदृश्यते। तस्य यत्किञ्चिदिह निदर्शनं नानुचितं प्रतिभाति।

*न्यायदर्शनम्*—एकात्मवादस्य एकजीववादस्य वा साधनप्रसङ्गे वेदान्तिनः आकाशस्य ऐक्यं स्वीकृत्य घटाद्यवच्छेदभेदेन तस्य काल्पनिकं भेदं वास्तविकञ्चाभेदं प्रतिपादयन्ति। तन्निराकरणाय अनेकजीववादं स्वीचिकीर्षुः जयन्तभट्टः एवमाह—[4] 'यत्तु ब्रह्मणः सततप्रबुद्धत्वादविद्यान्नेत्रता नेति जीवानामविद्यास्पदत्वमभिहितमविद्योपरमे ब्रह्मणि परमे त एव घटाकाशवल्लीयन्ते इति तदपि न चतुरस्रमाकाशावच्छे-

१. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यं पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥ (मुण्ड ३.१.१)

२. अजामेकां लोहितशुक्लकृष्णां, वह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः॥ (श्वेताश्व० ४.५)

३. जनन-मरण-करणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुष-बहुत्वं सिद्धं त्रैगुण्य-विपर्यायाच्चैव॥ (सां. का० १८)

४. न्यायमञ्जरी' काशी, सं. १९५१, पृ. ५३०.

दहेतोर्घटादेः सत्त्वादविद्यायास्त्वसत्त्वात्तत्कृतः परमात्मनोऽवच्छेद इति विषमो दृष्टान्तः। अवच्छेदकत्वाभावाच्च जीवविभागकल्पनापि निरवकाशैव।"

महर्षिः अक्षपादोऽपि अद्वैतवादखण्डनाय एवं सूत्रितवान्—"सङ्ख्यैकान्तासिद्धिः कारणानुपपत्युपपत्तिभ्याम्" (४.१.४१। अथ चास्यैव सूत्रस्य तात्पर्यटीकायां वाचस्पतिमिश्राः एवमाहुः—[1] "प्रमातारश्चानेकविधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धकाणादिकोविदजाल्मसंसारिमुक्तविभागोपपत्तेश्च भेदवन्तोऽनुमीयन्ते। एकस्मिन्नपर्यायेण विरुद्धधर्मसंसर्गासम्भवात्। कल्पनया कथञ्चित् सम्भाव्यमानोऽप्ययं गोमयपायसीयन्यायमावहति। तदेवं प्रत्यक्षविरोधादनुपपन्नार्थाः श्रुतयः 'एकमेवाऽद्वितीयमि' त्याद्याः प्रथमां वृत्तिमुल्लङ्घ्य जघन्यामवलम्बते। 'यजमानः प्रस्तरः' 'आदित्यो वै यूप' इत्यादिवदिति। यदाह भगवान् जैमिनिः—गुणवादस्त्विवति तत्सिद्धिरिति' चेति, तस्मान्नाद्वैतमिति। साध्यात्साधनस्य भेदेन च संख्यान्तरैकान्ता अप्यपहृतार्था इत्युक्तम्।"

*वैशेषिकदर्शनम्*—महर्षिः कणादो जीवनानात्वसिद्ध्यै सूत्रद्वयं सूत्रितवान्—'व्यस्थातो नाना' (वै० सू० ३.२. ०) 'शास्त्रसामर्थ्याच्च' (वै. सू. ३.२.२१)। एतयोः व्याख्यायां शङ्करमिश्रेण कथितम्—[2] "नाना आत्मानः। कुतः व्यस्थातः। व्यवस्था प्रतिनियमः यथा कश्चिदाढ्यः, कश्चिद् रङ्कः, कश्चित्सुखी, कश्चिद्दुःखी, कश्चिदुच्चाभिजनः, कश्चिद्विद्वान्, कश्चिज्जाल्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपपद्यमाना साधयत्यात्मनां भेदम्। न च जन्मभेदेन बाल्यकौमार्यवार्धकभेदेन वा, एकस्याप्यात्मनो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यम् कालभेदेन विरुद्धधर्माध्याससम्भवात्। प्रमाणन्तरमाह—शास्त्रं श्रुतिः तथाप्यात्मनो भेदप्रतिपादनात्। श्रूयते हि 'द्वे ब्रह्मणी वेदितव्ये' इत्यादि तथा 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते'इत्यादि च।"

---

१. न्यायवार्तिकतात्पर्यटीका, चौखम्बा संस्कृत सीरीज. सं. १९८३, पृ. ६१८.

२. वैशेषिक सूत्रोपस्कार चौखम्बा, १९२३, पृ. ११४–१५,

बादिवागीश्वराचार्यः स्वकीये मानमनोहरग्रन्थे एवमाह—[1] "तस्य चानेकत्वम्; व्यवस्थान्यथानुपपत्तेः अनिर्वचनीयत्वे निराकृते जीवभेदेऽविप्रतिपत्तेश्च। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्डको० ३.१.१.) इतिश्रुतेः। अस्यार्थः—द्वा सुपर्णौ आत्मानौ सयुजौ = सहवर्तमानौ सखायौ = एककार्यकारित्वेन, समानं वृक्षम् = एकशरीरं परिषस्वजाते = आलिङ्गितवन्तौ। तयोरात्मनोर्मध्ये एको = भोक्ता पिप्पलं स्वादु अत्ति = सुखविशेषं भुङ्क्ते। अनश्नन् अन्यः = अभोक्ता ईश्वरः अभिचाकशीति = सर्वतोऽत्यर्थं प्रकाशते इति विस्पष्टो जीवब्रह्मणोर्भेदः। 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (श्वेताश्व० ४.५) इतिवत् न च श्रुतिप्रतीतोऽन्यथा भवितुमर्हति।

कथं तर्हि "नेह नानास्ति किञ्चन" (बृ० ४.४.१९) इति, "मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति" (कठ० ४.१०) इति च लिङ्गात् नानात्वदर्शने तदभावोपचारात्। न च सति प्रयोजने निमित्ते चोपचारः प्रवर्तते, न चात्र प्रयोजनमस्तीति वाच्यम्; नियमासिद्धेः। अज्ञातमुख्येषु व्यवहारादिषु गौणशब्दप्रयोगेषु तदभावात्। सत्ताबोधकलाक्षणिकं गोशब्दे च यथा गौर्वाहीकः। यथाहुर्वार्तिककाराः—

> बहुजाति-गुणद्रव्य-कर्म-भेदावलम्बिनः ।
> प्रत्ययान् सहसा जातान् श्रौतलाक्षणिकात्मकान् ॥
> न लोकः कारणाभावान्निर्धारयितुमिच्छति ।
> बलाबलादिसिद्ध्यर्थं वाक्यान्नात्र विविच्यते ॥ (श्लोकवार्तिक)

अस्मदादि गौणप्रतीतेर्हि चिन्ता वृद्धव्यवहारागतेषु गौणप्रयोगेषु कोऽयमाग्रहः, यथा सर्षपरसे तैलशब्दः। मुख्येषु बाधकाभावात् कथमुपचार इति नाशङ्कनीयम्; प्रत्यक्षेण श्रुत्या च भेदप्रतीतेः। आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना, अश्रावणविशेषगुणाधिकरणत्वात्, पृथि-

१. मानमनोहर, षड्दर्शनप्रकाशन प्रतिष्ठानम्, वाराणसी, १९७३.

व्यादिवत्। तत्र न मूर्तत्वमुपाधिः, रूपादौ तदभावेऽपि साध्यानुगम-दर्शनात्।"

*सांख्ययोगदर्शनम्*—महामनीषी सांख्याचार्यः ईश्वरकृष्णोऽपि जीव-नानात्वसिद्ध्यै इमं हेतुराशिं प्रायुङ्क्त—

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ (सां. का. १८)

एतत्कारिकाव्याख्यावसरे युक्तिदीपिकाकारश्चैवमाह—[१] "जन्मलक्षणञ्च-मरणलक्षणञ्च कार्यकारणस्यावस्थाऽन्तरं परस्परविरोधि, तमः प्रकाशवत्। तत्र यद्येक आत्मा स्यात् तेन यथैकं द्रव्यं तमःप्रकाशावेकप्रदेशोपनिपातिनौ न शक्तोऽत्यनुभवितुमसम्भवात्। एवम् जन्ममरणे अपि न शक्नुयादुप-भोक्तुम्। अस्ति चायं केनचित् कार्यकारणेन जन्मोपभोगः केनचिन्म-रणोपभोगः। तेन मन्यामहे नाना आत्मानः, येषां विरोधिधर्मोपभोग-सामर्थ्यमिति। तथा करणानां प्रकाशातिशयो विषयग्रहणलक्षणेऽशुद्-ध्यतिशयश्चाष्टाविंशतिधाऽशक्तिः, तयोः परस्परविरोधादेकेनात्मना युगपदुपभोगो नोपपद्यते। न हि शक्यमेकेनात्मना प्रकाशातिशयो विषयग्रहणलक्षणोऽशुद्ध्यतिशयश्चाशक्तिलक्षणो विरोधित्वात् युगपदुप-भोक्तुम्। अस्ति चायं करणनिमित्तः प्रतिपुरुषं नियमः, तेन मन्यामहे—नाना आत्मान इति।

किञ्चान्यत्- अयुगपत् प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम्। कस्मात्—अयुगपत् प्रवृत्तेः प्रधानस्येति शेषः। यस्य प्रवृत्तिरुपपद्यते—कस्य प्रवृत्तिरुपपद्यते प्रधानस्य, कथमित्युच्यते। यद्येक आत्मा स्यात् तेनैक-पुरुषाधिकारनिबद्धं प्रधानम्। शक्तश्चासौ युगपदनेकानि शरीराणि उपभोक्तुमित्यतो यावद्भिः शरीरैरपचितासु, कालमात्रास्वस्मिन् भव-परिवर्ते भवितव्यं सर्वेषामुत्पत्तिं प्रति युगपत् प्रर्वेतत। दृष्टा तु प्रधानस्य अयुगपच्छरीरभावेन प्रवृत्तिः। तस्मादयुगपत् प्रवृत्तेश्च नाना आत्मान इति।

---

१. युक्तिदीपिका, कलकत्तासंस्कृत सीरीज, ग्रन्थाङ्क २३, १९३८, पृ. ९८.९९.

सांख्यसूत्रकारेणाप्युक्तम्—'जन्मादि व्यवस्थातः पुरुषबहुत्वम्' (सां० सू० १.१४६) जन्मादिसम्बन्धे आक्षेपपरिहारस्तु भाष्यकृतां एवं कृतः[1]—"ननु पुरुषो निर्धर्मकस्तत्र कथं जन्ममरणकरणबन्धमोक्षादि-विरुद्धधर्मसाङ्कर्यमापद्यते भवद्भिरपि सर्वेषां धर्माणामुपाधिनिष्ठत्वाभ्यु-पगमादिति चेन्न। उक्तधर्माणां संयोगवियोगभोगाभोगरूपतया पुरुषे स्वीकारात्। परिणामरूपधर्माणामेव पुरुषे प्रतिषेधस्योक्तत्वादिति तत्रैव 'उपाधिभेदाज्जीवभेदः' इत्येतन्मतमपि कैश्चित्स्थापितम् 'उपाधिभेदेऽ-प्येकस्य नानायोग आकाशस्येव घटादिभिः' (सां० सू० १-१५०)। तच्चैवं परिहृतम्—'उपाधिर्भिद्यते न तु तद्वान्' (सां० सू० १-१५१)। अतः जन्ममरणादिविरुद्धधर्माणां वास्तविकः आध्यासिको वा सम्बन्धः एकस्मिन् आत्मनि न स्थापयितुं शक्यते 'एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः' (सां० सू० १-१५२) 'अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात्' (१.१५३)। बन्धमोक्षव्यवस्थयाऽपि आत्मनो नानात्वं सिद्धं भवति सूत्रकारेणोक्तम्—'पुरुषबहुत्वं व्यवस्थातः' (सां० सू० ६.४५)। अस्य च भाष्यम्—'ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्तीत्या'दि श्रुत्युक्तबन्धमोक्षव्यवस्थात एव पुरुषबहुत्वं सिद्ध्यतीत्यर्थः।' उपाधिभेदव्यवस्थाशङ्कापि तत्र एव समाहिता—"उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम्' (सां० सू० ६.४६) द्वाभ्यामपि प्रमाण-विरोधः' (सां० सू० ५.४७)।

अद्वैतवादमाक्षिप्य सांख्यसूत्रकारः कथयति—'वामदेवादिर्मुक्तो नाद्वैतम्' (१.१५७)। यदि वामदेवादीनां मोक्षप्रतिपादनमर्थवादमात्रं तर्हि भविष्यत्यपि कश्चिन्मुक्तो भविष्यतीति न सम्भाव्यते—'अनादाव-द्ययावदभावाद् भविष्यदप्येवम्' (सां० सू० १.१५८)।

*पूर्वमीमांसादर्शनम्*—जैमिनीयं मीमांसादर्शनमपि आत्मनो नानात्वं प्रतिपाद्य तत्र विविधकर्मणामधिकारित्वकम् एककर्मजन्यफलभोक्तृत्वञ्च स्थापयति। पार्थसारथिमिश्राः स्पष्टमुद्घोषयन्ति[2]—तस्मात् प्रति-

---

१. सांख्यप्रवचनभाष्यम्, भारतीय विद्याप्रकाशन, वाराणसी, पृ. १०४

२. शास्त्रदीपिका, निर्णयसागर प्रेस, १९१५, पृ. १२५, सू. १.१.५

शरीरं भिन्ना एवात्मानः सर्वगता नित्याः एवञ्च बद्धमुक्तादिव्यवस्थापि युक्ततरा भवति ।"

प्राभाकरः शालिकनाथमिश्रोऽपि एकात्मवादं सम्यगालोच्य नानाजीववादं स्थापयति—[१] "आह—विभुत्वञ्चेदात्मनः, तदा सर्वशरीरेष्वेक एवाऽऽत्मास्तु गगनवत्। यथा गगनमेकमेव घटमणिकादितत्तदनेकसम्बन्धि, तथाऽऽत्मापि किं नाभ्युपेयते, किं प्रत्यायतनं भेदाभ्युपगमेन। उच्यते—यस्तावत्प्रतिपत्ता परायतनस्वामिनं स्वप्रयत्नपूर्वकात्मीयशरीरसमवेतकर्मसमानचेष्टादर्शनादनुमानतः प्रत्येति प्रयत्नवत्तया, नाऽसौ तं ग्राहकैकरसतया, किन्तु ग्राह्यकोटिनिविष्टमनात्मभूतमेव। तेन प्रतीतिसिद्धत्वाद्भेदस्य, अलं भेदाभ्युपगमेनेति वचनमकिञ्चित्करम्। न हि परायतनस्वामिनि स्वमित्येवमनुमानमुदेतुमलम्। यथा मम शरीरे मदीयप्रयत्नपूर्विकाचेष्टा, तथा परशरीरेऽपि मत्प्रयत्ननिबन्धनैवेति प्रत्यक्षविरोधात्। प्रत्यक्षेण हि स्वात्मनि समन्वयप्रयत्न उपलभ्यते। न च परशरीरचेष्टानुगुणः प्रयत्नस्स्वात्मनि पुरुषाणां प्रत्यक्षीभवतीति, पर एव प्रयतिता परशरीरेऽनुमीयते। नन्वेवमनुमानेन परात्मप्रतीतौ, कथमिदमुच्यते 'अगृह्यो न हि गृह्यते" (बृ० उ० आ० ४, ब्रा० २, ख० ४) इति। परेण न गृह्यत इत्येतदभिप्रायमेतद्भवतीत्युच्यते ग्राहकैकरसतया परेण न गृह्यत इति तस्यार्थः, तस्मान्न विरोधः।

किञ्च नानाव्यवस्थाना नानाभूताः प्रतिक्षेत्रं पुरुषाः, धर्माधर्मसुखदुःखादिव्यवस्थादर्शनात्। अन्यथा ह्येकस्य धर्माधर्मादयस्सर्वस्य भवेयुः।"

*जैनदर्शनम्*—अवैदिकं जैनदर्शनमपि आत्मवादि। तन्मतेऽपि जीवः चेतनः नित्यः परिणामी वा। आचार्य उमास्वातिः जीवलक्षणमेवमाह—

'उपयोगो लक्षणम्' (त० सू० २.८)

---

१. प्रकरणपञ्चिका, बनारस हिन्दू यूनिवर्सिटी, १९६१, पृ. ३४४.४५

तत्रैव जीवस्य अनेके भेदा अपि प्रदर्शिताः—"औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ ।"

"द्विनवाष्टादशैकविंशति त्रिभेदा यथाक्रमम् ।"

इत्येवमेभिर्निदर्शनैः स्पष्टं परिलक्ष्यते यत् बाहुल्येन सर्व एव आत्मवादिनो दार्शनिकाः नानाजीववादमेव स्थापयन्ति ।

# पदस्वरूपसमीक्षा

*जगदीशचतुर्वेदी*

तत्र तावत् पद्यते = गम्यते अर्थात् ज्ञायते अर्थो येनेति व्युत्पाया घञ्प्रत्यये संज्ञापूर्वकत्वादत्र वृद्ध्यभावे पदशब्दस्य सिद्धिर्भवति। एतेन यजुर्वेदप्रातिशाख्यप्रोक्तम् "*अर्थः पदम्*"[1] इति पदलक्षणं सङ्गतं भवति, यतोहि अर्थोऽस्ति यस्मिन्नित्यर्थे अर्थशब्दो वर्तते। ततश्च यो वै सार्थकः शब्दः अक्षरसमुदायः अक्षरं वेति तत्पदमिति तदाशयः। अथवा शब्दार्थयोरितरेतराध्यासाद् "*अर्थः पदमिति*" विज्ञेयम्, यतोहि "*पदं श्रुतं* पदार्थं शृणु, अर्थं वदति" इत्यादि व्यवहारस्तयोरितरेतराध्यासबलेन प्रसिद्धः तस्माद् वाच्योऽर्थः कथं पदसंज्ञक इति नाशङ्कनीयमिह विज्ञैः। अतएव तत्राष्टमाध्याये "*अक्षरसमुदायः पदम् अक्षरं वा*"[2] इति पुनः पदलक्षणनिर्धारणं सङ्गतमेव नतु विरुद्धम्। तत्र रामः, कृष्णः, इत्यादि अक्षरसमुदायस्योदाहरणम्। अ, ई, उ वर्णाः अक्षरपदस्योदाहरणमिति। एते वर्णा अपि स्वतन्त्ररूपेण वाचकाः सन्ति, तत्र अकारो वासुदेवस्य वाचकः, ईकारो लक्ष्म्याः उकारश्च शम्भोरिति सुप्रसिद्धम्।

पदस्वरूपनिर्धारणविषये सन्ति पुरातनानां पदतत्त्वज्ञानां बहुविचाराः। तत्र केचनेह संगृह्यन्ते प्रथमं तावत् पदलक्षणानि प्रातिशाख्येष्वेवं मिलन्ति। तथाहि तैत्तिरीयप्रातिशाख्ये "*एकवर्णं पदमिति*"[3] यत्तु "*एकवर्णः पदमपृक्तः*" इत्येवं सूत्रस्वरूपं मत्वा नेदं सूत्रं पदसंज्ञाविधायकम्, अपितु अपृक्तसंज्ञाविधायकमिति वदन्ति, तदपि सत्यम्, यतोहि क्वचित् तथाविधपाठोऽपि समुपलभ्यते, किन्तु एकवर्णः पद-

---

१. शु० यजु० प्रा० अ० ३ सू० २

२. शु० यजु० प्रा० अ० ८ सू० ४१।४२

३. तै० प्रा० अ० १ सू० ५४ मद्रपुरीय विश्वविद्यालयस्थ संस्कृतकार्यालयात् १९३० ई० प्रकाशितम्

मत्येकं सूत्रम्। अन्यच्च तदनु *"सोऽपृक्तसंज्ञः"* इति पृथक् सूत्रमपि प्रसिद्धमस्ति। तत्र सूत्रद्वयमिति पक्षः एव साधु भाति, यतोहि एकवर्णः पदमपृक्तः इत्येकसूत्रपाठेऽपि एकवर्णः पदमुद्दिश्य अपृक्तसंज्ञा विधीयते। ततः एकवर्णस्य पदत्वं तन्मतेऽपि अविरुद्धमेव। अपिच शुक्लयजुर्वेदप्रातिशाख्यप्रोक्तम् *"अक्षरं वा"* पदमित्यनेन समन्वयोऽपि भवति। अतः एकवर्णः पदमिति पृथगेव पदविधायकं सूत्रमिति मन्तव्यम्। बृहद्देवतायाञ्च *"वर्णसंघातजं पदम्"*[1] इति। तदेवं समुपलभ्यमानेषु प्रातिशाख्येषु वर्णसमूहो वा पदमिति समानमेव लक्षणं प्रतिभाति। तत्र वाचको वर्णः, वर्णसमूहो वा पदमिति यजुर्वेदप्रातिशाख्यप्रोक्तेनार्थः पदमिति लक्षणेन, अन्येषामपि प्रातिशाख्यप्रोक्तलक्षणानां समन्वयो भवति, यतोहि अर्थवत् पदमिति तेषामभिप्रायः। तत्पदञ्च वर्णः, वर्णसमूहो वा भवतु। अत्र वर्णशब्देन उपसर्गाणां निपातानामपि ग्रहणं भवति। यतस्तेऽपि पदसंज्ञकाः सन्ति। यद्यपि ते सर्वे न साक्षाद् वाचकाः किन्तु द्योतकाः इति सिद्धान्तः पुनरपि द्योत्यमर्थमादायापीह पदलक्षणमिष्यते। अतः *"अर्थः पदमिति"* यजुर्वेदप्रातिशाख्यप्रोक्तपदलक्षणस्यायमेवाशयो विद्यते यत् शास्त्रव्यवहारे सामान्यरूपेण यत्रार्थवत्त्वं स्वीक्रियते, तत्र पदत्वं संगच्छते। एवञ्च शक्यद्योत्ययोरुभयोरप्यर्थयोः पदलक्षणे ग्रहणमिति बोध्यम्।

एवं पुराणादावपि—

वर्णैर्वर्णसमूहं हि पदमाहुर्विपश्चितः।
वर्णास्तु भुवनैर्व्याप्तास्तेषां तेषूपलम्भनात्॥[2]

इति शिवपुराणे वर्णसमूहो हि पदमिति निश्चितम्। तथा कौटिल्यार्थशास्त्रेऽपि *"वर्णसंघातः पदम्"*[3] इति पदलक्षणमुपलभ्यते। अपि च न्यायमञ्जर्यां जयन्तभट्टेनापि "वर्णसमूहः पदम्"[4] इति पदलक्षणं प्रोक्तम्।

---

१. बृहद्देवता अ० २ का० ११७

२. पु० पू० वा० सं० १२२ लो०

३. कौ० अर्थशा० २ अधि० १० अ० १६ सू०

४. न्याय म० आ० ६ पदस्वरूपनिरूपणे

अत्रेदमवगम्यते यत् प्रातिशाख्येषु एकाक्षरवर्णस्यापि पदत्वमङ्गीकृतम्, किन्तु तदनन्तरं पूर्वोक्तपुराणादिग्रन्थेषु वर्णसमूहः पदमिति पदलक्षणमेव जातम्, यतो लोके वर्णसंघात एव पदमिति तेषां तात्पर्यम्। ततश्चेह लोकमेवानुसरन्ति पुराणादिप्रोक्तपदलक्षणानि। एतावता एकवर्णः पदमित्यस्य खण्डनं न मन्तव्यम्, पदशास्त्रव्यवहारे एकवर्णेऽपि पदशब्दप्रवृत्तिदर्शनात्।

एवमग्रेऽपि प्रातिशाख्यमतमनुसरन्तः केचन आलङ्कारिका अपि तत्पदलक्षणं स्वीकुर्वन्ति। तथाहि साहित्यदर्पणे विश्वनाथेन—

*"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः"*[1]

इति पदलक्षणं स्वीकृतम्। तत्र एतत्पदस्वरूपं प्रातिशाख्योक्तपदस्वरूपतोऽव्यापकमस्ति। यतो ह्यत्र न केवलं वर्णाः पदम्, किन्तु ये वर्णाः प्रयोगार्हाः, अनन्वितैकार्थबोधकाश्च सन्ति त एव पदमिति तदभिप्रायः। दर्पणोक्तपदलक्षणात् पूर्वं काव्यालङ्कारसूत्रवृत्तौ वामनाचार्येण *"अतिप्रयुक्तं देशभाषापदम्"*[2] इति सूत्रितम्। तद्वृत्तौ च अतीव कविभिः प्रयुक्तं देशभाषापदं प्रयोज्यम्, यथा *"योषिदित्यभिललाष न हालाम्"* इत्यत्र हालेति देशभाषा पदम्। अनतिप्रयुक्तं तु न प्रयोज्यम्, यथा—

"कङ्केली काननालीरविरलविलसत्पल्लवा नर्तयन्त" इत्यत्र कङ्केली शब्दः न पदभाग् भवति, कविभिरनङ्गीकारात्।" तत्पदलक्षणञ्च मन्ये देशभाषाप्रयुक्त-पदसंग्रहार्थमेव जातम्। यतोहि कविभिः काव्येषु येषां देशभाषापदानामप्युपयोगः कृतस्तेषां संग्रहार्थमेवेदं सूत्रम्।

काव्यमीमांसायां राजशेखरेण "व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निदिष्टस्तदभिधेयोर्थस्तौ पदम्"[3] इति प्रोक्तम्। अत्र व्याकरणस्मृतिनिर्णीतः शब्दो वाचकः द्योतको वा भवतु, इति नाग्रहः, किन्तु अर्थोऽपि पदसंज्ञक इति तदाशयः। तस्मादत्र शब्दार्थौ

---

१. सा० दर्पणे २ परि० वा० स्व० नि० सूत्रे

२. काव्यालङ्कारसूत्रवृत्तिः अधि० ५ अ० १ सू० १३

३. का० मी० अधि० ५ अ० १ सू० १३

पदमिति पदलक्षणं पूर्वोक्तप्रातिशाख्यमतमन्वेति । काव्ये शब्दस्य अर्थस्य च स्वतन्त्ररूपेण प्राधान्यमस्ति, यतस्तावुभावपि व्यञ्जकौ स्तः।

जैनाचार्या अपि विशेषणविशिष्टमेव पदलक्षणं वदन्ति। तत्र प्रमेयकमलमार्तण्डे प्रभाचन्द्रमहोदयेन "वर्णानां परस्परापेक्षाणां निरपेक्षः समुदायः पदम्"[1] इत्युक्तम् । अर्थात् परस्परापेक्षवर्णा समुदाये निरपेक्षाश्च पदमिति तदभिप्रायः । तदेवं पूर्वोक्तविशेषणविशिष्टलक्षणैः निरर्थकशब्दानां पदत्वव्यवहारः निराकरणमेव कृतमिति सम्यगवगम्यते। यतो लक्षणे विशेषणपदं व्यावर्तकमेव भवतीति प्रसिद्धम्। वैयाकरणानां तु पदलक्षणं प्रत्याहारेणैव प्रायः समुलभ्यते । तत्र-वैयाकरणशिरोमणिर्महर्षिः पाणिनिः पदलक्षणं सुप्तिङन्तं पदमिति प्रत्याहारं पुरस्कृत्य प्रोक्तवान् । तत्र सुप्प्रत्याहारेण "स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्"[2] इत्येकविंशतिः प्रत्ययाः संगृह्यन्ते। एवं तिङ् प्रत्याहारेण "तिप्तस्झि सिप्थस्थ मिप् वस् मस् तातांझ थासाथां ध्वमिड् वहिङ् महिङ्"[3] इत्येतेऽष्टादश लादेशाः समवगृह्यन्ते। तत्र सुप्प्रत्याहारः प्रातिपदिकशब्दात् परो भवति, यथा रामः रामौ रामाः, एवं तिङ्प्रत्याहारश्च धातोः पर एव भवतीति सिद्धान्तः। यथा भवति भवतः भवन्ति, इत्यादिषु। सुतिङौ च प्रत्याहाराविति पाणिनीयपदशास्त्रमनुसरन्तः सर्वदा स्मरन्ति। यतः पदज्ञानं विना साधुशब्दप्रयोगो न भवति, विना साधुशब्दप्रयोगञ्च स शब्दः कामधुग् न भवति। साधुशब्द एव स्वर्गे लोके च कामधुगिति महर्षिपतञ्जलिना महाभाष्ये उद्घोषितम् । "एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति"[4] इति ।

भगवतः पाणिनेरनन्तरं प्रायः सर्वे शाब्दिकाः सूत्रशैलीमनुसरन्तो मुनयो विवेचकाः विद्वांसश्च प्रत्याहारेणैव पदलक्षणं स्वीकुर्वन्ति। किञ्च

---

१. प्र० क० मा० परोक्ष प्र० वा० सू० ३।१०१

२. अष्टाध्यायी अ० ४ पा० १ सू० २

३. ,, अ० ३ पा० ४ सू० ७८

४. महाभाष्यम् अ० ६ पा १ सू० ८४ एकः पूर्व परयोः

महर्षेः पाणिनेरिदं पदलक्षणं बहुव्यापकमस्ति। यतो वार्तिककारः कात्यायनोऽपि "विभक्त्यन्तं पदम्"[1] इति मन्यते। व्याकरणशास्त्रे "विभक्तिश्चेति"[2] सूत्रमस्ति। तत्र विभक्तिपदेन सुप्तिङौ गृह्येते तस्मात् सुबन्तं तिङन्तञ्च पदमिति फलितम्।

एवं नाट्यशास्त्रे भरतमुनिनापि "विभक्त्यन्तं पदम्"[3] इति प्रोक्तम्। तथा नैयायिकप्रवरेण महर्षिणा गौतमाचार्येण न्यायसूत्रे "ते विभक्त्यन्ताः पदमिति"[4] सूत्रितमेव। अत्र सुप्तिङन्तं पदम्, विभक्त्यतं पदमित्यादि स्वरूपनिर्णये चोपसर्गनिपातयोरपि पदत्वमस्त्येव। यद्यपि तत्र विभक्तिर्नावलोक्यते, पुनरपि सुब्विभक्तिस्ततः समायाति, तदनन्तरं तल्लुक् च भवति। अतो लुप्तविभक्तिकशब्दा अपि पदमिति मन्तव्यम्। एवञ्च प्र परा अप इत्याद्युपसर्गाणाम्, च ह वेति निपातानां भू, पच पठ नद इत्याख्यातानाञ्च पदत्वमिति सिद्धान्तः। अतएव तद्भाष्यम् "यथा दर्शनम् विकृता वर्णा विभक्यन्ताः पदसंज्ञा भवन्ति। विभक्ति द्वयी नामिकी अख्यातिकी च ब्राह्मणः पचति इत्युदाहरणम्"[5]। उपसर्गनिपातस्तर्हि न पदसंज्ञा, लक्षणान्तरं वाच्यमिति ? शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः पदसंज्ञार्थमिति पदेनार्थसम्प्रत्यय इति प्रयोजनं सङ्गच्छते। ते विभक्यन्ताः पदमिति सूत्रव्याख्याने न्यायवार्तिकतात्पर्ये श्रीवाचस्पतिमिश्रमहोदयेन त एव=वर्णा एव पदं न तद्व्यतिरिक्तं स्फोटाख्यमिति, एव पदं तत्र दत्वा साधु विवेचितम्। तच्चेह विस्तरभयान्नेह संगृह्यते। सिद्धान्ततः तन्मते वर्णा एव पदम्। ततोऽपि बोधदर्शनादिति भावः।

अन्यत्र न्यायशास्त्रे च "वृत्तिमत्त्वं पदत्वं"[6] "शक्तं पदम्"[7] वेति पद-

---

१. ,, अ० १ पा० २ सू० ६४ वा० १८

२. अष्टाध्यायी १।४।१०४

३. नाट्यशास्त्रम् १५।का० ३६

४. न्यायदर्शनम् २ अ० २ आ० ६० सू०

५. ,, ,, वात्स्यायनभाष्ये २।२।६०

६. शब्दशक्तिप्रकाशिकायां नामनिरूपणम्

७. न्या० सि० मु० श० ख० पदविभागे

स्वरूपम् मिलति। किन्तु तत्पदशब्देन नाम्न एव ग्रहणं बोध्यम्। यतः श्रीमज्जगदीशतर्कालङ्कारभट्टाचार्येण प्रकृतिभेदनिरूपणप्रसङ्गे नाम्नः स्वरूपनिर्धारणे पदं विभक्त्यन्तमित्येव स्वीकृतम्। कृष्णकान्ती टीकायाञ्च स्पष्टमिदमुक्तं यत् ननु पदत्वं शक्तिमत्त्वं तदा समासस्यातथात्वात्, अर्थात् नैयायिकनये समासे शक्त्यभावात् विभक्तिसहकारेणापि कथं तत्प्रयोग इत्यत आह, पदं विभक्त्यन्तमिति। अपि च यत्र शक्तं पदम् इत्युक्तम्, तत्र पदविभागे नाम्नः एव विभागः कृतो वर्तते। तद्यथा—यौगिकं, रूढं, योगरूढं यौगिकरूढमिति चतुर्विधं पदं लभ्यते। एतावता न्यायसूत्रोक्तपदलक्षणेनेदं पदलक्षणं विलक्षणमिति न मन्तव्यम्।

पाणिनीयव्याकरणेतरव्याकरणेष्वपि पदलक्षणं प्रत्याहारसरणिमेवानुगच्छति। तथाहि जैनेन्द्रव्याकरणे "सुम्मिङन्तं पदम्"[1] इति पदलक्षणमस्ति। अत्र सुप् प्रत्याहारः मिङ् प्रत्याहारश्चेति प्रत्याहारद्वयं पाणिनीय व्याकरणवद् वर्तते। किन्तु पाणिनीयव्याकरणे तिङ प्रत्याहारमादाय प्रथम मध्यमोत्तम पुरुषव्यवस्था जाता। इह जैनेन्द्रव्याकरणे तु मिङ् प्रत्याहारेण पूर्वमुत्तमपुरुषः मध्ये मध्यमपुरुषः अन्ते चान्यपुरुष इति क्रमो निर्धारितः। अत्रेदमेव तात्पर्यं ज्ञायते यत् सर्वतोऽधिकं सान्निध्यमहं पदार्थस्येति पुरुषत्रयव्यवस्थायां सान्निध्यक्रमो जातः। एवं शाकटायन व्याकरणे "सुङ्पदम्"[2] इति सूत्रं विद्यते। पाणिनीय व्याकरणादत्र प्रत्याहारसौकर्यमिदमेव यत् एकेनैव सुङ्प्रत्याहारेण प्रसिद्धावुभावपि सुप्तिङावनुस्मर्येते। भवतु तत्र तत्र सम्प्रदायानुसारेण पदप्रत्याहारव्यवस्थासौकर्यम्, पुनरप्यर्थतः महर्षि पाणिनेः सिद्धान्तमेवानुगच्छति सर्वेषां प्रत्याहारलक्षणम्।

तदित्थमिह पदस्वरूपविवेचने चातुर्विध्यमिव भाति पदलक्षणस्य। तत्र प्रातिशाख्येषु द्विविधं पदलक्षणं जातम्। पूर्वं वै "अर्थः पदमिति"[3] लक्षितम्। तत्रार्थस्यैव प्राधान्यमवगम्यते। तेन द्योतकशब्दानां पदत्वं

---

१. जैनेन्द्र व्या० १ अ० २ पा० १०३ सू०

२. शा० व्या० १ अ० १ पा० ६२ सूत्रे

३. शु० यजु० प्रा० ८ अ० सू० ४१

नाङ्गीकृतं भवति, किन्तु तदनन्तरं पदलक्षणे अर्थः पदमिति नोपात्तम्, पुनरपि सार्थकपदानामेव पदत्वेनावबोधो मन्यते स चार्थः वाच्यः द्योत्यो वा भवतु इत्यत्र नाग्रहः, अतएव वक्ष्यमाणचतुर्विधपदानां संग्रहो भवति। अलङ्कारशास्त्रे च विशेषणविशिष्टं तृतीयपदलक्षणमुक्तम्। प्रत्याहारञ्च पुरस्कृत्य चतुर्थपदलक्षणं सम्पन्नम्। तत्र शाब्दिकाः नैयायिकादयश्च समायान्ति।

एषु सर्वेष्वपि पदस्वरूपप्रकारेषु "वर्णसमुदायः, वर्णो वा"[1] पदमित्येव फलितम्, यतो विभक्तिः वर्णोत्तरमेव लभ्यते। यद्यपि व्याकरणदर्शने नित्येन स्फोटेनार्थबोधो भवति, न तु वर्णैरिति तत्सिद्धान्तः, ततश्च कथं तत्र पदत्वं सङ्गच्छत इति शक्यते वक्तुम्, पुनरपीह स्फोटाभिव्यञ्जकाः वर्णाः पदमिति पदस्वरूपं समवधेयम्।

१. शु० यजु० प्रा० ८ अ० ४२ सू०

# मञ्जुनाथस्य मनोलहरी

*श्री शिवसागरत्रिपाठी*

संस्कृतसाहित्ये सर्जनाया अजस्रधाराविरतगत्या प्रवहमाना सदाविच्छिन्ना समस्तप्राचीनार्वाचीनासु विधासु सामयिकसमस्याभिरनुस्यूता च संस्कृतभाषायाः जीवितत्वं प्रमाणयति। संस्कृतकाव्यविधान्तर्गतलहरीकाव्यपरम्पराऽपि स्वस्था विद्यते। लहरीषु भक्ति-रस-व्यङ्ग्योक्तिप्रभृति मुक्तकविषया गृहीताः कविभिः। पण्डितराजजगन्नाथस्य सुधालहरी-अमृतलहरी-करुणालहरी-लक्ष्मीलहरी-गङ्गालहरीरचना विद्यन्ते। इलियतम्बुरानकृता 'सुधानन्दलहरी' रेवारामरचिता 'गंगालहरी' कृष्णतन्त्र-चिरञ्जीवलालविरचिते 'पीयूषलहर्यो' शङ्कराचार्यप्रणीता 'सौन्दर्यलहरी' काव्यानि वर्तन्ते। एवमेव कैकुलङ्गरराम वारियर-श्रीनिवासाचार्य-नीलकण्ठ-शंकरलाल-माधवकवीन्द्र-वासुदेवसरस्वती-रामनाथप्रभृतिकवीनां क्रमशः वागानन्द-शिवानन्द-कण्ठामृत-केशवकृपा-मुक्ति-अमृतानन्दआर्याप्रभृतिलहर्यः दृष्टिपथमागताः।

परम्परायामस्यां राजस्थानप्रदेशस्य काशीति विश्रुतायाः जयपुरनगर्या योगदानमपि विद्यते। अत्रत्येषु विद्वद्वरेष्वन्यतमानां श्रीहरिवल्लभशर्मणाम् 'शृङ्गारलहरी' आशुकवि श्री हरिशास्त्रिणां 'वाणीलहरी' भट्टमथुरानाथशास्त्रिणां 'मनोलहरी' प्रसिद्धाः कृतयो वर्तन्ते। एतासु अन्तिमा लघ्वी परमुत्तमा रचना, अतस्तस्या अत्र परिचयो दीयते। अस्याः रचयिता 'साहित्यमहोदधिः' 'कविसार्वभौमः' परमशिक्षाशास्त्री कुशलपत्रकारः संगीतमयकाव्यप्रणेता मञ्जुनाथोपाह्वमथुरानाथशास्त्री अस्ति। ऐतेषां महाभागानां समस्तजीवनं साहित्यसर्जनायामर्पितमासीत्। यशोलिप्सां स्वार्थवृत्तिञ्च च दूरीकृत्यास्य लेखनी प्राचीनां नवीनाञ्च शैलीमाश्रित्य काव्य-गद्य-गीति-कथा-उपन्यासयस्य साहित्यस्योद्गिरणं कृत्वा संस्कृतस्य जीवितत्वं प्रमाणितमकरोत्।

प्रस्तुतरचनायां कविवरेण प्रथमन्तु मनोलहर्या व्याख्या कृता। ततः स्वविनम्रभावं प्रदर्श्य तेन स्वीकृतं यदेषा लहरीकाव्यशृङ्खलाया एव एका ग्रन्थिः—

'नवीनो नाप्यर्थो न च वचसि काचिद्रुचिरता
स्फुरत्प्रासस्कन्धा न च रुचिरबन्धा शिखरिणी।
तथाप्यन्यान्येषामिह लहरिनाम्नोऽनुकरणा-
न्निबद्धेयं सद्यो मदयतु मदुद्योगलहरी ॥'

वस्तुतः नवीनार्थ-रुचिपदशय्या अनुप्रासादिप्रयोगसरसच्छन्दो-विधानप्रभृतिगुणैः समन्वितेयं रचना भक्तिभावव्यङ्ग्योक्तिपरकैः विंशतिशिखरिणीपद्यैः संवलिताऽस्ति। शिखरिणीछन्दःप्रयोगे कविः अतिकुशल आसीत्। 'शिखरिणीमालाया' एव रसास्वादनं कृत्वा अखिलभारतीयसंस्कृत-साहित्यसम्मेलनस्य पञ्चविंशतितमाधिवेशन-मञ्चात् कविरयं 'कविशिरोमणि' रित्युपाधिना विभूषितः।

यद्यपि भट्टमहाशयस्याभीष्टदेवो गोपिकावल्लभः श्रीकृष्ण आसीत्, परमेषः सर्वदेवसमभावस्य पक्षपाती आसीत्। अतोऽस्य रचनासु विभिन्नदेवानां भक्तिरसपूर्णाः स्तुतयः प्राप्यन्ते। अत्रापि शिव-सरस्वती-भगवती-लक्ष्मीस्तुतिषु द्वे द्वे पद्यप्रसूने अर्पिते। प्रथमन्तु स शिवमेवं स्तौति—

'जटाजूटक्रीडत्त्रिदशतटिनीवीचिनिचया-
दुदञ्चन्नेणाङ्कः प्रकटयति यस्याभरणताम्।
नमस्कुर्वद्वृन्दारकनिकरकिर्मीरितपदो
दयायां हेवाकी मदुपरि पिनाकी स भवतात् ॥

भगवत्याः कृते प्रस्तुतेऽस्मिन् पद्ये तस्याः सर्वात्मस्वरूपं सरलया सरण्या विशदीकरोति—

कलात्मा कारूणामुरसि विपुलात्मा मतिमतां
सतां सौजन्यात्मा समितिषु धृतात्मा धृतिमताम्।
चले चैतन्यात्मा प्रचितिरचले विश्ववरदा
सदा सर्वात्माऽसौ जगति जयतात् सा भगवती ॥'

अग्रे च कमलासनायाः पद्मायाः स्वरूपं चित्रीकृत्य आशासमन्वित-वचोभिरात्मानमाह्लादयति—

'सुधाम्भोधेर्मध्ये मणिघटधरैर्दिग्गजकरैः
सुखस्वच्छैस्तोयैर्विलसदभिषेकोत्सवसुखा ।
दयास्निग्धालोकैः कृतभयविमोकैर्विभवदा
सदा सेयं पद्मा सरसिरुहसद्मा सुखयतात् ॥

अपि च—

'अये पद्मे ! मातः किमपि करुणातः स्पृशसि चे-
दिमं दीनं हृष्यद्द्रविणकणलीनं जडतया ।
ध्रुवं सत्यं जाने विभवपरिमाणे सह मया
तदा स्वर्गस्थानामपि जननि ! का नाम तुलना ॥'

प्रसिद्धमनोवैज्ञानिकः जेम्समहोदयः मनःसाम्यं नदीप्रवाहेण करोति, यत्र परस्परमविच्छिन्ना असंख्यबिन्दवः प्रवाहरूपा प्रतीयन्ते, तथैव विविधा मनोलहर्योऽविच्छिन्नप्रवाहरूपेण 'मनः' कथ्यन्ते । एता एव रचनायां विभिन्नरूपेण प्रकटीभूताः । स्तुतिपरकपद्यानां पश्चात् केषुचित्पद्येषु एतादृशाः संकेताः प्राप्यन्ते, ये खलु जीवनघटनाभिः सम्बद्धा प्रतीयन्ते । अन्वेषणशून्यलेखिन्या यत् किञ्चद् विलिख्य कवि-गर्वेण कुशलकविं तिरस्कुर्वन्तः कञ्चिन्मिथ्याकविमुपवर्णयति—

'यदुद्गीर्णं किञ्चिद्विचयविमुखाल्लेखनिमुखा-
त्तदेव प्रोद्ग्रथ्नन् जगति कविगर्वं वहति यः ।
स एव न्यक्कर्तुं पटुमपि कविं चेत्प्रघटते
विलोके लोकेऽस्मिन् ननु विलुलिताऽलीकलहरी ॥"

अग्रिमे मनस्तरङ्गे कवितादर्पवशाद् विदुषः तिरस्कुर्वन्तो राजकीय-पदास्था अधिकारिण आक्षिप्ताः यत्तेषां वल्गना तु पञ्जरस्थसिंहानां समक्षं शिवानां कलकलस्वरूपैव वर्तते—

'निरुन्धन्नाम्नायं सुजनसमुदायं परिहरन्
पदस्थानां पुंसां वचननिचयो वल्गति बुधान् ।

परं स्पष्टं दृष्टं भवति यदयं पञ्जरजुषां
समक्षे सिंहानां शिव शिव शिवानां कलकलः ॥'

एकस्यां मनोलहर्यां कविनेदमनुभूतं यत्केचित्तु द्विजानां कर्तव्याद् गुणानामवाप्तेश्च देववाणीं संस्कृतं पठन्ति, अपरे धनाप्तेराशातः आंग्ल-भाषाया अध्ययनं कुर्वन्ति। परन्तु यः कोऽपि गृध्र इव आङ्गलभाषा-मधीत्य उच्चपदञ्च प्राप्य आत्मानं सर्वश्रेष्ठं मन्यते, अन्यांश्च तिरस्करोति, तन्न वरम्।

जयपुरराज्यस्य कवीश्वराः परम्परातः स्वतन्त्ररूपेण साहित्य-सर्जनासक्ता विशिष्टावसरे आगत्य राजसभायां स्वरचनाः श्रावयित्वा पुरस्कृताः सन्तः सम्मानपात्राणि भवन्ति स्म। परमेकदा जयपुररा-जतन्त्रस्यैकोऽधिकारी तेषां कवीश्वराणां नित्यमुपस्थितिं तद्रचना-प्रस्तुतिञ्चानिवार्यामकरोत्। परं भट्टपादाः प्रक्रियामेतामनुचितसम्मा-नार्हां च मत्वा प्रतिवादमकुर्वन् सफलताञ्चाप्नुवन्। तदानीन्तनस्या-क्रोशस्यैका झल्लिका अत्र दृश्यते—

'अहं सर्वश्रेष्ठो वपुषि च गरिष्ठो द्विजकुले
सघूत्कारं सर्वानिति लघयति प्रेक्ष्य पतगान्।
प्रतिष्ठार्हे तुङ्गे तरुशिरसि तिष्ठासति च तत्
प्रशस्योऽयं गृद्धः प्रथयति निजस्योच्छ्रयरुचिम् ।'

अपि च—

जलान्तःसुप्तानामहह महिषाणां शिरसि यत्
खलः खेलामत्तोऽभ्रमदिति महत्तोषणकरम्।

परमभक्तोऽयं मञ्जुनाथः स्वमनः स्वाभीष्टदेवस्य श्रीगोविन्दस्य शरणमानेतुं 'गोविन्दवैभव'-नाम्नि काव्येऽन्तिमे प्रार्थनामकरोत्। तमेव समर्पणभावं प्रस्तुतरचनायाः अन्ते प्रादर्शयत्—

नितान्तं गूढानां निगमवचनानामनुगमं
न मन्दोऽहं जाने बहुविधविधानेषु धृतधीः।
चतुर्दिक् चिन्ताभिर्व्यपगतसुखं यत्नविमुखं
मनो मे गोविन्दे सकलसुखकन्देऽभिरमताम् ॥

अपि च—

'त्वदाधारादाप्ता किमपि कविता तत्परिचया
दवाचां च प्राचां वचनरचना चाप्यनुकृता ।
अये मे वाग्ब्रह्मन् ! विदमतनये त्वन्तसमये
दयालुर्गोविन्दो धृतदृगरविन्दो मयि भवेत् ॥'

एवं विलक्षणायाः प्रतिभाया धनिनः श्रीमथुरानाथशास्त्रिमहाभागाः स्वरचनाशक्त्या अविरतसाहित्यसेवां कृत्वानेकाभिः रचनाभिः संस्कृत-भाषायाः सेवां महता मनोयोगेनाजीवनमकुर्वन् । एतेन महाकविना न केवलं जयपुरं राजस्थानं वा प्रत्युत सम्पूर्णं संस्कृतजगद् धन्यं जातम् । अन्ते त्विदं कथनं नानुचितं भविष्यति—

जातं जयपुरं शून्यं
कलागीत्यादिकं तथा ।
संस्कृतं चाधनं जातं
मञ्जुनाथे दिवं गते ॥

# पञ्चमहाकाव्येषु चन्द्रः

*डा० श्रीमती वनमाला भवालकर*

[ चन्द्रस्याह्लादकत्वम्, सामान्यतयोपमानम्, मुखस्योपमानं, निस्तेजश्चन्द्रः, अन्यान्यवस्तुवर्णनेषु चन्द्रः, अनेकचन्द्रकल्पना, चन्द्रस्य कलङ्कः, चन्द्रकलानां क्षयवृद्धी, चन्द्रस्य परिवेषः, चन्द्रवैरी राहुः, चन्द्रसमुद्रासम्बन्धः, चन्द्रो रजनी च, चन्द्रस्तमश्च, चन्द्रो व्योम च, चन्द्रस्य रक्तवर्णः, चन्द्रः कौमुदी च, चन्द्रस्य सुधा, चन्द्रस्य सूर्येण सम्बन्धः, अन्यग्रहयुक्तश्चन्द्र', चन्द्रस्य नक्षत्रयोगः, चन्द्र ऋतवश्च, चन्द्रः कुमुदकमले च, चन्द्रश्चन्द्रकान्तमणिश्च, चन्द्रो मदनश्च, विरहिजनतापकरश्चन्द्रः, पौराणिकवृत्तान्तेषु चन्द्रः ]

'चन्दयति–आह्लादयती–ति चन्द्रः' इति व्युत्पत्त्या चन्द्रः प्राय आह्लादकत्वगुणोत्कर्षस्य निदर्शनमस्तीति सुस्पष्टमेव। इममेव गुणमधिकृत्यप्राचीनैः संस्कृतकविभिश्चन्द्र उपमानरूपेण मुहुर्निर्दिष्टः। महाकाव्यलक्षणानुसारेण महाकाव्येषु चन्द्रोदयवर्णनमुपलभ्यते। आदिकविवाल्मीकिनापि रामायणे चन्द्रोदयस्य हृद्यं वर्णनं प्रस्तुतम्। एषा परम्परा परवर्तिकविभिरप्यहमहमिकामनुसृत्य नवनवकल्पना उद्भाविताः। अद्यतने विज्ञानयुगे मानवेन साक्षाच्चन्द्रलोकं प्रविश्य चन्द्रभुवि पदं निधाय तस्य यथार्थस्वरूपं सम्यगवधारितम्। सुधानिधिरिति कविभिर्वर्णिते चन्द्रे जलस्याप्यभावो वर्तते. कुतो तत्र सुधा। अमृतद्युतावस्मिन् प्राणधारणार्थं वायुरपि नास्ति, अमृतत्वप्रदानं तु दूर एव। एष ओषधीनां पतिरिति प्रथितश्चन्द्रमाः केवलं प्रस्तरैर्धूलिभिश्च परिपूर्णो वनस्पतिविरहितः। मृगाङ्के शशभृति नास्ति मृगो शशो वा, अङ्कस्तु गर्तरूपः। पृथ्वीतोऽदृश्यः कविभिस्तर्कितोऽकलङ्को निर्मलश्चन्द्रस्यापरोऽपि पृष्ठभागस्तथैवाङ्कितो यथा दृष्टिगोचरस्तस्य पृष्ठभागः। शरीरत्यागानन्तरमेव मृतस्य मनश्चन्द्रं गच्छति, चन्द्रो वै पितृलोक इत्यादय कवीनामभिमताः श्रुतीर्विफलीकृत्य मनुजा जीवन्त एव सशरीराश्चन्द्रं गताः, प्रत्यागत्य च पृथ्वीस्थजनान् चन्द्रलोकादानीतानां प्रस्त-

राणां दर्शनमपि कारितवन्तः। तथापि भूलोकवासिनां कृते वैज्ञानिकदृष्ट्या कुतूहलस्य विषयीभूतस्यास्य चन्द्रस्याह्लादकत्वं तु यथापूर्वमद्याप्यविनाश्येव वर्तते। अत एव पूर्वसूरिणां काव्येषु प्रस्तुनानां चन्द्रविषयकल्पनानां सरसत्वं हृदयावर्जकत्वं वा त्रिकालाबाधितमिव प्रतिभाति।

संस्कृतानुरागिणां विदुषां मते संस्कृतसाहित्यस्य पञ्चप्राणभूतानि वर्तन्ते पञ्च महाकाव्यानि। तानि यथा—कविकुलगुरोः कालिदासस्य रघुवंशं कुमारसम्भवं च, भारविविरचितं किरातार्जुनीयं, माघप्रणीतं शिशुपालवधं, श्रीहर्षस्य नैषधीयचरितं चेति। एतेषु प्रयुक्तानां चान्द्रबिम्बानां निरूपणमपि कवीनां प्रगल्भप्रतिभायाः पर्याप्तं परिचायकमस्ति।[1]

प्रथमं तावत्कालिदासेनैव स्पष्टीकृतं यत् "यथा प्रह्लादनच्चन्द्रः……… । तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥ ( रघु० ४.१२ )। अत आह्लादकत्वोत्कर्षस्य द्योतकश्चन्द्रः सामान्यतयोपमानरूपेण सर्वैरेव कविभिर्भृशं निर्दिष्टः। यथा—राजेन्दुर्दिलीपः ( रघु० १.१२ ), नृसोमः ( रघु० ५.५६ ) चन्द्रनिभः सुदर्शनाख्यः सुतः ( रघु० १८.३५ )। हिमांशोरिव नयनाभिरामा सुषेणस्य कान्तिः ( रघु ६.४७ )। द्विजराजकान्ती रघुः ( रघु० ५.२३ ) अनलसोमद्युतिर्दशरथः ( रघु ६.१५ ) इत्यादिषु नयनाभिरामाकान्त्यै चन्द्रमाः पुरुषाणामुपमानमभूत् तथैव 'इन्दुप्रभेन्दुमती' ( रघु ६.७० ) ति स्त्रीकृतेऽपि इन्दुरेव उपमानरूपेण प्रयुक्तः। बालानां वर्णने प्रायः प्रतिपच्चन्द्रो नवोदितचन्द्रो वा कविभ्योऽरोचत। यथा—'प्रतिपच्चन्द्रनिभोऽयमात्मजः' इत्यजस्योक्तिः ( रघु ८.६५ ) नवोदयं पार्वणचन्द्रचारुं गौरी स्वमुत्सङ्गतलं निनाय ( कुमार ११.२१ ) पूर्वेव दिङ् नूतनमिन्दुमाभात् तं पार्वती नन्दनमादधाना ( कुमार० ११.२६ ), अमृतकरकलाकोमलं

---

१. रघुवंशे ७२, कुमारसम्भवे ९३, किरातार्जुनीये ४६, शिशुपालवधे ७८, नैषधीयचरिते ३७९, इति पञ्चकाव्येषु ६६, चन्द्रविषयकनिर्देशा उपलभ्यते।

भासमानं गर्भं कृत्तिकाभिरजनि (कुमार. १०.६०)[1] अन्यच्च, चन्द्रो, विशेषतो नवोदितचन्द्र इव राजाऽपि नयनोत्सव आसीत्—यथा—इन्दुमतीस्वयंवरप्रकरणे – प्रतिहारभूमौ नियुक्ता नृपं निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै (रघु. ६.३१) "तमाहितौत्सुक्यमदर्शनेन प्रजाः······ नेत्रैः वपु·········नवोदय नाथमिवौषधीनाम् (रघु. २.७३) "कौसल्य इति तस्यौरसः सुतः·····अभून्नेत्रोत्सवः सोम इति द्वितीयः" (रघु. १८.१७), प्रसादसुमुखे तस्मिन् (रघौ) चन्द्रे च विशदप्रभे। तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः (रघु. ४.१८)। तापापनोदनेनापि चन्द्रो जनानां प्रीतिभाजनकआसीत्। यथा—जनस्य·········बभूवतु द्वौ। तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥ (रघु. १६.५३)।

भारविणा किरातार्जुनीये राजनैतिकविवेचनेऽपि चन्द्रस्योपमानत्वं न हारितम। तथा हि—

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये। प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजाः नृपम्। माघोऽपि शिशुपालवधे चन्द्रं सामान्यतयोपमानीकृतवान्। यथा—शरच्चन्द्रमरीचिरोचिषं नारदं (कृष्णः ददर्श) (शिशु. १.५),·····पुरो निषेदिवान् कंसकृषः स विष्टरे। श्रितोदयाद्रेः····· अचूचुरच्चन्द्रमसोऽभिरामताम् ॥ (शिशु. १.१६); ऋषित्विषः······विरेजिरे। तुषारमूर्तेरिव नक्तमंशवः (शिशु. १.२१); परिपूर्णेन्दुरुचिर्महीपतिः (शिशु. १७.७१)।

श्रीहर्षस्य नैषधीय चरिते कान्त्याऽऽह्लादकत्वेन च नलस्य चन्द्रेणैकरूपत्वं बहुशः कल्पितम्। तद्यथा—वसुधा सुधांशुः (नैषध ११.७५) उर्वीतलशीतलद्युतिः (नैषध ६.२), निषधानां सुधाकरः (नैषधः १७.१४३), क्षितीन्दुः (नैषध २६.३१), क्षणदापतिप्रभः (नै० १.५६), राजचन्द्रः (नै० १०.३६) निषधानामाह्लादको नैषधेन्दुः (नै० ३.७१) इत्यादिषु नलविशेषणेषु। एष कल्पना भूयो विस्तारं नीता यथा—सुधांशुरेष प्रथमो भुवीति मत्सरिणः क्षितीशाः स्तुतिलाञ्छना-

---

१. अन्येऽपि निर्देशा—रघु १७.३०, रघु ३.२२, कुमार १.२५।

न्नलं निनिन्दुः ( नै० १०.४१, ४२ ); शतक्रतुर्हरित् क्रीडाद्रिमध्यास्य यत इन्दोरिव स्यन्दनमध्यास्य गच्छतो नलस्य तनुरामणीयकमालोक्य पौरस्त्रियः सानन्दा बभूवुः ( नै० १५.६२ )।

## चन्द्रो मुखं च

वर्तुलाकारः कान्तिमान् रमणीयश्चन्द्रमा मुखस्योपमानरूपेण कवीनामिष्टतरः। पञ्चमहाकाव्येषु सर्वैरेव कविभिर्मुखस्य सौन्दर्यं वर्णयितुं प्रधानसाधनरूपेण चन्द्र एव प्रयुक्तः। यथा—प्रसन्नमुखेन्दुर्दिलीपः ( रघु. २.६८ ), इन्दुमुखो हरः ( कुमार. ६.२२ ), सहेलहासच्छुरिताननेन्दुः कुमारः ( कुमार. १३.१३ ) आबालेन्दुमुखीन्दुमती ( रघु. ६.५३ ), पार्वतीमुखेन्दुः ( कुमार. ८.१६ ) इन्दुवक्त्रा पार्वती ( कुमार. ११.२२ ) इत्यादिषु कालिदासेन स्त्रीपुरुषबालानां मुखवर्णनेषु। न केवलं मुखस्य चन्द्रेण सादृश्यमपि तु चन्द्रादाधिक्यमपि यत्र तत्र कल्पितम्। यथा पार्वत्या वर्णने "...... परिभूय समेघलेखं शशिनश्च बिम्बम्। तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ (कुमार. ७.१६) यथा वा—हरो...नेत्राञ्जनाङ्कं हृदयप्रियायाः। कौपीनचलाञ्चलेन हरन् मुखेन्दोरकलङ्किनोऽस्या ॥ ( कुमार. ८.१६ ) इति कलङ्किचन्द्रादकलङ्किमुखस्याधिक्यं दर्शितम्। लक्ष्मीः पद्मे चन्द्रे च युगपत् न तिष्ठति, उमामुखे तु द्विसंश्रयां प्रीतिमवाप (कुमार. १.४३) अतो मुखस्य चन्द्रादधिकं सौन्दर्यमिति प्रतिपादितम्। किरातार्जुनीये भारविरपि निदर्शनालङ्कारेण व्यतिरेकेण वा मुखचन्द्रयोरुपमेयोपमानभावं कल्पितवान्। यथा—किरातरूपधारिणः शङ्करस्य वर्णने "धृता विकारांस्त्यजता मुखेन प्रसादलक्ष्मीः शशलाञ्छनस्य' ( किरात. १६-२१ )। यथा वा "आशु कान्तमभिसारितवत्या योषितः...। निर्जिगाय मुखमिन्दुमण्डलं स्वर्णपत्रतिलकाकृति कान्त्या ॥ ( किरात. ९.३८ ) माघस्य शिशुपालवधेऽपि मुखचन्द्रयोरेतादृशः सम्बन्धः भूयः प्रकटितः। यथा–'मानवत्या नमितमुखेन्दुः ( शिशु. ६.८४ ) श्रीमुखेन्दुः ( शिशु. १४.६ ) अप्सरोवक्त्रचन्द्राः ( शिशु. १७.५६ ), यथा वा जलकेलिवर्णने "कान्तायाः करकलशोद्यतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ( शिशु. ८.३३ )। अन्यत्र च वदनसरोजनिर्जितश्रीरिति

चन्द्रवर्णनम् ( शिशु. ८.४ )। अधिरुक्ममन्दिरगवाक्षमुल्लसत् सुदृशो रराज मुरजिद्दिदृक्षया। वदनारविन्दमुदयाद्रिकन्दराविवरदरस्थितमिवेन्दुमण्डलम् ( शिशु. १३.३५ ) इत्युपमा। अथ वा निनाय नो विकृतिमविस्मितः स्मितं मुखं शरच्छशधरमुग्धमुद्धवः ( शि. १७.१८ )। द्वारकावर्णने "क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्वधूजनश्चन्द्रमधश्चकार ( शिशु. ३.४३ ) इति विरोधाभासेन चन्द्रादपि द्वारकावासिस्त्रीजनमुखस्य सौन्दर्याधिक्यं प्रतिपादितम्। "आननेन शशिनः कलां दधत्... अभूदष्टमूर्तिधरमूर्तिरष्टमी ( शिशु. १४.८ ) इति निदर्शनालङ्कारेण चन्द्रमुखयोः सादृश्यं स्थापितम्। प्रथमं प्रबुद्धायाः कैटभद्विषः शयनाद् ( समुद्राद् ) उत्थिताया श्रियो वदनेन्दुनेव तुहिनद्युतिनोदमज्जि ( शिशु ६.३० ) इत्यत्र लक्ष्म्या वदनेन्दुरिवेन्दु उत्थित इति उत्प्रेक्षा।

चन्द्रमुखयोरेकरूपत्वं भूय उपबृंहितं परवर्तिश्रीहर्षेण स्वबृहत्काव्ये नैषधीयचरिते। यथा—नलस्य सौन्दर्यवर्णने तस्य 'साक्षादमृतांशुमाननम्" ( नै. १.१०० ), 'पक्षान्तमृगाङ्कमास्यम् ( नै. ६.१८ ), शशिप्रकाशाननम् ( नै. १२.१५ ),' वीरसेनसुतवक्त्रमण्डलं। प्राप...सुधांशुना मित्रताम्। (नै. १८.१०४)।' प्रगल्भेनानेन कविना नवनवकल्पनानामुद्भावनया चन्द्रमुखसादृश्यस्य चमत्कृतिरञ्जिनो विस्तारः कृतः। तद्यथा— "रोहिण्यादितारका यदि शशाङ्कस्याङ्कवर्तिन्यो भवेयुस्तर्हि चन्द्रश्चन्दनतिलकयुक्तेन नलमुखेन तुल्यो भवेत् ( नै. १४.६३ ) आस्यचन्द्र स्रवत्सुधाबिन्दुवृन्ततां नलकण्ठश्रिता मुक्तावलिरवाप ( नै. १४.६६ )। गौरमृत्तिलकमुखेन्दुर्नलः ( नै. २१.१६ )। यथा वा नलं प्रति दमयन्त्या वचने "जितस्त्वास्येन विधुः...." ( नै. ६.१४५ ) नलमुखस्येयं चन्द्राधिकसुषमा देवानामपि लिप्साकारणं-यथा—

पूर्णेन्दुमास्यं विदधुः पुनस्ते पुनर्मुखीचक्रुरनिद्रमब्जम्।
स्ववक्त्रमादर्शतलेऽथ दर्शं दर्शं बभञ्जुर्न तथाति मञ्जु॥
( नै. १.२० )

"तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ( नै. १.२० ) इत्यत्र 'शरत्पौर्णिमाचन्द्रादपि रमणीयतरं' नलमुखमिति भावः। अन्यत्र च "...जिताः स्मितेनैव विधोरपि श्रियः।...तदाननमस्योप-

मितौ दरिद्रता" ( नै. १.२४ )। यथा वा "धिक् तं विधेः पाणिमजातलज्जं निर्माति यः पर्वणि पूर्णमिन्दुम्। मन्ये स विज्ञः स्मृततन्मुखश्रीः कृत्वार्धमौल्ज्भद्धरमूर्ध्नि यस्तम्॥ ( नै. ३.२२ ) इति कवेः प्रतिभा विलासो दृश्यते।

'निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः।
सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे॥ ( नै.३.३३ )'
इति नूतना कल्पनोद्भाविता। यथा वा ग्लपितैरसुभिर्मनश्चन्द्रे निमज्जतीति श्रुतिर्दमयन्तीविषये नलमुखेन्दुपरा ( नै. ४.५२ ) इति नलमुखचन्द्रयोस्तादात्म्यं प्रतिपादितम। नलं चन्द्रवर्णनायेरितुं दमयन्त्या उक्तिर्यथा—"स्ववर्णना न स्वयमर्हतीति नियुज्य मां त्वन्मुखमिन्दुरूपम्। स्थानेऽत्युदास्ते शशिनः प्रशस्तौ……( नै. २२.१०४ )" नलमुखस्य चन्द्रेण सादृश्यं प्रमाणयति।

नलस्येव दमयन्त्या वदनस्य वर्णनेऽपि चन्द्रो बहुश उपमानीकृतः। तद्यथा—चन्द्रमुखी ( नै. ६.४० ) इन्दुमुखी ( नै. ११.३४; ११.६० ) विधुमुखी ( नै. २१.१४८ ) निशाकरज्ञातिमुखी ( १२.१४ ) आननचन्द्रभाः ( २१.२३३ ) मुखेन्दुबिम्बम् ( २२.१०२ ), शशाङ्काधिकास्य विम्बा ( १४.४० ), हिमांशुबिम्बबिडम्बिमुखी ( २२.१३५ ) विधुविधेयमाननमाननम् ( १८.१३२ ), जितसुधांशुमुखश्रीः ( ४.१३१ ), वक्त्रेण तृणीकृतेन्दुः ( ३.५४ )। नवकल्पनाविलासोऽपि दृश्यः यथा—'इन्द्रो दमयन्त्या आननचन्द्रं गाथासुधाकलाविलासैरलंचकार-अर्थात् वर्णयामास ( १०.१२३ )। 'कुङ्कुमस्वनया रमणीयं तस्या मुखं नृणामुदयमृगाङ्कशङ्कां सृजति ( ११.४४ ) 'वदनस्य रुचा चन्द्रं रदानां रुचा ताराः कचानां रुचा नभो जयन्तीं दमयन्ती ( १०.१०७ ) इत्यादि। 'भैम्या मुखमेव साक्षात् सुधांशुः, दिवः स्फुटं शशाङ्कस्तु लाक्षणिकः' ( १०.११६ ) अर्थात् लक्षणेन कलङ्केन युक्तः। कालिदासस्य कुमारसम्भव इव ( कुमार. १.४३ ) नैषधीयचरितेऽप्युत्प्रेक्षितं—

दिवा रजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम्।
आस्ये यदास्या न तदा तयोः श्रीरेकश्रियेदं तु कदा न कान्तम्॥

( ७.५५ ) भैमीमुखस्य तृतीयो भागो भालोऽर्धेन्दुखण्डः, भ्रुवौ कलङ्कः, यदि च मुखतृतीयभागोऽर्धचन्द्रतुल्यस्तर्हि पूर्णचन्द्रापेक्षयाऽधिकपरिमाणत्वाद् भैम्या वर्तुलमुखस्य श्रेष्ठत्वम् (७.७६) इति तर्कोऽपि कविना प्रस्तुतः। 'यशः पदाङ्गुष्ठनखौ मुखं चेति पूर्णेन्दुचतुष्टयम्,—अर्थात् षोडषकलचन्द्रचतुष्टयम्—अतो भैम्याश्चतुःषष्टिकलाः कथं न भवन्ति ( ७.१०७ ) इत्यन्या युक्तिः। अन्यत्र च "निःशङ्क संकोचित-पङ्कजोऽयमस्यामुदीतो मुखमिन्दुबिम्बम् ( ७.७७ ) ।

दमयन्त्या अधरदन्तस्वरादीनां वर्णनमपि मुखचन्द्रेण संवादि वर्तते। यथा—'भैम्या मुखेन्दुना सहोत्पद्यमानाऽधरोष्ठलेखा रागश्रिया शैशवयौवनीयां सन्ध्यां ब्रूते ( ७.३७ )', 'अस्या मुखेन्दोः सुधाभूमौ प्रतिबिम्बतं बिम्बीफलमेवास्या अधरोष्ठः' ( ७.३८ ), मुखचन्द्रिका-मेघेभ्यः क्षरणादग्रेसराणि स्रस्तानि पृषन्त्येवैषदायतं दन्तपंक्तिद्वयम् ( ७.४४ ), 'सुधयाऽधरेण भैमीमुखे स्थीयते, चन्द्रं विजित्य तस्या मुखं स्वयमेव मखभागभोजि, अतोऽमृतयज्ञभागदानेन तामुपाकर्तुं न शक्यम् ( ८.१०२ ) । "भैमीमुखेन्दोः पीयूषधरा मधुरा वागाविरसीत्। ( २२.१०२ ), 'ताम्रपर्णनद्यास्तट उत्पन्नैरिन्दुकुक्षिजैर्मौक्तिकैर्बाह्य-स्पर्धा भैमीवदननिर्गता वर्णाः प्रसन्नाः स्वादवश्च ( २०.२१ ), कोकिलेन द्विजेन भैम्या आस्येत्रद्विजराजान् सहस्यग्रन्थो न पठयते किम् ( ७.४४ ) अर्थात् कोकिलस्य वाणीव तस्या वाणी।

भैमीमुखनिर्माणमधिकृत्यापि कविनानेन चन्द्रसम्बन्धिकल्पनाः प्रस्तुताः। तथाहि—

निजावृतोद्यन्नवनीतजाङ्गीमेनां क्रमोन्मीलितपीतिमानम्।
कृत्वेन्दुरस्या मुखमात्मनाऽभून्निद्रालुना दुर्घटमम्बुजेन ॥
( नै. १०.१२६ )

अर्थात्—इन्दुर्निजामृतादुत्थितेन नवनीतन तस्या अङ्गं निर्मितवान्। यथा नवनीते दिनवृद्धिक्रमेण पीतिमा भवति तथैव नवनीतनिर्मिते तस्या अङ्गेऽपि गौरत्वम्। अङ्गं निर्माय चन्द्रकिरणसम्बन्धात् सङ्कोच-

शीलेनात एव निद्रालुना पद्मेन दुर्घटं तस्या वदनमिन्दुः स्वयमेवाभवत्। तथैवान्याप्येकाऽसाधारणकल्पनोद्भाविता—

अनेन वेधा विपरीतरूपविनिर्मिताङ्केत किरणाङ्कितेन।
त्वदाननं दृश्यदृगाद्यलक्ष्यदृगादिनैवाकृत सञ्चकेन॥

(नै. २२.४६)

अयं भावः—ब्रह्मा भैमीमुखं चन्द्ररूपेण काञ्चनसञ्चकेन निर्ममे। सञ्चके निष्पाद्यस्य वस्तुनो निम्नोन्नतभागा विपरीता उत्कीर्यन्ते। अतः सञ्चकरूपे चन्द्रे दृगाद्यलक्ष्यम्। किन्तु तन्निर्मिते दमयन्तीमुखे प्रत्यक्षदृश्यं भवति। अतो मुखस्य सौन्दर्याधिक्यम्।

निरन्तरत्वेन विधाय तन्वि तारासहस्राणि यदि क्रियेत।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत॥ (नै.२२.११४)

इत्यस्मिन्नतिशयोक्तिरूपं वर्णनम्। अन्यत्र च "विधिर्विधोर्बिम्बशतानि कुहूरात्रिषु मासि मासि लोपं लोपमेकशेषमभंगुरश्रीकमस्या मुखेन्दुमस्थापयत् किम् (नै. ७.४६)। अथवा—भैमीमुखं पद्ममेव, पद्माद्ब्रह्मण उत्पत्तिर्ब्रह्मणश्च चन्द्रस्य। अतो भैमीवदनाच्चन्द्रस्य महदन्तरम्। शङ्करशिरस्थगङ्गायास्तटे यद्वनं तत्र वेतसवासी बक एव चन्द्रो दमयन्तीमुखसाम्यं प्राप्तु तप इव तपते। (नै. २२.१३८)। पुनर्यथा—

लावण्येन तवास्यमेव बहुना तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतार्थमलिनेनारम्भि शेषेण तु।
निर्माय द्वयमेतदप्सु विधिना पाणी खलु क्षालितौ
तल्लेशैरधुनापि नीरनिलयैरम्भोजमारभ्यते॥

(नै. २२.१४२)

अत्रायमाशयः—क्वचित्पात्रे सञ्चितेन लावण्येन दमयन्त्या आस्यं निर्माय पात्रप्रोञ्छनलब्धेन मलिनेन शेषेण चन्द्रो निर्मितः। एतद्द्वयं निर्माय विधिना हस्तौ क्षालितौ नीरनिलयैर्लावण्यशेषैरधुनापि कमलमारभ्यते। अपि च 'प्रोञ्छनलब्धार्धमलिनशेषेण निर्मितस्य चन्द्रस्य लेखाऽपि शम्भोः शिखामणिरभूत्। अब्जमपि श्रियः सद्माभूत्। (नै. २२.१४३)।

'आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितम् ।
शङ्के सुन्दरि शर्वरीपरिवृढस्तेनैव दोषाकरः ॥
(नै. २ .१४५)

अत्र यथा चन्द्रमण्डलाद् गुणानां मुखनिर्माणार्थं हरणात् स दोषाकरोजातस्तथैवान्यत्र "अन्तस्तदास्यहृतसारतुषारभानुः शोभाकारित्वात् करिदन्तजकङ्कणाङ्कः" (नै. ११.१०८)।

चन्द्रकलङ्कमृगमाश्रित्यापि मुखविषये बहुविधास्तर्काः प्रस्तुता तेऽग्रे वदयन्ते। चन्द्रस्य कलाक्षयस्यापि मुखवर्णने निर्देश उपलभ्यते। तथा हि—"त्वद् वदनाम्बुजाच्चन्द्रस्य भङ्गोऽजनि (नै. २२.१३७)"। "उत्तमेन स्पर्धमानः कोऽपि तुलादिके भङ्गं प्राप्नोति तथा पूर्णबिम्बश्चंद्रोऽपि भैमीमुखेन सह तुलां प्राप्य तदाप्रभृत्येव भङ्गं प्राप्नोति" (नै. २२.१३०)। चन्द्रवर्णनावसाने रसातिशयादेकतानतया मौनभावमास्थितां दमयन्तीं प्रति नलस्योक्तिः—'त्वन्मुखस्पर्धाकरणसंजातकोपादिवेन्दुवर्णनं नानुमोदसे किम्' (नै. १२२.५६) इति। दमयन्ती स्वयंवरे राज्ञां परिचयं ददती सरस्वती प्लक्षद्वीपनृपवर्णने ब्रूते यत् 'तस्मिन् द्वीपे चन्द्रभक्ताश्चन्द्रमदृष्ट्वा नाश्नन्ति। तथापि दमयन्त्या मुखचन्द्रं दृष्ट्वैव चन्द्ररहित दर्शेऽपि भुञ्जानास्ते लुप्तव्रता न भवन्ति (नै. ११.७६)। एवमतिशयोक्तिपूर्णा नवनवविचित्रवर्णनानां विलासः श्रीहर्षस्य बृहत्काव्ये दृश्यते।

न केवलं नलदमयन्तीमुख एवापि त्वन्येषां वदनान्यपि चन्द्रस्य सादृश्यं भजन्ते। तद्यथा—"शालभञ्जिकामुखचन्द्रेषु (नै. २.८३), इन्दुमुख्यो दमयन्तीसख्यः (नै. ६.४२), वाग्देवताया वदनेन्दुबिम्बम् (नै. १४.३०) सरस्वती निजास्यचन्द्रस्य सुधाभिर्भैमीकर्णौ परिपूर्णौ कृतवती (नै. १२.६६) सरस्वत्यापि नृपो मेधातिथिर्वसुधासुधांशुरिति वर्णितः (नै. ११.७५) मगधाधीशवर्णने च कथितं यद् आमुखेन्दु वपुरेतस्य सृजतो ब्रह्मणस्त्विषां कोशः शेषमगाद्यतो—'निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेव वा। शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः" (नै. १२.६३)॥ "सौधाट्टावलिचन्द्रशालाजालेभ्यो दमयन्तीमालोकयितुं प्रवणानां पुरपुरन्ध्रीणां वक्त्रचन्द्रान्वयेन क्षणं निज-

संज्ञां सान्वयामन्वभूवन् ( नै. १६.१२७ ) इत्यत्र नगरस्त्रीणां मुखचन्द्राणां निर्देशः कृतः। शक्रादिदेवता उत्साहभङ्गान्मुखेन्दौ चित्तमान्द्यं वितत्य राजसभामीयुः ( नै. १०.१७ ) इत्यस्मिन् देवमुखानां कृतेऽप्युपमानरूपेण चन्द्रः प्रयुक्तः।

मुखमिव भालस्तिलको वपुर्दन्ता नखाः स्मितं कटाक्षः स्पर्श इत्येवमादीनामपि चन्द्र उपमानीकृतः। यथा—'उद्धृत्वरामृतकरार्धपरार्ध्यभाला ( नै. ११.१६ ) इति दमयन्तीवर्णने चन्द्रस्यार्धबिम्बेन तुल्यस्तस्या भाल इति प्रतिपादितम्। अत्रापि कान्तिमत्वमुज्ज्वलत्वं च हेतुः। नलस्य भाले किं दमयन्त्यास्ति च वेति संदेहरूपां ब्राह्मीं लिपिं पठितुं चन्दनतिलकबिन्दुरूपेणेन्दुरिन्द्रेण प्रेषितः ( नै. १४.६४ ) इत्यस्मिन् चन्दनतिलकोऽपीन्दुतुल्यः। शशाङ्कितशशाङ्करुचिरुरुच्छदं वपुर्धारयन्तो राजानः' इति शिशुपालवधे ( शि. १४.८० ) माघेनापि राज्ञां वपुश्चन्द्रतुल्यं कवचं च शशचिह्नमित्युत्प्रेक्षितम्। विष्णोर्वदनादुद्गता दशनज्योत्स्ना' इति रघुवंशे ( १०.३७ ) कालिदासेन, "विसारिभिर्दन्तव्याजनिशाकरांशुभिः सितं मुनेर्वपुः' इति शिशुपालवधे ( १.२५ ) माघेन 'दन्तांशुवृन्दैः कौमुदीनां मदं नुदन्ती दमयन्ती'ति ( नै. १०.१०३ ) श्रीहर्षेण दन्तचन्द्रसादृश्यं सूचितम्।

पाणिद्वयं चारुनखं तदीयं नवोदितेन्दुप्रतिमस्य व्योम्नः शोभां विफलीचकार इति पार्वत्या वर्णने ( कुमार० १.४२ ), तथैव नैषधीयचरिते 'नखेन्दुः ( नै. ६.११७ ) चन्द्रायितनखश्रेणिः···राजा ( नै. १२.५६ ) 'प्रियानखीभूतवत इन्दोर्दशत्वं विधिः साधुकृतवान् ( नै. ७.१०६ ) एवमादिषु नखवर्णने तथा च अर्धेन्दुलीलैर्नखक्षतैः ( नै. ६.२६ ) अर्धचन्द्राभनखाङ्कः ( नै. ६.६६ ) इति नखक्षतवर्णनेऽपि चन्द्रस्य सादृश्यं प्रयुक्तम्। स्मितेन कौमुदीमुदो विश्राण ( नै. ६.११२ ) तस्या गौरसारस्मितेन विस्मिता इन्दुप्रभा ( नै. १०.१०५ ) इत्यादिभिः स्मितस्य चन्द्रप्रकाशसाम्यं प्रतिपादितम्। चन्द्रिकाञ्चलैः सितैर्दीर्घकटाक्षैः ( नै. १२.५३ ) इति कटाक्षा अपि चन्द्रिकातुल्याः। रघुवंशे कालिदासेन योषितां स्पर्शसुखमुडुपतेरर्चिषां स्पर्शसुखमिवाप्नुवन्

अग्निवर्णः ( रघु. १९.३४ ) इति चन्द्रकिरणस्पर्श इव सुखदः स्पर्शः कल्पितः ।

## निस्तेजश्चन्द्रः

यथा बालश्चन्द्रो नवोदितचन्द्रः पूर्णचन्द्रः शरच्चन्द्रश्चन्द्रलेखा वोपमानरूपेण प्रयुक्ता तथैवालङ्कारेषु कविभिर्निस्तेजश्चन्द्रोऽपि प्रयुक्तः। यथा कालिदासेन "असमग्रभूषणा लोध्रपाण्डुमुखेन सा तनुप्रकाशेन शशिना विचेयतारका शर्वरीव' ( रघु. ३.२ ) इति गर्भवत्याः सुदक्षिणायाश्चित्रणे,— यथा वा

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥( रघु ८. ४२ )

इतीन्दुमतीवर्णने, अथवा तया विना क्षणदापायशशाङ्कदर्शनः पुरीं विवेश इति अजस्य वर्णने ( रघु ८. ७४ ) प्रातःकालीननिस्तेजचन्द्रेण सह मुखस्य सादृश्यं स्थापितम्। 'सबाष्पो रामस्तुषारवर्षी सहस्रचन्द्र-इव ( रघु १४. ४४ ) यथा वा मेघदूते यक्षपत्नीवर्णने 'विरहशयने आधिक्षामां प्राचीमूले कलामात्रशेषां हिमांशोस्तनुमिव त्वां ( मेघ २. २८ ) 'लम्बालकत्वाद् असकलव्यक्ति हस्तन्यस्तं तस्या मुखं मेघानुसरणक्लिष्टकान्तेरिन्दोर्दैन्यं बिभर्ति ( मेघ २. २४ ) वर्षात्ययेनाभ्रघनादिन्दो रुचमिव रामेण रावणकृच्छ्राादुद्धृतां सीतां भरतो ववन्दे। ( रघु १४. ७७ ) उषसि वा मेघावरणेन वा यथा चन्द्रो निस्तेजस्तथैवास्तं गच्छन्। कामुकेऽग्निवर्णे राज्ञि क्षयातुरे सति रघुकुलं पश्चिमकलास्थितेन्दु व्योम इव अभूत ( रघु. १९. ५१ ) इत्यत्रास्तगामिना तेजोहीनचन्द्रेण क्षयिणोऽग्निवर्णस्य साम्यं प्रकटितम्। 'निद्रावशेन भवताप्यनवेक्ष्यमाणा निशि खण्डितबला इव लक्ष्मीः पर्युत्सुकत्वं येन विनोदयति स चन्द्रोऽपि दिगन्तलम्बी त्वदाननरुचिं विजहाति अतोऽनन्यशरणां लक्ष्मीं गृहाण ( रघु. ५. ६७ ) इत्यत्र वैतालिकस्य प्रातःस्तुतिपाठे पश्चिमाशां प्राप्तोऽस्तं गच्छंश्चन्द्रोऽजस्याननशोभां त्यजतीति भावः।

शिशुपालवधेऽपि प्रकटमलिनलक्ष्म प्रत्युषप्रोषितश्रीश्चन्द्रमाः कामिनीनां मृष्टपत्रावलीकैरधिगतरतिशोभैः परिणतशरकाण्डपाण्डुभिर्गण्डभागै-

रुपहसित इव (शिशु ११. ३०) इत्युत्प्रेक्षायां प्रातःकालीनः सुन्दर चन्द्रमा उपमानीकृतः। श्रीहर्षेण तु तेजोहीनश्चन्द्रोऽलङ्कारेषु द्वित्रिवारमेव प्रयुक्तेति विस्मयावहमिव प्रतिभाति। तथापि चन्द्रस्य निस्तेजत्वे हेतुः सूर्य एवेत्यग्रे प्रदर्श्यते। यथा—प्रत्यूषसमये "करच्छेदमप्यस्य पश्य" (नै० १६. ५३) इति।

## अन्यान्यवस्तुवर्णनेषु चन्द्रः

मानवानामिव वनपर्वतसरोवरवनस्पतिपशुपक्षिणां वर्णनेऽपि चन्द्र उपमानरूपेणोपमेयरूपेण वा कविभिः प्रस्तुतः। तद्यथा—पर्यन्तवनं पञ्चाप्सरो नाम क्रीडासरो मेघान्तरालक्ष्यमिन्दुबिम्बमिवाभाति (रघु. १३. ३८) 'उदयगिरितिरोहितमण्डलस्य शीतरश्मेर्नीलनीरजनिभ आकाशे प्रसरद्धिमगौरं करजालं वारिधेर्निपतद्गङ्गाम्भ इव रराजे' (किरात ६. १६) 'मूर्ध्नि स्खलत्तुहिनदीधितिकोटी रैवतकः' (शिशु ४. १६) विलोचनस्थानगतोष्णरश्मिनिशाकरः रैवतकः (शिशु ४. ४) इत्यादि।

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्। वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलम्। (शि. ४. २०) इत्यस्मिन् माघस्य प्रसिद्धश्लोके निदर्शनालङ्कारेण चन्द्रो वारणेन्द्रविलम्बितघण्टारूपेण वर्णितो येन माघो "घण्टामाघ" इति प्रसिद्धिं गतः। कलंकसंकुलसुधांशोः कुलमिवालिश्यामलितोदरं सिताम्बुजनिवहं वहन् तडागः (नै. १. ११०) इत्यपि तडागवर्णनम्। 'बालेन्दुवक्राण्यति लोहितानि पलाशानि (कुमार. ३. २६), घनघनौघविघट्टनया दिक्च्युतं कृशशिखं शशिखण्डमिव द्विरदन्तधवलं स्फुरितभृङ्गमृगच्छवि केतकम् (शिशु. ६. ३४),' 'आतपेषु चिरायानावरणं काष्ठौघम् (काष्ठा = दिशा, काष्ठं = दारू) आलम्ब्य वर्षासु समुत्थितेषु बालेषु ताराकवकेषु तारा एवाविकसितछत्राकाः, चन्द्रस्तु विकसितमेकं छत्राकम् (नैष. २२. ६६) इति वनस्पतिमधिकृत्य चन्द्रसम्बन्धिनवनवकल्पनाः।' शशधरेण वियुक्तः केतकीकुसुमकेसर इव पाण्डुकान्तिरश्मिसमूहः कर्पूरचूर्णमुष्टिरिव प्राचीं दिशां व्याप्य (किरात ६. १७) शुक्लैर्मयूखनिचयैः परिवीतमूर्तिः शङ्करस्य वृषा वधूजनमनःसु शशाङ्कशङ्का करोति (किरात ५. ४२) इति यथा भारविणा तथा माघेनापि 'शिखाग्रगतलक्ष्मलमर्धचन्द्रं हस-

द्भिर्मृत्पिण्डशेखरकोटिभिः शृङ्गैरुक्षाणः ( शिशु ५. ६३ ) इति वृषवर्णने चन्द्रः प्रयुक्तः। शुभ्रांशुवर्णं कपोतं ददर्श ( कुमार ६. ३ ), नलहयकेसर-केशरश्मयो निशीथिनीनाथमहःसहोदराः (नै.१.५८) इत्यादावन्यप्राणिनां वर्णनेऽपि चन्द्रस्य स्थानं न हीयते। 'नभश्चरीमण्डनदर्पणश्रीः सुधा-निधिः कैलासमूर्धनि तिष्ठन् शैलाधिनाथस्य शिवालयस्य चूडामणित्व-मुपैति ( कुमार ६. ४४ )' इति कालिदासस्येव "वयस्यया दिवा पुरो विधृते परिपूर्णमण्डलविकासद्युति हिमधाम्नि दर्पणतले मृगदृशः स्वमुख-श्रियं ददृशुः ( नै. ६. ५३ ) इति हर्षस्यापि वर्णनायां चन्द्रो दर्पणरूपेण कल्पितः। तथैव "चन्द्र आदर्शवत् वृत्तत्वादि दृश्यत्वं श्रितोऽप्यादर्शदृश्यां रमणीयां मूर्तिं न विभर्तीति चित्रम्' ( नै. २२. ७३ ) अर्थात्—आदर्श-वत् दर्पणवद् दृश्योऽप्यादर्शे दर्शेऽमावास्यायां रमणीयां मूर्तिं न बिभर्ति' इति विरोधाभासेनान्यद्वर्णनम्।

'कर्णभूषणच्छलेन कर्णस्थितौ शशिभास्करौ ( कुमार १२. १३ ) शरच्चन्द्रकराभिरामैः प्रसारिभिरंशुजालैः प्रांशुस्थितः व्यासः ( किरात ३. १ ),' सान्द्रचन्द्रांशुगौर्यां कटकभित्तौ ( शिशु ११. ५८ ) शशभृद्-निरङ्कभित्तयः ( नैष. २. ७४ ), शशधरखण्डपाण्डुरःरेणुः उद्ययौ ( शि. १७. ५६ )' इत्यादौ विविधवस्तुवर्णनेषु चन्द्रस्य प्रयोगः। चन्द्रमरीचि-गौरैश्चामरैरुद्विज्यमानः ( कुमा. १२.२० ) शरच्चन्द्रमरीचिपाण्डुरैर्वरचारु-चामरैर्वीज्यमानः ( कुमार १५. ४ ) तनुजालकान्तरस्फुरितक्षपाकरकरो-त्कराकृतिचामरं भीमोऽधुवन् ( शिशु. १३. २० ) विधुप्रभैर्विधूयमानो नलः ( नै. १६. २ ) इति यथा चामरवर्णने तथैव 'बृहत्पार्वणचन्द्रचारु छत्रं' शिशु. ३. २) प्रौढचन्द्रद्युतीन्यातपत्राणि भग्नैर्दण्डैर्भूमौ पर्यस्तानि प्रेतराजस्याहाराय स्थापितानि रौप्यस्थालीनीव भान्ति (शिशु. १७. ६७) इति छत्रवर्णने, 'शशाङ्कखण्डाकृतिधनुः' ( किरात. १७. ४१ ) इति धनु-र्वर्णनेऽपि चन्द्रबिम्बस्योपयोगः। बाणास्तु प्राय आकारेण "शशाङ्कार्ध-मुखो बाणः" ( रघु. ३. ४६ ) 'अर्धचन्द्राकारो बाणः' ( कुमार १६. ३७, १६. ४६ ), "स्मरस्यार्धचन्द्राकार इषुः" ( नै. १. ८४ ) इत्यर्धचन्द्राकारः कल्पितः। अमूर्तमपि यशः प्राय उज्वलतया चन्द्रेणैव साम्यं बिभर्ति। यथा—'इन्दुमण्डलं ह्रेपयन्ति शुभ्राणि यशांसि येषां ते [illegible] गुरुव

कुर्वन्ति। ( किरात ११. ६४ )। मौलेन्दुलेखा विशदाऽर्जुनस्य कीर्तिः ( किरात १७. १८ ), 'शशिकल्पं यशः' ( नै. १२. ६६ )। अस्यां कल्पनायां नाविन्यं संचारितं हर्षेण। यथा—'नलस्य यशसि जगत्सु सञ्चरति सति धृतदरः शीतद्युतिः पीयूषस्रवकैतवात् स्विद्यति ( नै. १२. ८६ )। श्री हर्षस्य प्रतिभाविलासोऽभिनवकल्पनाविस्तारेषु भूयो दृश्यते। दमयन्तीविवाहोत्सवे जन्यजनभोजनप्रसङ्गे "राजिकाराद्धं (रायता) वियोगिदाहाय कद्रूभवत्त्विषस्तुषारभानोः खण्डमिव प्राङ्मृदु पश्चाद् दाहकारि. ( नै. १६. ७४ )। यथा वा धृतलाञ्छनरूपगोमयमालेपनपाण्डुरं विधुं विधिर्दमयन्तीमुखार्तिक्यार्थं वर्धमानकं भ्रमयति ( नै. २. २६ )। इत्यत्रार्तिक्यार्थं शरावमिव चन्द्रं विधिर्भ्रमयति। अन्यदपि रोचकं वर्णनं दर्शनीयं तद् यथा 'नलदमयन्त्योरनुरागस्य तोलनार्थं स्मरेण चन्द्रस्य संसक्तरश्मिप्रकरा मण्डली कांसीकृता निजनाराचदण्डश्च तुलादण्डः कृतः ( नै. ३. १२२ )। इति। अन्यत्र च परितापिनि हृदि भैम्या विनिहितं धृतबुद्बुदं चन्दनं हृदयेशयं सुहृदं मदनमुपनमदङ्कगतोडुपरिग्रहो विधुरिव शुशुभे ( नै. ४. ४८ )। 'यथा नाटके विदूषको ब्राह्मणस्तथा मन्मथनाटिकायां शिखामणि द्विजराट् ( चन्द्रः ) विदूषकः ( नै. ९. ११७ )' अर्थाद् दमयन्त्याः शिखामणिश्चद्रं तिरस्करोतीति भावः। अन्यच्च—'विहायसि त्रिदशानां मिथुनक्रीडातल्पे सुखसंमर्दनधुतानां स्रजां भागस्य श्रीभरं ग्रहसंग्रहो गाहते। विधुस्त्वखण्डो मृदुतरकराकारैस्तूलोत्करैरुदरंभरिर्गण्डोपधानविधां न परिहरति। ( नै. १९. ९ )। अर्थान्नभसि ग्रहनक्षत्राणि तल्प मालापुष्पाणीव चन्द्रस्तु गण्डोपधानमिव वृत्तः पूर्णो मृदुश्चेतिभावः। चमत्कारकारी चान्योप्येको रूपकप्रयोगः—बालेन नक्तसमयेन मुक्तं रौप्यं डिम्बमेव ( लट्टू ) चन्द्रबिम्बम्। भ्रमिक्रमादुज्झितं पट्टसूत्रमेव रक्तिमा ( नै. २२. ५९ ) अर्थात् चन्द्रबिम्बमेको भ्रमरकश्चन्द्रस्यरक्तिमारूपिपट्टसूत्रेण तद् वेष्टितम्। करान्मुक्तो भ्रमरको दोरकवेष्टनं मुञ्चति तथा चन्द्रो रक्तवर्णरूपिवेष्टनं मुञ्चति। अतो रौप्यवर्ण एव दृश्यते।

शक्यमोषधपतेर्नवोदयाः कर्णपूररचनाकृते तव।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसम्पुटैःकरैः॥ (कुमार ८.७२)

इत्यत्र कालिदासेन नूतनयवाङ्कुरा इव चन्द्रकिरणाः पार्वत्याः कर्णपूररचनायै नखैश्च्छेत्तुं शक्यमिति शङ्करवचनेन चन्द्रकिरणानामाभूषणत्वं प्रतिपादितम्। तथैव "प्रस्फुरद्भिरिवांशुभिर्हारियष्टिरचनां कर्तुं कुतूहलीव शशी कल्पवृक्षशिखरेष्वागतः (कुमार ८. ६८) इत्यत्रापि चन्द्रकिरणैर्हारयष्टिरचनोत्प्रेक्षिता। वृक्षच्छायैव नीलपट्टसूत्रं तयान्तर्गतकिरणानि मुक्ताफलानीति कल्पना। 'किरणौघैर्नभो दीपयन् कुङ्कुमारुणपयोधरगौरस्तुहिनांशुः शनकैः पूर्वपयोधेर्हेमकुम्भ इवोन्ममज्ज (किरात ६. २२) इत्यत्र चन्द्रो हेमकुम्भसदृशो दृष्टः।

## अनेके चन्द्राः

अनेकचन्द्राणां चन्द्रप्रतिबिम्बस्य च कल्पनाऽपि काव्येषु यत्र तत्र दृष्टिगोचरा भवति। तथा हि 'दोषावृत्तलोचनाभ्यां पृथग् विभिद्यमानः शशीव शरान् क्षिपन् अर्जुनो भ्रान्तानां द्विषामेकोप्यनेक इव दृष्टः (किरात १७.२१)।' नेत्रप्रान्तचिपटीकरणकारणाज्जनस्य द्वौ चन्द्राविति भ्रान्तिः, नलविषये तु पञ्चत्वसंख्याबोध विषये निमित्तं नास्ति (नै. १३.५२।' इति

यथा नेत्रदोषेण तथैव प्रतिबिम्बेनापि चन्द्रस्यानेकीकरणं वर्णितम्। "गङ्गा तरङ्गप्रतिबिम्बितैः स्वैश्चलन्मरीचिप्रचयैर्बहूभवन्तं सुधांशुं शिरसोद्धरन् (कुमार. १२.११)" यथा वा 'चन्द्रतुल्ये सखीमुखे चन्द्राभमाभ्रं तिलकं कुर्वाणास्तिलके च स्वीयं चन्द्राभ्रतिलकमुखेन्दुमनुबिम्बितम्—प्रतिबिम्बितौ द्वौ चन्द्रौ पुनः प्रतिबिम्बतौ इत्यनवस्था कृता (नै. ६.६२) चन्द्रप्रतिबिम्बविषयेऽन्यापि कल्पना कविभिरुद्भाविताः। तद्यथा—'अपां कुक्षिषु प्रतिबिम्बितश्चन्द्र इव राजपत्नीनां कुक्षिषु विष्णुर्विभक्तात्मा बभूव (रघु. १०.६५)।' 'पक्वफलिनीफलत्विषा बिम्बेन लाञ्छितवियत्सरोम्भसा हिमांशुना विप्रकृष्टविवरं चक्रवाकमिथुनं प्रतार्यते (कुमार ८.६१)।' स्फटिकाचलेन्द्रे प्रतिबिम्बितस्य स्फटिकांशुगुप्तेश्चन्द्रस्य चिह्नप्रकरः पार्वत्या अर्पितस्य कस्तूरिकाशकलस्य लीलां करोति (कुमार ६.४१) इति कालिदासः। 'उज्ज्वलकपोलं मुखमिन्दुः प्रतिमाच्छलेनाविशत्' (शिशु. ६.४८) अमलात्मसु तरुणीकपोल-

फलकेषु मुहुः प्रतिफलन् इन्दुरुचां निकरः सान्द्रतरं विससार ( शिशु. ६.३७ ) इति शिशुपालवधे चन्द्रवर्णनम् । भीमभुवो विरहपाण्डुरे कपोले प्रतिबिम्बितश्चन्द्रो भैमीमुखेऽनुपलक्ष्यसितांशुतया कलङ्कमृगस्यार्पणान्मुखं निजसखं चकार ( नै. ४.२६ ) । पद्मचन्द्रौ स्वतातजलात् स्वमित्रदर्पणाच्च प्रतिबिम्बं याचित्वा याञ्चया प्राप्तं दमयन्तीमुखश्रीप्रतिबिम्बमेव विभूषणं दिने रात्रौ च धारयतः । ( नै. ७.४६ ) । 'दर्पणतले निजास्यप्रतिबिम्बदर्शिनी दमयन्ती विधोरदूरं स्वमुखं निधाय एतयोर्विशेषं निरूपयन्ती बभौ ( नै. १५.५० ) । विरहतप्ता दमयन्ती चन्द्रमसहमाना सखीं ब्रूते 'सखि, मुकुरं बहिः कुरुष्व यदा विधुस्तत्र विशति तदा गुरुमेकमयोघनं करे कृत्वा तमहितं द्रुतं जहि ( नै. ४.५७ ) । प्रतिदिनमुदयसमयेऽम्बुधेः कियन् स्तोकमुत्थितं तथा समुद्रजले जातेन स्वानुबिम्बेन मिलितं विधुं नलवदनेन्दुमण्डलं व्यडम्बयाञ्चकार ( नै १८.१०२ ) । क्रीडातडागे चन्द्रस्य प्रतिबिम्बमधिकृत्य वर्णनं रोचकमस्ति । तद्यथा—'इन्दुर्नलस्य कीर्तितडागस्य बिन्दुश्रियं प्राप्नोति । प्रतिबिम्बितः सन् जलं प्रविश्याद्दृश्योदयः स स्फाटिकानिर्मितो योगेश्वरः सन् जलदेवता जागर्ति ( नै. १२.३८ ) ।' नलस्य भैमीं प्रतीयमुक्तिर्यथा 'त्वमुच्चसौधे स्थित्वा सौख्येन लक्ष्ये केलिकुल्याम्बुनि पश्येन्दोर्बिम्बं यदिह निमज्ज्य राजहंसी चिरं सतः प्रियस्य भ्रमेण चुम्बति ( नै. २२.१२० )' 'अथवा 'देवगणैरयंचन्द्रोऽमृतं निपीयाह्नि तुच्छः कृतः । निशि स तव क्रीडानद्यां प्रतिमाच्छलेन मग्नः पुनश्चामृतानां पूर्णः स्यात् । पुनः पानभयात् निलीन इति भावः ( नै. २२.१२१ ) । अन्यत्रापि राजहंसरूपेण कम्पितं चन्द्रप्रतिबिम्बं रमणीयं वर्णितम् । "भैमीस्वयंबर आगतस्यैकतमस्य राज्ञो वर्णने कथितं यत्" एतस्य राज्ञोऽरिनारी पर्वतकन्दरायामतिवाहितदिवसा रात्रौ बहिर्निःसरन्ती शिशुना क्रीडाहंसभ्रान्त्या 'उन्निद्रचन्द्रं देहीति' प्रार्थिता चन्द्रस्यानयने सामर्थ्याभावाद् बहु रोदिति । ततो बहुतरे नयनजले प्रतिबिम्बितस्य चन्द्रस्य सामीप्येन क्रीडाहंस आगत इति बुद्ध्या प्रहृष्यतस्तनयस्य हासैः सा निःश्वासममुञ्चत् ( नै. १२.२८ ) । एवमादिषु श्रीहर्षस्यातिरञ्जितकल्पना दृश्यन्ते ।

## चन्द्रस्य कलङ्कः

चन्द्रबिम्बे दृश्यमानं कलङ्कमधिकृत्य संस्कृतकाव्येषु विविधाः कल्पनाः प्रादुर्भूताः। प्रथमं तावत् कालिदासेन 'छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः। (रघु. १४.४०) इति कथनेन कलङ्कः पृथिव्याश्च्छायारूपेण भावितः। वस्तुतश्चन्द्रग्रहणसमये पृथिव्याश्छाया चन्द्रबिम्बे पततीति वैज्ञानिकः सिद्धान्तः। नैषधीयचरितेऽपि कालिदासस्य कल्पना पुनरुक्ता। तद्यथा—

क्ष्मैकस्मै कलङ्काय देवस्येवामृतधुनेः ( नै. १७.१३० ) अयं भावार्थ,—इन्द्रादि देवेषु सत्सु दमयन्ती नलं वृतवतीति देवादीनामयशः। क्षमां परित्यज्य दण्ड एव उचितः। यतः क्ष्मा एव तेषां कलङ्को यथा चन्द्रस्यापि क्ष्मा ( भूमिः ) एव कलङ्कः। अन्यत्रापि भूमिच्छाया चन्द्रस्य कलङ्क इति सूचितम्। हैमशैलो मेरुर्बहुना कालेन नीलमलसम्बन्धान्नीलो जात इति संभावितम्। अन्यथा यदि हेममयत्वात्पीन एव स्यात् स पीतो दृश्येत किन्तु मेरुप्रतिबिम्बभूत इन्दुकलङ्को नील एव ( नै. २२.६२ )। तथा च—

छायापदेशाद्वसुधा निमज्ज्य सुधाम्बुधावुज्झति खेदमत्र। (नै. २२.६१) अत्रापि भूमेश्छायैव चन्द्रे निमग्ना कलङ्क इव भासते इति सूचितम्।

प्रायश्चन्द्रस्य कलङ्को मृगरूपेण वर्णितः। यथा माघस्य प्रसिद्धोक्तौ—

'अङ्कारोपितमृगश्चन्द्रमा मृगलाञ्छनः।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः॥' ( शि. २.५३ ) यथा वा

नैषधीयचरिते—'शालभञ्जिकामुखचन्द्रेषु कलङ्कमृगाः सौधकन्दराहरिभिः कुक्षिगतीकृता इवेत्युत्प्रेक्षा। सिंहिकासूनुर्मृगस्य लोभान्मृगाङ्कं कवलीकरोति, स्वस्यापि दानादुत्सङ्गसुप्तं मृगं नोज्झन् अयं तेन पुण्येन मुदा मुच्यते ( नै. २२.६६ )' 'चन्द्रतुल्ये नलोद्याने कलिर्लाञ्छनमृगोऽभूत् ( नै. १७.२२० ), दक्षयज्ञे रुद्रस्येषुणा विद्रावितमार्तं तारारूपं मृगं व्योमनि वीक्ष्य बिभ्यद् एषु इन्दुमीशस्य चूडामणिं ज्ञात्वा शरणं विवेश ( नै. २२.७८ )' शिशौ चन्द्रे रङ्कुर्न स्थितः, किन्तु चन्द्रे प्रियाभिरौषधीभिररण्यसंदेश इव प्रेषितः प्रेयसीसंदेशरूपो रङ्कुर्वि-

धुनाऽङ्के स्थापितः ( नै. २२.७६ )। 'चन्द्रो गरुडश्च साम्यं समीक्ष्य विष्णुना नेत्रव्यापारे वाहनव्यापारे च नियुक्तौ तद् युक्तम्। द्वावपि हरिणाश्रितौ ( हरिण + आश्रितः, हरिणा + आश्रितः ), द्विजराजौ, द्वावपि पक्षौ भजतः ( नै. २२.८६ ), 'यदा मृगाङ्कः विष्णोर्नेत्रारविन्दत्वमगात् तदास्यकलङ्कः कनीनिकाया भ्रमरस्य सुन्दरत्वं जगाम ( नै. २२.८८ ), ।

दमयन्तीमुखसाम्यनिमित्तरमणीयनेत्रत्रयसंपादनाय चन्द्र आहृतः सन् रङ्कुमङ्के करोति ( नै. २२.१४१ ) एवमादिकल्पनाभिश्चन्द्रे मृगस्य स्थापनहेतुरुत्प्रेक्ष्यते। 'इन्दोर्मृगान् सारं दृशा वादाय दमयन्तीवक्त्रचन्द्रे निहिते। दमयन्तीवक्त्रे स्थितेऽनन्धो मृगो विधौ स्थितिं कुतो दध्याद् अतस्तस्य नेत्राहरणम् ( नै. २२. १४५ ) 'शशी पूजाश्रियमुन्निद्रकमलैर्नावापत् यतः स पद्मनिमीलिततेजाः, निजाङ्कभूतस्य रङ्कोरक्षिद्वयेनैवालङ्कृतस्तु तां पूजाश्रियमेति ( नै. २२.६३ )। 'चन्द्रस्य सेवार्थमुपगतानामौषधीनां पल्लवमास्वादयञ्चन्द्रस्यैव सुधाजलानि श्रयन् एष कलङ्करङ्कुश्चन्द्रे सुखं वसति ( नै. २२.७७ ) "एष प्रवहाख्यानिलस्य वाहनरङ्कुः पिपासुर्गगनचारिरथाच्च्युतोऽनम्बुन्यम्बरे चन्द्रस्यामृतबिन्दुं पिबन् तस्याङ्के चिरं तिष्ठति' ( नै. २२.७५ ) राज्ञो यशोभिस्तुषारकिरणभासाममलानि कुलानि तृणीकृतानि ततो रङ्कुः सुधाम्बुनिधौ चन्द्रे तेषां कान्तितृणानामङ्कुराणां कवलाभिलाषात् तत्रवसति' ( नै. ११.६७ ) 'पण्डिता इन्दुं भैमीमुखाद् बहुतृणं गृणन्ति अतो मृगो मृगतृष्णयेव चन्द्रं न त्यजति। नै. ( २२.३५ ) विरहार्तदमयन्त्या सखीं प्रति वचनं 'सखि, श्रवणपूरतमालदलाङ्कुरं शशिकुरङ्गमुखे निक्षिप येन किमपि तुन्दिलितोऽमुं चन्द्रं स्थगयतु येन क्षणमुच्छ्वसिमि' ( नै. ४.५६ )। यथा तृणेन तथैव गीतेनापि मृगः समाकृष्टः इत्यपि विचारः प्रकटितः। तथाहि—'अयं मृगो दमयन्त्या आनने पूर्वभूतां गीतिं निपीय तदाकर्णनलोलुपस्तस्या वदनस्य भ्रमेण विधुं हातुं न स्पृहयति' ( नै. २२.१०६ ) अपिच 'इन्द्रोर्भ्रमेणोपगमाय योग्ये दमयन्त्या आस्ये जिह्वा विधुवास्तुमृगं गीत्या कर्षतु ( नै. २२. १०७ )।

कलङ्कमृगस्य नाभिकस्तूरिका विषयेऽपि श्रीहर्षेण केचिद्विचारा उद्भाविताः। यथा—दलाकारकलाकलाप इन्दौ यदि केतकत्वमारोप्यते

तर्हि सौरभवासनाभिरङ्कुमृगस्य नाभिकस्तूरिका संवदति ( नै. २२.८६ )। देवागारे कस्तूरीकर्दमेन सान्द्रं रजतभाजनान्यङ्करुङ्कुकलुषीकृतकुच्चेर-मृतांशोः साम्यं भजन्ति' ( नै. २१. २३ ) तथा हि—

ताराविहारभुवि चन्द्रमयीं चकार यन्मण्डलीं हिमभुवं मृगनाभिवासं।
तेनैव तन्वि सुकृतेन मते जिनस्य स्वर्णैकलोकतिलत्वमवाप धाता ॥

( नै. २२.१३४ ) अर्थात् हे दमयन्ती धाता तराणां भुवि गगने चन्द्रमयी बिम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोरनुमत्या निर्ममे तेनैव सुकृतेन सुराणां मध्ये तिलकत्वं श्रेष्ठत्वमाप। श्लेषेणापरोऽर्थः—ताराया पूजास्थाने शीतलां कस्तूरीपरिमलमिश्रितां चन्द्रमयीं कर्पूरमयीं मण्डलीं यच्चकार तेनैव पुण्येन जिनस्य मते बौद्धदर्शने ब्रह्मा सुरश्रेष्ठत्वमधत्त। दमयन्तीविवाहे मृगमांसैः साधितस्य तेमनाख्यव्यञ्जनस्य मृदुत्वा द्रसातिशयत्वाच्च जन्यजनास्तकितवन्तो यत् निशाधवस्योत्तमाङ्गे वर्त-मानाद् हरिणात् पीयूषजलैः सह वर्तमानैर्मांसैरश्रावि किमिति चन्द्राङ्क-मृगमांसमधिकृत्यैका कल्पना ( नै. १६.७६ )।

चन्द्रस्य पृष्ठभागविषयकं कुतूहलमपि कविनाऽनेन प्रकटितम्। विधोरङ्क इव पृष्ठभागेऽपि रङ्कुस्तिष्ठति किमिति शङ्का चेत् तर्हि तत्त्वाय नलमुखमेव पलायमानस्य चन्द्रस्य पृष्ठभागमपश्यत् ( नै. २२.१२३ )

चन्द्रस्य कलङ्को मृग इव शशोऽपि कल्पितः। कलङ्करूपं मृगं शशं वा स्वोदरे प्रक्षिप्य जातस्फीततनोर्हरेः ( सिंहस्येन्द्रस्य च ) पत्न्या प्राच्या दिशा सूतस्य हरेरक्षीभवच्चन्द्रस्य दमयन्तीवदनाम्बुजाद् भङ्गोऽ-जनि' ( नै. २२. ३७ )। 'एष शशः शशाङ्के जागर्ति, अत्र को बुध आश्चर्यं करोति। यत् एतत्पितुरम्बुराशेर्मध्ये तूच्चैश्रवस्तुरङ्ग ऐरावतो मतङ्गोऽ-प्यासीत् ( नै. २२.६४ )। अन्यत्रान्या कल्पना यथा 'व्याकरणाल्लोक-प्रयोग एव बलीयान् यतः शश अस्य अस्तीती यथाऽयं शशी तथो मृगोऽ-स्यास्तीति मृगीति नोक्तः (नै. २२.८२)।' पृष्ठभागविषयेऽप्यन्यद् अनुमानं यत् 'चन्द्राङ्कम् उत्तानं अर्थात् स्वर्गाभिमुखमेव, शशमस्माभिर्दृश्यमानं पृष्ठभागमाह। यदि शशकोऽस्मत् सम्मुखऽनुत्तानोऽभविष्यत् तर्हि मध्यवर्ति शशकोदरस्य धवलत्वाच्चन्द्रमध्यभागोऽपि धवलोऽभवि-ष्यत्। असः शशक उत्तान एव ( नै. २२. ८० ) तथा च—

"दूरस्थैरस्माभीरक्तनीलमिश्रितवर्णे केवलो नीलिमा दृश्यते। तत् शशस्य पृष्ठवर्तिरोम्णां रक्तभागो दूरस्थानां परोक्षः, नीलिमा तु दृश्यते (नै. २२. ८१)। चन्द्रः स्वाङ्कगतशशस्य रक्षणेऽपितत्पर इत्येका कल्पना। 'नभसि ध्वान्तध्वांक्षाणां मारणे श्येनपक्षिरूपाणां सूर्यतेजसां प्राग्भावे क्रीडनैः खे श्येनपानां मृगयामवधारयन् शशी निजाङ्कवर्तिशशस्य विशसनभयाच्चरमामाशां ययौ। (नै. १६. २२)।' चन्द्रे शशस्य स्थापनार्थं हेतुरुत्प्रेक्षितो यथा—'पूर्वं चन्द्रो निष्कलङ्क आसीत्। किन्त्वतिसादृश्यात् प्रतिक्षणं दमयन्तीवक्त्रबिम्बस्य भ्रान्ति च्छेत्तुं विधिरिन्दुं शशरूपेण कलङ्केनातङ्के (नै. २०. २०)।

चन्द्रस्य कलङ्को न मृगो न वा शशः किन्तु तमोरूपोऽथवा नीलाकाशमेवेत्यपि कल्पना नैषधकाव्ये दृश्यते। तथा हि—'ब्रह्मणा दमयन्तीबदनं निर्मातुमिन्दुमण्डलात् सारं हृतमतो मध्ये संजाते बिले परस्थितस्याकाशस्य नीलिमा दृश्यते स एव कलङ्कः (नै. २.२५)।' अथवा 'लोका रजनीभर्त्तुः षोडषमंशं कलामाभनन्ति। प्रतिपदाद्यारभ्य वर्धिष्णवः पञ्चदशैव ताः कला एनं वृत्तयन्ति—पूर्णवर्तुलाकारं कुर्वन्ति। तिथिं बिना या षोडषी कलावशिष्टा सा किं हरालंकृतिः? तस्या उद्धृतायाः कलायाः स्थाने सश्यामिकं शून्यं बिलं तन्नीलं नभोभागमेव चन्द्रमण्डलमध्ये कलङ्कं पश्यामि' इति (नै. २२. १४०)। 'नलस्य यशांसि द्विषतः सुधारुचोरिन्दोरङ्को नलस्याखिललोकधाविभिर्यशोभिर्भीता तामसीमसी किम्' (नै०. १२. ८६) इत्यत्र कलङ्कस्तमोरूपेण कल्पितः।

अन्येषामपि विविधवस्तूनामारोपणं चन्द्रकलङ्के कृतम्। तथाहि—'नलस्य दिग्विजययात्रासु तत्सैन्येनोद्धृतं रज एव सुधा समुद्रे पतितं पङ्कीभवन्। सुधाम्बुधेरुत्पन्ने चन्द्रे लग्नः स पङ्क एव सुधांशोः कलङ्कः (नै. २. ८।) 'अल्पाङ्कपङ्क, पीयूषनीरा विधुमण्डली (चन्द्रबिम्बं) स्मरस्य सरसी' (नै. २२. १२५) इत्यत्रश्लोकद्वये कलङ्कस्य पङ्कत्वम्। 'दमयन्तीमुखार्तिक्यार्थं विधिर्विधुं वर्धमानकं भ्रमयति तत्र कलङ्को गोमयरूपः (नै. २. २७)। "तनयैः पितृभ्यो यत् श्रद्धापवित्रं कृष्णतिलमिश्रितमम्भः स्वधाकृतं तत् पितृलोकभूतं चन्द्रमुपतस्थे तत्र श्राद्धजलं सुधा कृष्णतिला एव कलङ्कोजातः (नै. २२. ११६)। अन्यत्र—'तमिस्रा

रात्रिगौरे प्रिये चन्द्रं भातितभाम् , ज्योत्स्नी रात्रिस्तु नीले चद्रे शोभते तस्माद् उभयोरपि दयितयोः शोभाप्रेर्लोभाच्चन्द्रः सितासितं मूर्तिं बिभर्ति ( नै. २२. ८५ ) अतः कलङ्कश्चन्द्रस्यासिता मूर्तिरेव । 'बलविजयिन इन्द्रस्यैरावतस्य गण्डयोः पिण्डद्वयाद् दानद्रवलवस्य प्राचीदिशालग्नात् तद्दिशि विहरतोऽश्यामत्वैकमत्यस्थितसकलकलानिर्मितेर्निर्मलस्येन्दोरीन्दीवराभमङ्कपङ्कं जातमिति शङ्के' ( नै. २२. १३८ ) । अन्याप्येका कल्पना यथा—'यैः सरोजिन्या दाहरूपात् तुषारे ज्वलनोऽनुमायि तैर्हिमांशोः कलङ्केऽपि तदीयधूमौघतया समर्थितः' ( नै. २२. ६० ) । यथा वा 'पीतया वलभीपताकया मिलितममृतद्युतिलक्ष्म पीतवाससः शेषशायिनः सखितामादित ( नै. २. ७० ) ।

चन्द्रस्याङ्कः वस्तुतस्तस्यायशोरूपी कालिमा कलङ्क एवेति मत्वा तत्कारणं कविनोत्प्रेक्ष्यते यथा—हरनेत्रहुताशनाज्ज्वलत् स्मरमुखं विधिना विधुं चक्रे, बहुविधेन वियोगिवधैनसा शशमिषाद् कालिकया च विधुरङ्कितः ।' ( नै. ४. ७३ ) । निजांशुदग्धदमयन्त्यङ्कभस्मभिर्विधुलाञ्छनमृजां मुधा वाञ्छति । यतस्तावतापि स नलास्यता नैव यास्यति वधूवधेनैव स पुनः कलङ्कनीलप्रभामिश्रविभाविर्भान्ति । ( नै. २२. ७० ) 'देवव्रतभोज्यद्भिः शुद्धा सुधादीधितिमण्डली सदेज्येव शोभते । साऽप्येकं मलिनं कलङ्कं बिभर्ति यथेज्या हिंसां बिभर्ति ।' ( नै. २२. ७४ ) । 'दशाननेन जगन्ति जित्वा पुरा योऽयं चन्द्रो जेतुं नापारि तस्य विधोरियं कलङ्करूपा ग्लानिर्युक्तैव यतो दमयन्त्या आननेन स नितरां जितः ( नै. २२. १२६ ) । सर्वमात्रायश एव कलङ्क इति मतिः । तथा हि—'इन्द्रादिदेवताभिर्नल इत्थं निन्दितः—तव वरो कलङ्कीन्दुरजनिष्ट । भवान् अपि कलङ्की माभूत् ( नै. ५. ११६ ) ।' यथा वा 'त्वं नल एव कलङ्की नेन्दुः । याचमानं प्रति याऽपदृष्टिर्या मुखमुद्रा याऽतुष्टिस्त्वादृशस्य सकलः स कलङ्कः । इति भासि शशकः केवलमङ्को न कलङ्कः ( नै. ५. १२० ) । 'यः शरद् ऋतुः पयोमुचां मेचकिमानमुच्चारयामास तेनापि विधिर्लाञ्छनकालिमा प्रोञ्छितुं नापारि ( नै. २२. १२ ) । इत्थं श्रीहर्षेण नैषधीयचरिते चन्द्रवर्णने चन्द्रकलङ्कमधिकृत्य. विचित्रा नवकल्पना उद्भाविताः । भारविणाप्ययश एव लाञ्छनमिति सूचितम् तद्यथा 'यस्मिन्नरे कृच्छ्रेषु

भर्तुराज्ञया व्यर्थया भूयते स शशाङ्कस्य लाञ्छनमिवावदातवंशस्य लाञ्छनमस्ति ( किरात. ११. ७५ ) कालिदासोऽपि कलङ्कं दोषरूपं मन्यते यथा प्रसिद्धे तस्य श्लोके—

'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' (कुमार. १)

अन्यच्च—

'म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः' ( नै. १६. ५६ ) इति।

चन्द्रकलानां वृद्धिक्षयक्रमोऽपि चन्द्रस्य वैशिष्ट्यम् । तदधिकृत्य कवीनां कल्पनाविलासो यत्र तत्र दृश्यते। कालिदासेन 'दिने दिने परिवर्धमाना चान्द्रमसी लेखेव पार्वती पूर्णतां ययौ' ( कुमार १. २५ )। 'प्रवृद्धौ हीयते चन्द्रः''' तथा स राजा (रघु १७.७१) इत्युपमाद्वयं प्रयुक्तम् । चन्द्रस्य कलावृद्धिः सूर्यकिरणानुप्रवेशादिति मतं तेन प्रस्तुतम् ।

पितुः प्रयत्नात् स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ इति

रघुवर्णनम् । ( रघु. ३. २२ )

भारविणापि 'अर्जुनः शुचिभिर्गुणैरघमयं तमः शमयन् प्रतिवासरं कलाभिर्विमलः शशीव अभिववृधे' ( किरात. ६. २० ) 'स्वभावजं शिवं तेजो दधतं क्षणमपि सन्तं वृद्ध्यर्थमुत्थितं प्रतिपच्चन्द्रं प्रजाः प्रणमन्ति' ( किरात २. ११ )। इति चन्द्रस्य कलावृद्धेरुल्लेखः कृतः। यौवराज्यानन्तरं बालभाव एवाधिराज्यमवाप्य कुमारो राजाऽतिथी रेखाभावादर्धेन्दुमवाप्येव पूर्णतामुपारूढश्चन्द्रमा इव बभौ ( रघु. १७. ३० ) इति कालिदासः। 'लोका रजनीभर्तुः षोडशांशं कलामामनन्ति। किन्तु प्रतिपदाद्यारभ्य वर्धिष्णवः पञ्चदशकलास्तं चन्द्रं पूर्णवर्तुलाकारं कुर्वन्तीति ( नै. २२. १४० ) हर्षेणापि चन्द्रस्य कलावृद्धिः सूचिता।

चन्द्रस्य कलाक्षयः सुरैः कलानां पानेन भवतीति सामान्यतः कविसम्मतिः। यथा कालिदासस्य प्रसिद्धे श्लोके—

'पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयःश्लाघ्यतरो हि वृद्धेः' (रघु. ५. १६)

नैषधीयचरिते विरहपीडिता दमयन्ती चन्द्रमसहमाना तं कालकूटं मत्वा निन्दति—'समुद्रोत्थितं कालकूटं शङ्करेण पीतं न पुनर्बभूव

किन्तु एतद् असितं कालकूटं ( चन्द्रस्तु ) सुरैर्निपीय जनितक्षयं पुनः स्वयमुदेति' ( नै. ४. ६१ )। अथवा अशेषकलं संपूर्णचन्द्रं विरहिणीवधव्यसाकुलं पापं कलय, सुरनिपीतसुधाकं त्वपापकं कलय, किन्तु ग्रहविदो विपरीतकथाकथम्' इति दमयन्तीवचः। अत्रापि सुरैर्निपीतसुधश्चन्द्रः क्षयं यातीति विचारः प्रकटितः। दक्षस्य शापश्चन्द्रक्षयस्य कारणमिति मतमपि कविषु प्रसिद्धमस्ति। तथा हि "दक्षस्य शापश्चन्द्रमिव रतिरागसम्भव आमयः क्षयरोगोऽग्निवर्णं राजानमक्षिणोत् ( रघु. १९. ४८ ), 'दक्षस्य शापेन क्षयी शशीव विरूपं वपुर्वहन् बहिर्निर्जगाम ( कुमार. ६ १७ ) इति कालिदासः। नैषधीयचरितेऽपि "ओषधयः स्वशक्त्या स्वपतिं क्षयिणं चन्द्रं भातुं न शेकुर्विप्रा मन्त्रेण द्विजराजं न, पयोधिः स्वपुत्रं मणिभिर्न सुधापि स्वाश्रयं चन्द्रं स्वप्रभावैस्त्रातुं न शशाक' ( नै. २२. ६६ )। ओषधीषु चन्द्रकलार्पणं कालिदासेन सूचितं तद्यथा—'दर्शो भुक्तसारां हिमांशोरन्त्यां कलामोषधीषु समर्पयति। तथा वाल्मीकिः शोकदीनां सीतां तापसीष्वर्पयामास ( रघु १४. ८० )'। चन्द्रस्य कलाक्षयविषय अन्यदप्युत्प्रेक्षितं तद्यथा—'द्विजराजः प्रतिमासं पूर्णां तनुं तनूकृत्य कुहूष्वदृश्यतां प्राप्य नलमुखस्यैक्यं गच्छति किम् ( नै. ८. ३७ )। अयं भावः—यथा ब्राह्मणश्चान्द्रमासादितपोभिः कृशो भूत्वा ब्रह्मसायुज्यं प्राप्नोति तथैव चन्द्रोऽपि नलमुखैक्यमवाप्तुं तप इव तपति। विधिर्मासि मासि कुहूरात्रिषु विधोर्बिम्बशातानि विलुप्य विलुप्याभङ्गुरश्रीकं दमयन्तीमुखेन्दुमस्थापयत् ( नै. ७. ५४ ) शिशुपालवधे नवैका कल्पना—'उदितो हिमदीधितिः प्रथममेका कलामात्रमभवत्। ततोऽर्धचन्द्रस्तदनन्तरं महदभूत्। ध्रुवं द्युतिशालिनोऽपि क्रमश एवोपचयं दधति न सहसा' ( शि. ६. २६ ) इत्यर्थान्तरन्यासेन स्पष्टीकृता।

चन्द्रस्य *परिवेषोऽपि* काव्यालङ्कारेषु प्रयुक्तः। यथा माघेन शुक्लांशुभिरुपरचितानि रश्मिभिर्विततानि चन्द्राकृतीनि वेश्मानि गजमण्डलाभिर्नीलाभ्रपंक्तिभिरिव परिवेषमधिजग्मुः ( शिशु. ५. ५२ )। यथा वा श्रीहर्षेण—"भैमी विधुं सेवितुं लम्बमानो हंसः शशिपरिधिमिव मण्डलं तेने ( नै. २. १०८ )। 'अस्या मुखेन नित्यस्पर्धी चन्द्रः पराभूय प्रसह्य बध्यमान एवाधुनापि परिवेशपाशास्तिष्ठति ( नै. ७.

५८ ) इत्यत्र परिवेशश्चन्द्रस्य बन्धनपाशः कल्पितः । 'सखीरूपे चन्द्रे स्वपाणिभ्यां कण्ठाश्लेषरूपः परिधिः ( नै. १६. ५६ )' नलानने शशाङ्काधिकरूपतां गते मातुमशक्नुवन् इव नलस्य भालो मणिपट्टिकामिषेण परिधिर्बभौ' ( नै. १५. ६१ ) । अत्र मणिकिरणानां मण्डलाकारत्वेन पट्टिकायाः परिवेषाकारत्वं युक्तम् । श्रीहर्षस्य परिवेषविषयेऽन्यैका कल्पना रोचका वर्तते । तथाहि—यदा यदा ब्रह्मा—"तदोजसस्तद्यशसः ०००

परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥

( नै. १. १४ )

नलप्रतापस्य नलयशस स्थितौ सूर्याचन्द्रमसौ निष्प्रयोजनाविति विधिवैयर्थ्यसूचकं रेखामण्डलं करोति तदेव परिवेषरूपेण तिष्ठतीति भावः ।

चन्द्रवैरिणो राहोरपि स्थानं चन्द्रवर्णनेऽपरिहार्यमस्ति—

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥

( रघु. २.३९ )

इति कालिदासेन राहोर्निर्देशः कृतः । 'चन्द्रस्येव निषधेन्द्रस्यामलं मण्डलं लोपयितुं पापः कलिः स्वर्भानुरिव प्राप ( नै. २२. १६१ ) इति श्रीहर्षेण । राहुश्चन्द्रं ग्रसतीति विचारः सर्वैः कविभिः प्रतिपादितः तथा हि—

'राहुरिन्दोर्भागमिव सन्ध्याभ्रवत् कपिशो विराधराक्षसो रामस्य मार्गमावृत्यातिष्ठत्' ( रघु. १२. २८ ); 'असुरद्रुहां पुरः सैंहिकेयः सोमं क्लिश्नाति ( शिशु. २. ६४ ), "भैमीवदनाम्बुजाच्चन्द्रस्य भङ्गः, स सिंहिकासुतः पुनरस्य चन्द्रस्यैकः प्रतिभटः ( नै. २२. १३७ ) । 'परसायकेन लूनान् उच्चैर्द्यामुत्पतितान् रौद्राकारान् सैंहिकेयानुकारान् आननान् दृष्ट्वा मुग्धैरप्सरोवक्त्रचन्द्रैस्त्रेसे ( शि. १८. ५६ ) ।

चन्द्रग्रासे राहोर्दन्तपंक्तिरपि कविभिर्निर्दिष्टा तद्यथा—'अभिधित्सत् उत्तमौजसो राहुवदनविकृतं मुखमुपलसत् सितदन्तपंक्तिग्रस्तशशधरमिव व्यभाव्यत ( शिशु. १५. ५१ ) ।', अथवा—

स्वर्भानुप्रातिवारपारणमिलद्दन्तौघयन्त्रोद्भव—
श्वभ्रालीयनयासु दीधितिसुधासारस्तुषारद्युतिः। ( नै. २२. १४८ )

इत्यत्र चन्द्रस्य गिलने दन्तदशनकृतविवरेभ्यः किरणामृतस्यासारो भवतीति कल्पना। इत्थमेव राहोर्दन्तैश्चन्द्रस्य पेषणमन्यत्राप्युत्प्रेक्षितम्। ''पूर्वं शशी यथा ज्योतिष्यं गोल आसीत्। दंष्ट्रायुगयन्त्रकृष्टपीयूषश्चिपटोऽभूत् ( नै. २२. ८४ )।

अपरं च राहुः पूर्णेन्दुमेव ग्रसतीति सूचितम्। तथाहि—

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये।
विधुर्विधुंतुदस्येव पूर्णस्तस्योत्सवाय सः॥ ( शिशु. २. ६१ )

चन्द्रस्य प्रतिवासरं राहुणा पानमपि चित्रितम् 'स्वर्भानुप्रतिवारपारण'' ( नै. २२. १४८ ) इति श्लोके।

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्॥ ( शिशु. २. ४६ )

इत्यत्र चन्द्रस्य मृदुता एव राहुणा तद्ग्रासस्य कारणमिति प्रतिपादितम्। चन्द्र इव राहुरपि बहुश उपमानीकृतः। तथाहि 'चन्द्रस्य कलाविच्छेदरूपेण गिलितं चन्द्रकलाकलापं वमन् राहुरिव वने कोरकितोऽगस्त्यवृक्षः ( नै. १.९६ )। अत्र चन्द्रस्य कलाक्षयो राहुग्रासात् कल्पितः। राहुणा चन्द्रस्य ग्रहणे राहुरेव भूमेश्छाया इति कल्पना वैज्ञानिकविचारेण संवदति यथा—'एतस्य राज्ञः कीर्तिप्रतापैरेव विधुभिर्युद्धार्थमाहूयमानो राहुर्भियैव भूमण्डलच्छायायां तर्क्यकायो बभूव ( नै. १२. ९४ ) इति।

यथा सुधापानार्थं तथैव कलङ्कमृगलोभेन सिंहिकासुतो राहुर्मृगाङ्कं चन्द्रं कवलीकरोति किन्तु चन्द्रः स्वस्यापि दानादुत्संगसुप्तं मृगमनुज्झन् तेन पुण्येन मुच्यते ( नै. २२. ६६ ) इति। मुखचन्द्रयोः सादृश्यमपि राहुणा चन्द्रग्रहणस्य हेतुरूपेण प्रस्तुतम्। यथा—

यस्य किञ्चदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥
( शिशु. १४. ७८ )

इति प्रत्यनीकालङ्कारेण कृष्णस्य सौंदर्यवर्णनम्। "भैमीमुखत्वं प्राप्य राहुभयस्य व्ययेन सुखीभवन् सुधांशुर्जयति। अतश्चन्द्रस्य बालकिरण-चक्रमधरोष्ठबिम्बलीलां दधार ( नै. ७. ६१ )। 'राहुग्रहपीडिताच्चन्द्रात् सारमुद्धृत्य देवा आत्मानं नलानुकल्पं कल्पयन्ति" यतो नलोऽपि प्रियावियोगात् साराकर्षणं प्राप्तवान् इव ( नै. १०. २२ )।

चन्द्रो विरहिजनानां पीडाकरः। अतः विरहिणश्चन्द्रग्रासकं राहुं प्रशंसन्ति। यथा भैमी विधुं बहु निन्दितवती, विधुंतुदं स्तुतवती ( नै. ४. ४३ )। विधुंतुदो राहुश्चन्द्रं किं मुञ्चतीति तर्केण सह विषादोऽपि भैम्या प्रकटितः। 'किं विधुंतुदः स्वरिपुहरेस्तीक्ष्णसुदर्शनस्य विभ्रमात् विधुं न ग्रसते। अन्यथा वदने निपतितं बलिकरम्भनिभममुं स कथमुज्झति ( नै. ४. ६४ )। "राहुरसंशयं वदनगर्भगतं शशिनं निजेच्छया नोज्झति। अयं विधुरशित एव राहोर्गलनालबिलाध्वना त्वयं विना निःसरति ( नै. ४. ६५ )। 'ऋजुदृशः पुराविदो मधुभिदं राहुशिरच्छिदं कथयन्ति, विरहिमूर्धभिदं किं न निगदन्ति? यदि राहो-र्जठरानलः स्यात्, क्व नु शशी? ( नै. ४. ६६ )। "यथा स्मरसखौ दिवो भिषजौ स्मरवैरिणा दलितं मखमृगस्य शिरः सपदि संदधतुस्तथा राहोः शिरोऽपि कः करोतु ( नै. ४. ६७ )। रणे नलविमस्तकितस्य मृतिभिया च भृशमुत्पततो रिपोः कबन्धगलेन तमोग्रहस्य राहोः शिर-स्तदसृग्दृढबन्धनं न मिलति किम् ( नै. ४. ६८ )। मगधराजजरा-संधस्य वपुर्दलयुग्मवत् कबन्धतां गतेन केतुना समं तमसो राहोः शिरो जरा किमिति न प्रतिसीव्यति ( नै. ४. ६९ ) इत्येवमादि तर्कैर्यदि राहुः पूर्णशरीरो भवेत् तर्हि चन्द्रस्तस्य ग्रहणात् पुनर्न निःस्सरेदिति समर्थितम्। 'हे विधुन्तुद किं त्वं रिपुं चन्द्रं द्विजराजधिया त्यजसि? यदि स ईदृशो भवेत् तर्हि पतित एष वारुणीं निषेव्य पुनः किं दिवमेति? ( नै. ४. ७० )।' यतः सुरापानं ब्राह्मणकृते पातकम्। 'अयं किल कण्ठं दहति तेन किं गरुडवद् द्विजवासनयोज्झितः? हे विधुन्तुद, मयि निरागस्यप्यस्य दाहिका, साऽस्य प्रकृतिरेव, तत्र का विप्रता ( नै. ४. ७१ ) इति श्लोकद्वये चन्द्रस्य द्विजराज इति नाम्न आधारेण श्लेषोक्तिः। 'द्विजपतिग्रसनाहितपातकप्रभवकुष्ठसितीकृतविग्रहः विरहिणीवदनेन्दु-

जिघित्सयाऽयं स्फुरति राहुर्न निशाकरः ( नै. ४. ७४ ) इत्यत्र चन्द्र एव राहुरिति अपह्नुतिः ।

## चन्द्र-समुद्र-सम्बन्धः

समुद्रमन्थनाद् उत्पन्नेषु चतुर्दशरत्नेष्वेकतमश्चन्द्र समुद्राज्जात इति प्रसिद्धिरस्ति । चन्द्रसागरयोरेष सम्बन्धः काव्येष्वपि निर्दिष्टः । रघुवंशे पुष्पकविमानेनायोध्यां प्रति विगाहमानो रामः समुद्रं वीक्ष्य सीता-मुवाच 'प्रह्लादनं ज्योतिः ( चन्द्रो ) ऽजनि-अनेन' ( रघु. १३. ४ ) । अन्यत्र च—

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनीधाविव ॥ ( रघु. १. १२ )

इति दिलीपजन्मवर्णनम् । चन्द्रः पूर्वसागराद् उदेतीति भारविणा किरातार्जुनीये—

दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः ।
हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥
( किरा. ६. २३ )

यथा वा नैषधीयचरिते सागरस्थशैलात् चन्द्रोदयो वर्णितः—

असंशयं सागरभागुदस्थात् पृथ्वीधरादेव मथः पुरायम् ।
अमुष्य यस्मादधुनापि सिन्धौ स्थितस्य शैलादुदयं प्रतीतः ॥
( नै. २२. ४३ )

ऐरावतोऽपि समुद्रमन्थने समुद्रादुत्थितः अतश्चन्द्रस्यानुजः कल्पितः । यथा—'प्राचीपतिवाहनेन निजानुजेनैरावतेन प्राचीदिशायामातिथ्यमु-पेतश्चन्द्रः सिन्दूरसान्द्रमूर्धारुणश्रीरुदेति । ( नै. २२. ४४ ) । 'समुद्रोत्थ-भ्रातुः कल्पवृक्षाच्चन्द्रस्य परोपकरणमल्पतरमेव ( नै. २२. ६३ ) इत्यत्र कल्पवृक्षोऽपि चन्द्रस्य भ्रातृत्वं भजते । "समुद्रसलिलादुत्थिता लक्ष्मी-र्जाह्नवीजलजकौस्तुभ-चन्द्रान् पाद-पाणि-हृदय-ईक्षण-वृत्तीन् परिचितान् परिचिन्त्य त्वयि स्थिता" ( नै. २१. १०६ ) इति नलेन कृते विष्णु-स्तुतौ चञ्चलापि लक्ष्मीः सागरे सहवासात् सञ्जातस्नेहान् विष्णो

स्थितान् दृष्ट्वा तत्रैव स्थिराऽभवत् । चन्द्रश्च विष्णोर्वामनेत्रे स्थित इत्याशयः । 'अयं चन्द्रः सागरान्मुनिलोचनाच्च जातः अतो द्विजः किम् ( नै. २२. १३३.)' इत्यत्र सागरादिवात्रिमुनिनेत्रादपि चन्द्रमसो जन्म सूचितं यथा कालिदासेनाऽपि रघुवंशे 'नयनसमुत्थं ज्योतिरत्रेरिव...' इति चन्द्रो वर्णितः । ( रघु. २. ७५ ) । 'जलमध्ये मुखं नम्रीकृत्य प्राणायामं कृतवतो नलस्य मुखसौन्दर्यं समुद्रमन्थनात् प्राक् समुद्रस्योदरे कृतवासस्य चन्द्रस्येवेति वर्णनेऽपि चन्द्रस्य समुद्राद्रुत्पत्तिः सूचिता ( नै. २१. २३ ) । 'शङ्खशब्दव्याजेन नलयशोवर्णनं प्रभाते वन्दिभिः कृतम् । तत्रापि चन्द्रः शङ्खसहोदरः प्रभाते दिवि लिखितोऽस्ति । निष्प्रभत्वाच्चित्रलिखित इव । चन्द्रस्य श्रद्धांकरं शङ्खसहोदरत्वं निश्चायकं करच्छेदमस्ति, अर्थात् शङ्ख इव चन्द्रेऽपि प्रत्यूषसमये किरणा न सन्ति ( नै. १६. ५६ ) अत्रापि शङ्खचन्द्रयोः सागराज्जन्म प्रतिपादितम् । द्वयोः किरणा न सन्ति द्वयोरुदरभागे श्यामत्वमतः सोदर्यत्वं निश्चितमिति भावः । 'नलस्य दिग्विजययात्रासु सैन्येनोद्धूतं रजः सुधासमुद्रे पतितं पङ्कीभूय सुधाम्बुधेरुत्पन्ने चन्द्रे लग्नं तस्य कलङ्कोऽभवत्' ( नै. १. ८ ), तडागः श्वेतनीलकमलच्छलेन निलीनयोश्चन्द्रकालकूटयोस्त्विषं विमुञ्चत् सागर इव' ( नै. १, ११३ ), 'स मन्दराद्रिः दमन्त्या आस्येन नीराधमन्थनोत्थमिन्दुं स्मरतु ( नै. ११. ६३ ) 'त्वां पीयूषमयूखं नलं कोऽसूत य उदन्वता सार्धं स्पर्धते ( नै. ७. ३०. ) इत्यादिषु तथैव विरहपीडिताया दमयन्त्या चन्द्रस्य भर्त्सनायामपि तस्य समुद्रमन्थनादुत्पत्तिः प्रतिपादिता । यथा—

अयि विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्ष्यत दाहवदान्यता ।
ग्लपितशम्भुगलाद् गरलात् त्वया किमुदधौ जड वा वडवानलात् ॥
( नै. ४. ४८ )

यथा वा

निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छन चूर्णितः ।
अपि मुनेर्जठरार्चिषि जीर्णतां वत गतोऽसि न पीतपयोनिधेः ॥
( नै. ४. ५१

इति मनोहारिणी कल्पना। भूयश्चन्द्रनिन्दायां भैम्या उक्तिः—

'न गणितं यदि जन्म पयोनिधौ हरशिरःस्थितिभूरपि विस्मृता।
उदर एव धृतः किमुदन्वता न विषमो वडवानलवद्विधुः॥ ( नै. ४. ६० )

पितुः समुद्रस्य कतिपया धर्माश्चन्द्रेऽपि दृश्यन्त इत्युद्भावितं कविना श्रीहर्षेण। तथा हि—'सुधाभुजो देवा एनं चन्द्रं परिपीय तुच्छं ( रिक्तं ) कुर्वन्ति तदुचितमेव। पुरास्य पिता सिन्धुरपि कलशोद्भवेनागस्तिना निपीय रिक्तोऽकारि ( नै. २२. ६७ ) 'शशः-शशाङ्के जागर्तीति किमत्राश्चर्यम्। यत एतस्य पितुरम्बुराशेरन्तस्तुरङ्गो मतङ्गजोपि। ( नै. २२.६४ ) सागरान्मन्थनेनोच्चैःश्रवा अश्व ऐरावतश्च गज उत्थितौ, तदेवाश्रित्येयं कल्पना। तथा च—

गुणौ पयोधेर्निजकारणस्य न हानिवृद्धी कथमेतु चन्द्रः।
चिरेण सोऽयं भजते तु यत्ते न नित्यमम्भोधिरिवात्र चित्रम्॥
( नै. २२. ७४ )

हानिवृद्धी पितुः समुद्रस्य गुणौ चन्द्रः प्राप्नोतीत्यत्र नाश्चर्यम्। किन्तु समुद्रवदस्य हानिवृद्धी न प्रतिदिनमपितु चिरेण पक्षान्तपरिमितेन कालेनेति चित्रमिति भावः।

अब्धिना कियत्कलश्चन्द्रः प्रासावि किं पूर्ण उतापूर्ण एतद्विषयेऽपि तर्कोऽयं प्रस्तुतो नैषधीयचरिते। यावन्तमिन्दुं प्रतिपत् प्रसूते तावत्प्रमाणमेककलमेव तमब्धिः प्रसूते। यतस्तत्काल एव हरेण मूर्ध्नि धृतः। ईशमूर्ध्नि धृतस्य चन्द्रस्याणीयस्त्वमेवैककलत्वे ज्ञापकं लिङ्गमस्ति ( नै. २२. ८३ ) इति। पयोधिः स्वमणिभिरपि स्वपुत्रं चन्द्रं क्षयात् त्रातुं न शशाक ( नै. २२. ६६ ) इत्यत्रापि पयोधेश्चन्द्रं प्रति पुत्रस्नेहः सूचितः। 'चान्द्रिकायामेव क्षीरसागरबुद्ध्या चन्द्रः पितृवियोगदुःखं परित्यजति ( नै. २२. ६८ ) इति चन्द्रस्यापि पितरं सागरं प्रति स्नेहः कल्पितः।

चन्द्रसमुद्रयोरैक्यं रघुवंशे उपमालङ्कारेण प्रकटितम्। यथा—रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्च वातवह्न्योरिव चन्द्रसमुद्रयोरिवैक्यं न बिभेद ( रघु० १०. ८२ )

चन्द्रेण समुद्रस्याकर्षणमुल्लसनं वा काव्येष्वलङ्काराणामुपायभूतम्। यथा—

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूरमिवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि ॥
(रघु. ३. १७)

इति कालिदासस्योपमा।

तृतियोगः परेणापि महिम्ना न महात्मनाम्।
पूर्णश्चन्द्रोदयाकांक्षी दृष्टान्तोऽत्र महार्णवः ॥ (शिशु. २. ३१)

इति पूर्णः समुद्रोऽपि वृद्धयर्थं चन्द्रोदयमाकांक्षति इत्यनेन दृष्टान्तेन प्रस्तुतम्। तथा च 'उपगूढवेषं सरितामधीशमपि रजनीकरोऽलघूर्मिभुजैः क्षोभयति। यदुरागिणामनङ्गलघुं गणं सोऽचुक्षुभदिति किं चित्रम् (शिशु. ६. ३८) जलनिधिनातिमात्रं पीत्वा वृद्धिं गतेप्यात्मनि नैव मातीरिन्दो रुचयोऽधिवेषं क्षिप्ता मुक्तावलीराकलयांचकार (शिशु. ३. ७३) इत्यत्रापि चन्द्रोदये सागरस्य वृद्धिश्चन्द्रकिरणाश्च मुक्तावलीरिति प्रस्तावः।

'इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥
(नै. ३. ११६)

इति दृष्टान्तेन वैदर्भ्या गुणैर्नैषधः समाकृष्ट इति नैषधीयचरिते दमयन्त्या स्तुतिः। 'दमयन्त्या आननचन्द्रभासा समुल्लसितो नलो भैमीं बिभ्रद् धरां धारयन् समुद्र इव (नै. २१. १०६) इत्यत्रापि चन्द्रभासा समुद्रस्योल्लसनं स्पष्टमेव निर्दिष्टम्। यथा वा "नलस्य दृशौ भैमीमुखेन्दोरालोकपीयूषरसेन पृथुं वेलामतिक्रम्य रागाम्बुनिधौ विवृद्धे सति तस्यास्तुङ्गौ कुचावाश्रयतः (नै. ७. ४)'। 'विधोः पुत्री चन्द्रिका सागरस्य ताण्डविका (नै. २२. ६६)

कियान् यथानेन वियद्विभागस्तमोनिरासाद्विशदीकृतोऽयम्।
अद्भिस्तथा लावणसैन्धवीभिरुल्लासिताभिः क्षितिरप्यकारि ॥
(नै. २२. ७१)

इत्यत्र तमोनिरासेन यथाकाशादेशश्चन्द्रेण धवलीकृतस्तथैवोल्लासितैर्नीलैः समुद्रजलैर्नीलोऽपि कृत इति कल्पना। अन्यच्च—'अयं विधुः पयोधेः पूरं विवर्धयितुमेणाङ्कमणिं (चन्द्रकान्तमणिं) कियन्ति पयांसि दोग्धि प्रियवियोगेन सशोकायाश्चक्रवाक्या नयने कियन्ति जलानि दोग्धि (नै. २२. ५६) इति समुद्रपूरणार्थं चन्द्रस्य साधनान्यपि तर्कितानि।

समुद्रः स्वोर्मिभिः सहर्षं चन्द्रे प्रत्युद्गच्छतीति कल्पनाया विस्तारो दृश्यते निम्नाङ्कितेषु—

तं तस्थिवासं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली॥ (रघु. ५. ६१)

अत्रेन्दुमतीभ्रात्राऽजस्य स्वागतं वर्णितम्। "अन्तिकमायान्तं सुधाकरं प्रतीचीसिन्धुवीचीव भैमी नलमायान्तं प्रत्युज्जगाम'। (नै. २०. २) इत्यत्र कल्पनासादृश्यम्।

चन्द्रः समुद्रं वेलां नयतीति घटनाऽप्युपमालङ्कारे प्रयुक्ता—

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः॥ (रघु ७. १९)

इति विवाहसमयेऽजस्य वर्णनम्। कुमारसंभवे हरवर्णनेऽपि शब्दश एव एष श्लोकः पुनरुक्तः कालिदासेन (कुमार ७. ७३) 'आतपत्रमण्डलेन पूर्वनिवासभूमिं प्रस्थापितो बलौघ उदितेन चन्द्रेण वेलां नीयमान उदन्वान् इव बभौ (रघु. १६. २७) अत्र वरवर्णनसदृशमेव सैन्यस्यापि वर्णनम्। परवर्तिभिरपि कविभिरेषा कल्पना न प्रयुक्तेति चित्रम्। तथापि अन्यैवेका नवकल्पना शिशुपालवधे दृश्यते यथा—

उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः।
घनवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः॥ (शिशु.९.६२)

यथा कोऽपि वणिक् पण्यवीथ्यां कस्यचिद् धनिकवणिजो मूलधनवृद्धीः स्वसमृद्धये सेवते तद्वत् समुद्रोऽपि चन्द्रस्य कलाः सेवते लाभं च प्राप्नोति भावः।

(अपूर्णोऽयं लेखः। आगाम्यङ्केऽवशिष्टभागः प्रकाश्यते)

# मध्यकालीन-संस्कृत-रूपकाणां परिसंख्यानम्

कु० कुसुम-भरिया

"भवभूतिपर्यन्तमेव संस्कृत-नाट्य साहित्यस्य स्वर्णयुगमस्ति भवभूतेः पश्चाद्वर्तिनाट्यकारेषु न किमपि विशिष्टं तत्त्वमुल्लेखनीयं अपि च तेषु नित्यनवोन्मेषशालिप्रतिभाया अभावोऽस्ति" इति सामान्यत आलोचकानां धारणा। वैदेशिकोपनेत्रधारिणस्ते आलोचका अस्माकं मध्ययुगीन-साहित्यिक-निधिना सह पूर्णतो न्यायं नाकुर्वन्नित्यस्माकं प्रतिपाद्यम्। यतो हि नाम किंचिदुत्कृष्टं तत्त्वमेतेषु नाटकेषु वरीवर्तीति स्वसर्वजनात्मकोपलब्धेरियं परम्परा रक्षणीया विद्यते।

भारतस्य सहस्राब्दानां साहित्यिकनिधौ संस्कृत-वाण्या अनुपमं योगदानं विद्यते। समस्त-भारतस्य सर्वेषां साम्प्रदायिक-सांस्कृतिक-वर्गाणां विचारधाराया महास्रोतः संस्कृत-साहित्यमस्ति, यस्मिन् महाकालस्याजस्र-लीलाविलासो विद्यते। संस्कृत-साहित्यस्य प्रतिपद-साधनायाः पूर्णपरिकल्पनं ते तत्त्वान्वेषिणः करिष्यन्त्येव ये समग्र-भारतं ज्ञातुकामाः सन्ति सर्वासु दिशासु चास्याकांक्षाणामुपलब्धीनां च, अथवा त्रुटीनां ज्ञानं कृत्वा समदृष्टि-प्राप्त्यर्थमिच्छुकाः सन्ति येन विना ज्ञानविज्ञानयोः परिनिष्ठितसाधना न सम्भवति।

अस्माकं परमसौभाग्यमस्ति यत् सहस्रवर्षाणां लघु-गुरु-मनीषिणां कृतीनामादर्शो न विनष्टाः सन्ति। पूर्वजास्तेषां रक्षामेव स्वामरत्वममन्यन्त।

मध्ययुगस्य परवर्ति-संस्कृत-रचनासु अथवान्यभाषायां विरचितेषु मध्ययुगीनार्वाचीन-साहित्येषु वा संस्कृतस्य प्रभावः स्वभावतोऽस्त्येव। संस्कृतस्य छत्रच्छायायामेव संस्कृतेतर-भाषाणामुद्भवो विकासश्चाभवताम्। अनया दृष्ट्यापि मध्ययुगस्याथवाधुनिकयुगस्य संस्कृत-साहित्यं भारतभारत्याः सारस्वत-वरदानमिति मन्तव्यम्।

मध्ययुगे सहस्रप्राय-रूपकाणां प्रणयनमभवद्, येषु प्रायो द्विशती

प्राप्यते । एतेषामध्ययनेन निष्कर्षो भवति यत् तेषु रूपकेषु नाट्य-शास्त्रीय-विकासस्य प्रचुरसामग्र्या तद्युगीनसामाजिकैतिहासिक-सांस्कृतिक-स्थितीनां प्रत्यक्षं चित्रं ग्रहणीयम्, नान्यथा। एतेषु कतिपय-रूपकाणि कीथमहोदयेन प्रशंसितानि। तथा हि, पार्थपराक्रम-व्यायोगस्य रचयितारं प्रह्लादनदेवं प्रति तस्य प्रशंसोक्तिर्विद्यते—

"Prahlādanadeva wrote other works of which some verses are preserved in the anthologies and must have been a man of considerable ability and merit." इति ।

कतिपय-नाटकानि कला-दृष्ट्यानुत्तमानि सन्ति । रामभद्रमुनेर्द्वादश-शताब्द्याः प्रकरणं प्रबुद्धरौहिणेयं कला-दृष्ट्या विश्वसाहित्ये प्रथमश्रेण्यां स्थानमर्हति । अस्याभिनयः कथाप्रपञ्चकौशलं चातिमनोरमे रसमये च स्तः । तथैव भगवदज्जुकीये प्रकरणे कविः सामाजिकान् रसविलासे निमग्नान् कुर्वन् मनोरञ्जनस्यापूर्वं प्रवाहं प्रवर्तयति स्म ।

अनेक-नाटकेषु भारतीय-चरित्रनिर्माणस्योपादानानि कलात्मकसौर-भेण सुवासितानि सन्ति । महाकवि-क्षेमीश्वरस्य चण्डकौशिको हरिश्चन्द्रस्य सत्याभिनिवेशचित्रणेन सहृदयस्योदयोन्मुखं मनोबलं रसास्वादपूर्ण-विधिना द्विगुणीकरोति ।

मध्ययुगं भारतस्य सामाजिक-राजनीतिक-विघटनस्य विप्लवस्य च युगमासीत् । अस्मिन् युगे शूरान् प्रोत्साह्य संस्कृतेः समाजस्य च विघटनकर्तृभिः सह युद्धस्य प्रेरणाप्रदातृ-बहुशो डिमव्यायोग-समवकाराश्च रचिताः । अनया दृष्ट्या महाकवि-वत्सराजस्य प्रयासः प्रशस्तोऽस्ति । तस्य त्रिपुरदाह-किरातार्जुनीय व्यायोग-समुद्रमथनानि च निष्प्राणे-ष्वपि राष्ट्ररक्षाभियोगस्य स्फूर्तिं निर्भरं कर्तुं समर्थानि सन्ति । आक्रमण-कारिजनैः सह योद्धुं राजानः संघं निर्मितवन्तः । तदा युद्धघोषोऽभवत्—

एकः करः कलयति स्फटिकाक्षमालां
घोरं धनुस्तदितरश्च बिभर्ति हस्तः ।
धर्मः कठोरकलिकालकदर्थ्यमानः
सत्क्षत्रियस्य शरणं किमिवानुयातः ॥ इति

अयं संदेशो वत्सराजेन सामाजिकेभ्यो दत्तो राजभ्यश्च मन्त्रितम्—

"औदार्यशौर्यरसिकाः सुखयन्तु भूपाः।"

देशस्य संस्कृतेश्च रक्षार्थमात्मबलिदानस्य सन्देशोऽनेकेषु रूपकेषु स्थाने स्थाने प्राप्यते। तेन सहैव तेषां जन्तूनामपि परिचयो निभालितो यानि स्वतुच्छस्वार्थमधिकृत्य देशस्य स्वतन्त्रताया बलिं कुर्वन्ति स्म। तेषां महामानवानामादर्शोऽनेकनाटकेषु निबद्धोऽभवत् येषां पराक्रमेण शौर्यगाथया च भारतमाता कृतार्थाभवत् तेषु दिवसेषु। जैन-कवि-वीरसूरेः हम्मीरमदमर्दनमेकान्या रचनास्ति अस्याः कोटेः। एतदनुसारेण—

त्रस्तेषु तेषु सुभटेषु विभौ च भग्ने
मग्नासु कीर्तिषु निरीक्ष्य जनं भयार्तम्।
यो मित्रबान्धववधूजनवारितोऽपि
वल्गत्यरीन् प्रति रसेन स एव वीरः॥

संस्कृतस्य पूर्ववर्ति-नाटकेषु यासां कलात्मक-प्रवृत्तीनां बीजाधानमीषद्विकासश्चाभवत् तासां पूर्वविकासो मध्ययुगस्यैतासु कृतिषु विद्यते। यथा, यस्य छायानाटकस्य बीजाधानं भासेन स्वप्नवासवदत्ते प्रतिमानाटके च कृतं यस्येषद्विकासश्च कुन्दमालायामुत्तररामचरिते च प्राप्यते तस्य पूर्णविकासो धर्माभ्युदयोल्लाघराघव-दूताङ्गदादि-रूपकेषु दर्शनीयोऽस्ति। तथैवास्ति कपटनाटकं कूटघटनानां कूटपात्राणां च नियोजनं तत् मध्ययुगीन-नाटकेषु विशेषकौशलपूर्वकं सन्निवेशितं विद्यते। अश्वघोषेण प्रवर्तितानां प्रतीकनाटकानां सम्यग्विकासोऽपि अस्य युगस्य प्रबोधचन्द्रोदय-मोहराजपराजयादि-रूपकेषु प्राप्यते। वयं यदि युगस्यास्य कृतीः प्रमादवशादुपेक्षामहे, तर्हि उपर्युक्त-विकासस्य कलात्मक-विलासानात्मसात्कर्तुं नान्यथा समर्था भवेम।

मध्ययुगस्यैतेषु रूपकेष्वैतिहासिककृतीनां विशेषं स्थानं विद्यते। प्रायशः समसामयिक-रचयितारः प्रत्यक्षघटनानां चित्रणं कुर्वन्ति स्म तासु कृतिषु। इतिहासस्य प्रामाणिक-सामग्रीसंयोजनार्थं कृतीनां ...त्त्वमस्ति कौमुदीमहोत्सव-विद्धशालभञ्जिका-कर्णसुन्दरी-

ललितविग्रहराज-मोहराजपराजय-पारिजातमञ्जरी-हम्मीरमदमर्दनाद्युल्लेखनीया रचनाः सन्त्यनया द्रष्टव्या।

मध्ययुगस्यैतेषु नाटकेष्वभिनव-संविधानं नूतन-नाटकीयविधा नूतन-प्रयोगाश्च प्राप्यन्ते। हनुमन्नाटक-बालरामायणानर्घराघव-वीणावासवदत्तादयःस्वकोटेः सर्वप्रथमा रचनाः सन्ति यासां छत्रच्छाया भारतीय-साहित्ये शाश्वतरूपेण समाश्रयणीया मध्ययुगे कतिपय-प्राचीन-नाट्य-विधानामुदाहरणानि प्राप्यन्ते। यथा, वत्सराजविरचित-समवकारो डिम ईहामृगश्च। नैतद्विधानि नाट्यानि पूर्वतः संगृहीतान्यधुनोपलभ्यानि सन्ति।

आधुनिक-चलचित्र-जगति काचिदनुपमा सामग्री नाटकेष्वैतेष्वनुहरणीया विद्यते। रामचन्द्रस्य कौमुदीमित्रानन्देऽथवा रामभद्रस्य प्रबुद्ध-रौहिणेये चलचित्राणां प्रवृत्तीनां मूलं द्रष्टुं पार्यते।

तत्राधोलिखिता विद्यते विविधनाट्यविधानां वर्गीकृतसामग्री सार-रूपेण संगृहीता—

*महानाटकानि*

१. हनुमन्नाटकम्
२. बालरामायणम्
३. बालभारतम्
४. संकल्पसूर्योदयम्

*नाटकानि*

१. कौमुदी-महोत्सवम्
२. तापसवत्सराजम्
३. आश्चर्यचूडामणिः
४. अनर्घराघवम्
५. तपतीसंवरणम्
६. सुभद्राधनञ्जयम्
७. चण्डकौशिकम्
८. ललितविग्रहराजम्
९. हरकेलिनाटकम्
१०. नलविलासम्
११. सत्यहरिश्चन्द्रम्
१२. रघुविलासम्
१३. ययातिचरितम्
१४. वीणावासवदत्तम्
१५. हम्मीरमदमर्दनम्
१६. प्रसन्नराघवम्
१७. उल्लाघराघवम्
१८. प्रतापरुद्रकल्याणम्
१९. विक्रान्तकौरवम्
२०. मैथिलीकल्याणम्
२१. अञ्जनापवनञ्जयम्
२२. प्रद्युम्नाभ्युदयम्
२३. भैरवानन्दम्
२४. ज्योतिःप्रभाकल्याणम्

२५. पार्वतीपरिणयम्
२६. गङ्गादास-प्रतापविलासम्
२७. भर्तृहरिनिर्वेदम्
२८. मुरारिविजयम्
२९. वसुमतीमानविक्रमम्

*प्रतीक-नाटकानि*

१. प्रबोधचन्द्रोदयम्
२. मोहराजपराजयम्
३. सङ्कल्पसूर्योदयम्

*प्रकरणानि*

१. चन्द्रप्रभाविजयम्
२. कौमुदीमित्रानन्दम्
३. मल्लिकामकरन्दम्
४. प्रबुद्धरौहिणेयम्
५. मल्लिकामारुतम्

*व्यायोगाः*

१. कल्याण-सौगन्धिकम्
२. निर्भयभीमम्
३. पार्थपराक्रमम्
४. धनञ्जयविजयम्
५. किरातार्जुनीयम्
६. शंखपराभवम्
७. सौगन्धिकाहरणम्
८. भीमविक्रमम्
९. नरकासुरविजयम्

*प्रहसनानि*

१. भगवदज्जुकीयम्
२. लटकमेलकम्
३. हास्यचूडामणिम्
४. धूर्तसमागमम्

*भाणाः*

१. कर्पूरचरितम्
२. विटनिद्राम्
३. शृङ्गारभूषणम्

*ईहामृगाः*

रुक्मिणीहरणम्

*डिमाः*

त्रिपुरदाहम्

*समवकाराः*

समुद्रमथनम्

*नाटिकाः*

१. विद्धशालभञ्जिकाम्
२. कर्णसुन्दरी
३. उषारागोदयाम्
४. पारिजातमञ्जरी
५. सुभद्राम्
६. रम्भामञ्जरी
७. कुवलयावली
८. चन्द्रकलाम्
९. कनकलेखाम्
१०. वृषभानुजाम्

*उपरूपकाणि*

१. विबुधानन्दम्
२. धर्माभ्युदयम् ( श्रीगदितम् )
३. करुणावज्रायुधम्
४. द्रौपदी-स्वयंवरम्
५. पारिजातहरणम् ( किरतनिया )
६. उन्मत्तराघवम् ( प्रेक्षणकम् ) भास्करकविकृतम्
७. गोरक्षनाटकम् ( किरतनिया )
८. उन्मत्तराघव विरूपाक्षकृतम्

*ऐतिहासिकरूपकाणि*

१. कौमुदीमहोत्सवम्

२. विद्धशालभञ्जिका
३. कर्णसुन्दरी
४. ललितविग्रहराजम्
५. मोहराजपराजयम्
६. पारिजातमञ्जरी
७. हम्मीरमदमर्दनम्
८. शंखपराभवम्
९. प्रतापरुद्रकल्याणम्
१०. गंगादासप्रतापविलासम्
११. वसुमतीमानविक्रमम्

*छायानाटकानि*

१. हनुमन्नाटकम्
२. धर्माभ्युदयम्
३. दूताङ्गदम्
४. उल्लाघराघवम्
५. कमलिनीराजहंसम्
६. सुभद्रापरिणयम्
७. रामाभ्युदयम्
८. पाण्डवाभ्युदयम्
९. शमामृतम्



## संस्कृतसाहित्ये प्रभातवर्णनम्

*कु० मुकुल रानी त्रिपाठी*

अखिलः स्थावरजङ्गमात्मकः लोकः काव्यस्य विषयत्वेन स्वीक्रियते। मानव इव प्रकृतिरपि अपूर्वे काव्यसंसारे विविधरूपतां भजमाना आदिकालतः एव सहृदयमनोमिलिन्दमाह्लादयन्ती विराजते। अन्यक्षेत्रेषु इव प्राकृतिकसुषमाक्षेत्रेऽपि भारतवर्षस्य महिमा नितरामतिशायी। फलतः पुराकालादेव संस्कृतसाहित्ये प्राकृतिकसुषमा वर्ण्यमाना राजते। संस्कृतसाहित्यस्य पर्यवेक्षणेन तथ्यमिदं सुतरां स्पष्टं भवति यत् तस्मिन् अन्यानि प्रकृतिदृश्यानि इव प्रभातदृश्यमपि कविभिः स्वीयकाव्येषु प्रचुरतया उपवर्णितम्। प्रभातकालः दिवसस्य समारम्भकालः। तस्मिन्नेव काले दिग्वधूवदनावगुण्ठनभूतं गहनं तमः भगवान् भास्करः स्वकिरणकरैः अपसारयति स्वपावनदर्शनेन च संसारं पुनाति तदा प्रकाशमाने च दिवसे न केवलं मानवाः, अपितु समस्ताः जीवाः निजालस्यं विहाय प्राभातिकीं मनोहारिणीं छटां विलोक्य अपूर्वमाह्लादमाप्नुवन्ति स्वस्वकर्मसु निरताः च जायन्ते।

प्रभातस्य ईदृशं महात्म्यमाकलय्य वैदिकाः ऋषयोऽपि तस्य सातिशयं गुणगानं कृतवन्तः। ते प्रकृत्याः सान्निध्यं प्राप्य तस्याः प्रत्येकपक्षस्य सूक्ष्मदर्शनं कृतवन्तः। ते बालसारल्येन प्रकृतिं जिज्ञासया अपश्यन्। तस्याः सौन्दर्येण विस्मिताः भूत्वा ते ताम् अलौकिकशक्तिरूपां च मत्वा तस्याः अर्चनां विदधुः। प्रत्यूषवेलायाम् भगवतः भास्करस्योदयकाले आर्यजनैः उषोरूपेण एकां देवीं कल्पयित्वा तस्याः अर्चनायाम् अनेकानि सूक्तानि प्रणीतानि। तेषां मते उषाः एका शैलूषी एव विभ्राजितैः वस्त्रैः अलंकृता सती प्राच्यां दिशायां प्रादुर्भवति। मृणालगौरी सा दीप्तिधाराभिः स्नाता इव यामिनीकामिन्याः श्यामपरिधानम् अपसारयति। समागतायां तस्यां नभोमण्डलम् अपूर्वदीप्तिं धरते। तया एव प्रेरिताः सन्तः मनुष्याः पशुपक्षिणश्च स्वदैनन्दिनकार्येषु व्यस्ताः भवन्ति—

आ धा योषेव सूनर्युषा याति प्रभुञ्जती।
जरयन्ती वृजन पद्वदीयत उत्पातयति पक्षिणः ॥ उषस्सूक्त ऋ०

ऋतावरी इयम् उषा न लङ्घयते निसर्गनियमान्। सा विबोध्य देवोपासकान् उपासनार्थं प्रेरयते। रोचनशीलया रमणीयदर्शनया उषसा स्वपरिरम्भणपाशेन तिमिरे गृह्यमाणे सकलपदार्थाः भासमानाः जायन्ते–

"अवस्यूमेव चिन्वतीमघोन्युषा याति स्वसरस्य पत्नी।" उषस्सूक्त ऋ०

वैदिकसाहित्यस्य ऋषयः इव लौकिकसंस्कृतसाहित्यस्य कवयोऽपि प्रभातकालिकरमणीयदृश्यैः चकिताः मुग्धाः प्रभाविताश्च जाताः। फलतः तद्विरचितेषु काव्येषु प्राभातिकदृश्यसम्बद्धान्यनेकानि चित्राणि प्राप्यन्ते यैः भावुकाः समाह्लादिताः भवन्ति। अत्र प्रभातवर्णनसम्बद्धाः कतिचित् प्रसङ्गाः प्रस्तूयन्ते। सर्वप्रथमं तु अवलोक्यतां महाकविमाघस्य प्रभातमाश्रित्य कविता-वनिता-विलासम्। संस्कृतकविषु महाकवि माघः स्वप्रभातवर्णनेन दिनमणिरिव स्वकाव्यदीप्त्या सर्वानतिशेते, इति विदितमेव सुविदुषाम्।

एकतः शीतांशोः स्वरश्मिसङ्कोचम्, अपरतः अनूरुसारथेः आगमनम्। ईदृश्यां सन्धिवेलायां माघस्य प्रतिभा भूरिशः प्रकाशते। रैवतकपर्वतस्य एकपार्श्वे उदीयमानं भास्वन्तम् अपरपार्श्वे अस्ताचलं व्रजन्तम् ओषधिपतिं चावलोक्य महाकविमाघायेत्थं प्रतिभाति यत् अयं रैवतकः पर्वतः विलम्बमानघण्टायुग्मधारी कश्चित् गजेन्द्रः इव विराजमानः सहृदयहृदयमावर्जयति—

उदयति विततोर्ध्वरश्मिरज्ज्वावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बि-घण्टा-द्वय-परिवारितवारणेन्द्र-लीलाम् ॥[1]

तदा यामिनी गतप्राया। प्रभातकालिकसन्ध्या अपि शनैः शनैः तामनुसरन्ती परिलक्ष्यते। कविकल्पनायाम् इयं पूर्वसन्ध्या तमस्विन्याः 'मधुपमालाकज्जलेन्दीवराक्षी' अल्पवयस्का सुतेव पतत्रिकुलकूजनकपटेन कलकलं विदधती स्वजननीं रजनीमनुधावन्तीव विराजतेतराम्—

१. शिशुपालवध, ४।२०

अरुणजलजराजी मुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्यासुतेव ॥[1]

माघस्य आभिः पङ्क्तिभिः एका चटुला दुर्ललिता शिशुबालिका नयन-गोचरतां गतेव कमपि भावुकम् समाह्लादयितुं सामर्थ्यमेति ।

कुमुदकुसुमानि अर्द्धनिमीलितानि कमलानि च, अर्द्धविकसितानि सन्ति । अस्मिन् सन्धिकाले पुष्पद्वयं समानशोभां श्रयते । अतएव तु पुष्परसपानचतुरचञ्चरीकाः समानानुरागेण कुमुदकमले आश्लिष्य स्वकूजितालापव्याजेन तयोः स्तुतिं कुर्वाणाः इव शोभन्ते—

दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥[2]

अस्मिन् नयनाभिरामकाले पत्रिणां निनादः कर्णशष्कुलीं पूरयतीव । कविः चिन्तयति यत् दिग्वधूभिः प्राच्यपयोधेः सूर्यबिम्बरूपघटं समा-कृष्यते रविरश्मिरेव तासां कर्षणरज्जुः । विहङ्गालापा एव घटाकर्षण-समये तासां कलकलनिनादाः—

विततपृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान्दिग्भिराकृष्यमाणः ।
कृतचपलविहङ्गालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥[3]

अस्तङ्गतस्य चन्द्रस्य अथ च प्रातोदयस्य सूर्यस्य तेजोमिश्रण-सम्भूत-वर्णक्रीडा गद्यकवित्रिविक्रमभट्टम् अभिनवरूपेण समानन्दयति । तस्य 'नलचम्पू'नामधेयग्रन्थे एतत्सम्बन्धिनी उद्भावना दृश्यताम्—एकतः

१. शिशुपालवध, ११।४०

२. शिशुपालवध, ११।१५

३. शिशुपालवध, ११।४४

उदयाचले अरुणोदयस्य प्रकाशः, अपरतः दूरं व्रजन्त्याः रजन्याः स्वल्पश्यामान्धकारं दृश्यते गगनाजिरे। उभयोः सम्मिश्रणेन सम्भूतां नूतनदीप्तिधारां विलोक्य इत्थं प्रतीयते यत् स्वच्छतोयाया गङ्गायाः दुग्धधवलनीरेषु कालिन्द्याः इन्दीवरसदृशनीलं नीरं मिश्रितम्—

उदयगिरिगतायां प्राक् प्रभापाण्डुताया-
मनुसरति निशीथे शृङ्गमस्ताचलस्य।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनं च ॥[1]

अतः परं प्रकृतिपर्यवेक्षणप्रवीणेन बाणभट्टेन चित्रितां प्रभातसुषमाम् अवलोकयन्तु। तेन स्वकाव्येषु प्रकृतिचित्राङ्कनं केवलं कल्पनया एव न कृतम्, अपितु, अनुभूतिप्राप्तचिन्तनमाकलय्य निबद्धम्। तस्य यथार्थप्रत्यूषवर्णनम् अन्यप्राकृतिकवर्णनेन सदृशं सहृदयचक्षुषां समक्षे यथार्थबिम्बं प्रस्तौति येन तेषां मनस्सु प्रमोदोद्भवः भवति। पश्यन्तु—अलक्तकदीप्तिसूर्यस्य रश्मयः पद्मरागमणिनिर्मितशलाकासम्मार्जन्यः इव प्रतिभान्ति, याः आदाय सूर्यः विकीर्णतारक कुसुमानि अवचिनोति—

"गजरुधिर-रक्तहरिसटा-लोहिनीभिः प्रतप्तलाक्षिकतन्तुपाटलाभिरायामिनीभिः अशिशिरकिरणदीधितिभिः पद्मरागशलाकासम्मार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे......"[2]

ईदृक् प्रभातवेला धार्मिकानुष्ठानार्थं सर्वथोपयुक्ता। तस्यां पूतमन्त्रगुञ्जिततपोवनानि हवनधूमधूमायितानि वृक्षशिखराणि कस्य मनः न पावनं कुर्वन्ति ? शिरीषपुष्पपेशलकविहृदयस्य तु कथैव अन्या। बाणभट्टस्य तपोवनाग्निहोत्रधूसरेखायाः शोभां विलोकयन्तु—

"रासभरोमधूसरासु वनदेवताप्रासादानाम् तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु......"[3]

१. नलचम्पू ६।१
२–३. कादम्बरी पूर्वार्द्ध

संस्कृतकविषु कालिदासः प्रकृतिं पूर्णां सजीवां च मन्यते। तस्य इयमेव मान्यता यत् प्रकृतिः मनुष्येण साकं तादात्म्यभावेन सम्बद्धा। प्रकृतिं विना मनुष्यस्य अथ च मनुष्यं विना प्रकृत्याः कल्पना मिथ्या एव। अतएव अन्यप्राकृतिकदृश्यसदृशं प्राभातिकदृश्यमपि सः स्वतन्त्ररूपेण न ददर्श। तस्य काव्येषु प्रकृतिः सान्द्रमानवीयभावैः सम्पृक्ता चित्रिता। यथा—मञ्जिष्ठारागलोहितरविकिरणैः पादपपत्राणि रक्तदीप्तिं भजन्ते। तेषु रक्तवर्णपत्रेषु पतिता मुक्तामणिरिव नीहारकणिका तथैव आभाति यथा अजस्य स्मितिकाले तस्य पाटलाधरपटले पतिता श्वेतदन्तज्योत्स्ना—

> ताम्रोदरेषु पतितं तरुपल्लवेषु
> निर्धौतहारगुलिकाविशदं हिमाम्भः।
> आभाति लब्धपरभागतयाधरोष्ठे
> लीलास्मितं सदशनार्चिरिव त्वदीयम्॥[1]

सुखदुःखचक्रमारूढोऽयं संसारः। अनेन तु कारणेन असौ प्राभातिकसमयोऽपि कालिदासं जीवनस्योत्थानपतनयोः अपरिहार्यतां शाश्वततां च बोधयन्निव परिदृश्यते। पर्य्यालोच्यताम् इदं तथ्यं शाकुन्तलस्य चतुर्थाङ्कस्य श्लोकेऽस्मिन्—

> यात्येकतोऽस्तशिखरं पतिरोषधीना-
> माविष्कृतोऽरुणपुरःसर एकतोऽर्कः।
> तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
> लोको नियम्यत इवात्मदशान्तरेषु॥

धीरसमीरस्पर्शेन मन्दमन्दमान्दोल्यमानायां लतायां सत्यां कुसुमानि भूमौ पतन्ति। अम्भोजखण्डानि विकम्पितानि जातानि। कीदृशी रामणीयकी इयं शोभा—

> वृन्ताच्छ्लथं हरतिपुष्पमनोकहानां
> संसृज्यते सरसिजैररुणांशुभिन्नैः।

---

१. रघुवंश ५।७०

स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥[१]

नदीपुलिनस्थपादपानाम् पत्रेभ्यः अवश्यायसीकराः निपतन्ति, पक्षिणश्च कूजन्ति । कवेरुद्भावना इयम् यत् अस्तङ्गते प्रियचन्द्रे विषण्णमानसां कुमुदिनीं दृष्ट्वा नदीतीरस्थतरुभिरपि न पार्यते निरोद्धुं नयनबाष्पाणि । पश्यतु, भट्टिकविः किं कथयति—

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः ।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥[२]

अतएव कमनीयवेलायाम् अस्यां यदि माघस्य द्वारपालः मुहुर्मुहुर्विबोध्यमानोऽपि चिररात्राय स्वनिद्रां न जहाति, तर्हि न किमप्याश्चर्यम् । स अस्पष्टं वाचमुदीर्य पुनः पुनः स्वपिति—

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रयाशून्यशून्यां
ददद‌पि गिरमन्तर्बुध्यते नो मनुष्यः ॥[३]

इत्थं सुष्ठु विलोकयितुं शक्यते यत् अखिले संस्कृतसाहित्ये प्रत्यूषदृश्यानि कविभिः चारुतया चित्रितानि भूत्वा सहृदयजनकोमलचित्तानि अलौकिकानन्दाम्बुधौ हठात् निमज्जितानि विदधति । वस्तुतः संस्कृतसाहित्यस्य प्राभातिकदृश्यमेकमनुपममङ्गमस्ति, नास्त्यत्र संदेहलेशावसरः ।



---

१. रघुवंश ५।६९

२. भट्टिकाव्य २।४

३. शिशुपालवध ११।४

# प्रधानं हि श्रुतिषडङ्गेषु पाणिनीयव्याकरणम्

*गणपतिमिश्रः*

अथाहमिह स्मारंस्मारं भगवन्तमीशानं भवानीजानिं सम्पूज्य पूज्यगुरुपितृपादौ च सर्वादौ लिलेखिषामि देववाणीमुखेन श्रुतिषडङ्गप्रामुख्येण वैदिकलौकिकोभयविधशब्दसाधुत्वशरणं पाणिनीयव्याकरणम्। इह हि महोदधिमेखलामण्डिते महीमण्डले, पारस्परिकान्तरिकविचारविरोधिस्वभावे कामक्रोधमोहेर्ष्यादिप्रभावेऽनवरतनियमानौचित्यनिरतनये विकासाभिनये, विषमविषमयविषयवशीकृतया कथङ्कथमपि विप्रकृष्टीकर्तुमशक्यया कयाचिल्लौकिककाङ्क्षया परकीयोन्नतिमसहमाने स्वोत्साहाभिमाने, दुस्साधमपि स्वार्थ साधयितुं दुःखगाधा, अपि बाधा अवगणय्य परकीयविभवपराभवभावनया स्वकीयकल्पनाकलितकोटिकोटिसङ्कलनकामनया पतङ्गतां लभमाने, कामिनीकमनीयकलेवराकलितललितलीलालावण्यलौलुपतया निर्बाधं नरके निमज्ज्यमाने, अविगीतशिष्टाचारविचारप्रचारेऽविचारेणैव मनोनुकूलतया प्रतीयमानेऽसमाने प्रत्यूहव्यूहे प्रवर्तमाने, कर्मनिबन्धनाधाने, धर्मार्थकाममोक्षाभिधेयपुरुषार्थचतुष्टयफलप्रधानेऽस्मिन् विश्वस्मिन् सुतरां समाहारितशोके नावलोके त्रिविधदुःखात्यान्तिकनिवृत्त्युपायमनपायमाम्नायमन्तरा। अतः "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" श्रुतिवाक्यं नाप्रत्यक्षं प्रेक्षावतां विपश्चिताम् द्विजातिभिः साङ्गवेदाध्ययनं विधेयमिति विधानम्।

सदाऽऽभारते भारते, विपुलकाये चार्यसंस्कृतिनिकाये, श्रुतिकुलायत्तया च धार्मिकव्यवस्थामूलतया विदितचरमेव समेषामेषामशेषविशेषशेमुषीजुषां विदुषां श्रुतिततीनां माहात्म्यम्। स्वतन्त्रतया च धार्मिकव्यवस्था-व्यवस्थापकतन्त्रतया श्रुतीनां प्रामाण्यम्, स्मृतिततीनान्तु तन्मूलकतयाततयैव। तथा चोक्तं भूरिधन्येन सूरिमूर्धन्येन शब्दशास्त्राटवीविहरणकेशरिणा भर्तृहरिणा—

> स्मृतयो वेदपाश्चेतिदृष्टादृष्टप्रयोजनाः।
> तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः॥ वा० प० १।७

अपरमपि श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी इति वचनं श्रूयत एव श्रुतिश्रवणसंरक्षणसक्षणैर्विलक्षणैर्विचक्षणैः। न केवलं धर्ममूलतयैव श्रुतयः समादृता अपितु सर्वसमीचीनपरमप्राचीनरहस्यरत्ननवनीतमन्थनतया ग्रन्थतयाऽपि। एतदीयसकलसाहित्यिक-धार्मिकसामाजिक-राजनीतिकादिव्यावहारिकपक्षप्रवणीयतया रमणीयतयाऽन्तरा नितरां न प्रसीदति कस्य सचेतसश्चेतः ?

तर्हि को नाम वेदपदार्थः ? इति चेच्छृण्वन्तु "विद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः" इति वह्वृकप्रतिशाख्यम्। "अपौरुषेयं वाक्यं वेदः" "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायं यो वेदयति स वेदः इति" ऋग्वेदभाष्यभूमिका। किञ्च प्रत्यक्षानुमानोपमानेतित्रिविधप्रमाणागोचरस्याप्युपायस्य विज्ञापकत्वेन वेदत्वं प्रतिपादितम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥ इति

इयञ्च भगवती श्रुतिः परमपुरुषार्थभूतब्रह्मज्ञान-साधनभूतधर्मज्ञानहेतुत्वाच्चोच्चैः प्रोच्यते [1]"पराऽपराविद्या" इति संज्ञया।

तदङ्गानि तु—छन्दः, कल्पः, ज्यौतिषम्, निरुक्तम्, शिक्षा, व्याकरणम्।

यथाः—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्यौतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षाघ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥
पा० शि० श्लो० ४१-४२

---

१. द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च। तत्रापरा—ऋग्वेदोयजुर्वेदःसामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणम् निरुक्तं छन्दो ज्यौतिषमिति। अथ परा—यया तदक्षरमधिगम्यते (मु० उ० १।१।४।५) इति।

अत्रेत्थमवगन्तव्यम्—यथा समग्रसचेतनजगतः पादौ विना पूर्वदेशात उत्तरदेशसंयोगादिक्रिया कर्तुमशक्या तथैव रीत्या वेदेष्वपि मन्त्राणां गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्तच्छन्दसामाच्छादकत्वात्पादत्वं कल्पनीयम्। "तस्मात्सप्तचतुरुत्तराणि च्छन्दांसि प्रातरनुवाकेऽनूच्यन्ते" इति ( तै० ब्रा० १।५।१२।१ ) तत्र चतुर्विंशत्यक्षरं गायत्रीच्छन्दः। चतुरक्षरैरधिकमष्टाविंशत्यक्षरमुष्णिक् छन्दः। एवमेवाग्रे चतुरक्षराधिकान्यनुष्टुबादीन्यप्यवगन्तव्यानि। "गायत्रीभिर्ब्राह्मणस्यादध्यात्, त्रिष्टुब्भी राजन्यस्य, जगतीभिर्वैश्यस्य" इति ( तै० ब्रा० १।१।६।६।७ ) मन्त्रेषु मगणयगणादिव्यवस्था न छन्दोग्रन्थमन्तरा।

कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्त्या यागप्रयोगप्रकारप्रतिपादकत्वेनाश्वलायनापस्तम्बबोधायनादिकल्पसूत्राणां सकलसांसारिककार्यकरत्वात्सचेतनकरवत्करत्वम्। यथा—"यत्स्वाध्यायमधीयीत काममृचं यजुः साम वा तद् ब्रह्मयज्ञम्" ( तै० आ० २।१० ) "दर्शपौर्णमासौ तु पूर्वं व्याख्यास्यामः" ( आ० श्रौ० सू० १।१ )

लोके यथा "दृष्टिपूतं न्यसेत्पादम्" इत्याद्युक्तिभिर्यानायानविधाने पथि दृष्टिं निक्षिप्य पादसन्धाने पादयोर्न कण्टकादिसङ्क्रमणापत्तिस्तथैव रीत्या वैदिकयागाद्यनुष्ठानेष्वपि शुभसमयं निरीक्ष्य यजनेऽपूर्वपूर्वतया मनोरथसिद्धिः। अतो ज्यौतिषोपयोगिताविषये "यज्ञकालार्थसिद्धये ( वेदाङ्गज्यौतिषम् ३ ) इत्यभाणि। कालविशेषाविषयोऽपि श्रूयन्ते यागादिविषये।" सम्वत्सरमेतद्व्रतञ्चरेत् (तै० आ० १।३२।१) इति सम्वत्सरविधिः। "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत" ( तै० ब्रा० १।१।२ ) इति—ऋतुविधिः। "मासि सत्रपृष्ठानिउपयन्ति, मासि अतिग्राह्या गृह्यन्ते" ( तै० सं० ७।५।१।५ ) इति मासविधिः। "यं कामये तवसीयान् स्यादिति तं पूर्वपक्षे योजयेत" (तै० सं० २।२।३।१) इति पक्षविधिः। "एकाष्टकायां दीक्षेरन्" ( तै० सं० ७।४।८।१ ) इति तिथिविधिः। "प्रातर्जुहोति सायं जुहोति" ( तै० ब्रा० २।१।२ ) इति प्रातःसायङ्कालादिविधिः। "कृत्तिका वस्वग्निमादधीत" ( तै० ब्रा० १।१।२।१ ) इति नक्षत्रविधिः। इमे सम्वत्सरादिनक्षत्रान्ता-

विधयो यागादेर्ज्यौतिषायत्ता एवेति लोकलोचनवद्देष्वपि ज्यौतिषस्य नेत्रत्वाद्वेदाङ्गत्वम् ।

निरुच्यते निःशेषेणोपदिश्यते निर्वचनविद्यया तत्तदर्थबोधनाय पदजातं यत्र तन्निरुक्तम् । वस्तुतस्तुनिर्नैरपेक्ष्ये । अतोऽर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तन्तन्निरुक्तम् । यथा "गौः, ग्मा, ज्मा, क्ष्मा, क्षा, क्षमेत्यारम्भवसवः, वाजिनः, देवपत्न्यो देवपत्न्यः" इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते । एतावन्त्यमुकनामान्येतावन्त्यमुकनामानीति तत्र स्पष्टमभिहितत्वात् । एतन्निरुक्तन्त्रिप्रकारकमनुक्रमणिकाभाष्ये प्रदर्शितम् । यथा "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमन्तथा । तृतीयं दैवतञ्चेति समाम्नायस्त्रिधाभवेत्" यद्यपि व्याकरणेनापि पदार्थावगतिर्भवति किन्तु न साकल्येनातः "निरुक्तेनैवार्था निर्वक्तव्याः" इति सद्राद्धान्तः । तथा च "निरुक्तं विद्यास्थानं व्याकरणस्य कात्स्न्र्येन स्वार्थसाधकञ्चेति—तस्मादपारसमाप्तमेव व्याकरणं यावन्निरुक्तं नाधिगतम्" ( नि० १।५ ) अतः श्रोत्रेन्द्रियस्य मुखैकदेशवन्निरुक्तमपि व्याकरणस्यैकदेश एव । एतदन्तरा व्याकरणमपूर्णमेव । यथा श्रोत्रेन्द्रियमन्तरा मुखं कैवल्येन सौन्दर्यवर्धकमेव ।

सांसारिकप्राणिनां घ्राणेन्द्रियं यथा समग्रवस्तुषु विद्यमानं गन्धं समादाय वस्तूनां गुणदोषान् प्रकटयति तथैव शिक्षाशास्त्रमपि वैदिकमन्त्रेषु लौकिकभाषाव्यवहारेषु वा वर्णानां कण्ठाद्युच्चारणस्थानानि गुणदोषाँश्चाविर्भावयति" वर्णाद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षेति-ऋग्वेदभाष्यभूमिकाप्रणयनपरायणः सायणः । "अथ शिक्षां व्याख्यास्यामः" ( तै० उ० १।१ ) वर्णोऽकारादिः । आदिपदेन स्वर-मात्रा-स्थान-प्रयत्न-दोष-गुण-सन्धीनां परिग्रहः । तत्र वर्णास्त्रिषष्टिश्चतुष्षष्टिसंख्याका वा । यथा :—

त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाश्शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ।। पा० शि० ३
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।। पा० शि० ४

अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ ।
दुःस्पष्टश्चेति विज्ञेयः लृकारः प्लुत एव च ॥ पा० शि० ५ ॥

स्वरश्चोदात्तादिर्मात्रा ह्रस्वादिः—

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ पा० शि० ११

स्थानप्रयत्नाश्च—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥
ओभावश्च विवृत्तिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ पा० शि० १३, १४
अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषास्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ पा० शि० ३८

लिख्यन्ते दोषा गुणाश्च—

गीती शिघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥
माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थञ्च षडेते पाठका गुणाः ॥ पा० शि० ३२, ३३

अपि च—

उपांशुदष्टं त्वरितं निरस्तं बिलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्नदीनं न तु सानुनास्यम् ॥
पा० शि० ३५

सन्धिर्यथा—"वायवायाहि" (ऋ० सं० १।२।१) इत्यत्रावादेशः ।[१] इन्द्राग्नी आगतम्" (ऋ० सं० ३।१२।१) अत्र प्रकृतिभावः ।[२] शिक्ष्यमाणवर्णानामुच्चारणजन्यवैकल्ये बाधो यथा :—

१. "एचोऽयवायावः" पा० सू० ६।१।७८

२. "ईदूदेद्द्विवचनं प्रगृह्यम्" (पा० सू० १।१।११) इति प्रगृह्यत्वे "प्लुतप्रगृह्या अचि नित्यम्" (पा० सू० ६।१।१२५) इति प्रकृतिभावः ।

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
पा० शि० ५२

"इन्द्रशत्रुर्वर्धस्व" ( तै० सं० २।४।१२।१ ) इति मन्त्रे—इन्द्रस्य शत्रुर्घातक इति—विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्य" ( पा० सू० ६।१।२२३ ) इति सूत्रेण तत्पुरुषत्वादन्तोदात्तेन भवितव्यम् । आद्युदात्तस्तु युक्तः, तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वादिन्द्रो घातको यस्येत्यर्थः सम्पन्नः। अतएव वैदिकमन्त्रेषु स्वरवर्णाद्यपराद्यपरिहाराय शिक्षाशास्त्रमपेक्षितम् , तस्य वेदाङ्गत्वञ्चाप्रतिहतम् ।

शरीरावयवेषु मुखमिवोक्तेष्वङ्गेषु प्रधानमङ्गं व्याकरणम् । व्याक्रियन्ते व्युत्पाद्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्ते साधुशब्दा अनेनेति व्याकरणम् । व्याङ्पूर्वककृधातोः करणल्युडन्ततया सामानाधिकरण्याच्छब्दानुशासनमित्यप्यस्यैवान्वर्थं नाम । अतः "प्रधानञ्च षडङ्गेषु व्याकरणम्" इत्यभिहितवान् भगवान् पतञ्जलिः साञ्जलिः प्राञ्जलया गिराऽऽह्निके पस्पशाख्ये व्याकरणमहाभाष्ये । किञ्चभाष्यरहस्यविदा प्रदीपदीपकेन वैयटात्मजकैयटेनापि प्रतिपादितम्" पदपदाय विगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद् वाक्यवाक्यार्थावसायस्येतिभावः" । ऋग्वेदभाष्यभूमिकाप्रणेता सायणोऽपि "व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते" इति भणितिं भणितवान् ।

तत्रार्थमात्रसापेक्षं प्रकृतिप्रत्ययादिकल्पनासम्भूतं निर्वचनं निरुक्तम् । प्रकृतिप्रत्ययविभागेन साधुशब्दान् विज्ञाय वाचमसाधुशब्देभ्यः पृथक् कृत्य व्याकृतिसाधकं निर्वचनं व्याकरणम् । विभिन्नासु भाषासु प्रचलितानां शब्दानां विशेषेणोद्भवागमादिरूपेण विश्लेषणं भाषाविज्ञानम् । अनुशिष्यन्तेऽपशब्देभ्यो विविच्य कथ्यन्ते परिनिष्ठितशब्दा अनेनेत्यनुशासनम् । चतुर्णामप्येतेषां वैयाकरणनिकाये निरूढानां शब्दानां विश्लेषणरूपकमेव तात्पर्यम् । समेषां शब्दानां विभिन्नरूपेण विश्लेषणमेव सम्प्रतिभाषाविज्ञानपदेन विज्ञायते । वस्तुतस्तु भाषाविज्ञानमपिव्याकरणमेव । विश्लेषणव्याकृतिशब्दौ निदर्शनरूपौ न तु परिगणनस्व-

रूपौ वैदिकशब्देतरस्यापि निर्वचनविषयत्वात्परिगणनयेयत्ताऽसम्भवाच्च—"एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालस्तथापि नान्तं जगाम, किम्पुनरद्यत्वे यः सर्वथा चिरञ्जीवति स वर्षशतं जीवति। तस्मादनभ्युपाय एष शब्दज्ञाने" इति पस्पशाह्निकमहाभाष्ये।

कस्याश्चिदपि भाषाया नियामकतया नियन्त्रकतया च समग्रकारणेषु व्याकरणमेव प्राथम्यं भजते। किञ्च व्याकरणं विना वाणी तथैव शोभते यथा व्यञ्जनं लवणं विना। अपि च समस्तलौकिकालौकिकव्यवहारेषु शब्दार्थयोः परिज्ञानं नितान्तमावश्यकन्तच्च व्याकरणाधीनमितिकृत्वेतदधीत्यैव शास्त्रान्तरेषु प्रवेष्टुमन्वेष्टुं वाऽर्हन्ति जनाः।[1] तदुट्टङ्कितं श्रीमद्भिर्भास्कराचार्यैः—

यो वेद वेदवदनं सदनं हि सम्यग्
ब्राह्मण्याः स वेदमपि वेद किमन्यशास्त्रम्।
यस्मादतः प्रथममेतदधीत्य विद्वान्,
शास्त्रान्तरेषु भवति श्रवणेऽधिकारी॥

अर्थाभिव्यक्तय एव शब्दाः प्रयुज्यन्ते, अर्थनिश्चयमन्तरा न कोऽपि व्यवहार उपयुज्यते, स चार्थनिश्चयो व्याकरणसाहाय्येनेव। यथा—"व्याकरणमर्थविशेषमाश्रित्य पदमन्वावक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकारकं विद्यास्थानम्" (आ० ध० सू०, उज्ज्वलाटीका २।४।८।११) तथा चोक्तं वैयाकरणारण्यहरिणा भर्तृहरिणा—

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमन्तपः।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः॥ (वा० प० १।११)

शब्दस्य द्वे स्वरूपेऽस्तः, एकं शब्दत्वरूपमपरं साधुत्वरूपं, परिनिष्ठितरूपम्वा। तत्र शब्दत्वरूपस्य श्रोत्रेन्द्रियग्राह्यत्वेऽपि—अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तत्वरूपं द्वितीयं न व्याकरणादृते। अन्यथाऽ-

१. "पुराकल्पे एतदासीत् संस्कारोत्तरकालं ब्राह्मणाव्याकरणं स्माधीयते" व्या० म० भा० पस्प।

वैयाकरणा अपि गोशब्द-गोणीशब्दयोर्गोत्वजातिरूपप्रवृत्तिनिमित्तेन साधुत्वासाधुत्वपरिज्ञानं कुर्युः। किञ्चायं शिष्टः साधुशब्दप्रयोक्तृत्वादित्याद्यनुमाव्यवहारश्च दुष्टतामापद्येत। अतएवः—

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥
तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥
यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः।
तथैव लोके शब्दानामेषाविद्यापरायणम्॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥

(वा० प० १।१२,१३,१४)

गुणतो गरिष्ठस्य दुर्मेधसोदविष्ठस्य मुख्यतया श्रुतिषडङ्गेषु प्राप्तप्रतिष्ठस्यास्य व्याकरणस्य सर्वैरपि विपश्चिदपश्चिमैर्विद्वन्मानसमरालैः प्राथम्यमूरीक्रियते। एतच्चाभिनन्दन् महर्षिपतञ्जलिर्व्याहार्षीत्" सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितश्च वेदितव्यो ब्रह्मराशिः सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति। अथापि—

"एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति" इति श्रुतिः। सम्यग्ज्ञातत्वञ्च—"प्रकृतिप्रत्ययस्वरादिविशिष्टज्ञानविषयिताशालित्वम्" अतः शास्त्रान्वितत्वं सुप्रयुक्तत्वञ्चेत्युभयमप्युद्दिश्यैव कामधुक्त्वस्य विधानात्। वेदोऽप्यत्र प्रामाण्यमादधाति—"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रमत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि"[1] इति। साहित्यमर्मज्ञैर्मम्मटभट्टैरपि वैयाकरणप्रशस्तौ बुधैर्वैयाकरणैः (का० प्र०, प्र० उ०) इत्युक्तम्। अधीतव्याकरणा जना भृशं प्रशंसनीया अभिनन्दनीया वा।

---

१. ऋ० १०।७१।२

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥
रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥ ( म० भा० पस्प० )

पर्वतनन्दिन्याः पार्वत्याः शापमवाप्य सकलगुणगरिष्ठः पुष्पदन्ताभिधानो गन्धर्वराजोऽपि व्याकरणस्योत्कृष्टतां प्रकृष्टतया प्रकटयति ।

यथा—

[1]भ्रष्टः शापेन देव्या शिवपुरवसतेर्यन्ध्यहं मन्दभाग्यो
भाव्यं मे जन्मना वै यदि मलकलिले मर्त्यलोके सशोके ।
स्निग्धाभिर्दुग्धधाराऽमलमधुरसुधाबिन्दुं निःस्यन्दिनीभिः
कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्णः ॥

कस्यचिज्जनकस्य स्वजन्यं प्रति कथनमिदं व्याकरणाध्ययनप्रवृत्तिविषयकं कमप्यमन्दमानन्दमुत्पादयति—

यद्यपि बहुनाधीषे तथापि पठ पुत्र ! व्याकरणम् ।
स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥ इति ॥

एतदन्तरा न स्वजन-श्वजनादिस्थलेषु भेदः कर्तुं शक्यते । आभिर्भणितिभिर्वेदानां समभ्यर्हितार्थप्रतिपादकस्य व्याकरणस्याध्ययनं नित्यं कर्माथ काम्यमिति जिज्ञासायामाह "कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" । तच्च प्रयोजनमष्टादशविधन्तथाहि–वेदरक्षा, ऊहः, आगमः, लाघवम् , असन्देहः, अम्लेच्छतासम्पत्तिः स्वरवर्णदोषराहित्यम् , सार्थकवेदज्ञानम् , साधुशब्दापशब्दयोर्धर्माधर्मबोधः, प्रत्यभिवादे नाम्नि प्लुतिज्ञानम् , विध्यादिवाक्यघटकविभक्तिपदार्थादिज्ञानम् , पदाक्षरादिविभागज्ञानम् , चतुर्विधपदजातकालव्यङ्ग्यव्यञ्जकविभक्तिस्थानज्ञानम् , वाग्विस्तारसम्पत्तिः, असाधुशब्देभ्यो विविच्य साधुशब्दज्ञानम् , अपशब्दप्रयोगजन्यप्रत्यवायपरिहारकप्रायश्चित्ता-

---

१. अयं श्लोको न्यायमञ्जर्यां व्याकरणस्यावश्यमध्येयत्वनिरूपणप्रसङ्गे उद्धृतः ।

भावज्ञानम्, नामकरणेषु विहितनामस्वरूपज्ञानम्, सर्वविभक्त्यन्तानां सम्यगुच्चारणम्।

*१—वेदरक्षा*—यथा भद्रंकर्णेभिः इति मन्त्रे, लौकिकप्रयोगे कर्णैः इति प्रयोगदर्शकोऽवैयाकरणः सान्दिहानः सन् कथं "कर्णेभिः" इति भ्राम्येत्। वैयाकरणस्तु न भ्रमति। अथ च देवा अदुह्र, उदगाभं निग्राभमित्यादौ क्रमशस्तलोपरुडागमभकारादेशान् दृष्ट्वा भ्राम्येदवैयाकरणस्तद्विपरीतस्तु-न भ्रमति।

*२—ऊहः*—न सर्वैर्लिङ्गैर्न च सर्वाभिविभक्तिभिर्वेदे मन्त्रा निगदिता-स्तेचावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। यथाग्नेययागे मन्त्रोस्ति अग्नये त्वा जुष्टं निर्वपामि इति 'तत्र' सौर्यं चरुं निर्वपेद् ब्रह्म-वर्चसकामः इति विधेः सूर्योद्देश्यताकत्वविवक्षायां सौर्ये चरौ मन्त्र ऊह्यते सूर्याय त्वा जुष्टं निर्वपामीतिविभक्तिव्यत्यासरूपं विपरिणामरूपं वोहज्ञानं वैयाकरणाधीनमेव।

*३—आगमः*—वाक्यार्थज्ञानोपयोगिपदार्थे ज्ञानप्रयोजकव्याकरण-ज्ञानस्यासत्त्वे वेदार्थानवगमात् प्राप्तप्रत्यवायपरिहारकतया ब्राह्मणेन निष्कारणो धर्मः—इति, 'देवासो ब्राह्मणासः' इत्यत्र 'देवा ब्राह्मणाः' इति लौकिकप्रयोगविपरीतासुगागम[1] इति चागमज्ञानं व्याकरणाधीनम्।

*४—लाघवम्*—ब्राह्मणस्याध्यापनं धर्मस्तच्च वैदुष्यायत्तं तच्च शब्दार्था-दिषु साध्वसाधुत्वप्रतियोगिकभेदज्ञानाधीनम्, तच्च शब्दादीनामानन्त्याद् गुरुभूतप्रतिपदपाठापेक्षया व्याकरणाधीनप्रकृतिप्रत्ययविभागेन शब्दज्ञाने लाघवतया लाघवम्।

*५—असन्देहः*—यथा स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति। तस्यां सन्देहः स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीत्यत्र कर्मधारयस्तत्पुरुषो वा समास इति सन्देह-निराकरणं व्याकरणज्ञानाधीनस्वरज्ञानाधीनमित्यसन्देहः। एवमेव स्वर-

---

१. आज्जसेरसुक् पा० सू० ७।१।५०

दोषराहित्यादीनां व्याख्यानं श्रीमद्भिर्भाष्यकृद्भिर्महाभाष्ये विस्तरेण प्रपञ्चितम् ।

एतच्छास्त्रं शब्दसाधुत्वप्रतिपादनपरं धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयप्रधानीभूतमोक्षकरमुररीकृतं विपश्चिदपश्चिमैर्भर्तृहर्यादिभिः । अतो नास्ति षडङ्गेषु व्याकरणप्रामुख्ये सन्देहावसरः । कैश्चिन्नवैर्मानवैः इत्थमाशङ्क्यते यत् काचिद् भाषाप्रकृत्यैव परिष्कृता परिनिष्ठिता वा चेत्तर्हि शब्दपरिष्कारकारकस्य व्याकरणस्य काऽऽवश्यकतेति ब्रुवन्तो भवन्तो मात्सर्यमुत्सार्य विचार्यकार्यमार्याः समर्यादं मौनमाकलयन्त्विति । अत्रेत्थमवगन्तव्यम्—यथा पयः पूरितं पात्रं विनैव मुखोपधानमाधीयते जलप्रवाहे तर्हि पात्रस्थं सर्वं दुग्धं बहिर्निर्गच्छति जलानि च पात्रे प्रविशन्ति । एवं सति दुग्धस्य स्वरूपेणापि नावस्थीयते । किन्तु यदि पयःपूरितपात्रं पिधानपिहितं जलनिवहे प्रवाह्यते तर्हि नेयमापत्तिः । जलामिश्रितं सद्दुग्धमपि शुद्धं पूर्ववदेव । जलमपि बहिर्गतमेव न तु पात्रान्तर्गतम् । तथैव रीत्या व्याकरणं पात्रपिधानवन्नियन्त्रणं विदधाति भाषायाः । कथञ्चैवानादिकालादविच्छिन्नरूपेण व्यवह्रियमाणाया वृन्दारकवृन्दवाण्याः परिनिष्ठितं परिष्कृतं च यत्स्वरूपं निर्दोषं सरोषं श्रूयते दरीदृश्यते च सुधाधुरीणैः ? किमर्थमभारतीया अपि भारतीयान् भजन्तेऽहर्निशमित्यादिसन्देहहेत्वेषणागवेषणाप्रसङ्गे प्रधानं कारणं व्याकरणमेव । शब्दार्थविश्लेषणकरणस्य व्याकरणदिनकरस्योदयो वसुन्धराऽन्तराले भारतदेशे एव । अस्य साक्षात्सम्बन्धो वेदैः । यतो हि वैदिकस्थलेषु बह्वयो व्युत्पत्तय[1] एवमुपलभ्यन्ते याभिर्व्याकरणस्य प्राचीनत्वं समीचीनत्वं च प्रमाणीभवति । भगवता भाष्यकृता पतञ्जलिनाऽपि व्याकरणमहाभाषीयानुषङ्गिकप्रयोजननिर्वचनावसरेऽनेका ऋचः[2] उद्धृता । यासां व्याकरणघटितोऽर्थोऽपि प्रकटीकृतः । अतएव व्याकरणशास्त्रस्य प्राचीनत्वं वेदनिर्दिष्टत्वं वेदाङ्गमुख्यत्वञ्च स्पष्टतः प्रमाणितम् ।

---

१. (क) ये सहांसि सहसा सहन्ते, ऋ० ६।६६।९

(ख) धान्यमसि धिनुहि देवान्, यजु० १।२०

२. चत्वारि शृङ्गा त्रयोऽस्य पादाः, ऋ० ४।५८।३

चत्वारिवाक्परिमिता पदानि ऋ० १।१६४।४५

इत्थं पूर्वयुक्तिभिः साधुशब्दोच्चारणे पुण्यजनकताऽवच्छेदकतया क्षणभङ्गुरायामिहावनौ जनाः साधुशब्दान् प्रयोक्तुमीहन्ते यतन्ते च। न हि व्याकरणज्ञानं विना साधुशब्दान् व्यवहर्तुं शक्नुवन्तीति निश्चप्रचमतो व्याकरणमित्यस्य कः पदार्थः सूत्रमिति चेत्? न; व्याकरणस्य सूत्रमित्यत्र भेदाभावेन षष्ठ्यर्थानुपपत्तेः। अयम्भावः—नद्या जलम्, वनस्य वृक्ष इतिवद् व्याकरणस्य सूत्रमित्युपपन्नम्। आहोस्वित् कल्पितं भेदमादाय षष्ठ्यां सत्या राहोः शिर इतिवद्व्यपदेशिवद्भावेन व्याकरणस्य सूत्रमिति व्यवहारः। अतएवास्तु सूत्रं व्याकरणपदार्थः। तत्त्वञ्च "अल्पाक्षरत्वे सति बह्वर्थबोधकत्वम्"। किमेतत् सूत्रोच्चारणमदृष्टार्थमेव उताहो दृष्टार्थमपीति चेच्छृणवन्तु[1] सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यादिति। अपरञ्च प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयतिस्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण ( व्या० म० भा० १।१।१ )। अनयोक्त्या कैमुतिकन्यायेन सूत्रवैयर्थ्यकल्पनाया अत्यन्ताभावः प्रतीयते। दृष्टादृष्टोभयफलेषु किमपि फलमस्त्येव। न सर्वथा निरर्थकं किमपि सूत्रम्। अष्टाध्याय्या आद्यन्तावच्छेदेनाध्ययनकर्तुर्हृदयाकाशे समवायसम्बन्धेन पुण्यजनकमदृष्टमुत्पद्यते। एतच्च व्याकरणं यद्यपि—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्॥

इति रीत्या नवविधम्, तथाप्येतेषु पौराणिकप्रसङ्गात् पाणिनीयतीव्रतरतपस्सन्तोषितमहेश्वरवरसमवाप्तप्रसादत्वाद्धि पाणिनीयव्याकरणमेव सर्वातिशायि मूर्धन्यञ्चेति निश्चप्रचम्। सर्वाणि भाष्यप्रतिपादितप्रयोजनान्यपि पाणिनीयव्याकरणानुसारीण्येव। कैवल्येन लौकिकशब्दव्युत्पादकत्वाच्चैन्द्रादिव्याकरणानां वेदाङ्गत्वमपि तु सर्वलौकिकालौकिकशब्दव्युत्पादकपाणिनीयव्याकरणस्यैव। पाणिनीयव्याकरणप्रशस्तौ ऋक्तन्त्रव्याकरणेऽपि—"इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्य-

---

१. इकोयणचिसूत्रभाष्ये।

स्तं खल्विममक्षरसमाम्नायमित्याचक्षते" इति। "वेदानां वेदः" इत्युक्त्येवाक्षरसमाम्नाय इति व्यवहारोऽप्यस्य विषये।

किञ्च—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

इत्याप्तोक्तिरपि प्रमाणयतीति। अस्य वैशिष्ट्यं ध्वनन्नाह भाष्यकारः "तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किमुनरियता सूत्रेण। वैयाकरणवादीभाः भट्टोजिदीक्षितनागेशभट्टादयश्च वैयाकरणचूडामणय एतद्व्याकरणमेवाधिकृत्य स्वलेखनीं प्रावर्तयन्नित्यपि विनिगमकमत्र। शाब्दिकसमुदाये प्रायशः समेऽपि राद्धान्ताः पाणिनीयव्याकरणोपजीव्यभूतं भाष्यमेवानुसृत्य सङ्गच्छन्ते।

किम्बहुना समीक्षणेन विपक्षपक्षक्षयदक्षाः पाश्चात्त्या अपि पाणिनीयव्याकरणस्य सर्वातिशायित्वमामनन्ति—

१—चीनदेशनिवासी प्रवासी ह्वेनसाङ्गनामको विद्वान् वदति यत् 'महर्षिपाणिनिः शब्दभाण्डारस्थशब्दानां चयनं विधाय सहस्रचतुष्टयसूत्रेषु समस्तशब्दव्युत्पत्तिं समाप्तिमनयत्। एषु प्राच्यनव्यशब्दज्ञानराशिः परिसमाप्तः'

(ह्वे० सा० प्र० भा० हि० अ० आधृत्य)

२—प्रो० मोनियर विलियममहोदयमते—संस्कृतस्याष्टाध्यायीव्याकरणं मानवमस्तिष्कप्रतिभायास्तादृश आश्चर्यतमभागोऽस्ति यादृशो मानवमस्तिष्कसमक्षमायातः'

(कैम्ब्रिज हिष्ट्री आफ इण्डिया भा० १)

३—डा० डब्ल्यू डब्ल्यू हण्टरमहोदयमते—मानवमस्तिष्कस्यातीवमहत्त्वपूर्णश्चाविष्कार इयं व्याकरणाष्टाध्यायी।

४—प्रो० टा० शैरवात्स्कीमहोदयमते—'इयमष्टाध्यायी मानवमस्तिष्कस्य श्रेष्ठरचनाऽस्ति।

भगवन्तो भाष्यकारास्तु 'सामर्थ्ययोगान्न हि किंचिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इति प्रसंशितवन्तः। श्रीजयादित्याचार्यास्तु 'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्ये'त्युदगीरन्। किमधिकेनाभिराप्तोक्तिभिः पाणिनीयव्याकरणमेवाखिलेषु व्याकरणेषु सर्वोत्कृष्टव्याकरणमिति निश्चितमित्यलं पल्लवितेन।

# पौराणिकदृष्ट्या मोक्षसाधनम्

*डा० श्रीकृष्णमणित्रिपाठी*

इह हि संसारे सुखमेव मे शाश्वतं स्याद् दुःखलेशोऽपि कदाचन मा भूदितिधिया दुःखं परिहातुं सुखञ्चोपलब्धुं सततमभिलषति प्राणिमात्रम् ।[१] नहि कोऽपि विवेकी स्वल्पे सुखमनुभवति, सर्वोऽपि जनो निरन्तरमधिकादपि अधिकं सुखमेवाभिवाञ्छति ।[२] जीवो यावदनन्तं सुखं न लभते तावत् प्रयतमान एव तिष्ठति । तथा चाह भगवती छान्दोग्यश्रुतिः—यो वै भूमा तत् सुखम् नाल्पे सुखमस्ति, भूमैव सुखम्, भूमा त्वेव विजिज्ञासितव्यः ।[३]

एवञ्च भगवत्तत्त्वसाक्षात्कारस्वरूपमेवात्यन्तिकमनन्तं सुखमेव जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्यं मानवशरीरलाभस्य च फलमस्ति । आत्यन्तिकं निरतिशयं नित्यञ्च सुखमेव मोक्षः, मुक्तिः, परमपुरुषार्थः अपवर्गः, कैवल्यम्, निर्वाणम्, निःश्रेयसञ्चोच्यते । एतदेव लब्ध्वा जीवः कृतकृत्यो जायते, न तस्य किञ्चिदवाप्तव्यमवशिष्यते । एतदेव सुखस्य चरमा सीमा परमा च गतिरस्ति । तथा चोक्तं भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥[४]

---

१. (क) चराचरे जगत्यस्मिन् सर्वो वाञ्छति मानवः ।
सुखी स्यान्न तु दुःखीति कृत्वा मनसि कल्पनाम् ॥ वे० च० ७
(ख) दुःखादुद्विजते जन्तुः सर्वस्य सुखमिप्सितम् ।
म० भा० शा० प० १२९।६१

२. इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षी कोटिं च कोटिशः क्रमशः सर्वमीहते ॥ ग० पु० प्रे० क० २।४

३. छान्दोग्योपनिषद् ७।२२।१।

४. गीता ६।२२

यद्यपि 'अपाम सोमममृता अभूम' ( ८।३।११ ) इति छान्दोग्यश्रुत्या सोमपानादिभिर्लभ्यस्य स्वर्गादेरपि सुखसाधनत्वं प्रतीयते तथापि 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' ( ६।२१ ) इति गीतावचनानुसारं भोगेन पुण्यक्षयानन्तरं स्वर्गाच्च्युतिदर्शनान्न तदात्यन्तिकं सुखं मन्यन्ते विद्वांसः। वेदान्तसिद्धान्तानुसारमभेदोपासनया निरतिशयानन्दात्मकं पूर्णसुखस्वरूपञ्च ब्रह्मसाक्षात्कृत्यैव जीवः सर्वदुःखविनिर्मुक्तो भूत्वा परमानन्दं विन्दते शाश्वतीञ्च शान्ति लभते। परं पुराणानुसारं भेदोपासनया परमात्मनः साक्षात्कारं सम्पाद्य जन्म-मृत्युबन्धनक्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत्सान्निध्यसुखमनुभवति। अतो भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यन्यदस्ति वास्तविकं सुखम्।

मोक्षस्वरूपविषये तत्साधनसम्बन्धे च चार्वाकादारभ्य शङ्कराचार्यपर्यन्तं तत्तद्दर्शनकाराणां विद्यते दृढतरो मतभेदः। दार्शनिकनिकाये सत्यपि साध्यसाधनविषयेऽनेके मतभेदे सर्वसाधनानां संक्षेपेण संग्रहो भक्तवरमुद्धवमुपदिशता भगवता श्रीकृष्णेनैकस्मिन् श्रीमद्भागवतीये पद्ये कृतोऽस्ति—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्॥११।२०।६

अत्र ज्ञानपदेन मुक्तिप्राप्तेः साधनभूताः सर्वेऽपि ज्ञानप्रकाराः ससाधना गृह्यन्ते, कर्मपदेन च मोक्षोपलब्धेः कर्मकाण्डान्तर्गताः सन्ध्यावन्दनादिप्रकाराः तथा हठ-राज-मन्त्र-लययोगादयः साधनसहिताः स्वीक्रियन्ते। एवं भक्तिपदेन श्रवण-कीर्तन-स्मरणार्चननामग्रहणप्रभृतयः सर्वे गौणमुख्यभक्तिप्रकारा अभिप्रेयन्ते। एवञ्च संक्षेपतो मोक्षार्थं दर्शनभेदेन प्रोक्तानामुपायानां संग्रहोऽत्र सम्पादित एव प्रतिभाति। शिवपुराणस्योमासंहितायामपि—

ज्ञानयोगः क्रियायोगो भक्तियोगस्तथैव च।
त्रयो मार्गाः समाख्याताः श्रीमातुर्भुक्तिमुक्तिदा॥ ५१।७

## भक्तेः सर्वसुलभत्वं श्रेष्ठत्वञ्च

वस्तुतो मार्गत्रयव्यतिरिक्तो नान्यः कोऽपि पन्था विद्यते, येन स्वीयपरमप्रेमास्पदाच्चिरवियुक्तमित्रात् श्रीमद्भगवतः, अनन्तेभ्यः कालेभ्योऽनन्तासु योनिषु बम्भ्रम्यमाणः जन्ममरणानामवर्णनीयक्लेशपरम्परां सहमानो जीवः पुनरनन्तासीमानन्दमयस्य करुणावरुणालयस्य प्रभोश्चरणसरसीरुहमधिगन्तुमर्हेत्। विशेषतः कलिकालेऽत्राल्पप्राणायुर्मेधसां मानवानां भगवद्भक्तिरेवैकमात्रं सरलं सुगमं सुखसाध्यञ्चावलम्बनमास्ते। अत्र भक्तिमार्गे वर्णाश्रमाधिकारादीनां नास्त्यपेक्षा, बाला वृद्धाः, स्त्रियः पुमांसोऽन्त्यजा अप्यधिकृताः सन्ति। सर्वेषां कृते भगवद्भक्तिः सुखाधायिका हितकरी च विद्यते।

वेदान्तादिसाधनेषु प्रोक्तकठिनसाधनचतुष्टयसम्पत्तिस्तु न सर्वैः प्राप्तुं शक्या, परःसहस्रेषु केनचिदेकेन यथार्थतः साधनचतुष्टयसम्पत्तिद्वारा मुक्तिप्राप्तिः कृता स्यात्। एवं योगादिकर्मद्वारापि त्रिपुट्यादिलयपूर्वकासम्प्रज्ञातसमाधिना परमपदप्राप्तिरपि प्राचीनकाले कैश्चिदेव कृता श्रूयते। अस्मिन् कराले कलिकाले तु क्षीणवीर्याणामल्पशक्तिमतां जीवानां कुटुम्बभरणादिचिन्ताग्रस्तानां दुःखिनां जनानां च कृते भगवद्गुणश्रवणादिसाधनं विना नान्य उपायो विद्यते। अत एव श्रीमद्भागवते वैयासकिना शुकेन भक्तिरूपः सुलभ उपायः सर्वसाधकानां कृते सिद्धान्तितः—

> अकामः सर्वकामो वा मोक्षकाम उदारधीः।
> तीव्रेण भक्तियोगेन भजेत पुरुषं परम्॥ २।३।१०

तथा गीतायां भङ्ग्यन्तरेणान्योपायानां कठिनत्वं प्रतिपादितं भगवता श्रीकृष्णेन—

> मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
> यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥ ७।३

अतः सर्वदर्शनोक्तेषु साधनेषु सुलभसाधनरूपभक्तेः संग्रहः केनाप्यंशेन

सर्वैः दर्शनकारैः कृत एव । पूज्यपादैर्भगवच्छ्रीशङ्कराचार्यैरपि मोक्षसाधन-सामग्र्यां भक्तेरेव गरीयस्त्वं प्रोक्तम्—

मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी । वि० चू० १५

देवर्षिर्नारदस्तु भक्त्यैव मुक्तिः सिध्यति, न तु तत्र मध्ये ज्ञानादिरूपः कश्चनावान्तरव्यापारोऽपेक्ष्यते इति स्पष्टं प्रतिपादयति—

सा तु कर्मज्ञानयोगेभ्योऽधिकतरा । ना० भ० सू० २५

एवं कर्म-ज्ञानयोगापेक्षया भक्तेः श्रेष्ठत्वं प्रतिपाद्य कर्मज्ञानयोगानां सा फलरूपेति प्रोक्तवान् सः—फलरूपत्वात् । २६

महर्षिः शाण्डिल्योऽपि कर्म-ज्ञान-योगापेक्षया भक्तेः श्रेष्ठत्वं बोधयितुं गीतायाः श्लोकद्वयं भङ्ग्यन्तरेण सूत्रयति—"तदेव कर्मि-ज्ञानि-योगिभ्य आधिक्यं शब्दात्" ( १।२।२२ )

गीतास्थं श्लोकद्वयञ्च—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्जुनः ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥

एवं भक्तेः सुलभत्वं भक्तानाञ्च श्रेष्ठत्वं प्रतिपाद्याक्षरविदां कष्टत्वं प्रदिपादितम्—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ गीता ६।४६

भक्तिरसायनकारो मधुसूदनसरस्वत्यपि निम्नाङ्कितगीतापद्याधारेण भक्तेर्ज्ञानवच्छ्रेष्ठत्वं निर्दिशति । अत एवाद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्व-ज्ञानं द्रुतचित्तस्य च भगवल्लीलाकथाश्रवणादिश्रद्धापूर्विका भक्तिरित्यवधि-त्वेन द्वयमप्युपात्तं वर्तते—

तावत् कर्माणि कुर्वीत नो निर्विद्येत यावता ।
मत्कथा-श्रवणादौ वा श्रद्धा यावन्न जायते ॥ श्री०भा०११।२०।६

अन्यत्रापि समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्–भक्तस्य संसारमोक्षस्यावश्यकत्वाद् मोक्षान्तर्गतो वा भक्तियोगः। पुरुषान्तर्गतत्वेन स्वातन्त्र्येण वा भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्विवादम्। इत्यादिना भक्तियोगं परमं पुरुषार्थं निर्णीतवान् यतिवर्यः। अत एव जीवन्मुक्तानाममलात्मनामपि ज्ञानिनां भक्तिरावश्यकत्वेनानिवार्योऽभिप्रेता—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥ श्री०भा० १।७।१०

## भक्तेर्वैशिष्ट्यम्

तरति शोकमात्मवित्—छा० उ० (७।१।३), आत्मेत्येवोपासीत (बृ० उ० ३. १।४।७), तदात्मानमेवेत (कौ० उ० ३. ४।२), तमेव विदित्वाऽतिमृत्युमेति (श्वे० उ० ३।४।१५) इत्यादिश्रौतवचःसमूहचारितार्थ्यहेतवे सिद्धान्तितमिदं "यत् परस्परसम्बद्धानि वैदिकदर्शनानि मुमुक्षूणां कृते सन्ति दिव्यनेत्रस्वरूपाणि। स्थावरजङ्गमात्मके विशाले जगत्यत्रोच्चावचेषु संख्यातीतेषूद्भिज्जेषु ततश्च स्वेदजेषु तदनन्तरमण्डजेषु ततोऽनु जरायुजेषु शरीरेषु बम्भ्रम्यमाणो जीवः प्रकृतिमातुरनुकम्पया क्रमोन्नतिं लभमानोऽन्ते मानवदेहमाश्रयति–"चतुरशीतिलक्षान्ते मानवः॥" एवञ्च चतुरशीतियोनिषु जन्ममरणपरम्परादुःसहदुःखमनुभूयानेकजन्मार्जितपुण्यपुञ्जप्रभावैः मनुष्यशरीरमासादयति जीवलोकः—

कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्। श्री० भा० ७।५।२२

तदिदमतिदुर्लभं मानवशरीरमवाप्यापि जीवो जन्मजरामरणस्वरूपकठोरदुःखचक्रं परित्यक्तुं न शक्नोति। स च वासनाजालनिगडितो जन्ममृत्युरूपसंसारप्रवाहेऽनवरतं प्रवहति। केवलमुपासनयैवात्मसाक्षात्कारं विधायासौ परमानन्दस्वरूपं मुक्तिपदमधिगन्तुमर्हति। उपासनया योगसाधनेन वा चित्तवृत्तीनां निरोधपूर्वकमन्तःकरणं विघ्नेभ्यः परिरक्षन् साधको भक्तेरमृतमयेन प्रभावेण प्रभावितोऽन्तर्जगति प्रविश्य भगवत्सान्निध्यं लभमान आत्मज्ञानमधिगत्य निर्वाणपदं

प्राप्नोति। अपौरुषेयवेदोपासनाकाण्डपरिपुष्टये मुक्तिद्वारमुद्घाट्य निर्वाणस्वरूपं परमानन्दपदमासादयितुं पूज्यपादैर्देवर्षिनारद-महर्षि-शाण्डिल्य-प्रभृतिभिः महता कौशलेन सर्वकल्याणकारकं सर्वसाधारणं सरलं सुगमं सुबोधं च भक्तिशास्त्रमाविष्कृतम्।

तत्तत्पुराणेषु भगवतो भक्तिर्भक्तान् दुःखबहुलादस्मात् संसारात् परमानन्दपूर्णस्थितौ समुपस्थापयितुमेकमात्रं सर्वसुलभं साधनं निर्दिष्टमस्ति। तत्त्वस्यास्य प्रतिपादनं तु प्रायः प्रतिपुराणं प्राप्यत एव, अथापि पुराणमूर्धन्ये सर्ववेदान्तसारे वैष्णवकुलतिलके श्रीमद्भागवते महापुराणे भक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। तदनुसारं प्रेमपयोधौ पूर्णात्मनि परमात्मनि संसक्तया भक्त्या समः कल्याणकारी कश्चनान्यो मार्गो न दृष्टिगोचरतामायाति।

तदुक्तं—

न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥ ३।२५।१९

भक्त्या भक्तो यावत् पुलकिताङ्गो द्रवीभूतहृदयो विगलिताश्रुबिन्दुश्च न भवति तावद् आन्तरिकीं पवित्रतां नासादयति। यथा समाधिद्वारा चेतसः समताधिगमाद् मानसिको भावो विषयेभ्यः समूलं दूरीभवति तथैव भगवद्भक्त्या साकं परमानन्दसम्बन्धसत्त्वात् पापराशिः प्रणश्यति। तदनन्तरमग्निना दग्धं निर्मलं सुवर्णमिव जीवः भगवद्भक्त्या गलितमलिनसंस्कारः सन् नैजं स्वाभाविकं स्वरूपमासाद्य शाश्वतीं शान्तिमनुभवति तथा चोक्तं श्रीमद्भागवते—

तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः।
निर्दग्धबीजानुशयो महीयसा भक्तिप्रभावेण समेत्यधोक्षजम्॥
अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम्।
तद् ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम्॥
७।७।३६.३७

एवं पुराणानुसारं भगवत्तत्त्वप्राप्तये भक्तेर्महत् किमपि साधनं न

विद्यते। भक्तितुलनायां धर्मार्थकामानां किमपि मूल्यं नास्ति। यदा भक्तिसाधनद्वारा सर्वोत्तमं परमात्मतत्त्वमपि सर्वतोभावेन साधकस्याधिकारे समागच्छति तदा किं पुनरवशिष्यते। तस्मात्पुराणानां मतेन भक्तिः परमपदप्राप्तये सर्वश्रेष्ठमस्ति साधनम्। अतएव सिद्धान्तितं विष्णुपुराणे—

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि॥ १।२०।२७

अतो भक्त्या भगवतो वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थं निर्वाणपदं प्राप्तुं शक्यत इत्यत्र नास्ति कश्चन सन्देहलेशः। तथा चाभिहितं स्वयमेव भगवता श्रीकृष्णेन गीतायाम्—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ १८।५५
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!॥ ११।५४

अतएव सर्वशास्त्रेषु सर्वसम्प्रदायेषु चाविरोधतया भगवद्भक्तेः प्राशस्त्यमुक्तमस्ति। तस्माद् भक्तिः परमतत्त्वप्राप्तये परमं सुलभं च साधनमित्यनवद्यम्।

यथा पदार्थवादिनी न्यायवैशेषिकदर्शने पदार्थज्ञानद्वारा निःश्रेयसपदं प्रदर्शयतः, योगदर्शनञ्च जीवेश्वरयोरेकत्वाधिगमपूर्वकं समाधिना कैवल्यपदं प्रतिपादयति, सांख्यदर्शनं विविधदुःखात्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषयोर्विवेकात्मकज्ञानेन मुक्तिमार्गमुपदिशति, मीमांसादर्शनमपि वैदिकैः कर्मभिः संस्कारशुद्ध्या निर्वाणोपलब्धिं निर्दिशति, वेदान्तदर्शनञ्चाद्वयब्रह्मज्ञानेन मोक्षाधिगममुद्बोधयति तथैव भगवत्सान्निध्योपलब्धिहेतुभूतं भक्तिदर्शनमपि श्रीमद्भगवत्तत्त्वसाक्षात्कारद्वाराऽपवर्गद्वारमुद्घाट्य परमं पदं प्रापयति भक्तप्रवरानिति निश्चप्रचम्।

यथान्तर्बाह्यराज्येऽवस्थितत्वाद् योगदर्शनं निर्विरोधि सर्वहितसाधकमस्ति तथैव कर्मकाण्डज्ञानकाण्डमध्यवर्ति भक्तिदर्शनमपि सर्वाविरुद्ध-

मखिलहितसाधकञ्च विद्यते। किमपि दर्शनशास्त्रं स्वकीयज्ञानभूमेरनुरोधतोऽन्यदर्शनमतं यदि खण्डयति तर्हि हानिकारकं नास्ति। यथा समतलभूमिपर्यटनपरायणः पथिको यदि पर्वतप्रदेशभ्रमणशीलक्रियाकौशलं निन्दन् समतलभूभ्रमणकौशलमेव प्रशंसति यद्वा पर्वतमार्गविचरणशीलः पथिकः स्वीयं भ्रमणकौशलं बहु मन्यमानः समतलभूमिभ्रमणपरायणं मानवं निन्दति, तदानीं न कापि हानिः, प्रत्युत देशकालस्थलयात्रानुसारेण तदुपकारकमेव तथैव यद्येकं दर्शनविज्ञानं दर्शनान्तरमतस्य कुत्रचित् सिद्धान्ते दोषमारोपयति सिद्धान्तं वा खण्डयति तदा नैतद्दोषायावधेयम्। यत्र दर्शने यस्या ज्ञानभूमेरधिगतये यद्धि विज्ञानं विवक्षितं तत्र तस्यैव प्रौढिः सम्पादिता भवति। अतस्तत्खण्डनं न दोषाधायकम्। भक्तिदर्शने न कापि खण्डन-मण्डन-प्रणाली क्वचिदप्यवलम्बितास्ति। अतएव तस्य सार्वभौमदृष्टिः सर्वथा सर्वाभ्यर्हिता मान्या समादरणीयाऽनुष्ठेया च वर्तते।

यथा कर्ममीमांसा दर्शनाश्रयणमन्तरेण विचित्रविशालदुरूहकर्मरहस्यं न हृदयङ्गमं कर्तुं शक्यते तथैव भक्तिशास्त्रानुसारं भक्तिदर्शनस्य विज्ञानमपि हृदयङ्गमं विधातुमसमर्थस्य कस्याप्युपासकस्य न साफल्यप्राप्तिः सम्भवति। अत एव कर्ममीमांसादर्शनं यथा सकलशाखिनां सर्वसाम्प्रदायिकानां च कल्पसूत्रभूतं परमं सहायकं वा वर्तते तथैव भक्तिदर्शनमपि सर्वविधोपासकानां निखिलसाम्प्रदायिकानाञ्च परमाश्रयस्वरूपं विद्यते। अतएवोक्तं श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशोमुरारेः।
अवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद् विपदां न तेषाम्॥

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष-
कामास्तपः समचरन् भगवत्प्रपन्नाः।
सा श्रीः स्ववासमरविन्दवनं विहाय
यत्पादसौभगमलं भजतेऽनुरक्ता॥

# नाट्यशास्त्रे भावलक्षणपाठः

डा० प्रेमस्वरूपगुप्तः

भरतीये नाट्यशास्त्रे सप्तमाध्यायारम्भे भावलक्षणमित्थमुपलभ्यते—

भावानिदानीं व्याख्यास्यामः। अत्राह—भावा इति कस्मात्। किं भवन्तीति भावाः, किं वा भावयन्तीति भावाः। उच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावा इति।

भू इति करणे धातुः। तथा च भावितं वासितं कृतमित्यनर्थान्तरम्। लोकेऽपि च प्रसिद्धम्—अहो ह्यनेन गन्धेन रसेन वा सर्वमेव भावितमिति। तच्च व्याप्त्यर्थम्। श्लोकाश्चात्र—

विभावेनाहृतो योऽर्थो ह्यनुभावैस्तु गम्यते।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥
वागङ्गमुखरागेण सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥
नानाभिनयसम्बद्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥ इति॥

सूक्ष्मेक्षिकया पर्यालोचनेन लक्ष्यन्त एवात्र अर्थविसंगतयः। आरम्भे 'किं भवन्तीति भावा, भावयन्तीति वे'ति प्रश्नमुत्पाद्य भाव—शब्दस्य व्यापनार्थिकां व्युत्पत्तिं मनसिकृत्य वागङ्गेत्यादिशब्दैर्भाव-स्वरूपं व्याख्यातम्। तदनु'भू इति करणे धातुरि'ति करणार्थिका व्युत्पत्तिः प्रस्तुता। ततो 'भावितं वासितं कृतमित्यनर्थान्तरमि'-ति द्वयोर्व्युत्पत्त्योः सामञ्जस्यं विहितम्। पुनश्च व्यापनव्युत्पत्त्यर्थो व्याख्यातः। तदनन्तरं करणार्थव्युत्पत्तिपक्षीयो 'विभावेनाहृत' इत्यादिः श्लोकः, तत्परं व्यापनार्थव्युत्पत्तिपक्षीयौ द्वौ श्लोकाविति स्थितिः। अत 'भू इति करणे धातुरि'ति शब्दाः केवलं 'विभावेनाहृत' इति श्लोकेनैव संगच्छन्ते, व्याप्त्यर्थप्रतिपादकेन शेषेण तु विसंगता एव। अथ च व्याप्त्यर्थप्रतिपादिका व्युत्पत्तिरपि न काचिदत्र शब्दतो विहिता।

वस्तुतस्तु पाठेऽयं व्युत्पत्तिद्वयमूलस्य परम्पराद्वयस्य शबलनमस्ति। भावितविसंगति-रूपता स्वाभाविक्येव।

विसंगतिरियमभिनवगुप्तस्य दृष्टिपथेऽपि समायातैव। सुस्पष्टमेव तेनात्र प्रसङ्गे व्युत्पत्तिद्वय-परस्य निरूपणस्य समावेशः स्वीकृतः। [1]श्लोकेष्वपि प्रथमः करणार्थव्युत्पत्त्यनुसारी, शिष्टौ च द्वौ व्यापनार्थक-व्युत्पत्त्यनुसारिणाविति तेन सुस्पष्टमेव प्रतिपन्नम्।[2] किन्तु तन्मते सर्वमिदं दृष्टिभेदमिश्रणं स्वयं भरतप्रणीतमेव। अन्यासां पाण्डुप्रतीनामनुपलम्भात् पाठविज्ञानप्रक्रियायास्तत्समक्षं विकासाभावाच्च अभिनवगुप्तो निर्णेतुं न शशाक यत् मिश्रणमिदं न भरतकृतम्, अपितु परवर्तिचिन्तनपरम्पराद्वयविकास-जन्यम्। वस्तुतस्तु तत्समक्षं यत्किञ्चित्पाठ्यमायाति, तत्पाण्डित्यपरामर्शेन भवत्येव सुव्याख्यातं, दुर्व्याख्यातं वा। सर्वमेव वाङ्मये विश्वात्मनः स्तोत्रं मन्यमानस्य तस्य किमग्राह्यं स्यात्।[3]

*पाठ-परीक्षा*

प्रस्तुत-प्रसङ्गस्य परीक्षणार्थम् अस्माभिः प्रकाशित-पुस्तकातिरिक्ता एकादश-पाण्डुप्रतिकृतिभ्यः पाठांशा सङ्कलिताः। प्रतिकृतयश्च तिस्रो नेपाल-प्रदेशात्, पंच मद्रासात्, द्वे मैसूरत, एका च वटोदरातः सङ्कलिताः।

---

१. ना० शा० भा० १, सं० २, पृ० ३६४ 'तन्त्रेण व्युत्पत्यन्तरं दर्शयन् तमाह—लोकेऽपि चेति।'

२. तत्रैव, पृ० ३४५ 'अथ व्युत्पत्त्यन्तरमपि दर्शयितुं प्राक्तनीं च व्युत्पत्तिमाह—श्लोकश्चात्रेति।

२. तत्रैव, पृ० ३४५ 'एवं लोकानुसारेण कविनटशिक्षोपयोगिना व्युत्पत्त्यन्तरमभिधाय सामाजिकाभिप्रायेण व्युपत्तिद्वयनिरूपितोऽर्थः, तत्संग्रहाय श्लोकद्वयमाह—वागङ्गमुखरागेणेति।'

३. ना० शा०, भा० २ अ० ११, अभि० भा०, गायकवाड ओ० सी०, प्रस्तावना—श्लोक २ :

'स्वल्पेऽपि पाठ्ये न त्याज्यः कोऽप्यध्यायो मया यतः।
विभोर्विश्वात्मनः स्तोत्रं मुख्यमन्यत् प्रसङ्गतः॥

एताः प्रतयो व्युत्पत्तिमनुलक्ष्य परम्पराद्वये विभाजयितुं शक्याः एका परम्परा 'भाव इति करण–साधनम्' इति प्रतिपादयन्ती अभिनयाङ्गानां करण–साधनता–सहकारेण व्यापन–व्युत्पत्तेः पोषिका, अपरा च 'भू इति करणे धातुरि'–ति पुरस्कुर्वन्ती करोत्यर्थ–व्युत्पत्ति–समर्थिका। त्रि-नव-दश-संख्याकाः प्रतयः पूर्वस्याः परम्परायाः, शेषा अपरस्याः।

'भावितं वासितं कृतमित्यनर्थान्तरमि'ति पाठे व्यापन-करणयोः द्वयोरर्थयोरभेदः सामञ्जस्यात्मकं प्रयत्नमुपलक्षयते। ततः पूर्वं 'यथा भावितं वासितं ( तथा ? ) कृतमित्यर्थान्तरमि'–ति वादनीषु प्रतिषु परम्पराद्वयस्य पार्थक्येन एकत्रोपस्थापनं प्रोच्यते। ततोऽपि पूर्वं ताः प्रतयः स्युः यासु केवलस्यैकस्यैव स्वपक्षस्याग्रहो दृश्यते। एवंविधासु प्रतिषु 'भावितं वासितमि'–ति परम्परायाः प्रतयो नास्मत्समक्षं विद्यन्ते। करणपरम्परायाः क्रमशः प्रभावाधिक्येन ता विलुप्ता भवेयुरिति सुखमनुमीयते।

इत्थं पक्षद्वयस्य समावेशो न मूल–गतः, अपितु परवर्ति–भाष्य–टीकादिभ्यः समुल्लसितो भवेत्। यदिदं सर्वं मूलगतं स्यात्, निरूपणं शबलीकृतं न स्यात्, परिवर्तिनः पाठ–सम्मर्दस्य चानवकाशः स्यात्। प्रामाणिके मूले समुपलब्धे एतादृशो विकल्पा न जायेरन्। इत्थं पक्षद्वयस्य विकासे परकालीने सिद्धे, 'किं भवन्तीति भावाः, किं भावयन्तीति भावा' इति शङ्कोत्थापनस्यापि मूले नावसरो लभ्यते। तदपि परवर्त्येव।

( ८ ) अष्ट-संख्याका प्रतिरस्माकं दृष्टिं विशेषेण प्रबध्नाति। अत्रत्यः पाठ इत्थमुपलभ्यते 'भावानिदानीं वक्ष्यामः। अत्राह—भाव इति कस्मात्। किं भवतीति भावः, किं भावयतीति भावः। अत्रोच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयतीति भावः। भवति चात्र श्लोकः—

'वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥

भू इति करणे धातुः। यथा भावितं वासितं, कृतमित्यर्थान्तरम्।

लोकेऽपि च सिद्धम्—अहो अनेन गन्धेन रसेन वा सर्वमेव भावितमिति तस्य व्याप्त्यर्थे। भवति चात्र श्लोकः—

विभावेनाहृतो योऽर्थस्त्वनुभावैश्च गम्यते।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥

अत्रोल्लेखनीयमस्ति यदत्र श्लोकद्वयमेव पठ्यते, पूर्वं व्यापन-व्युत्पत्ति-समर्थकस्य श्लोकस्य पाठः, पश्चाच्च करण-व्युपत्ति-समर्थकस्य। उल्लेखश्च द्वयोः पृथक्श एव। 'यथा भावितं वासितं, कृतमप्यर्थान्तरमिति द्वयोः परम्परयोः स्पष्टा स्वीकृतिः। यद्यप्यत्र 'भू इति करणे धातुरि' ति व्युत्पत्तेरेवोल्लेखः, तथापि पूर्वव्यापन-पक्षीयस्यैव श्लोकस्य समावेशः। अतः सर्वतोऽनुमीयते यदयं पाठः केनापि व्यापनसमर्थकेन सामंजस्यविधित्सुना मिश्रीकृत्योपस्थापितः स्यात्, पश्चात् केनापि करण-व्युत्पत्ति-पक्षधरेण 'भाव इति करणसाधनमि' ति स्थाने स्वपक्षीयां 'भू इति करणे धातुरिति व्युत्पत्तिं संनिवेश्य प्रचारितः स्यात्। इदमपि स्पष्टं भवति यत् नानाभिनयेत्यादिः श्लोकः व्यापन-पक्षधरैः पश्चात् पुरस्कृतः स्यात् श्लोकानां क्रमोऽपि करण-व्युत्पत्ति-वादिभिः स्वानुकूलं पश्चात् विपरिवर्तितः, यः सर्वैः स्वीकृतोऽभूत्।

अस्याः प्रतेः व्यापन-पक्ष-विकासस्य पूर्वभावितताप्यायाति। करण-व्युत्पत्तिपक्षस्य तदनन्तरं विकासोऽभूत्। वागङ्गसत्त्वोपेतान्········ कवेरन्तर्गतं भावं भावयन् भाव उच्यते इति स्वेतर-पक्षीयं पाठं करण-व्युत्पत्तिका अवधीरयितुं नाशक्नुवन्निति तथ्यमेतेषां शब्दानां मूल-पाठ-गतामवस्थितिं निगमयति।

एवं भरत-लक्षणस्य मूल-पाठ इत्थं निर्धार्यते—

भावानिदानीं वक्ष्यामः। अत्राह—भावा इति कस्मात्? उच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। भवति चात्र श्लोकः—

वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते।

एतस्यैव विकसितं रूपमद्य अभिनव-स्वीकृते पाठे समुलभ्यते।

*पाठ-विकासः*

मूलपाठादभिनव-स्वीकृत-पाठ-पर्यन्तं पाठ-विकासस्य षोडश पद-क्रमास्तर्क्यन्त । संक्षेपेण त एवम्—

( १ ) मूल पाठः ।

( २ ) तदुपरि व्यापन-व्युपत्ति-पक्षीया 'भू इति करणे धातुरि' ति टीका ।

( ३ ) टीका-पाठस्य मूल-पाठे समावेशः ।

( ४ ) तदुपरि 'भू इति करणे धातुरि' ति पक्षान्तरोद्भाविनी अपरा टीका ।

( ५ ) अस्याः टीकाया अपि मूले समावेशः, भाव इति करण-साधनमित्यस्य स्थाने 'भू इति करणे धातुरि' त्यस्य प्रस्थापनम् ।

( ६ ) केनापि सामंजस्यविधित्सुना 'भू इति करणसाधनमि'ति पक्षमुल्लास्यैव द्वयोः पाठयोः सामंजस्य-विधानम् ।

( ७ ) तदसहमानेन केनापि करणव्युत्पत्ति-पक्षधरेण 'भू इति करणे धातुरि'ति पक्षस्य प्रतिष्ठापनम् । अस्या एवावस्थितेः प्रतिनिधिः ( ८ ) संख्याका प्रतिरस्मत्समक्षं विद्यते ।

( ८ ) अथ व्यापनव्युत्पत्तिपक्षधरेण षष्ठाध्याये समुद्धृतमानुवंश्यं नानाभिनयेत्यादिश्लोकमतिरिक्त-प्रमाण-रूपेण प्रस्तूय स्वपक्ष-समर्थनम् । अनन्तरं तस्यापि श्लोकस्य मूले समावेशः ।

( ९ ) करणव्युत्पत्तिधरैस्त्रयाणां श्लोकानां समूहनं स्वपक्षीयस्य विभावेनाहृत इत्यादिश्लोकस्य पूर्वप्रतिष्ठा, वासितमिति शब्दमपि निरस्य 'भू इति करणे धातुः' । भावितं कृतमित्यर्थान्तरमित्याग्रही पाठः । एवमेव चिन्तनं पुरस्कुर्वन्ती ( १ ) संख्याका प्रतिरस्मत्समक्षं विद्यते ।

( १० ) अन्येन सामञ्जस्यविधायिना करणपक्षीयेण वस्तुस्थितिं स्वीकृत्य 'भू इति करणे धातुः' । भावितं, वासितं ( तथा ) कृतमित्य-र्थान्तरमिति पाठ-स्वीकृतिः । अत्रैव प्रतिपादिके ( २ ) ( ११ ) संख्ये प्रती ।

( ११ ) अस्यां स्थितौ 'भु इति करणे धातुरि'ति स्थाने 'भाव इति

करणसाधनमि'ति स्वपक्षस्याग्रहः, किन्तु करण-पक्ष-विकृतस्यैव श्लोक-क्रमस्य परिस्वीकृतिः।

( १२ ) पुनः करणपक्षीयाणां रूढदृष्टेराग्रहः। 'भावितं कृतमि' त्यत्रैवास्यानर्थान्तरत्वमेकार्थतेति 'वासितमि'त्यस्य समावेशो नावश्यक इति। 'भावाः काव्यार्थान् भावयन्ति कुर्वते, इति मानसि कृत्य' 'भू इति करणे धातुः', भावितं कृतमित्यनर्थान्तरमि' ति पाठः। अत्रैव वयं ( ५ ) ( ६ ) ( ७ ) संख्याकाः प्रतीः प्राप्नुमः।

( १३ ) ततोऽपरेण सामञ्जस्यपरेण करणवादिना 'यथा च भावितं वासितं कृतमित्यनर्थान्तरमि' ति समन्वित-पाठस्य प्रस्तुतिः। अत्र ( ३ ) संख्याका प्रतिः प्राप्यते।

( १४ ) व्यापनव्युत्पत्तिकैः केवलं स्वव्युत्पत्तेराग्रहः, शेषं परस्य पक्षस्य स्वीकरणम्। तदेव ( ४ ) संख्यायां प्रत्यामुलभ्यते।

( १५ ) एवं व्यापनपक्षस्य क्रमशः क्षीणतायां करणपक्षस्य च

---

४. भाव इति करणसाधनमित्यस्य तात्पर्यमित्थम्—वागङ्गसत्त्वादयो करणत्वेन साधनानि यत्र। यथाह अभिनवगुप्तः—'वर्णनात्मना वाचिकत्वेन सन्निवेशवलनादिनाङ्गिकेनान्तर्बहिरात्मना सात्त्विकेन करणभूतेनोपेतान् संबद्धान्। करणं हि कर्मणि कर्तरि च यद्यपि संबध्यते, तथापीहास्य प्राधान्यात् सम्बन्धदशि करणत्वमेव दर्शयितुं तृतीयया निर्दिश्यते। वागङ्गमुखरागेणेति। ना० शा० भा० १, अभि० भा०, पृ० ३४४। इत्थं ये वागादिकरणसाधत्वेन काव्यार्थान् भावयन्तीति भावा इति।

'भू इति करणे धातुरि'–ति व्युत्पत्तौ यद्यपि भू-धातुः करणार्थे धातुपाठे नोपलभ्यते। परस्मैपदिनो भ्वादेः सत्तायाम्, आत्मनेपदिनश्च चुरादेः प्राप्तावेवोपलब्धिः उभयपदिनोऽवकल्कनार्थस्य चुरादेस्तु भुवस्य। किन्तु णिच्परो भू धातुः करणार्थे बहुशः प्रयोगेषूपलभ्यते। अभिनवगुप्तेन 'भू इति करणे धातुरि'तिशब्दान् भरतप्रतीतानेव, परिगृह्य तत्र भू इति—अर्थात् णिजंशभूते इकारप्रत्यये परे भूधातुः करणार्थे वर्तते' इति मन्तव्यः प्रकाशितो भरताभिमतत्वेन च प्रत्युपस्थापितः, तत्सर्वमभिनवगुप्तस्यैव चमत्कारि वैदुष्यं, किन्तु नेयं भारतीया भाषा-शैली। इयं व्युत्पत्तिः परकालीन-टीकाभ्यः समायातेति प्रतिपादितमेवास्माभिः।

प्राबल्ये चतुर्दशस्थितौ लब्धसंस्थस्य पाठस्य अभिनवगुप्तेनापि स्वीकृतो स्वल्पान्तरेण तदीयः पाठः।[5]

*चिन्तन-विकासः*

अनेन पाठ-विकास-क्रमेणैव तन्निहित-चिन्तनविकासस्य क्रमिक-प्रक्रियापि स्फुटीभवत्येव। सप्तमाध्याये भरतेन विभावानुभावसंयुक्तानां स्थायिसंचारिसात्त्विकानां भावत्वं प्रत्यपादि, काव्यार्थस्य भावकाः वीसकास्ते सर्व एव भावा इति। नाट्यरसनिष्पत्तावभिनयतत्त्वानां भाव-तत्त्वानां च समायोगो भरतेन बहुशः प्रतिपादितः। 'भावाभिनय-सम्बद्धान् स्थायिभावांस्तथा बुधाः। आस्वादयन्ति मनसा तस्मान्नाट्य-रसाः स्मृताः' इत्यादिष्वपि तदेवोपलभ्यते। भावलक्षणेऽपि वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्ति भावा इति अभिनयतत्त्वानां सह-करणात्मक-सहयोगेन भावस्वरूपं निर्धारितमुपलभ्यते।' वागङ्गमुखरागैश्चेत्यादिकमानुवंश्यं प्रेरणाप्रदमासीदेव। तदनु अभिनयतत्त्वानां करण-रूप-साधनतामुपलक्ष्य भाव इति करण-साधनम्, भावितं वासितमिति, लोकेऽपि च सिद्धम्—अहो, अनेन गन्धेन रसेन वा सर्वमेव भावित-मिति सोदाहरणा व्युत्पत्तिर्भाष्यकृद्भिः पुरस्कृता या शनैः शनैः मूले समाविष्टा। अनन्तरं च भू इति करणे धातुरिति 'भावयन्ति कुर्वत' इति वादिनां पक्षः, पूर्वटीकासु, परं मूलेऽपि संमिश्रय समुल्लसितः। विभावेनाहृतो योऽर्थ इत्यादिः श्लोकोऽपि तत्पक्षे प्रस्तुतीभूतः।

अनन्तरं व्यापन-पक्षे वरीयस्तया प्रस्तुतीक्रियमाणेऽपि यथा भावितं वासितं तथा कृतमप्येकमर्थान्तरमस्तीति स्वीकृतिरेका वस्तु-स्थितिः सम्पन्ना, किन्तु करणव्युत्पत्तिवादिभिर्येषां पक्ष आरम्भ-दुर्बल एवासीत्, पाठविस्थापनानि पाठविकाराणि चारब्धानि (८) संख्याका

५. अत्र पाठक्रम-निर्धारणे केचन सिद्धान्ताः स्वीकृताः। 'यथा भावितं वासितं, तथा कृतमिति' द्वयोः परंपरयोः सामंजस्य-विधायिन्यः प्रतयो यतः पार्थक्येन सामंजस्यं स्वीकुर्वन्त्यस्ता 'भावितं वासितं कृतमित्यनर्थान्तरमि' ति अपार्थक्येन सामंजस्यविधायिनीभ्यः पूर्ववर्तिन्य स्युः केवलमेकपक्षधरास्ताभ्योपि पूर्वतराः। श्लोकद्वयवती प्रतिः श्लोकत्रय-प्रतिभ्यः पूर्वा। अर्थ-चेतनानुसारेण पूर्वतराणामुपकल्पना।

प्रतिरत्र प्रमाणम्। यद्यपि व्यापनपक्षेण 'नानाभिनये'-त्यादिश्लोकोऽतिरिक्तसमर्थनरूपेण पुरस्कृतः, मूलपाठे मिश्रितश्च, तथापि करणव्युत्पत्त्याग्रहिभिः श्लोकक्रम एव विपरिवर्तितः। (१) संख्याका प्रतिः संकेतयति यत् तेषामतिवाद इयानासीद् यद् व्यापनव्युत्पत्तेर्बहिष्करणमेव तेषामिष्टमासीत्। सकलस्य प्रसंगस्य 'भावयन्ति कुर्वते' इत्यर्थपरा च व्याख्या प्रयतिता यस्या अनुश्रुतिरभिनवस्य विवेचनेऽपि प्राप्यते। किन्त्वतिवादोऽयं नालभत प्रतिष्ठाम्। 'यथा भावितं वासितं तथा कृतमप्येकमर्थान्तरमि'-त्येव समन्वितः पक्षः प्रायेण स्वीकृतोऽभूत्। (२) (११) संख्ये प्रती प्रमाणमत्र।

करणपक्षपातिभिः पुनरतिवादिता हि गृहीता। वासितमित्यर्थमपकृष्य भावितं कृतमित्यनर्थान्तरमिति पक्षस्तैः प्रस्तुतः। अयं पक्षस्तु प्रतिष्ठां न लेभे, किन्तु अनर्थान्तरत्वं भिन्नदृष्ट्या प्रचलनमाप। इदमनर्थान्तरत्वं भावितशब्दस्य वासित-कृतशब्दयोरर्थद्वये प्रतिपन्नमभूत्। अयमपि प्रयासः करणपक्षधराणामेवासीत्। एवमेका अमौलिकी चिन्तनपरम्परा क्रमिका क्रमणप्रक्रियया कालान्तरेण तादृशी प्रमाणिकी संपन्ना यत् भावितं वासितं कृतमित्यर्थगतमनर्थान्तरत्वमेव न केवलम्, सकलस्य प्रसंगस्यापि एकार्थत्वं प्रतिपादयितुं भ्रमस्यावकाशोऽजनि।

अत्रोपलब्धे पाठे एनयोर्द्वयोः परम्परयोः शबलीकृतं रूपमेवोपलभ्यते, अतएव विसंगतिगर्भता। अभिनवगुप्तेनापि अर्द्धसत्यस्यैव ग्रहणं कृतमासीत् यतो विकल्पद्वयं परिकल्प्यापि तस्य भरतसंमतता प्रतिपादिता। वस्तुतस्तु परिवर्तिनश्चिन्तनपरंपराद्वयस्य तत्र शबलनं विद्यते।

अत्रैवं प्रतितर्क्यते—आम्, अस्त्वत्र परंपराद्वयं, किन्तु तद् भरतपूर्वीयमेव यस्य स्वयं भरतेनैव कृतः समन्वयः। आसीत् कोपि प्राचीनः धातुपाठो यस्मिन् करणार्थकस्य भू-धातोरुल्लेख आसीत्, तत एव भरतेन करणार्था व्युत्पत्तिर्गृहीता। नैवम्—यद्येवं स्याद्, द्वयोर्व्युत्पत्त्योर्वैकल्पिकः समावेशो भरतेन कृतः स्यात्, वासनार्थस्य शब्दैः प्रतिपत्तिरथ च करणार्थस्य धात्वर्थेन व्युत्पत्तिरित्येवंविधा विसंगतिर्न स्यात्। अथ च करणार्थस्य भुवः धातुपाठतो व्युत्पत्तिः साध्या स्याद्, अभिनवगुप्तेन 'भू इति करणे धातुरि' ति शब्देषु णिजंशस्यैकारस्य कष्टकल्पना न कृता भवेत्। भुवः करणार्थता प्रयोगेषु तूपलभ्यत एव।

अथ करणपक्ष एव प्राचीनतरो भरताभिमतश्च, वासनपक्षः परं प्रक्षिप्त इत्यप्यसमीचीनमेव । वासनार्थस्य प्रतिपत्तिः सम्पूर्णेऽस्मिन् विवेचने आधारतया समनुगता । 'काव्यार्थान् भावयन्तीति भावाः', 'कवेरन्तर्गतं भावयन्' इत्यादयः प्रयोगा वासनार्थव्युत्पत्तेर्भरतसमक्षतां प्रतिपादयन्ति । भरतपूर्वीयेण[६] वासुकिनापि

नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा ।
एवं भावा भावयन्ति रसानभिनयैः सह ॥

इत्यत्र भरतोद्धृते श्लोके भावस्य वासनार्थतैव स्वीकृता । विश्लेषितासु पाण्डुप्रतिषु करणार्थस्य अर्थान्तरत्वेनैव प्रारंभे स्वीकृतिः, वासनार्थस्य तु मूलार्थतयेति प्रतिपादितचरम् । श्लोकानां क्रमपरिवर्तनतः पूर्वं वासनार्थकश्लोकस्यैव पूर्वं समावेशः, तदर्थस्यैव च पूर्वं प्रतिपादनमिति ८-संख्याका प्रतिरत्र प्रमाणमिति सर्वं विवेचितमेवास्माभिः ।[७]

---

६. ना० शा० अ० ६।३५ । श्लोकोऽयं भावप्रकाशनकार—शारदातनयस्य प्रामाण्येन वासुकेरस्ति । अत्रापि भावस्य वासनार्थपरकतेति संज्ञापनार्थं वयं श्रीरामसुरेशत्रिपाठिमहाभावानामधमर्णाः ।

७. विदुषानेन सर्वस्याप्यस्य विषयस्य विस्पष्टतायै चार्ट-पदवाच्यं चित्रमपि षड् मासान् परिश्रम्य निर्मितं प्रेषितं चास्मभ्यम्, किन्तु मुद्रणकाठिन्यात् तद् इदानीं मुद्रयितुं न पारयामः—संपादकः ।

# कालिदाससाहित्ये चित्रकला

*रेवाप्रसाद-द्विवेदी*

एका कला कलान्तरेऽलङ्कारत्वं व्रजतीति प्रतीतचरं विदुषाम्।[1] तत्र काव्यमपि कला। तस्याः शब्दैकसंवेद्यत्वेऽपि ततश्चापरोक्षज्ञान-विषयत्वेऽपि प्रत्यक्षज्ञानविषया संगीतं, मूर्त्तिः, चित्रञ्चेति तिस्रोऽपि कला अङ्गभावमलङ्कारभावापरपर्यायं व्रजन्त्येव। कालिदासो ह्यस्माकं मूर्धन्यः कविः। तस्य काव्येष्वपि कलान्तराणि निष्प्रयासमेवालङ्कारभावं भजन्ति। तद्यथा चित्रकला।

## १. नामोल्लेखः

कलामिमां कालिदासो नामतोऽप्युल्लिखति, अनेकवारं चोल्लिखति तथाहि—

१. रघुवंशस्य द्वितीये सर्गे दिलीपो गुरोर्वसिष्ठस्य यज्ञधनं नन्दिनीं रिरक्षयिषुः धातुमय्यामधित्याकायामिव पाटलायां तस्यां स्थिते लोध्रद्रुम इव केसरिणि प्रजिहीर्षति, तदर्थं च तूणीराद् बाणमुद्दिधीर्षति। केसरी च साधारणः केसरी नास्ति। स हि भगवता शिवेन पार्वतीपुत्रीकृतं वन्यद्विपोन्मथितत्वचमतस्सेनान्यमिव पार्वतीशोकविषयं देवदारुं रक्षितुं नियुक्तः लम्भित-तत्परिसरागतजीवभक्षणाधिकारश्च। नन्दिनी च तं परिसरं प्रविष्टवती, ततः केसरिणा सा समाक्रान्ता। उचितं च तदिति प्रजिहीर्षोर्दिलीपस्य बाणमोक्षप्रवृत्तिस्तत्र विफलायते। तस्य दक्षिणः पाणिः सायकपुङ्ख एव सक्ताङ्गुलिस्तिष्ठति। तत्र तस्य दिलीपस्य स्थितिं वर्णयन् कविश्चित्रं स्मरति—

वामेतरस्तस्य करः प्रहर्त्तुर्नखप्रभाभूषितकङ्कपत्रे।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे॥

---

[1] यथाऽवोचामात्मनः काव्यालङ्कारकारिकायाम्—

'यच्च शब्देषु पद्यत्वं सा संगीतकला प्रिया।
कला कलान्तरे यस्मादलङ्कारत्वमश्नुते॥' ३५-उपस्कारकारिका

चित्रार्पिता व्यक्तिरेकरूपैव तिष्ठति, तत्र रूपान्तरं न संभवति। इयमेव दिलीपस्य स्थितिः।

२. कुमारसंभवे भगवतः शङ्करस्य समाधिभङ्गाय, भगवतीं पार्वतीं प्रति च तस्यौन्मुख्याय प्रवर्त्तितेन कामेन वसन्तवैभवं प्रकटितं शिवाश्रमप्रान्ते। तस्य माधुर्येण शिववननौकसां तपस्विनो विकृतमनस्काः संवृत्ताः, किन्तु प्रयत्नसंस्तम्भितविक्रियास्ते मनसामीशाः कथंचिद् बभूवुरेव। तत्र हरस्तु प्रसंख्यानपर एव स्थितः। गणास्तु कथंचिद् विचलिताः। तस्य वाहनं नन्दी तु कामस्य तद्वसन्तस्य च चापलं न सेहे। स लतागृहद्वारमागत्य मुखार्पितैकाङ्गुलिसंज्ञयैव गणान् 'मा चापलाय' इति व्यनैषीत्। नन्दीश्वरशासनेन किं भवति ? सर्वोऽपि वसन्तविभवश्चित्रार्पितारम्भ इव जायते—

निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥३।४२॥

३. तारकेन बाधिता आदित्या भगवन्तं ब्रह्माणं प्रसादयितुं गताः। तत्र तेषां निस्तेजस्कतां वीक्ष्य ब्रह्मदेवो ब्रूते—

'अमी च कथमादित्याः प्रतापक्षतिशीतलाः।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥' २।२४॥ इति।

एत आदित्याः प्रकाममालोकितुं शक्याश्चित्रार्पिता इव।

४. चित्रस्य कृत आलेख्यशब्दमपि कालिदास उपादत्ते। तत्र तस्य सर्वेऽपि विरहिणः स्वकीयानां प्रेयसीनां चित्राणि निर्माय मनो विनोदयितुमिच्छन्ति। पूरूरवाः स्वकीयां प्रेयसीं चित्रार्पितामपि कर्त्तुं न क्षमते। स कथयति—

'हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम्।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ वि-२।१०॥'इति॥

५. यक्षस्यापीयमेव स्थितिः। सोऽपि शापितः सन् रामगिरिमधिशिश्रिये। तत्र शिलायां धातुरागैर्यक्षीमालिलेखिषति—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥'

६. मालविकाग्निमित्रस्य नायकोऽग्निमित्रः प्रणयवतीं मालविकां प्रथमां चित्रन्यस्तां पश्यति पश्चाच्च साक्षात् । तत्रासौ ब्रूते—

चित्रगतायामस्यां कान्तिविसम्वादशङ्कि मे हृदयम् ।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ इति ।

७. अजोऽपि स्वर्गतामिन्दुमतीं सादृश्यप्रतिकृतिषु पश्यति—

तेनाष्टौ परिगमिताः समाः कथञ्चिद्
बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥' ८।९२ ॥इति

८. विक्रमोर्वशीये निपुणिका विदूषकम् आलेख्यगतं वानरमिव निभृतं स्थितं पश्यति—

'अहो आलेख्यवानर इव किमपि मन्त्रयन्
निभृत आर्यमाणवकस्तिष्ठति' । इति
[ वि० द्वि० अं० आरम्भे ]

९. कुमारः सुदर्शनो यदा विवाहयोग्यो भवति तदा तस्मै राजकन्यकानां प्रतिकृतय आनीयन्ते । स च तत्र याः सुन्दर्यस्ताः स्वीकुरुते । तत्र कालिदासः मालिकाग्निमित्र इव कान्तिविसंवादं स्मरति—

प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥

इत्थं चित्रस्य कृते कालिदासः प्रतिकृतिशब्दमपि प्रायुङ्क्त ।

१०. शकुन्तला हि स्त्रीरत्नम् । सा विधात्रा कथंकारं निर्मितेति तत्र जिज्ञासा । तत्र दुष्यन्तस्य संभावना—

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ २।६ ॥ इति ॥

विष्णुधर्मोत्तरपुराणे नारायणो मुनिरपि—

सहकाररसं गृह्य उर्व्यां चक्रे वरस्त्रियम् ।
चित्रेण सा ततो जाता रूपयुक्ता वराप्सराः ॥ ३।३५। ३

११. जन्मनः प्रभृत्येव दीपशिखेव[1] प्रभामहतीं स्फुरत्प्रभीमण्डला च भगवती पार्वती सर्वावयवानवद्या ।[3] तस्या अभ्युन्नताङ्गुष्ठनखप्रभाभी[4] रागमिवोद्गिरन्तौ चरणौ पृथिव्याम् अपरिच्छेद्यां स्थलारविन्दश्रियमाहरतः । तस्या एकैकस्मिन्नङ्ग एव विधातुर्लावण्यकोषः परिसमापत, ततश्चोत्पाद्येनेव लावण्येन शेपाङ्गनिर्माणं पर्यपूरि ।[5] तस्या मुखे पद्मं चन्द्रबिम्बं चेत्युभयस्यापि श्रियावपहस्तितकलहे यौगपद्येनैव निवसतः ।[6] स्तनबन्धुरे कण्ठे यस्तस्या निस्तलो मुक्ताकलापः सोऽपि भूष्यभावं भजते तेनेव तादृशस्तस्याः कण्ठः ।[7] पार्वत्या विशदं, ताम्रौष्ठपर्यस्तकिरणग्रामं च स्मितं प्रवालोपहितेन पुष्पेण, विद्रुमस्थेन मुक्ताफलेन वोपमातुं शक्यते ।[8] तस्या अस्या भगवत्या आयतलेखयोर्भ्रुवोः कान्तिः शलाकाञ्जनेनेव निर्मिता ।[9] सोऽयं लावण्यकान्तिनिर्झरस्तस्यामस्यां जगन्मातरि बाल्यादेव कृतपदो यतः प्रभृतीयं ज्योत्स्नाप्रपूरितानि कलान्तराणि लब्धोदया चान्द्रमसी लेखेव लावण्यमयानि निजाङ्गरत्नानि पुपोष ।[10] तस्या अस्या यौवनेन चतुरस्रं शोभि वपुः कीदृशं दृश्यते ? 'तूलिकयोन्मीलितं चित्रमिव'—

---

| | | | | | |
|---|---|---|---|---|---|
| १. | कुमारसंभवस्य | १।२८ | २. | कुमारसंभवस्य | १।२४ |
| ३. | ,, ,, | ३।५७ | ४. | ,, ,, | १।३३ |
| ५. | ,, ,, | १।३५ | ६. | ,, ,, | १।४३ |
| ७. | ,, ,, | १।४२ | ८. | ,, ,, | १।४४ |
| ९. | ,, ,, | १।४७ | १०. | ,, ,, | १।२५ |

'उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नौवयौवनेने'—[ कुमार० १।३२ ] ति ।

१२. रामादिभिस्तदपत्यैश्च परित्यक्तायामयोध्यायां चित्रलिखितान् द्विपान् सत्यान् मन्यमानाः सिंहास्तेषु प्रहरन्ति—

'चित्रद्विपाः पद्मवनातीर्णाः
करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः
संरब्धसिंहप्रहृतं वहन्ति ॥ रघु० १६।१३ ॥

१३. अयोध्यायाः सद्मानि चित्रवन्ति सन्ति—

तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखान्यभूवन् ॥
[ रघु० १४।२५ ]

१४. अलकाया भवनान्यपि चित्रवन्ति—

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ इति ।

१५. भवनेष्वेषु विद्यमानानि चित्राणि गवाक्षमार्गप्रविष्टैर्मेघैर्विक्रियन्ते । ततश्च तेषां गवाक्षमार्गान्मेघाः शङ्कास्पृष्टा इव निष्पतन्ति—

'नेत्रा नीता सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्कापृष्टा इव जलमुचस्त्वादृशा जालमार्गाद्
धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥' इति ।

## २. चित्रगता विशेषाः

शाकुन्तले चित्रनिर्माणप्रक्रियापि प्रस्तूयते । तत्र षष्ठेऽङ्के शकुन्तलां

प्रत्यादिश्याङ्गुलीयकलाभेन संजातस्मृतिर्दुष्यन्तस्तद्वियोगनिमग्नहृदयस्तस्याश्चित्रं निर्माति। चतुरिका चित्रमिदमादाय प्रविशति तत्र चित्रगतानां विशेषाणामपि उल्लेखः कण्ठरवेणैव कविना क्रियते। चित्रं दृष्ट्वा विदूषकः कथयति—

साधु वयस्य मधुरावस्थानदर्शनीयो भावानुप्रवेशः, स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु।' इति।

एतच्च चित्रं स्वयं राज्ञैव निर्मितम्। अतएव सानुमती ब्रूते 'अहो एषा राजर्षेर्निपुणता, जाने सखी अग्रतो मे वर्तते इति'। राजापि यदा तच्चित्रं वीक्षते तदा कथयति—

'यद् यत् साधु न चित्रे स्यात्—
क्रियते तद् तदन्यथा।
तथादि तस्या लावण्यं
रेखया किंचिदन्वितम्॥ ५।१४॥ इति।

राज्ञा प्रियम्वदाऽनुसूयाभ्यां सह शकुन्तलाऽऽलिखिता। तत्रायं विशेषो यत् तिसृणामपि तासां रूपलावण्यनिर्माणं समानम्। ततः शकुन्तलामधिकृत्य कृतप्रश्नो विदूषको राज्ञा 'त्वं तावत् कतमां तर्कयसि' इति प्रतिपृष्टो ब्रवीति—

तर्कयामि यस्याः केशान्तः शिथिलबन्धनोद्वान्तकुसुमः, वदनमुद्भिन्नस्वेदबिन्दु, हस्तलतिके विशेषतोऽपसृते, अवसेकस्निग्धपल्लवो यः कोपि सहकारपादपस्तस्य पार्श्वे ईषत्परिश्रान्ताऽऽलिखिता सा शकुन्तला' इति।

अत्र विदूषकः सानुमतीमतौ मोघदृष्टिः, तथापि स यान् यान् विशेषानुपस्थापयति तानधिकृत्य सिद्धहस्तः कोऽपि कुशलः कारुरालेख्यमद्यापि निर्मातुं क्षमते। विदूषकस्य तर्कं साधुरिति ब्रुवता दुष्यन्तेनोच्यते—'भवता आकृतिमात्रं दृष्टं, न तु भावः।' प्रकाशयति च भावलक्षणं स्वयंमपि—'निपुणो भवान्, अस्त्यत्र मे भावचिह्नम्—

'स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।
अश्रु च कपोलपतितं दृश्यमिदं वर्त्तिकोच्छ्वासात्॥ ५।१५॥

अथ अङ्गुलीषु स्विन्नता, तदर्थं प्रान्तेषु मलिनता, वर्त्तिकोच्छ्वासः, तेन च संलक्ष्यः कपोलपतितोऽश्रुबिन्दुः' इत्येते ये विशेषास्ते चित्रकर्मणि कां नु सूक्ष्मतां प्रस्तुवन्तीति कुशलैरुत्प्रेक्ष्येत। तत्रापि राजा कथयति—'चतुरिके अर्धलिखितमेतद् विनोदस्थानम्, गच्छ, वर्त्तिकामानय' इति। मिथ्यात्वं च चित्रस्य प्रतिपद्यमानो यावत्।

'साक्षात् प्रियामुपगतामवमन्यमानश्चित्रार्पितां पुनरिमां बहु मन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य जातः सखे प्रणयवान् मृगतृष्णिकायाम्॥
[ ५।१६ ॥ इति ]

इति ब्रवीति तावत् स्थूलदृष्टिर्विदूषकः कल्पयति किन्न्वत्रावशिष्यते यस्य प्रतिपूर्त्तये वयस्य एष भूयोऽपि वर्त्तिकामानयती'—ति तत्र विदूषकेणैव प्रकाशं 'भोः अपरं किमत्र लिखितव्यम्' इति पृष्टः प्रतिब्रूते—

'कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां सखीम्॥'६।१७॥ इति।

अन्यच्च—शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः—

'कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम्।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे॥
३।१८॥ इति।

अत्र हि मालिन्यादि वस्तुचित्रणं विद्धचित्रनाम्ना प्रसिद्धमेव, हंसमिथुनावतारोऽत्र भावचित्रतायाः प्रभवः, कृष्णमृगस्य शृङ्गाग्रे वामनयनं कण्डूयमानां मृगीं विरच्य च रसध्वनिचित्रताऽत्र महामतिनानेन प्रसूता। मृगः कृष्णः अतः अविश्वास्यः, तस्यापि शृङ्गम्, तेनापि वामनयनस्य कण्डूयनम् अतिनिष्करुणत्वमात्मनो ब्रुवाणे दुष्यन्ते जातविस्रम्भायाः शकुन्तलाया एव प्रतीकभूतमि' ति दुष्यन्तोऽत्रात्मानमेवावतारयति ध्वनिसन्तानसाहस्रीं च प्रस्नुवाना दृश्येऽत्र तत्प्रतिभाकामगवी। सेयं पराकाष्ठां गतवती परिणतिश्चित्रकलायाः।

## ३. चित्रस्य प्रभावः

चित्रस्यास्य प्रभावमपि न न चित्रयति महाकविः। तथाहि भ्रमर-बाधाचित्रं दुष्यन्तेनालिखितम्। तत्र रक्तकुवलयपल्लववत् शोभमानमग्र-हस्तं, तेन मुखापवारणम्, चकितचकितत्वं च तस्या निरूप्य विदूषकः स्पष्टं ब्रूते 'आस्तत्र भवत्या मुखमभिलङ्घति मधुकर' इति। अत्र 'आः' इति पदेन सूच्यते विदूषकः शकुन्तलायाश्चित्रत्वं विस्मृत्य शकुन्तलात्व-मेव पश्यति। सेयमत्र चित्रस्य चित्रणीयतन्मयीभवनक्षमा। सेयमत्र दुष्यन्तमप्यान्दोलयति। स हि 'एष मधुकर' इति कथितमात्रो ब्रूते 'ननु वार्य एष धृष्टः'। इति 'भवानेवाविनीतानां शासितेति भूयोऽपि विदूषके-णोक्तो विस्मृतात्मा दुष्यन्तो मधुकरमामन्त्रयमाणो ब्रूते—' अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि—

'एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु त्वया विना पिबति ॥६।१९॥ इति।

विदूषकोऽपि विस्मृतात्मा दुष्यन्तदशामेव गतः कथयति—'प्रतिवारितापि वामैषा जातिः'। इति। दुष्यन्तो भूयोऽपि भ्रमरमेव शासितुमध्यवस्यति वक्ति—'एवं भोः, न मे शासने तिष्ठसि, श्रूयतां तर्हि संप्रति—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं दशसि चेद् भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ ६।२० ॥

इदानीं विदूषकश्चेतयते, दुष्यन्तस्तु तथैव तिष्ठति। तत्र विदूषको ब्रूते 'भोः चित्रं खल्वेतत्'। वचनेनानेन सानुमती दुष्यन्तश्चेति द्वयोरपि धाराधिरूढा भ्रान्तिर्निवर्त्तते। सानुमती कथयति—'अहमपीदानी-मवगतार्था'। दुष्यन्तस्य शकुन्तलासमाधिरनेन विदूषकवचनेन भज्यते। ततश्चासौ भर्त्सयन् ब्रवीति—

'वयस्य किमिदमनुष्ठितं पौरोभाग्यम्—

'दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥६।२ ॥

इति बाष्पं च नयनाभ्यां विसृजति। वाष्प एष मेघदूतस्य यक्षाय स्वं चरणपतितं लेखितुमिव दुष्यन्तायापि चित्रगतां शकुन्तलां द्रष्टुं न ददाति—

प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ ६।२२ ॥' इति।

सोऽयमतिभूमिमारूढः प्रभावश्चित्रस्य।

## ४. चित्रकलोपकरणानि

इत्थं कालिदासे चित्रकलायाः कानिचन उपदानानि कण्ठरवेणैवोल्लिखितानि लभ्यन्ते। तद्यथा—

१. कान्तिः,
२. सादृश्यातिशयः,
३. वैसादृश्यलेशः। एतेषु च कारणभूतः
४. समाधिर्नाम गुणविशेषः, स च चित्तवृत्तिनिरोधः, एकाग्रतारूपा। ततश्च वेद्यान्तरसंस्पर्शराहित्येन तन्मयीभवनद्वारा कारुकर्मणि प्रवृत्तिः,
५. कारोः हृदयस्याभिषङ्गः,
६. प्रभावः,
७. मिथ्यात्वं चेति।

अत्र यन्मुख्यतमं कारणं तद्धि वर्णद्रव्यम्। कालिदास इदानीं यावत् तत्रानधिकमवहितः। शकुन्तलाया एव सप्तमेऽङ्के तदपि सम्यक् चित्रयति। राज्ञो दुष्यन्तस्य पराक्रमं दिवौकसः कल्पलतांशुकेषु लिखन्ति। तत्र प्रश्नः। कथं वा लिखन्ति। तत्र मसी कीदृशी। कविरुदीरयति—

'विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु।
विचिन्त्य गीतिक्षममर्थबन्धं दिवौकसस्त्वच्चरितं लिखन्ति॥' इति।

अत्रापि चित्रमेव लिख्यते, किन्तु तत्र काव्याक्षराणामेव विषयत्वं न तु कस्यचित् प्रत्यक्षविषयस्य वस्तुनः।

वर्णद्रव्याणां विनियोगाय कविर्नानाविधानर्थानुपस्थापयति। तत्र मेघदूते—दशपुरजनपदवध्वो मेघं दृष्टिमुत्क्षिप्य पश्यन्ति। सोऽयमासा-

मुपरि दृष्टिक्षेपः कविनाऽनेनैवं चिश्यते—

'तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्री कुर्वन् दशमुखवधूनेत्रकौतूहलनाम् ॥ ५१ ॥ इति ।

मेघदूत एव वल्मीकाग्रात् इन्द्रधनुः प्रभवति। तत्र येऽनेके वर्णास्ता नुद्दिश्य कविः सहृदयहृदयहारि किञ्चदेवं चित्रयति मनोरमतमं चित्रम्—

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुष्खण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः ॥ इति ।

कृष्णवर्णो मेघस्तुषारावृते कैलाशश्रृङ्गे निषण्णः कीदृशो भाति—

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलाशस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
श्रृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ६२ ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृतद्विरददशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६३ ॥

कृष्णस्य मेघस्य श्यामा छाया अच्छस्फटिकविशदे भागीरथीजले प्रतिबिम्ब्यते। तत्र वर्णयोरनयोर्व्यतिकरमसौ 'अस्थानोपनतयमुनासङ्गमेन' चित्रयति—

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसिच्छायायासौ
स्यादस्थानोपनतयमुना—संगमेवाभिरामा ॥ ५५ ॥

गङ्गायमुनयोः सितासितत्वं रघुवंशे चित्रितवानेवैषः—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव॥
क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव॥
क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य।
पश्यानवद्याङ्गि! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः॥

—[ रघु० १३।५५-५७ ]

एवंविधान्यन्यान्यपि बहूनि स्थलानि कालिदाससाहित्ये सुखेनैव सुमेधोभिर्गवेषयितुं शक्यन्ते। तत्र सानुमतीदृष्ट्या विमृश्यमाने काँस्कान् न विशेषानुपलभामहे, यावद् विदूषकदृष्ट्यापि प्रतिपादित-चरया कतिपयान् विशेषानवश्यमेवोपलभामहा एव। तत्र

रूपभेदाः प्रमाणानि भावलावण्ययोजना।
सादृश्यं वर्णिकाभङ्ग इति चित्रं षडङ्गकम्॥

इति कामशास्त्रस्य जयमङ्गलयोपस्थापितया चित्रकारिकया यानिमान् षड् विशेषान् प्रतिपद्यामहे तेषां प्रत्येकं कालिदाससाहित्यस्य नायकानां नायिकानां च विशेषणेषु गवेषयितुं शक्यत एव।

इत्थं कालिदासस्य काव्यकलायां चित्रकला कियन्न अलङ्कारत्वमश्नुत इति प्रेक्षावन्तः सुखमुन्नयेरन्।



# नानाजीववादः

बाबूलालशर्मा

दार्शनिकैः मनीषिभिः बहुकालात्पूर्वमेव यदेतत्स्थिरीकृतं यदस्मिन् शरीरे भौतिकतत्त्वराशितोऽतिरिक्ता चेतनस्यैकस्य आत्मनोऽपि सत्ता विद्यते, मन्ये तदेव शरीरभेदेन आत्मनो वा जीवस्य वा भेदोऽपि तैः स्वीकृतः। एतस्य आत्मविमर्शस्य परिष्कृतं रूपं मुण्डकोपनिषदि 'द्वा सुपर्णा सयुजा सखाया'[1] इत्यस्मिन्मन्त्रे ईश्वरस्य तथा 'अजोह्येकं जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः'[2] इत्यादिषु च मन्त्रेषु आत्मनः नानात्वदर्शनं परिलक्षितं दृश्यते। आत्मवादिषु दर्शनेषु उपर्युक्तान् मन्त्रान् उपजीव्यभूतान् कृत्वा जीवनानात्वमतं स्थापितम्। सांख्यदर्शने 'पुरुष बहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव'[3] इत्यादिभिः कारिकाभिः तन्नानात्वं स्पष्टमुद्घोषितम्। न केवलमेतावदेव, अपितु न्याय-वैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसादर्शनेषु बाहुल्येनैतस्यैव मतस्य पुष्टिः दरीदृश्यते। तस्य यत्किञ्चिदिह निदर्शनं नानुचितं प्रतिभाति।

*न्यायदर्शनम्*—एकात्मवादस्य एकजीववादस्य वा साधनप्रसङ्गे वेदान्तिनः आकाशस्य ऐक्यं स्वीकृत्य घटाद्यवच्छेदभेदेन तस्य काल्पनिकं भेदं वास्तविकञ्चाभेदं प्रतिपादयन्ति। तन्निराकरणाय अनेकजीववादं स्वीचिकीर्षुः जयन्तभट्टः एवमाह—[4] 'यत्तु ब्रह्मणः सततप्रबुद्धत्वादविद्याश्रयता नेति जीवानामविद्यास्पदत्वमभिहितमविद्योपरमे ब्रह्मणि परमे त एव घटाकाशवल्लीयन्ते इति तदपि न चतुरस्रमाकाशावच्छे-

---

१. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यं पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥ (मुण्ड ३.१.१)

२. अजामेकां लोहितशुक्लकृष्णां, बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः॥ (श्वेताश्व० ४.५)

३. जनन-मरण-करणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुष-बहुत्वं सिद्धं त्रैगुण्य-विपर्ययाच्चैव॥ (सां. का० १८)

४. न्यायमञ्जरी' काशी, सं. १९५१, पृ. ५३०.

दहेतोर्घटादेः सत्त्वादविद्यायास्त्वसत्त्वात्तत्कृतः परमात्मनोऽवच्छेद इति विषमो दृष्टान्तः। अवच्छेदकत्वाभावाच्च जीवविभागकल्पनापि निरवकाशैव।"

महर्षिः अक्षपादोऽपि अद्वैतवादखण्डनाय एवं सूत्रितवान्—"सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्" (४.१.४१)। अथ चास्यैव सूत्रस्य तात्पर्यटीकायां वाचस्पतिमिश्राः एवमाहुः—[1] "प्रमातारश्चानेकविधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धकाणादिकोविदजाल्मसंसारिमुक्तविभागोपपत्तेश्च भेदवन्तोऽनुमीयन्ते। एकस्मिन्नपर्यायेण विरुद्धधर्मसंसर्गासम्भवात्। कल्पनया कथञ्चित् सम्भाव्यमानोऽप्ययं गोमयपायसीयन्यायमावहति। तदेवं प्रत्यक्षविरोधादनुपपन्नार्थाः श्रुतयः 'एकमेवाऽद्वितीयमि' त्याद्याः प्रथमां वृत्तिमुल्लङ्घ्य जघन्यामवलम्बते। 'यजमानः प्रस्तरः' 'आदित्यो वै यूप' इत्यादिवदिति। यदाह भगवान् जैमिनिः—गुणवादस्त्विति तत्सिद्धिरिति' चेति, तस्मान्नाद्वैतमिति। साध्यात्साधनस्य भेदेन च संख्यान्तरैकान्ता अप्यपह्नतार्था इत्युक्तम्।"

*वैशेषिकदर्शनम्*—महर्षिः कणादो जीवनानात्वसिद्ध्यै सूत्रद्वयं सूत्रितवान्—'व्यस्थातो नाना' (वै० सू० ३.२.२०) 'शास्त्रसामर्थ्याच्च' (वै. सू. ३.२.२१)। एतयोः व्याख्यायां शङ्करमिश्रेण कथितम्—[2] "नाना आत्मानः। कुतः व्यस्थातः। व्यवस्था प्रतिनियमः यथा कश्चिदाढ्यः, कश्चिद् रङ्कः, कश्चित्सुखी, कश्चिद्दुःखी, कश्चिदुच्चाभिजनः, कश्चिद्विद्वान्, कश्चिज्जाल्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपपद्यमाना साधयत्यात्मनां भेदम्। न च जन्मभेदेन बाल्यकौमार्यवार्धकभेदेन वा, एकस्याप्यात्मनो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यम् कालभेदेन विरुद्धधर्माध्याससम्भवात्। प्रमाणन्तरमाह—शास्त्रं श्रुतिः तथाप्यात्मनो भेदप्रतिपादनात्। श्रूयते हि 'द्वे ब्रह्मणी वेदितव्ये' इत्यादि तथा 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते'इत्यादि च।"

---

१. न्यायवार्तिकतात्पर्यटीका, चौखम्बा संस्कृत सीरीज. सं. १९८३, पृ. ६१८.

२. वैशेषिक सूत्रोपस्कार चौखम्बा, १९२३, पृ. ११४–१५,

वादिवागीश्वराचार्यः स्वकीये मानमनोहरग्रन्थे एवमाह—[१] "तस्य चानेकत्वम्; व्यवस्थान्यथानुपपत्तेः अनिर्वचनीयत्वे निराकृते जीवभेदेऽविप्रतिपत्तेश्च। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यं पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्डको० ३.१.१.) इतिश्रुतेः। अस्यार्थः—द्वा सुपर्णौ आत्मानौ सयुजौ = सहवर्तमानौ सखायौ = एककार्यकारित्वेन, समानं वृक्षम् = एकशरीरं परिषस्वजाते = आलिङ्गितवन्तौ। तयोरात्मनोर्मध्ये एको = भोक्ता पिप्पलं स्वादु अत्ति = सुखविशेषं भुङ्क्ते। अनश्नन् अन्यः = अभोक्ता ईश्वरः अभिचाकशीति = सर्वतोऽत्यर्थं प्रकाशते इति विस्पष्टो जीवब्रह्मणोर्भेदः। 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (श्वेताश्व० ४.५) इतिवत् न च श्रुतिप्रतीतोऽन्यथा भवितुमर्हति।

कथं तर्हि "नेह नानास्ति किञ्चन" (बृ० ४.४.१९) इति, "मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति" (कठ० ४.१०) इति च लिङ्गात् नानात्वदर्शने तदभावोपचारात्। न च सति प्रयोजने निमित्ते चोपचारः प्रवर्तते, न चात्र प्रयोजनमस्तीति वाच्यम्; नियमासिद्धे। अज्ञातमुख्येषु व्यवहारादिषु गौणशब्दप्रयोगेषु तदभावात्। सत्ताबोधकलाक्षणिकं गोशब्दे च यथा गौर्वाहीकः। यथाहुर्वार्तिककाराः—

बहुजाति-गुणद्रव्य-कर्म-भेदावलम्बिनः।
प्रत्ययान् सहसा जातान् श्रौतलाक्षणिकात्मकान्॥
न लोकः कारणाभावान्निर्धारयितुमिच्छति।
बलाबलादिसिद्ध्यर्थं वाक्यान्नात्र विविक्षते॥ (श्लोकवार्तिक)

अस्मदादि गौणप्रतीतेर्हि चिन्ता वृद्धव्यवहारागतेषु गौणप्रयोगेषु कोऽयमाग्रहः, यथा सर्षपरसे तैलशब्दः। मुख्येषु बाधकाभावात् कथमुपचार इति नाशङ्कनीयम्; प्रत्यक्षेण श्रुत्या च भेदप्रतीतेः। आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना, अश्रावणविशेषगुणाधिकरणत्वात्, पृथि-

१. मानमनोहर, षड्दर्शनप्रकाशन प्रतिष्ठानम्, वाराणसी, १९७३.

व्यादिवत्। तत्र न मूर्तत्वमुपाधिः, रूपादौ तदभावेऽपि साध्यानुगम-दर्शनात्।"

*सांख्ययोगदर्शनम्*—महामनीषी सांख्याचार्यः ईश्वरकृष्णोऽपि जीव-नानात्वसिद्ध्यै इमं हेतुराशिं प्रायुङ्क्त—

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ (सां. का. १८)

एतत्कारिकाव्याख्यावसरे युक्तिदीपिकाकारश्चैवमाह—[1] "जन्मलक्षणञ्च-मरणलक्षणञ्च कार्यकारणस्यावस्थाऽन्तरं परस्परविरोधि, तमः प्रकाशवत्। तत्र यद्येक आत्मा स्यात् तेन यथैकं द्रव्यं तमःप्रकाशावेकप्रदेशोपनिपातिनौ न शक्तोऽत्यनुभवितुमसम्भवात्। एवम् जन्ममरणे अपि न शक्नुयादुप-भोक्तुम्। अस्ति चायं केनचित् कार्यकारणेन जन्मोपभोगः केनचिन्म-रणोपभोगः। तेन मन्यामहे नाना आत्मानः, येषां विरोधिधर्मोपभोग-सामर्थ्यमिति। तथा करणानां प्रकाशातिशयो विषयग्रहणलक्षणोऽशुद्-ध्यतिशयश्चाष्टाविंशतिधाऽशक्तिः, तयोः परस्परविरोधादेकेनात्मना युगपदुपभोगो नोपपद्यते। न हि शक्यमेकेनात्मना प्रकाशातिशयो विषयग्रहणलक्षणोऽशुद्ध्यतिशयश्चाशक्तिलक्षणो विरोधित्वात् युगपदुप-भोक्तुम्। अस्ति चायं करणनिमित्तः प्रतिपुरुषं नियमः, तेन मन्यामहे—नाना आत्मान इति।

किञ्चान्यत्- अयुगपत् प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम्। कस्मात्—अयुगपत् प्रवृत्तेः प्रधानस्येति शेषः। यस्य प्रवृत्तिरुपपद्यते—कस्य प्रवृत्तिरुपपद्यते प्रधानस्य, कथमित्युच्यते। यद्येक आत्मा स्यात् तेनैक-पुरुषाधिकारनिबद्धं प्रधानम्। शक्तश्चासौ युगपदनेकानि शरीराणि उपभोक्तुमित्यतो यावद्भिः शरीरैरपचितासु कालमात्रास्वस्मिन् भव-परिवर्ते भवितव्यं सर्वेषामुत्पत्तिं प्रति युगपत् प्रर्वेतत। दृष्टा तु प्रधानस्य अयुगपच्छरीरभावेन प्रवृत्तिः। तस्मादयुगपत् प्रवृत्तेश्च नाना आत्मान इति।

---

१. युक्तिदीपिका, कलकत्तासंस्कृत सीरीज, ग्रन्थाङ्क २३, १९३८, पृ. ९८.९९.

सांख्यसूत्रकारेणाप्युक्तम्—'जन्मादि व्यवस्थातः पुरुषबहुत्वम्' ( सां० सू० १.१४६ ) जन्मादिसम्बन्धे आक्षेपपरिहारस्तु भाष्यकृता एवं कृतः[१]—"ननु पुरुषो निर्धर्मकस्तत्र कथं जन्ममरणकरणबन्धमोक्षादि-विरुद्धधर्मसाङ्कर्यमापद्यते भवद्भिरपि सर्वेषां धर्माणामुपाधिनिष्ठत्वाभ्यु-पगमादिति चेन्न। उक्तधर्माणां संयोगवियोगभोगाभोगरूपतया पुरुषे स्वीकारात्। परिणामरूपधर्माणामेव पुरुषे प्रतिषेधस्योक्तत्वादिति तत्रैव 'उपाधिभेदाज्जीवभेदः' इत्येतन्मतमपि कैश्चित्स्थापितम् 'उपाधिभेदेऽ-प्येकस्य नानायोग आकाशस्येव घटादिभिः' ( सां० सू० १-१५० )। तच्चैवं परिहृतम्—'उपाधिर्भिद्यते न तु तद्वान्' ( सां० सू० १-१५१ )। अतः जन्ममरणादिविरुद्धधर्माणां वास्तविकः आध्यासिको वा सम्बन्धः एकस्मिन् आत्मनि न स्थापयितुं शक्यते 'एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः' ( सां० सू० १-१५२ ) 'अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात्' ( १.१५३ )। बन्धमोक्षव्यवस्थयाऽपि आत्मनो नानात्वं सिद्धं भवति सूत्रकारेणोक्तम्—'पुरुषबहुत्वं व्यवस्थातः' ( सां० सू० ६.४५ )। अस्य च भाष्यम्—'ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्तीत्या'दि श्रुत्युक्तबन्धमोक्षव्यवस्थात एव पुरुषबहुत्वं सिद्ध्यतीत्यर्थः।' उपाधिभेदव्यवस्थाशङ्कापि तत्र एव समाहिता— "उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम्' ( सां० सू० ६.४६ ) द्वाभ्यामपि प्रमाण-विरोधः' ( सां० सू० ५.४७ )।

अद्वैतवादमाक्षिप्य सांख्यसूत्रकारः कथयति—'वामदेवादिर्मुक्तो नाद्वैतम्' ( १.१५७ )। यदि वामदेवादीनां मोक्षप्रतिपादनमर्थवादमात्रं तर्हि भविष्यत्यपि कश्चिन्मुक्तो भविष्यतीति न सम्भाव्यते—'अनादाव-द्ययावदभावाद् भविष्यदप्येवम्' ( सां० सू० १.१५८ )।

*पूर्वमीमांसादर्शनम्*—जैमिनीयं मीमांसादर्शनमपि आत्मनो नानात्वं प्रतिपाद्य तत्र विविधकर्मणामधिकारित्वकम् एककर्मजन्यफलभोक्तृत्वञ्च स्थापयति। पार्थसारथिमिश्राः स्पष्टमुद्घोषयन्ति[२]—तस्मात् प्रति-

---

१. सांख्यप्रवचनभाष्यम्, भारतीय विद्याप्रकाशन, वाराणसी, पृ. १०४

२. शास्त्रदीपिका, निर्णयसागर प्रेस, १९१५, पृ. १२५, सू. १.१.५

शरीरं भिन्ना एवात्मानः सर्वगता नित्याः एवञ्च बद्धमुक्तादिव्यवस्थापि युक्ततरा भवति ।"

प्राभाकरः शालिकनाथमिश्रोऽपि एकात्मवादं सम्यगालोच्य नानाजीववादं स्थापयति—[३] "आह—विभुत्वञ्चेदात्मनः, तदा सर्वशरीरेष्वेक एवाऽऽत्मास्तु गगनवत् । यथा गगनमेकमेव घटमणिकादितत्तदनेकसम्बन्धि, तथाऽऽत्मापि किं नाभ्युपेयते, किं प्रत्यायतनं भेदाभ्युपगमेन । उच्यते—यस्तावत्प्रतिपत्ता परायतनस्वामिनं स्वप्रयत्नपूर्वकात्मीयशरीरसमवेतकर्मसमानचेष्टादर्शनादनुमानतः प्रत्येति प्रयत्नवत्तया, नाऽसौ तं ग्राहकैकरसतया, किन्तु ग्राह्यकोटिनिविष्टमनात्मभूतमेव । तेन प्रतीतिसिद्धत्वाद्भेदस्य, अलं भेदाभ्युपगमेनेति वचनमकिञ्चित्करम् । न हि परायतनस्वामिनि स्वमित्येवमनुमानमुदेतुमलम् । यथा मम शरीरे मदीयप्रयत्नपूर्विकाचेष्टा, तथा परशरीरेऽपि मत्प्रयत्ननिबन्धनैवेति प्रत्यक्षविरोधात् । प्रत्यक्षेण हि स्वात्मनि समन्वयप्रयत्न उपलभ्यते । न च परशरीरचेष्टानुगुणः प्रयत्नस्स्वात्मनि पुरुषाणां प्रत्यक्षीभवतीति, पर एव प्रयतिता परशरीरेऽनुमीयते । नन्वेवमनुमानेन परात्मप्रतीतौ, कथमिदमुच्यते 'अगृह्यो न हि गृह्यते" ( बृ० उ० आ० ४, ब्रा० २, ख० ४ ) इति । परेण न गृह्यत इत्येतदभिप्रायमेतद्भवतीत्युच्यते ग्राहकैकरसतया परेण न गृह्यत इति तस्यार्थः, तस्मान्न विरोधः ।

किञ्च नानाव्यवस्थाना नानाभूताः प्रतिक्षेत्रं पुरुषाः, धर्माधर्मसुखदुःखादिव्यवस्थादर्शनात् । अन्यथा ह्येकस्य धर्माधर्मोदयस्सर्वस्य भवेयुः ।"

*जैनदर्शनम्*—अवैदिकं जैनदर्शनमपि आत्मवादि । तन्मतेऽपि जीवः चेतनः नित्यः परिणामी वा । आचार्य उमास्वातिः जीवलक्षणमेवमाह—

'उपयोगो लक्षणम्' ( त० सू० २.८ )

---

३. प्रकरणपञ्चिका, बनारस हिन्दू यूनिवर्सिटी, १९६१, पृ. ३४४.४५

तत्रैव जीवस्य अनेके भेदा अपि प्रदर्शिताः—"औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ ।"

"द्विनवाष्टादशैकविंशति त्रिभेदा यथाक्रमम् ।"

इत्येवमेभिर्निदर्शनैः स्पष्टं परिलक्ष्यते यत् बाहुल्येन सर्व एव आत्मवादिनो दार्शनिकाः नानाजीववादमेव स्थापयन्ति ।

# पदस्वरूपसमीक्षा

*जगदीशचतुर्वेदी*

तत्र तावत् पद्यते = गम्यते अर्थात् ज्ञायते अर्थो येनेति व्युत्पाद्या घञ्प्रत्यये संज्ञापूर्वकत्वादत्र वृद्ध्यभावे पदशब्दस्य सिद्धिर्भवति। एतेन यजुर्वेदप्रातिशाख्यप्रोक्तम् *"अर्थः पदम्"*[1] इति पदलक्षणं सङ्गतं भवति, यतोहि अर्थोऽस्ति यस्मिन्नित्यर्थे अर्थशब्दो वर्तते। ततश्च यो वै सार्थकः शब्दः अक्षरसमुदायः अक्षरं वेति तत्पदमिति तदाशयः। अथवा शब्दार्थयोरितरेतराध्यासाद् *"अर्थः पदमिति"* विज्ञेयम्, यतोहि *"पदं श्रुतं* पदार्थं शृणु, अर्थं वदति" इत्यादि व्यवहारस्तयोरितरेतराध्यासबलेन प्रसिद्धः तस्माद् वाच्योऽर्थः कथं पदसंज्ञक इति नाशङ्कनीयमिह विज्ञैः। अतएव तत्राष्टमाध्याये *"अक्षरसमुदायः पदम् अक्षरं वा"*[2] इति पुनः पदलक्षणनिर्धारणं सङ्गतमेव नतु विरुद्धम्। तत्र रामः, कृष्णः, इत्यादि अक्षरसमुदायस्योदाहरणम्। अ, ई, उ वर्णाः अक्षरपदस्योदाहरणमिति। एते वर्णा अपि स्वतन्त्ररूपेण वाचकाः सन्ति, तत्र अकारो वासुदेवस्य वाचकः, ईकारो लक्ष्म्याः उकारश्च शम्भोरिति सुप्रसिद्धम्।

पदस्वरूपनिर्धारणविषये सन्ति पुरातनानां पदतत्त्वज्ञानां बहुविचाराः। तत्र केचनेह संगृह्यन्ते प्रथमं तावत् पदलक्षणानि प्रातिशाख्येष्वेवं मिलन्ति। तथाहि तैत्तिरीयप्रातिशाख्ये *"एकवर्णं पदमिति"*[3] यत्तु *"एकवर्णः पदमपृक्तः"* इत्येवं सूत्रस्वरूपं मत्वा नेदं सूत्रं पदसंज्ञाविधायकम्, अपितु अपृक्तसंज्ञाविधायकमिति वदन्ति, तदपि सत्यम्, यतोहि क्वचित् तथाविधपाठोऽपि समुपलभ्यते, किन्तु एकवर्णः पद-

---

१. शु० यजु० प्रा० अ० ३ सू० २

२. शु० यजु० प्रा० अ० ८ सू० ४१।४२

३. तै० प्रा० अ०.१ सू० ५४ मद्रपुरीय विश्वविद्यालयस्थ संस्कृतकार्यालयात् १९३० ई० प्रकाशितम्

मत्येकिं सूत्रम्। अन्यच्च तदनु *"सोऽपृक्तसंज्ञः"* इति पृथक् सूत्रमपि प्रसिद्धमस्ति। तत्र सूत्रद्वयमिति पक्षः एव साधु भाति, यतोहि एकवर्णः पदमपृक्तः इत्येकसूत्रपाठेऽपि एकवर्णः पदमुद्दिश्य अपृक्तसंज्ञा विधीयते। ततः एकवर्णस्य पदत्वं तन्मतेऽपि अविरुद्धमेव। अपिच शुक्लयजुर्वेदप्रातिशाख्यप्रोक्तम् *"अक्षरं वा"* पदमित्यनेन समन्वयोऽपि भवति। अतः एकवर्णः पदमिति पृथगेव पदविधायकं सूत्रमिति मन्तव्यम्। बृहद्देवतायाञ्च *"वर्णसंघातजं पदम्"*[1] इति। तदेवं समुपलभ्यमानेषु प्रातिशाख्येषु वर्णसमूहो वा पदमिति समानमेव लक्षणं प्रतिभाति। तत्र वाचको वर्णः, वर्णसमूहो वा पदमिति यजुर्वेदप्रातिशाख्यप्रोक्तेनार्थः पदमिति लक्षणेन, अन्येषामपि प्रातिशाख्यप्रोक्तलक्षणानां समन्वयो भवति, यतोहि अर्थवत् पदमिति तेषामभिप्रायः। तत्पदञ्च वर्णः, वर्णसमूहो वा भवतु। अत्र वर्णशब्देन उपसर्गाणां निपातानामपि ग्रहणं भवति। यतस्तेऽपि पदसंज्ञकाः सन्ति। यद्यपि ते सर्वे न साक्षाद् वाचकाः किन्तु द्योतकाः इति सिद्धान्तः पुनरपि द्योत्यमर्थमादायापीह पदलक्षणमिष्यते। अतः *"अर्थः पदमिति"* यजुर्वेदप्रातिशाख्यप्रोक्तपदलक्षणस्यायमेवाशयो विद्यते यत् शास्त्रव्यवहारे सामान्यरूपेण यत्रार्थवत्त्वं स्वीक्रियते, तत्र पदत्वं संगच्छते। एवञ्च शक्यद्योत्ययोरुभयोरप्यर्थयोः पदलक्षणे ग्रहणमिति बोध्यम्।

एवं पुराणादावपि—

वर्णैर्वर्णसमूहं हि पदमाहुर्विपश्चितः।
वर्णास्तु भुवनैर्व्याप्तास्तेषां तेषूपलम्भनात्॥[2]

इति शिवपुराणे वर्णसमूहो हि पदमिति निश्चितम्। तथा कौटिल्यार्थशास्त्रेऽपि *"वर्णसंघातः पदम्"*[3] इति पदलक्षणमुपलभ्यते। अपि च न्यायमञ्जर्यां जयन्तभट्टेनापि "वर्णसमूहः पदम्"[4] इति पदलक्षणं प्रोक्तम्।

---

१. बृहद्देवता अ० २ का० ११७

२. पु० पू० वा० सं० १२२ श्लो०

३. कौ० अर्थशा० २ अधि० १० अ० १६ सू०

४. न्याय म० आ० ६ पदस्वरूपनिरूपणे

अत्रेदमवगम्यते यत् प्रातिशाख्येषु एकाक्षरवर्णस्यापि पदत्वमङ्गीकृतम्, किन्तु तदनन्तरं पूर्वोक्तपुराणादिग्रन्थेषु वर्णसमूहः पदमिति पदलक्षणमेव जातम्, यतो लोके वर्णसंघात एव पदमिति तेषां तात्पर्यम्। ततश्चेह लोकमेवानुसरन्ति पुराणादिप्रोक्तपदलक्षणानि। एतावता एकवर्णः पदमित्यस्य खण्डनं न मन्तव्यम्, पदशास्त्रव्यवहारे एकवर्णेऽपि पदशब्दप्रवृत्तिदर्शनात्।

एवमग्रेऽपि प्रातिशाख्यमतमनुसरन्तः केचन आलङ्कारिका अपि तत्पदलक्षणं स्वीकुर्वन्ति। तथाहि साहित्यदर्पणे विश्वनाथेन—

*"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः"*[1]

इति पदलक्षणं स्वीकृतम्। तत्र एतत्पदस्वरूपं प्रातिशाख्योक्तपदस्वरूपतोऽव्यापकमस्ति। यतो ह्यत्र न केवलं वर्णाः पदम्, किन्तु ये वर्णाः प्रयोगार्हाः, अनन्वितैकार्थबोधकाश्च सन्ति त एव पदमिति तदभिप्रायः। दर्पणोक्तपदलक्षणात् पूर्वं काव्यालङ्कारसूत्रवृत्तौ वामनाचार्येण *"अतिप्रयुक्तं देशभाषापदम्"*[2] इति सूत्रितम्। तद्वृत्तौ च अतीव कविभिः प्रयुक्तं देशभाषापदं प्रयोज्यम्, यथा *"योषिदित्यभिललाष न हालाम्"* इत्यत्र हालेति देशभाषा पदम्। अनतिप्रयुक्तं तु न प्रयोज्यम्, यथा—

"कङ्केली काननालीरविरलविलसत्पल्लवा नर्तयन्त" इत्यत्र कङ्केली शब्दः न पदभाग् भवति, कविभिरनङ्गीकारात्।" तत्पदलक्षणञ्च मन्ये देशभाषाप्रयुक्त-पदसंग्रहार्थमेव जातम्। यतोहि कविभिः काव्येषु येषां देशभाषापदानामप्युपयोगः कृतस्तेषां संग्रहार्थमेवेदं सूत्रम्।

काव्यमीमांसायां राजशेखरेण "व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निदिष्टस्तदभिधेयोर्थस्तौ पदम्"[3] इति प्रोक्तम्। अत्र व्याकरणस्मृतिनिर्णीतः शब्दो वाचकः द्योतको वा भवतु, इति नाग्रहः, किन्तु अर्थोऽपि पदसंज्ञक इति तदाशयः। तस्मादत्र शब्दार्थौ

१. सा० दर्पणे २ परि० वा० स्व० नि० सूत्रे

२. काव्यालङ्कारसूत्रवृत्तिः अधि० ५ अ० १ सू० १३

३. का० मी० अधि० ५ अ० १ सू० १३

पदमिति पदलक्षणं पूर्वोक्तप्रातिशाख्यमतमन्वेति । काव्ये शब्दस्य अर्थस्य च स्वतन्त्ररूपेण प्राधान्यमस्ति, यतस्तावुभावपि व्यञ्जकौ स्तः ।

जैनाचार्या अपि विशेषणविशिष्टमेव पदलक्षणं वदन्ति । तत्र प्रमेयकमलमार्तण्डे प्रभाचन्द्रमहोदयेन "वर्णानां परस्परापेक्षाणां निरपेक्षः समुदायः पदम्"[1] इत्युक्तम् । अर्थात् परस्परापेक्षवर्णा समुदाये निरपेक्षाश्च पदमिति तदभिप्रायः । तदेवं पूर्वोक्तविशेषणविशिष्टलक्षणैः निरर्थकशब्दानां पदत्वव्यवहारः निराकरणमेव कृतमिति सम्यगवगम्यते । यतो लक्षणे विशेषणपदं व्यावर्तकमेव भवतीति प्रसिद्धम् । वैयाकरणानां तु पदलक्षणं प्रत्याहारेणैव प्रायः समुलभ्यते । तत्र वैयाकरणशिरोमणिर्महर्षिः पाणिनिः पदलक्षणं सुप्तिङन्तं पदमिति प्रत्याहारं पुरस्कृत्य प्रोक्तवान् । तत्र सुप्प्रत्याहारेण "स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्"[2] इत्येकविंशतिः प्रत्ययाः संगृह्यन्ते । एवं तिङ् प्रत्याहारेण "तिप्तस्झि सिप्थस्थ मिप् वस् मस् तातांझ थासाथां ध्वमिड् वहिङ् महिङ्"[3] इत्येतेऽष्टादश लादेशाः समवगृह्यन्ते । तत्र सुप्प्रत्याहारः प्रातिपदिकशब्दात् परो भवति, यथा रामः रामौ रामाः, एवं तिङ्प्रत्याहारश्च धातोः पर एव भवतीति सिद्धान्तः । यथा भवति भवतः भवन्ति, इत्यादिषु । सुप्तिङौ च प्रत्याहाराविति पाणिनीयपदशास्त्रमनुसरन्तः सर्वदा स्मरन्ति । यतः पदज्ञानं विना साधुशब्दप्रयोगो न भवति, विना साधुशब्दप्रयोगञ्च स शब्दः कामधुग् न भवति । साधुशब्द एव स्वर्गे लोके च कामधुगिति महर्षिपतञ्जलिना महाभाष्ये उद्घोषितम् । "एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति"[4] इति ।

भगवतः पाणिनेरनन्तरं प्रायः सर्वे शाब्दिकाः सूत्रशैलीमनुसरन्तो मुनयो विवेचकाः विद्वांसश्च प्रत्याहारेणैव पदलक्षणं स्वीकुर्वन्ति । किञ्च

---

१. प्र० क० मा० परोक्ष प्र० वा० सू० ३।१०१

२. अष्टाध्यायी अ० ४ पा० १ सू० २

३. ,, अ० ३ पा० ४ सू० ७८

४. महाभाष्यम् अ० ६ पा १ सू० ८४ एकः पूर्व परयो

महर्षेः पाणिनेरिदं पदलक्षणं बहुव्यापकमस्ति। यतो वार्तिककारः कात्यायनोऽपि "विभक्त्यन्तं पदम्"[1] इति मन्यते। व्याकरणशास्त्रे "विभक्तिश्चेति"[2] सूत्रमस्ति। तत्र विभक्तिपदेन सुप्तिङौ गृह्येते तस्मात् सुबन्तं तिङन्तञ्च पदमिति फलितम्।

एवं नाट्यशास्त्रे भरतमुनिनापि "विभक्त्यन्तं पदम्"[3] इति प्रोक्तम्। तथा नैयायिकप्रवरेण महर्षिणा गौतमाचार्येण न्यायसूत्रे "ते विभक्त्यन्ताः पदमिति"[4] सूत्रितमेव। अत्र सुप्तिङन्तं पदम्, विभक्त्यतं पदमित्यादि स्वरूपनिर्णये चोपसर्गनिपातयोरपि पदत्वमस्त्येव। यद्यपि तत्र विभक्तिर्नावलोक्यते, पुनरपि सुब्विभक्तिस्ततः समायाति, तदनन्तरं तल्लुक् च भवति। अतो लुप्तविभक्तिकशब्दा अपि पदमिति मन्तव्यम्। एवञ्च प्र परा अप इत्याद्युपसर्गाणाम्, च ह वेति निपातानां भू, पच पठ नद इत्याख्यातानाञ्च पदत्वमिति सिद्धान्तः। अतएव तद्भाष्यम् "यथा दर्शनम् विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्ति द्वयी नामिकी अख्यातिकी च ब्राह्मणः पचति इत्युदाहरणम्"[5]। उपसर्गनिपातस्तर्हि न पदसंज्ञा, लक्षणान्तरं वाच्यमिति ? शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः पदसंज्ञार्थमिति पदेनार्थसम्प्रत्यय इति प्रयोजनं सङ्गच्छते। ते विभक्त्यन्ताः पदमिति सूत्रव्याख्याने न्यायवार्तिकतात्पर्ये श्रीवाचस्पतिमिश्रमहोदयेन त एव = वर्णा एव पदं न तद्व्यतिरिक्तं स्फोटाख्यमिति, एव पदं तत्र दत्वा साधु विवेचितम्। तच्चेह विस्तरभयान्नेह संगृह्यते। सिद्धान्ततः तन्मते वर्णा एव पदम्। ततोऽपि बोधदर्शनादिति भावः।

अन्यत्र न्यायशास्त्रे च "वृत्तिमत्त्वं पदत्वं"[6] "शक्तं पदम्"[7] वेति पद-

---

१. ,, अ० १ पा० २ सू० ६४ वा० १८

२. अष्टाध्यायी १।४।१०४

३. नाट्यशास्त्रम् १५।का० ३६

४. न्यायदर्शनम् २ अ० २ आ० ६० सू०

५. ,, ,, वात्स्यायनभाष्ये २।२।६०

६. शब्दशक्तिप्रकाशिकायां नामनिरूपणम्

७. न्या० सि० मु० श० ख० पदविभागे

स्वरूपम् मिलति। किन्तु तत्पदशब्देन नाम्न एव ग्रहणं बोध्यम्। यतः श्रीमज्जगदीशतर्कालङ्कारभट्टाचार्येण प्रकृतिभेदनिरूपणप्रसङ्गे नाम्नः स्वरूपनिर्धारणे पदं विभक्त्यन्तमित्येव स्वीकृतम्। कृष्णकान्ती टीकायाञ्च स्पष्टमिदमुक्तं यत् ननु पदत्वं शक्तिमत्त्वं तदा समासस्यातथात्वात्, अर्थात् नैयायिकनये समासे शक्त्यभावात् विभक्तिसहकारेणापि कथं तत्प्रयोग इत्यत आह, पदं विभक्त्यन्तमिति। अपि च यत्र शक्तं पदम् इत्युक्तम्, तत्र पदविभागे नाम्नः एव विभागः कृतो वर्तते। तद्यथा—यौगिकं, रूढं, योगरूढं यौगिकरूढमिति चतुर्विधं पदं लभ्यते। एतावता न्यायसूत्रोक्तपदलक्षणेनेदं पदलक्षणं विलक्षणमिति न मन्तव्यम्।

पाणिनीयव्याकरणेतरव्याकरणेष्वपि पदलक्षणं प्रत्याहारसरणिमेवानुगच्छति। तथाहि जैनेन्द्रव्याकरणे "सुम्मिङन्तं पदम्"[1] इति पदलक्षणमस्ति। अत्र सुप् प्रत्याहारः मिङ् प्रत्याहारश्चेति प्रत्याहारद्वयं पाणिनीय व्याकरणवद् वर्तते। किन्तु पाणिनीयव्याकरणे तिङ प्रत्याहारमादाय प्रथम मध्यमोत्तम पुरुषव्यवस्था जाता। इह जैनेन्द्रव्याकरणे तु मिङ् प्रत्याहारेण पूर्वमुत्तमपुरुषः मध्ये मध्यमपुरुषः अन्ते चान्यपुरुष इति क्रमो निर्धारितः। अत्रेदमेव तात्पर्यं ज्ञायते यत् सर्वतोऽधिकं सान्निध्यमहं पदार्थस्येति पुरुषत्रयव्यवस्थायां सान्निध्यक्रमो जातः। एवं शाकटायन व्याकरणे "सुङ्पदम्"[2] इति सूत्रं विद्यते। पाणिनीय व्याकरणादत्र प्रत्याहारसौकर्यमिदमेव यत् एकेनैव सुङ्प्रत्याहारेण प्रसिद्धावुभावपि सुप्तिङावनुस्मर्येते। भवतु तत्र तत्र सम्प्रदायानुसारेण पदप्रत्याहारव्यवस्थासौकर्यम्, पुनरप्यर्थतः महर्षि पाणिनेः सिद्धान्तमेवानुगच्छति सर्वेषां प्रत्याहारलक्षणम्।

तदित्थमिह पदस्वरूपविवेचने चातुर्विध्यमिव भाति पदलक्षणस्य। तत्र प्रातिशाख्येषु द्विविधं पदलक्षणं जातम्। पूर्वं वै "अर्थः पदमिति"[3] लक्षितम्। तत्रार्थस्यैव प्राधान्यमवगम्यते। तेन द्योतकशब्दानां पदत्वं

---

१. जैनेन्द्र व्या० १ अ० २ पा० १०३ सू०

२. शा० व्या० १ अ० १ पा० ६२ सूत्रे

३. शु० यजु० प्रा० ८ अ० सू० ४१

नाङ्गीकृतं भवति, किन्तु तदनन्तरं पदलक्षणे अर्थः पदमिति नोपात्तम्, पुनरपि सार्थकपदानामेव पदत्वेनावबोधो मन्यते स चार्थः वाच्यः द्योत्यो वा भवतु इत्यत्र नाग्रहः, अतएव वक्ष्यमाणचतुर्विधपदानां संग्रहो भवति। अलङ्कारशास्त्रे च विशेषणविशिष्टं तृतीयपदलक्षणमुक्तम्। प्रत्याहारञ्च पुरस्कृत्य चतुर्थपदलक्षणं सम्पन्नम्। तत्र शाब्दिकाः नैयायिकादयश्च समायान्ति।

एषु सर्वेष्वपि पदस्वरूपप्रकारेषु "वर्णसमुदायः, वर्णो वा"[1] पदमित्येव फलितम्, यतो विभक्तिः वर्णोत्तरमेव लभ्यते। यद्यपि व्याकरणदर्शने नित्येन स्फोटेनार्थबोधो भवति, न तु वर्णैरिति तत्सिद्धान्तः, ततश्च कथं तत्र पदत्वं सङ्गच्छत इति शक्यते वक्तुम्, पुनरपीह स्फोटाभिव्यञ्जकाः वर्णाः पदमिति पदस्वरूपं समवधेयम्।



१. शु० यजु० प्रा० ८ अ० ४२ सू०

# मञ्जुनाथस्य मनोलहरी

*श्री शिवसागरत्रिपाठी*

संस्कृतसाहित्ये सर्जनाया अजस्रधाराविरतगत्या प्रवहमाना सदाविच्छिन्ना समस्तप्राचीनार्वाचीनासु विधासु सामयिकसमस्याभिरनुस्यूता च संस्कृतभाषायाः जीवितत्वं प्रमाणयति। संस्कृतकाव्यविधान्तर्गतलहरीकाव्यपरम्पराऽपि स्वस्था विद्यते। लहरीषु भक्ति-रस-व्यङ्ग्योक्ति-प्रभृति मुक्तकविषया गृहीताः कविभिः। पण्डितराजजगन्नाथस्य सुधालहरी-अमृतलहरी-करुणालहरी-लक्ष्मीलहरी-गङ्गालहरीरचना विद्यन्ते। इलियतम्बुरानकृता 'सुधानन्दलहरी' रेवारामरचिता 'गंगालहरी' कृष्णतन्त्र-चिरञ्जीवलालविरचिते 'पीयूषलहर्यो' शङ्कराचार्यप्रणीता 'सौन्दर्यलहरी' काव्यानि वर्तन्ते। एवमेव कैकुलङ्गरराम वारियर-श्रीनिवासाचार्य-नीलकण्ठ-शंकरलाल-माधवकवीन्द्र-वासुदेवसरस्वती-रामनाथप्रभृतिकवीनां क्रमशः वागानन्द-शिवानन्द-कण्ठामृत-केशवकृपा-मुक्ति-अमृतानन्दआर्याप्रभृतिलहर्यः दृष्टिपथमागताः।

परम्परायामस्यां राजस्थानप्रदेशस्य काशीति विश्रुतायाः जयपुरनगर्या योगदानमपि विद्यते। अत्रत्येषु विद्वद्वरेष्वन्यतमानां श्रीहरिवल्लभशर्मणाम् 'शृङ्गारलहरी' आशुकवि श्री हरिशास्त्रिणां 'वाणीलहरी' भट्टमथुरानाथशास्त्रिणां 'मनोलहरी' प्रसिद्धाः कृतयो वर्तन्ते। एतासु अन्तिमा लघ्वी परमुत्तमा रचना, अतस्तस्या अत्र परिचयो दीयते। अस्याः रचयिता 'साहित्यमहोदधिः' 'कविसार्वभौमः' परमशिक्षाशास्त्री कुशलपत्रकारः संगीतमयकाव्यप्रणेता मञ्जुनाथोपाह्वमथुरानाथशास्त्री अस्ति। ऐतेषां महाभागानां समस्तजीवनं साहित्यसर्जनायामर्पितमासीत्। यशोलिप्सां स्वार्थवृत्तिञ्च च दूरीकृत्यास्य लेखनी प्राचीनां नवीनाञ्च शैलीमाश्रित्य काव्य-गद्य-गीति-कथा-उपन्यासयस्य साहित्यस्योद्गिरणं कृत्वा संस्कृतस्य जीवितत्वं प्रमाणितमकरोत्।

प्रस्तुतरचनायां कविवरेण प्रथमन्तु मनोलहर्यां व्याख्या कृता। ततः स्वविनम्रभावं प्रदर्श्य तेन स्वीकृतं यदेषा लहरीकाव्यशृङ्खलाया एव एका ग्रन्थिः—

'नवीनो नाप्यर्थो न च वचसि काचिद्रुचिरता
स्फुरत्प्रासस्कन्धा न च रुचिरबन्धा शिखरिणी।
तथाप्यन्यान्येषामिह लहरिनाम्नोऽनुकरणा-
न्निबद्धेयं सद्यो मदयतु मदुद्योगलहरी॥'

वस्तुतः नवीनार्थ-रुचिपदशय्या अनुप्रासादिप्रयोगसरसच्छन्दो-विधानप्रभृतिगुणैः समन्वितेयं रचना भक्तिभावव्यङ्ग्योक्तिपरकैः विंशतिशिखरिणीपद्यैः संवलिताऽस्ति। शिखरिणीछन्दःप्रयोगे कविः अतिकुशल आसीत्। 'शिखरिणीमालाया' एव रसास्वादनं कृत्वा अखिलभारतीयसंस्कृत-साहित्यसम्मेलनस्य पञ्चविंशतितमाधिवेशन-मञ्चात् कविरयं 'कविशिरोमणि' रित्युपाधिना विभूषितः।

यद्यपि भट्टमहाशयस्याभीष्टदेवो गोपिकावल्लभः श्रीकृष्ण आसीत्, परमेषः सर्वदेवसमभावस्य पक्षपाती आसीत्। अतोऽस्य रचनासु विभिन्नदेवानां भक्तिरसपूर्णाः स्तुतयः प्राप्यन्ते। अत्रापि शिव-सरस्वती-भगवती-लक्ष्मीस्तुतिषु द्वे द्वे पद्यप्रसूने अर्पिते। प्रथमन्तु स शिवमेवं स्तौति—

'जटाजूटक्रीडत्त्रिदशतटिनीवीचिनिचया-
दुदञ्चन्नेणाङ्कः प्रकटयति यस्याभरणताम्।
नमस्कुर्वद्वृन्दारकनिकरकिर्मीरितपदो
दयायां हेवाकी मदुपरि पिनाकी स भवतात्॥

भगवत्याः कृते प्रस्तुतेऽस्मिन् पद्ये तस्याः सर्वात्मस्वरूपं सरलया सरण्या विशदीकरोति—

कलात्मा कारुणामुरसि विपुलात्मा मतिमतां
सतां सौजन्यात्मा समितिषु धृतात्मा धृतिमताम्।
चले चैतन्यात्मा प्रचितिरचले विश्ववरदा
सदा सर्वात्माऽसौ जगति जयतात् सा भगवती॥'

अग्रे च कमलासनायाः पद्मायाः स्वरूपं चित्रीकृत्य आशासमन्वित-वचोभिरात्मानमाह्लादयति—

'सुधाम्भोधेर्मध्ये मणिघटधरैर्दिग्गजकरैः
सुखस्वच्छैस्तोयैर्विलसदभिषेकोत्सवसुखा।
दयास्निग्धालोकैः कृतभयविमोकैर्विभवदा
सदा सेयं पद्मा सरसिरुहसद्मा सुखयतात्॥

अपि च—

'अये पद्मे ! मातः किमपि करुणातः स्पृशसि चे-
दिमं दीनं द्रप्यद्द्रविणकणलीनं जडतया।
ध्रुवं सत्यं जाने विभवपरिमाणे सह मया
तदा स्वर्गस्थानामपि जननि ! का नाम तुलना॥'

प्रसिद्धमनोवैज्ञानिकः जेम्समहोदयः मनःसाम्यं नदीप्रवाहेण करोति, यत्र परस्परमविच्छिन्ना असंख्यबिन्दवः प्रवाहरूपा प्रतीयन्ते, तथैव विविधा मनोलहर्योऽविच्छिन्नप्रवाहरूपेण 'मनः' कथ्यन्ते। एता एव रचनायां विभिन्नरूपेण प्रकटीभूताः। स्तुतिपरकपद्यानां पश्चात् केषुचित्पद्येषु एतादृशाः संकेताः प्राप्यन्ते, ये खलु जीवनघटनाभिः सम्बद्धा प्रतीयन्ते। अन्वेषणशून्यलेखिन्या यत् किञ्चद् विलिख्य कवि-गर्वेण कुशलकविं तिरस्कुर्वन्तः कञ्चिन्मिथ्याकविमुपवर्णयति—

'यदुद्गीर्णं किञ्चिद्विचयविमुखाल्लेखनिमुखा-
त्तदेव प्रोद्ग्रथ्नन् जगति कविगर्वं वहति यः।
स एव न्यक्कर्तुं पटुमपि कविं चेत्प्रघटते
त्रिलोके लोकेऽस्मिन् ननु विलुलिताऽलीकलहरी॥"

अग्रिमे मनस्तरङ्गे कवितादर्पवशाद् विदुषः तिरस्कुर्वन्तो राजकीय-पदास्था अधिकारिण आक्षिप्ताः यत्तेषां वल्गना तु पञ्जरस्थसिंहानां समक्षं शिवानां कलकलस्वरूपैव वर्तते—

'निरुन्धन्नाम्नायं सुजनसमुदायं परिहरन्
पदस्थानां पुंसां वचननिचयो वल्गति बुधान्।

परं स्पष्टं दृष्टं भवति यदयं पञ्जरजुषां
समक्षे सिंहानां शिव शिव शिवानां कलकलः ॥'

एकस्यां मनोलहर्यां कविनेदमनुभूतं यत्केचित्तु द्विजानां कर्तव्याद् गुणानामवाप्तेश्च देववाणीं संस्कृतं पठन्ति, अपरे धनाप्तेराशातः आंग्ल-भाषाया अध्ययनं कुर्वन्ति। परन्तु यः कोऽपि गृध्र इव आङ्गलभाषा-मधीत्य उच्चपदञ्च प्राप्य आत्मानं सर्वश्रेष्ठं मन्यते, अन्यांश्च तिरस्करोति, तन्न वरम्।

जयपुरराज्यस्य कवीश्वराः परम्परातः स्वतन्त्ररूपेण साहित्य-सर्जनासक्ता विशिष्टावसरे आगत्य राजसभायां स्वरचनाः श्रावयित्वा पुरस्कृताः सन्तः सम्मानपात्राणि भवन्ति स्म। परमेकदा जयपुरा-जतन्त्रस्यैकोऽधिकारी तेषां कवीश्वराणां नित्यमुपस्थितिं तद्रचना-प्रस्तुतिञ्चानिवार्यामकरोत्। परं भट्टपादाः प्रक्रियामेतामनुचितसम्मा-नार्हां च मत्वा प्रतिवादमकुर्वन् सफलताञ्चाप्नुवन्। तदानीन्तनस्या-क्रोशस्यैका झल्लिका अत्र दृश्यते—

'अहं सर्वश्रेष्ठो वपुषि च गरिष्ठो द्विजकुले
सघूत्कारं सर्वानिति लघयति प्रेक्ष्य पतगान्।
प्रतिष्ठार्हे तुङ्गे तरुशिरसि तिष्ठासति च तत्
प्रशस्योऽयं गृद्धः प्रथयति निजस्योच्छ्रयरुचिम्।'

अपि च—

जलान्तःसुप्तानामहह महिषाणां शिरसि यत्
खलः खेलामत्तोऽभ्रमदिति महत्तोषणकरम्।

परमभक्तोऽयं मञ्जुनाथः स्वमनः स्वाभीष्टदेवस्य श्रीगोविन्दस्य शरणमानेतुं 'गोविन्दवैभव'-नाम्नि काव्येऽन्तिमे प्रार्थनामकरोत्। तमेव समर्पणभावं प्रस्तुतरचनायाः अन्ते प्रादर्शयत्—

'नितान्तं गूढानां निगमवचनानामनुगमं
न मन्दोऽहं जाने बहुविधविधानेषु धृतधीः।
चतुर्दिक् चिन्ताभिर्व्यपगतसुखं यत्नविमुखं
मनो मे गोविन्दे सकलसुखकन्देऽभिरमताम् ॥

अपि च—

'त्वदाधारादाप्ता किमपि कविता तत्परिचया
दवाचां च प्राचां वचनरचना चाप्यनुकृता ।
अये मे वाग्ब्रह्मन् ! विदमनुनये त्वन्तसमये
दयालुर्गोविन्दो धृतहृगरविन्दो मयि भवेत् ॥'

एवं विलक्षणायाः प्रतिभाया धनिनः श्रीमथुरानाथशास्त्रिमहाभागाः स्वरचनाशक्त्या अविरतसाहित्यसेवां कृत्वानेकाभिः रचनाभिः संस्कृत-भाषायाः सेवां महता मनोयोगेनाजीवनमकुर्वन् । एतेन महाकविना न केवलं जयपुरं राजस्थानं वा प्रत्युत सम्पूर्णं संस्कृतजगद् धन्यं जातम् । अन्ते त्विदं कथनं नानुचितं भविष्यति—

जातं जयपुरं शून्यं
कलागीत्यादिकं तथा ।
संस्कृतं चाधनं जातं
मञ्जुनाथे दिवं गते ॥

# पञ्चमहाकाव्येषु चन्द्रः

*डा० श्रीमती वनमाला भवालकर*

[ चन्द्रस्याह्लादकत्वम्, सामान्यतयोपमानम्, मुखस्योपमानं, निस्तेश्चन्द्रः, अन्यान्यवस्तुवर्णनेषु चन्द्रः, अनेकचन्द्रकल्पना, चन्द्रस्य कलङ्कः, चन्द्रकलानां क्षयवृद्धी, चन्द्रस्य परिवेषः, चन्द्रवैरी राहुः, चन्द्रसमुद्रासम्बन्धः, चन्द्रो रजनी च, चन्द्रस्तमश्च, चन्द्रो व्योम च, चन्द्रस्य रक्तवर्णः, चन्द्रः कौमुदी च, चन्द्रस्य सुधा, चन्द्रस्य सूर्येण सम्बन्धः, अन्यग्रहयुक्तश्चन्द्र', चन्द्रस्य नक्षत्रयोगः, चन्द्र ऋतवश्च, चन्द्रः कुमुदकमले च, चन्द्रश्चन्द्रकान्तमणिश्च, चन्द्रो मदनश्च, विरहिजनतापकरश्चन्द्रः, पौराणिकवृत्तान्तेषु चन्द्रः ]

'चन्दयति–आह्लादयती–ति चन्द्रः' इति व्युत्पत्त्या चन्द्रः प्राय आह्लादकत्वगुणोत्कर्षस्य निदर्शनमस्तीति सुस्पष्टमेव। इममेव गुणमधिकृत्यप्राचीनैः संस्कृतकविभिश्चन्द्र उपमानरूपेण मुहुर्निर्दिष्टः। महाकाव्यलक्षणानुसारेण महाकाव्येषु चन्द्रोदयवर्णनमुपलभ्यते। आदिकविवाल्मीकिनापि रामायणे चन्द्रोदयस्य हृद्यं वर्णनं प्रस्तुतम्। एषा परम्परा परवर्तिकविभिरप्यहमहमिकामनुसृत्य नवनवकल्पना उद्भाविताः। अद्यतने विज्ञानयुगे मानवेन साक्षाच्चन्द्रलोकं प्रविश्य चन्द्रभुवि पदं निधाय तस्य यथार्थस्वरूपं सम्यगवधारितम्। सुधानिधिरिति कविभिर्वर्णिते चन्द्रे जलस्याप्यभावो वर्तते. कुतो तत्र सुधा। अमृतद्युतावस्मिन् प्राणधारणार्थं वायुरपि नास्ति, अमृतत्वप्रदानं तु दूर एव। एष ओषधीनां पतिरिति प्रथितश्चन्द्रमाः केवलं प्रस्तरैर्धूलिभिश्च परिपूर्णो वनस्पतिविरहितः। मृगाङ्के शशभृति नास्ति मृगो शशो वा, अङ्कस्तु गर्तरूपः। पृथ्वीतोऽदृश्यः कविभिस्तर्कितोऽकलङ्को निर्मलश्चन्द्रस्यापरोऽपि पृष्ठभागस्तथैवाङ्कितो यथा दृष्टिगोचरस्तस्य पृष्ठभागः। शरीरत्यागानन्तरमेव मृतस्य मनश्चन्द्रं गच्छति, चन्द्रो वै पितृलोक इत्यादय कवीनामभिमताः श्रुतीर्विफलीकृत्य मनुजा जीवन्त एव सशरीराश्चन्द्रं गताः, प्रत्यागत्य च पृथ्वीस्थजनान् चन्द्रलोकादानीतानां प्रस्त-

राणां दर्शनमपि कारितवन्तः। तथापि भूलोकवासिनां कृते वैज्ञानिकदृष्ट्या कुतूहलस्य विषयीभूतस्यास्य चन्द्रस्याह्लादकत्वं तु यथापूर्वमद्याप्यविनाश्येव वर्तते। अत एव पूर्वसूरिणां काव्येषु प्रस्तुतानां चन्द्रविषयकल्पनानां सरसत्वं हृदयावर्जकत्वं वा त्रिकालावाधितमिव प्रतिभाति।

संस्कृतानुरागिणां विदुषां मते संस्कृतसाहित्यस्य पञ्चप्राणभूतानि वर्तन्ते पञ्च महाकाव्यानि। तानि यथा—कविकुलगुरोः कालिदासस्य रघुवंशं कुमारसम्भवं च, भारविविरचितं किरातार्जुनीयं, माघप्रणीतं शिशुपालवधं, श्रीहर्षस्य नैषधीयचरितं चेति। एतेषु प्रयुक्तानां चान्द्रबिम्बानां निरूपणमपि कवीनां प्रगल्भप्रतिभायाः पर्याप्तं परिचायकमस्ति।[1]

प्रथमं तावत्कालिदासेनैव स्पष्टीकृतं यत् "यथा प्रह्लादनच्चन्द्रः········। तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥ (रघु० ४.१२)। अत आह्लादकत्वोत्कर्षस्य द्योतकश्चन्द्रः सामान्यतयोपमानरूपेण सर्वैरेव कविभिर्भृशं निर्दिष्टः। यथा—राजेन्दुर्दिलीपः (रघु० १.१२), नृसोमः (रघु० ५.५६) चन्द्रनिभः सुदर्शनाख्यः सुतः (रघु० १८.३५)। हिमांशोरिव नयनाभिरामा सुषेणस्य कान्तिः (रघु ६.४७)। द्विजराजकान्ती रघुः (रघु० ५.२३) अनलसोमद्युतिर्दशरथः (रघु ६.१५) इत्यादिषु नयनाभिरामाकान्त्यै चन्द्रमाः पुरुषाणामुपमानमभूत् तथैव 'इन्दुप्रभेन्दुमती' (रघु ६.७०) ति स्त्रीकृतेऽपि इन्दुरेव उपमानरूपेण प्रयुक्तः। बालानां वर्णने प्रायः प्रतिपच्चन्द्रो नवोदितचन्द्रो वा कविभ्योऽरोचत। यथा—'प्रतिपच्चन्द्रनिभोऽयमात्मजः' इत्यजस्योक्तिः (रघु ८.६५) नवोदयं पार्वणचन्द्रचारुं गौरी स्वमुत्सङ्गतलं निनाय (कुमार ११.२१) पूर्वेव दिङ् नूतनमिन्दुमाभात् तं पार्वती नन्दनमादधाना (कुमार० ११.२६), अमृतकरकलाकोमलं

---

१. रघुवंशे ७२, कुमारसम्भवे ९३, किरातार्जुनीये ४६, शिशुपालवधे ७८, नैषधीयचरिते ३७९, इति पञ्चकाव्येषु ६६, चन्द्रविषयकनिर्देशा उपलभ्यते।

भासमानं गर्भं कृत्तिकाभिरजनि (कुमार. १०.६०)[1] अन्यच्च, चन्द्रो, विशेषतो नवोदितचन्द्र इव राजाऽपि नयनोत्सव आसीत्—यथा— इन्दुमतीस्वयंवरप्रकरणे - प्रतिहारभूमौ नियुक्ता नृपं निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै (रघु. ६.३१) "तमाहितौत्सुक्यमदर्शनेन प्रजाः······ नेत्रैः वपु·········नवोदय नाथमिवौषधीनाम् (रघु. २.७३) "कौसल्य इति तस्यौरसः सुतः······अभून्नेत्रोत्सन्नः सोम इति द्वितीयः" (रघु. १८.१७), प्रसादसुमुखे तस्मिन् (रघौ) चन्द्रे च विशदप्रभे। तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः (रघु. ४.१८)। तापापनोदनेनापि चन्द्रो जनानां प्रीतिभाजनक- आसीत्। यथा—जनस्य·········बभूवतु द्वौ। तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥ (रघु. १६.५३)।

भारविणा किरातार्जुनीये राजनैतिकविवेचनेऽपि चन्द्रस्योपमानत्वं न हारितम। तथा हि—

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये। प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजाः नृपम्। माघोऽपि शिशुपालवधे चन्द्रं सामान्यतयोपमानीकृतवान्। यथा—शरच्चन्द्रमरीचिरोचिषं नारदं (कृष्णः ददर्श) (शिशु. १.५),······पुरो निपेदिवान् कंसकृपः स विष्टरे। श्रितोदयाद्रेः····· अचूचुरच्चन्द्रमसोऽभिरामताम् ॥ (शिशु. १.१६); ऋषिस्त्विषः······विरेजिरे। तुषारमूर्तेरिव नक्तमंशवः (शिशु. १.२१); परिपूर्णेन्दुरुचिर्महीपतिः (शिशु. १७.७१)।

श्रीहर्षस्य नैषधेय चरिते कान्त्याऽऽह्लादकत्वेन च नलस्य चन्द्रेणैकरूपत्वं बहुशः कल्पितम्। तद्यथा—वसुधा सुधांशुः (नैषध ११.७५) उर्वीतलशीतलद्युतिः (नैषध ६.२), निषधानां सुधाकरः (नैषधः १७.१४३), क्षितीन्दुः (नैषध २६.३१), क्षणदापतिप्रभः (नै० १.५६), राजचन्द्रः (नै० १०.३६) निषधानामाह्लादको नैषधेन्दुः (नै० ३.७१) इत्यादिषु नलविशेषणेषु। एष कल्पना भूयो विस्तारं नीता यथा—सुधांशुरेष प्रथमो भुवीति मत्सरिणः क्षितीशाः स्तुतिलाञ्छना-

१. अन्येऽपि निर्देशा—रघु १७.३०, रघु ३.२२, कुमार १.२५।

न्नलं निनिन्दुः ( नै० १०.४१, ४२ ); शतक्रतुर्हरित् क्रीडाद्रिमध्यास्य यत इन्दोरिव स्यन्दनमध्यास्य गच्छतो नलस्य तनुरामणीयकमालोक्य पौरस्त्रियः सानन्दा बभूवुः ( नै० १५.६२ )।

## चन्द्रो मुखं च

वर्तुलाकारः कान्तिमान् रमणीयश्चन्द्रमा मुखस्योपमानरूपेण कवीनामिष्टतरः। पञ्चमहाकाव्येषु सर्वैरेव कविभिर्मुखस्य सौन्दर्यं वर्णयितुं प्रधानसाधनरूपेण चन्द्र एव प्रयुक्तः। यथा—प्रसन्नमुखेन्दुर्दिलीपः ( रघु. २.६८ ), इन्दुमुखो हरः ( कुमार. ६.२२ ), सहेलहासच्छुरिताननेन्दुः कुमारः ( कुमार. १३.१३ ) आबालेन्दुमुखीन्दुमती ( रघु. ६.५३ ), पार्वतीमुखेन्दुः ( कुमार. ६.१६ ) इन्दुवक्त्रा पार्वती ( कुमार. ११.२२ ) इत्यादिषु कालिदासेन स्त्रीपुरुषबालानां मुखवर्णनेषु। न केवलं मुखस्य चन्द्रेण साहश्यमपि तु चन्द्रादाधिक्यमपि यत्र तत्र कल्पितम्। यथा पार्वत्या वर्णने "...... परिभूय समेघलेखं शशिनश्च बिम्बम्। तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद साहश्यकथाप्रसङ्गम् ॥ (कुमार. ७.१६) यथा वा—हरो...नेत्राञ्जनाङ्कं हृदयप्रियायाः। कौपीनचलाञ्चलेन हरन् मुखेन्दोरकलङ्किनोऽस्या ॥ ( कुमार. ६.१६ ) इति कलङ्किचन्द्रादकलङ्किमुखस्याधिक्यं दर्शितम्। लक्ष्मीः पद्मे चन्द्रे च युगपत् न तिष्ठति, उमामुखे तु द्विसंश्रयां प्रीतिमवाप (कुमार. १.४३) अतो मुखस्य चन्द्रादधिकं सौन्दर्यमिति प्रतिपादितम्। किरातार्जुनीये भारविरपि निदर्शनालङ्कारेण व्यतिरेकेण वा मुखचन्द्रयोरुपमेयोपमानभावं कल्पितवान्। यथा—किरातरूपधारिणः शङ्करस्य वर्णने "धृता विकारांस्त्यजता मुखेन प्रसादलक्ष्मीः शशलाञ्छनस्य' ( किरात. १६-२१ )। यथा वा "आशु कान्तमभिसारितवत्या योषितः...। निर्जिगाय मुखमिन्दुमण्डलं स्वर्णपत्रतिलकाकृति कान्त्या ॥ ( किरात. ६.३८ ) माघस्य शिशुपालवधेऽपि मुखचन्द्रयोरेताहशः सम्बन्धः भूयः प्रकटितः। यथा–'मानवत्या नमितमुखेन्दुः ( शिशु. ६.८४ ) श्रीमुखेन्दुः ( शिशु. १४.६ ) अप्सरोवक्त्रचन्द्राः ( शिशु. १७.५६ ), यथा वा जलकेलिवर्णने "कान्तायाः करकलशोद्यतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ( शिशु. ८.३३ )। अन्यत्र च वदनसरोजनिर्जितश्रीरिति

चन्द्रवर्णनम् ( शिशु. ८.४ )। अधिरुक्ममन्दिरगवाक्षमुल्लसत् सुदृशो रराज मुरजिद्दिदृक्षया। वदनारविन्दमुदयाद्रिकन्दराविवरदरस्थितमिवेन्दुमण्डलम् ( शिशु. १३.३५ ) इत्युपमा। अथ वा निनाय नो विकृतिमविस्मितः स्मितं मुखं शरच्छशधरमुग्धमुद्धवः ( शि. १७.१८ )। द्वारकावर्णने "क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्वधूजनश्चन्द्रमधश्चकार ( शिशु. ३.४३ ) इति विरोधाभासेन चन्द्रादपि द्वारकावासिस्त्रीजनमुखस्य सौन्दर्याधिक्यं प्रतिपादितम्। "आननेन शशिनः कलां दधत्··· अभूदष्टमूर्तिधरमूर्तिरष्टमी ( शिशु. १४. ८ ) इति निदर्शनालङ्कारेण चन्द्रमुखयोः सादृश्यं स्थापितम्। प्रथमं प्रबुद्धायाः कैटभद्विषः शयनाद् ( समुद्राद् ) उत्थिताया श्रियो वदनेन्दुनेव तुहिनद्युतिनोदमज्जि ( शिशु ६.३० ) इत्यत्र लक्ष्म्या वदनेन्दुरिवेन्दु उत्थित इति उत्प्रेक्षा।

चन्द्रमुखयोरेकरूपत्वं भूय उपबृंहितं परवर्तिश्रीहर्षेण स्वबृहत्काव्ये नैषधीयचरिते। यथा—नलस्य सौन्दर्यवर्णने तस्य 'साक्षादमृतांशुमाननम्" ( नै. १.१०० ), 'पक्षान्तमृगाङ्कभास्यम् ( नै. ६.१८ ), शशिप्रकाशाननम् ( नै. १२.१५ ),' वीरसेनसुतवक्त्रमण्डलं। प्राप···सुधांशुना मित्रताम्। (नै. १८.१०४) ।' प्रगल्भेनानेन कविना नवनवकल्पनानामुद्भावनया चन्द्रमुखसादृश्यस्य चमत्कृतिरञ्जिनो विस्तारः कृतः। तद्यथा— "रोहिण्यादितारका' यदि शशाङ्कस्याङ्कवर्तिन्यो भवेयुस्तर्हि चन्द्रश्चन्दनतिलकयुक्तेन नलमुखेन तुल्यो भवेत् ( नै. १४.६३ ) आस्यचन्द्र स्रवत्सुधाबिन्दुवृन्ततां नलकण्ठश्रिता मुक्तावलिरवाप ( नै. १५.६६ )। गौरमृत्तिलकमुखेन्दुर्नलः ( नै. २१.१६ )। यथा वा नलं प्रति दमयन्त्या वचने "जितस्त्वास्येन विधुः···" ( नै. ६.१४५ ) नलमुखस्येयं चन्द्राधिकसुषमा देवानामपि लिप्साकारणं-यथा—

पूर्णेन्दुमास्यं विदधुः पुनस्ते पुनर्मुखीचक्रुरनिद्रमब्जम्।
स्ववक्त्रमादर्शतलेऽथ दर्शं दर्शं बभञ्जुर्न तथाति मञ्जु॥
( नै. १.२० )

"तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ( नै. १.२० ) इत्यत्र 'शरत्पौर्णिमाचन्द्रादपि रमणीयतरं' नलमुखमिति भावः। अन्यत्र च "···जिताः स्मितेनैव विधोरपि श्रियः।···तदाननमस्योप-

मितौ दरिद्रता" ( नै. १.२४ )। यथा वा "धिक् तं विधेः पाणिमजातलज्जं निर्मोति यः पर्वणि पूर्णमिन्दुम्। मन्ये स विज्ञः स्मृततन्मुखश्रीः कृत्वार्धमौज्झद्धरमूर्ध्नि यस्तम्॥ ( नै. ३.३२ ) इति कवेः प्रतिभा विलासो दृश्यते।

'निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः।
सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे॥ ( नै.३.३३ )'
इति नूतना कल्पनोद्भाविता। यथा वा ग्लपितैरसुभिर्मनश्चन्द्रे निमज्जतीति श्रुतिर्दमयन्तीविषये नलमुखेन्दुपरा ( नै. ४.५२ ) इति नलमुखचन्द्रयोस्तादात्म्यं प्रतिपादितम। नलं चन्द्रवर्णनायेरितुं दमयन्त्या उक्तिर्यथा—"स्ववर्णना न स्वयमर्हतीति नियुज्य मां त्वन्मुखमिन्दुरूपम्। स्थानेऽत्युदास्ते शशिनः प्रशस्तौ······( नै. २२.१०४ )" नलमुखस्य चन्द्रेण सादृश्यं प्रमाणयति।

नलस्येव दमयन्त्या वदनस्य वर्णनेऽपि चन्द्रो बहुश उपमानीकृतः। तद्यथा—चन्द्रमुखी ( नै. ६.४० ) इन्दुमुखी ( नै. ११.३४; ११.६० ) विधुमुखी ( नै. २१.१४८ ) निशाकरज्ञातिमुखी ( १२.१४ ) आननचन्द्रभाः ( २१.२३३ ) मुखेन्दुबिम्बम् ( २२.१०२ ), शशाङ्काधिकास्य विम्बा ( १४.४० ), हिमांशुबिम्बबिडम्बिमुखी ( २२.१३५ ) विधुविधेयमाननमाननम् ( १८.१३२ ), जितसुधांशुमुखश्रीः ( ४.१३१ ), वक्त्रेण तृणीकृतेन्दुः ( ३.५४ )। नवकल्पनाविलासोऽपि दृश्यः यथा—'इन्द्रो दमयन्त्या आननचन्द्रं गाथासुधाकलाविलासैरलंचकार-अर्थात् वर्णयामास ( १०.१२३ )। 'कुङ्कुमस्वनया रमणीयं तस्या मुखं नृणामुदयमृगाङ्कशाङ्कां सृजति ( ११.४४ ) 'वदनस्य रुचा चन्द्रं रदानां रुचा ताराः कचानां रुचा नभो जयन्ती दमयन्ती ( १०.१०७ ) इत्यादि। 'भैम्या मुखमेव साक्षात् सुधांशुः, दिवः स्फुटं शशाङ्कस्तु लाक्षणिकः' ( १०.११६ ) अर्थात् लक्षणेन कलङ्केन युक्तः। कालिदासस्य कुमारसम्भव इव ( कुमार. १.४३ ) नैषधीयचरितेऽप्युत्प्रेक्षितं—

दिवा रजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम्।
आस्ये यदास्या न तदा तयोः श्रीरेकश्रियेदं तु कदा न कान्तम्॥

( ७.५५ ) भैमीमुखस्य तृतीयो भागो भालोऽर्धेन्दुखण्डः, भ्रुवौ कलङ्कः, यदि च मुखतृतीयभागोऽर्धचन्द्रतुल्यस्तर्हि पूर्णचन्द्रापेक्षयाऽधिकपरिमाणत्वाद् भैम्या वर्तुलमुखस्य श्रेष्ठत्वम् ( ७.७६ ) इति तर्कोऽपि कविना प्रस्तुतः। 'यशः पदाङ्गुष्ठनखौ मुखं चेति पूर्णेन्दुचतुष्टयम्,— अर्थात् षोडषकलचन्द्रचतुष्टयम्—अतो भैम्याश्चतुःषष्टिकलाः कथं न भवन्ति ( ७.१०७ ) इत्यन्या युक्तिः। अन्यत्र च "निःशङ्क संकोचित-पङ्कजोऽयमस्यामुदीतो मुखमिन्दुबिम्बम् ( ७.७७ ) ।

दमयन्त्या अधरदन्तस्वरादीनां वर्णनमपि मुखचन्द्रेण संवादि वर्तते। यथा—'भैम्या मुखेन्दुना सहोत्पद्यमानाऽधरोष्ठलेखा रागश्रिया शैशवयौवनीयां सन्ध्यां ब्रूते ( ७.३७ )', 'अस्या मुखेन्दोः सुधाभूमौ प्रतिबिम्बतं बिम्बीफलमेवास्या अधरोष्ठः' ( ७.३८ ), मुखचन्द्रिका-मेघेभ्यः क्षरणादग्रेसराणि स्रस्तानि प्रपन्त्येवेषदायतं दन्तपंक्तिद्वयम् ( ७.४४ ), 'सुधयाऽधरेण भैमीमुखे स्थीयते, चन्द्रं विजित्य तस्या मुखं स्वयमेव मखभागभोजि, अतोऽमृतयज्ञभागदानेन तामुपाकर्तुं न शक्यम् ( ८.१०२ ) । "भैमीमुखेन्दोः पीयूषधरा मधुरा वागाविरसीत्। ( २२.१०२ ), 'ताम्रपर्णनद्यास्तट उत्पन्नैरिन्दुकुक्षिजैर्मौक्तिकैर्बाह्य-स्पर्धा भैमीवदननिर्गता वर्णाः प्रसन्नाः स्वादवश्च ( २०.२१ ), कोकिलेन द्विजेन भैम्या आस्येत्रद्विजराजान् सहस्यग्रन्थो न पठयते किम् ( ७.४४ ) अर्थात् कोकिलस्य वाणीव तस्या वाणी।

भैमीमुखनिर्माणमधिकृत्यापि कविनानेन चन्द्रसम्बन्धिकल्पनाः प्रस्तुताः। तथाहि—

निजामृतोद्यन्नवनीतजाङ्गीमेनां क्रमोन्मीलितपीतिमानम्।
कृत्वेन्दुरस्या मुखमात्मनाऽभून्निद्रालुना दुर्घटमम्बुजेन ॥
( नै. १०.१२६ )

अर्थात्—इन्दुर्निजामृतादुत्थितेन नवनीतन तस्या अङ्गं निर्मितवान्। यथा नवनीते दिनवृद्धिक्रमेण पीतिमा भवति तथैव नवनीतनिर्मिते तस्या अङ्गेऽपि गौरत्वम्। अङ्गं निर्माय चन्द्रकिरणसम्बन्धात् सङ्कोच-

शीलेनात एव निद्रालुना पद्मेन दुर्घटं तस्या वदनमिन्दुः स्वयमेवाभवत्। तथैवान्याप्येकाऽसाधारणकल्पनोद्भाविता—

अनेन वेधा विपरीतरूपविनिर्मिताङ्केन किरणाङ्केन।
त्वदाननं दृश्यदृगाद्यलक्ष्यदृगादिनैवाकृत सञ्चकेन॥
(नै. २२.४६)

अयं भावः—ब्रह्मा भैमीमुखं चन्द्ररूपेण काञ्चनसञ्चकेन निर्ममे। सञ्चके निष्पाद्यस्य वस्तुनो निम्नोन्नतभागा विपरीता उत्कीर्यन्ते। अतः सञ्चकरूपे चन्द्रे दृगाद्यलक्ष्यम्। किन्तु तन्निर्मिते दमयन्तीमुखे प्रत्यक्षदृश्यं भवति। अतो मुखस्य सौन्दर्याधिक्यम्।

निरन्तरत्वेन विधाय तन्वि तारासहस्राणि यदि क्रियेत।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत॥ (नै.२२.११४)

इत्यस्मिन्नतिशयोक्तिरूपं वर्णनम्। अन्यत्र च "विधिर्विधोर्बिम्बशतानि कुहुरात्रिषु मासि मासि लोपं लोपमेकशेषमभंगुरश्रीकमस्या मुखेन्दुमस्थापयत् किम् (नै. ७.५६)। अथवा—भैमीमुखं पद्ममेव, पद्माद् ब्रह्मण उत्पत्तिर्ब्रह्मणश्च चन्द्रस्य। अतो भैमीवदनाच्चन्द्रस्य महदन्तरम्। शङ्करशिरस्थगङ्गायास्तटे यद्वनं तत्र वेतसवासी बक एव चन्द्रो दमयन्तीमुखसाम्यं प्राप्तु तप इव तपते। (नै. २२.१३८) पुनर्यथा—

लावण्येन तवास्यमेव बहुना तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतार्थमलिनेनारम्भि शेषेण तु।
निर्माय द्वयमेतदप्सु विधिना पाणी खलु क्षालितौ
तल्लेशैरधुनापि नीरनिलयैरम्भोजमारभ्यते॥
(नै. २२.१४२)

अत्रायमाशयः—क्वचित्पात्रे सञ्चितेन लावण्येन दमयन्त्या आस्यं निर्माय पात्रप्रोञ्छनलब्धेन मलिनेन शेषेण चन्द्रो निर्मितः। एतद्द्वयं निर्माय विधिना हस्तौ क्षालितौ नीरनिलयैर्लावण्यशेषैरधुनापि कमलमारभ्यते। अपि च 'प्रोञ्छनलब्धार्धमलिनशेषेण निर्मितस्य चन्द्रस्य लेखाऽपि शम्भोः शिखामणिरभूत्। अब्जमपि श्रियः सद्माभूत्। (नै. २२.१४३)।

'आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितम् ।
शङ्के सुन्दरि शर्वरीपरिवृढस्तेनेव दोषाकरः ॥
(नै. २ .१४५)

अत्र यथा चन्द्रमण्डलाद् गुणानां मुखनिर्माणार्थं हरणात् स दोषाकरोजातस्तथैवान्यत्र "अन्तस्तदास्यहृतसारतुषारभानुः शोभाकारित्वात् करिदन्तजकङ्कणाङ्कः" ( नै. ११.१०८ ) ।

चन्द्रकलङ्कमृगमाश्रित्यापि मुखविषये बहुविधास्तर्काः प्रस्तुता तेऽग्रे वक्ष्यन्ते । चन्द्रस्य कलाक्षयस्यापि मुखवर्णने निर्देश उपलभ्यते । तथा हि—"त्वद् वदनाम्बुजाचन्द्रस्य भङ्गोऽजनि (नै. २२·१३७)" । "उत्तमेन स्पर्धमानः कोऽपि तुलादिके भङ्गं प्राप्नोति तथा पूर्णबिम्बश्चंद्रोऽपि भैमीमुखेन सह तुलां प्राप्य तदाप्रभृत्येव भङ्गं प्राप्नोति" ( नै. २२.१३० ) । चन्द्रवर्णनावसाने रसातिशयादेकतानतया मौनभावमास्थितां दमयन्तीं प्रति नलस्योक्तिः—'त्वन्मुखस्पर्धाकरणसंजातकोपादिवेन्दुवर्णनं नानुमोदसे किम्' ( नै. १२२.५६ ) इति । दमयन्ती स्वयंवरे राज्ञां परिचयं ददती सरस्वती प्लक्षद्वीपनृपवर्णने ब्रूते यत् 'तस्मिन् द्वीपे चन्द्रभक्ताश्चन्द्रमदृष्ट्वा नाश्नन्ति । तथापि दमयन्त्या मुखचन्द्रं दृष्ट्वैव चन्द्ररहित दर्शेऽपि भुञ्जानास्ते लुप्तव्रता न भवन्ति ( नै. ११.७६ ) । एवमतिशयोक्तिपूर्णा नवनवविचित्रवर्णनानां विलासः श्रीहर्षस्य बृहत्काव्ये दृश्यते ।

न केवलं नलदमयन्तीमुख एवापि त्वन्येषां वदनान्यपि चन्द्रस्य सादृश्यं भजन्ते । तद्यथा—"शालभञ्जिकामुखचन्द्रेषु ( नै. २.८३ ), इन्दुमुख्यो दमयन्तीसख्यः ( नै. ६.४२ ), वाग्देवताया वदनेन्दुबिम्बम् ( नै. १४.३० ) सरस्वती निजास्यचन्द्रस्य सुधाभिर्भैमीकर्णौ परिपूर्णौ कृतवती ( नै. १२.६६ ) सरस्वत्यापि नृपो मेधातिथिर्वसुधासुधांशुरिति वर्णितः ( नै. ११.७५ ) मगधाधीशवर्णने च कथितं यद् आमुखेन्दु वपुरेतस्य सृजतो ब्रह्मणस्त्विषां कोशः शेषमगाद्यतो—'निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेव वा । शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः' ( नै. १२.६३ ) ॥ "सौधाट्टावलिचन्द्रशालाजालेभ्यो दमयन्तीमालोकयितुं प्रवणानां पुरपुरन्ध्रीणां वक्त्रचन्द्रान्वयेन क्षणं निज-

संज्ञां सान्वयामन्वभूवन् ( नै. १६.१२७ ) इत्यत्र नगरस्त्रीणां मुखचन्द्राणां निर्देशः कृतः। शक्रादिदेवता उत्साहभङ्गान्मुखेन्दौ चित्तमान्द्यं वितत्य राजसभामीयुः ( नै. १०.१७ ) इत्यस्मिन् देवमुखानां कृतेऽप्युपमानरूपेण चन्द्रः प्रयुक्तः।

मुखमिव भालस्तिलको वपुर्दन्ता नखाः स्मितं कटाक्षः स्पर्श इत्येवमादीनामपि चन्द्र उपमानीकृतः। यथा—'उद्गत्वरामृतकरार्धमराध्यभाला ( नै. ११.१६ ) इति दमयन्तीवर्णने चन्द्रस्यार्धबिम्बेन तुल्यस्तस्या भाल इति प्रतिपादितम्। अत्रापि कान्तिमत्वमुज्ज्वलत्वं च हेतुः। नलस्य भाले किं दमयन्त्यास्ति च वेति संदेहरूपां ब्राह्मीं लिपिं पठितुं चन्दनतिलकबिन्दुरूपेणेन्दुरिन्द्रेण प्रेषितः ( नै. १४.६४ ) इत्यस्मिन् चन्दनतिलकोऽपीन्दुतुल्यः। शशाङ्कितशशाङ्करुचिरुरुच्छदं वपुर्धारयन्तो राजानः' इति शिशुपालवधे ( शि. १७.८० ) माघेनापि राज्ञां वपुश्चन्द्रतुल्यं कवचं च शशचिह्नमित्युत्प्रेक्षितम्। विष्णोर्वदनादुद्गता दशनज्योत्स्ना' इति रघुवंशे ( १०.३७ ) कालिदासेन, "विसारिभिर्दन्तव्याजनिशाकरांशुभिः सितं मुनेर्वपुः' इति शिशुपालवधे ( १.२५ ) माघेन 'दन्तांशुवृन्दैः कौमुदीनां मदं नुदन्ती दमयन्ती'ति ( नै. १०.१०३ ) श्रीहर्षेण दन्तचन्द्रसादृश्यं सूचितम्।

पाणिद्वयं चारुनखं तदीयं नवोदितेन्दुप्रतिमस्य व्योम्नः शोभां विफलीचकार इति पार्वत्या वर्णने ( कुमार० १.४२ ), तथैव नैषधीयचरिते 'नखेन्दुः ( नै. ६.११७ ) चन्द्रायितनखश्रेणिः···राजा ( नै. १२.५६ ) 'प्रियानखीभूतवत इन्दोर्दशत्वं विधिः साधुकृतवान् ( नै. ७.१०६ ) एवमादिषु नखवर्णने तथा च अर्धेन्दुलीलैर्नखक्षतैः ( नै. ६.२६ ) अर्धचन्द्राभनखाङ्कः ( नै. ६.६६ ) इति नखक्षतवर्णनेऽपि चन्द्रस्य साहश्यं प्रयुक्त। स्मितेन कौमुदीमुदो विश्राण ( नै. ६.११२ ) तस्या गौरसारस्मितेन विस्मिता इन्दुप्रभा ( नै. १०.१०५ ) इत्यादिभिः स्मितस्य चन्द्रप्रकाशसाम्यं प्रतिपादितम्। चन्द्रिकाच्छलैः सितैर्दीर्घकटाक्षैः ( नै. १२.५३ ) इति कटाक्षा अपि चन्द्रिकातुल्याः। रघुवंशे कालिदासेन योषितां स्पर्शसुखमुडुपतेरर्चिषां स्पर्शसुखमिवाप्नुवन्

अग्निवर्णः ( रघु. १६.३४ ) इति चन्द्रकिरणस्पर्श इव सुखदः स्पर्शः कल्पितः ।

## निस्तेजश्चन्द्रः

यथा बालश्चन्द्रो नवोदितचन्द्रः पूर्णचन्द्रः शरच्चन्द्रश्चन्द्रलेखा वोपमानरूपेण प्रयुक्ता तथैवालङ्कारेषु कविभिर्निस्तेजश्चन्द्रोऽपि प्रयुक्तः । यथा कालिदासेन "असमग्रभूषणा लोध्रपाण्डुमुखेन सा तनुप्रकाशेन शशिना विचेयतारका शर्वरीव' ( रघु. ३.२ ) इति गर्भवत्याः सुदक्षिणायाश्चित्रणे,— यथा वा

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥( रघु ८. ४२ )

इतीन्दुमतीवर्णने, अथवा तया विना क्षणदापायशशाङ्कदर्शनः पुरीं विवेश इति अजस्य वर्णने ( रघु ८. ७४ ) प्रातःकालीननिस्तेजचन्द्रेण सह मुखस्य सादृश्यं स्थापितम् । 'सबाष्पो रामस्तुषारवर्षी सहस्त्रचन्द्र-इव ( रघु १४. ४४ ) यथा वा मेघदूते यक्षपत्नीवर्णने 'विरहशयने आधिक्षामां प्राचीमूले कलामात्रशेषां हिमांशोस्तनुमिव त्वां ( मेघ २. २८ ) 'लम्बालकत्वाद् असकलव्यक्ति हस्तन्यस्तं तस्या मुखं मेघानुसरणक्लिष्टकान्तेरिन्दोर्दैन्यं बिंभति ( मेघ २. २४ ) वर्षात्ययेनाभ्रघनादिन्दो रुचमिव रामेण रावणकृच्छ्रादुद्धृतां सीतां भरतो ववन्दे । ( रघु १४. ७७ ) उषसि वा मेघावरणेन वा यथा चन्द्रो निस्तेजस्तथैवास्तं गच्छन् । कामुकेऽग्निवर्णे राज्ञि क्षयातुरे सति रघुकुलं पश्चिमकलास्थितेन्दु व्योम इव अभूत ( रघु. १६. ५१ ) इत्यत्रास्तगामिना तेजोहीनचन्द्रेण क्षयिनोऽग्निवर्णस्य साम्यं प्रकटितम् । 'निद्रावशेन भवताप्यनवेक्ष्यमाणा निशि खण्डितबला इव लक्ष्मीः पर्युत्सुकत्वं येन विनोदयति स चन्द्रोऽपि दिगन्तलम्बी त्वदाननरुचिं विजहाति अतोऽनन्यशरणां लक्ष्मीं गृहाण ( रघु. ५. ६७ ) इत्यत्र वैतालिकस्य प्रातःस्तुतिपाठे पश्चिमाशां प्राप्तोऽस्तं गच्छंश्चन्द्रोऽजस्याननशोभां त्यजतीति भावः ।

शिशुपालवधेऽपि प्रकटमलिनलक्ष्म प्रत्युषप्रोषितश्रीश्चन्द्रमाः कामिनीनां मृष्टपत्रावलीकैरधिगतरतिशोभैः परिणतशरकाण्डपाण्डुभिर्गण्डभागैः

रुपहसित इव (शिशु ११. ३०) इत्युत्प्रेक्षायां प्रातःकालीनः सुन्दर चन्द्रमा उपमानीकृतः। श्रीहर्षेण तु तेजोहीनश्चन्द्रोऽलङ्कारेषु द्वित्रिवारमेव प्रयुक्तेति विस्मयावहमिव प्रतिभाति। तथापि चन्द्रस्य निस्तेजत्वे हेतुः सूर्य एवेत्यग्रे प्रदर्श्यते। यथा—प्रत्यूषसमये "करच्छेदमप्यस्य पश्य" (नै० १६. ५३) इति।

## अन्यान्यवस्तुवर्णनेषु चन्द्रः

मानवानामिव वनपर्वतसरोवरवनस्पतिपशुपक्षिणां वर्णनेऽपि चन्द्र उपमानरूपेणोपमेयरूपेण वा कविभिः प्रस्तुतः। तद्यथा—पर्यन्तवनं पञ्चाप्सरो नाम क्रीडासरो मेघान्तरालक्ष्यमिन्दुबिम्बमिवाभाति (रघु. १३. ३८) 'उदयगिरितिरोहितमण्डलस्य शीतरश्मेर्नीलनीरजनिभ आकाशे प्रसरद्धिमगौरं करजालं वारिधेर्निपतद्गङ्गाम्भ इव रराजे' (किरात ६. ११) 'मूर्ध्नि स्खलत्तुहिनदीधितिकोटी रैवतकः' (शिशु ४. १६) विलोचनस्थानगतोष्णरश्मिनिशाकरः रैवतकः (शिशु ४. ४) इत्यादि।

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्। वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलम्। (शि. ४. २०) इत्यस्मिन् माघस्य प्रसिद्धश्लोके निदर्शनालङ्कारेण चन्द्रो वारणेन्द्रविलम्बितघण्टारूपेण वर्णितो येन माघो "घण्टामाघ" इति प्रसिद्धिं गतः। कलंकसंकुलसुधांशोः कुलमिवालिश्यामलितोदरं सिताम्बुजनिवहं वहन् तडागः (नै. १. ११०) इत्यपि तडागवर्णनम्। 'बालेन्दुवक्राण्यतिलोहितानि पलाशानि (कुमार. ३. २६), घनघनौघविघट्टनया दिक्च्युतं कृशशिखं शशिखण्डमिव द्विरददन्तधवलं स्फुरितभृङ्गमृगच्छवि केतकम् (शिशु. ६. ३४),' 'आतपेषु चिरायानावरणं काष्ठौघम् (काष्ठा = दिशा, काष्ठं = दारु) आलम्ब्य वर्षासु समुत्थितेषु बालेषु ताराकवकेषु तारा एवाविकसितछत्राकाः, चन्द्रस्तु विकसितमेकं छत्राकम् (नैष. २२. ६६) इति वनस्पतिमधिकृत्य चन्द्रसम्बन्धिनवनवकल्पनाः।' शशधरेण वियुक्तः केतकीकुसुमकेसर इव पाण्डुकान्तिरश्मिसमूहः कर्पूरचूर्णमुष्टिरिव प्राचीं दिशां व्याप (किरात ६. १७) शुक्लैर्मयूखनिचयैः परिवीतमूर्तिः शङ्करस्य वृषा वधूजनमनःसु शशाङ्कशङ्का करोति (किरात ५. ४२) इति यथा भारविणा तथा माघेनापि 'शिखाग्रगतलक्ष्मलमर्धचन्द्रं हस-

द्भिर्मृत्पिण्डशेखरकोटिभिः श्रृङ्गैरुक्षाणः ( शिशु ५. ६३ ) इति वृषवर्णने चन्द्रः प्रयुक्तः। शुभ्रांशुवर्णं कपोतं ददर्श ( कुमार ६. ३ ), नलहयकेसर-केशरश्मयो निशीथिनीनाथमहःसहोदराः (नै.१.५८) इत्यादावन्यप्राणिनां वर्णनेऽपि चन्द्रस्य स्थानं न हीयते। 'नभश्शरीमण्डनदर्पणश्रीः सुधा-निधिः कैलासमूर्धनि तिष्ठन् शैलाधिनाथस्य शिवालयस्य चूडामणित्व-मुपैति ( कुमार ६. ४४ )' इति कालिदासस्येव "वयस्यया दिवा पुरो विधृते परिपूर्णमण्डलविकासद्युति हिमधाम्नि दर्पणतले मृगदृशः स्वमुख-श्रियं ददृशुः ( नै. ६. ५३ ) इति हर्षस्यापि वर्णनायां चन्द्रो दर्पणरूपेण कल्पितः। तथैव "चन्द्र आदर्शवत् वृत्तत्वादि दृश्यत्वं श्रितोऽप्यादर्शदृश्यां रमणीयां मूर्तिं न विभर्तीति चित्रम्' ( नै. २२. ७३ ) अर्थात्—आदर्श-वत् दर्पणवद् दृश्योऽप्यादर्शे दर्शेऽमावास्यायां रमणीयां मूर्तिं न बिभर्ति' इति विरोधाभासेनान्यद्वर्णनम्।

'कर्णभूषणच्छलेन कर्णस्थितौ शशिभास्करौ ( कुमार १२. १३ ) शरच्चन्द्रकराभिरामैः प्रसारिभिरंशुजालैः प्रांशुस्थितः व्यासः ( किरात ३. १ ),' सान्द्रचन्द्रांशुगौर्यां कटकभित्तौ ( शिशु ११. ५८ ) शशभृद्-निरङ्कभित्तयः ( नैष. २. ७४ ), शशधरखण्डपाण्डुरःरेणुः उद्ययौ ( शि. १७. ५६ )' इत्यादौ विविधवस्तुवर्णनेषु चन्द्रस्य प्रयोगः। चन्द्रमरीचि-गौरैश्चामरैरुद्विज्यमानः ( कुमा. १२.२० ) शरच्चन्द्रमरीचिपाण्डुरैर्वरचारु-चामरैर्वीज्यमानः ( कुमार १५. ४ ) तनुजालकान्तरस्फुरितक्षपाकरकरो-त्कराकृतिचामरं भीमोऽधुवन् ( शिशु. १३. २० ) विधुप्रभैर्विधूयमानो नलः ( नै. १६. २ ) इति यथा चामरवर्णने तथैव 'बृहत्पार्वणचन्द्रचारु छत्रं' शिशु. ३. २) प्रौढचन्द्रद्युतीन्यातपत्राणि भग्नैर्दण्डैर्भूमौ पर्यस्तानि प्रेतराजस्याहाराय स्थापितानि रौप्यस्थालीनीव भान्ति (शिशु. १७. ६७) इति छत्रवर्णने, 'शशाङ्कखण्डाकृतिधनुः' ( किरात. १७. ४१ ) इति धनु-र्वर्णनेऽपि चन्द्रबिम्बस्योपयोगः। बाणास्तु प्राय आकारेण "शशाङ्कार्ध-मुखो बाणः" ( रघु. ३. ४६ ) 'अर्धचन्द्राकारो बाणः' ( कुमार १६. ३७, १६. ४६ ), "स्मरस्यार्धचन्द्राकार इषुः" ( नै. १. ८४ ) इत्यर्धचन्द्राकारः कल्पितः। अमूर्तमपि यशः प्राय उज्ज्वलतया चन्द्रेणैव साम्यं बिभर्ति। यथा—'इन्दुमण्डलं ह्रेपयन्ति शुभ्राणि यशांसि येषां ते वंशान् गुरून्

कुर्वन्ति। (किरात ११. ६४)। मौलेन्दुलेखा विशदाऽर्जुनस्य कीर्तिः (किरात १७. १८), 'शशिकल्पं यशः' (नै. १२. ६६)। अस्यां कल्पनायां नाविन्यं संचारितं हर्षेण। यथा—'नलस्य यशसि जगत्सु सञ्चरति सति धृतदरः शीतद्युतिः पीयूषस्रवकैतवात् स्विद्यति (नै. १२. ८६)। श्री हर्षस्य प्रतिभाविलासोऽभिनवकल्पनाविस्तारेषु भूयो दृश्यते। दमयन्तीविवाहोत्सवे जन्यजनभोजनप्रसङ्गे "राजिकाराद्धं (रायता) वियोगिदाहाय कटूभवत्त्विषस्तुषारभानोः खण्डमिव प्राङ्मृदु पश्चाद् दाहकारि (नै. १६. ७४)। यथा वा धृतलाञ्छनरूपगोमयमालेपनपाण्डुरं विधुं विधिर्दमयन्तीमुखार्तिक्यार्थं वर्धमानकं भ्रमयति (नै. २. २६)। इत्यत्रार्तिक्यार्थं शरावमिव चन्द्रं विधिर्भ्रमयति। अन्यदपि रोचकं वर्णनं दर्शनीयं तद् यथा 'नलदमयन्त्योरनुरागस्य तोलनार्थं स्मरेण चन्द्रस्य संसक्तरश्मिप्रकरा मण्डली कांसीकृता निजनाराचदण्डश्च तुलादण्डः कृतः (नै. ३. १२२)। इति। अन्यत्र च परितापिनि हृदि भैम्या विनिहितं धृतबुद्बुदं चन्दनं हृदयेशयं सुहृदं मदनमुपनमदङ्कगतोडुपरिग्रहो विधुरिव शुशुभे (नै. ४. ४८)। 'यथा नाटके विदूषको ब्राह्मणस्तथा मन्मथनाटिकायां शिखामणि द्विजराट् (चन्द्रः) विदूषकः (नै. ६. ११७)' अर्थाद् दमयन्त्याः शिखामणिश्चद्रं तिरस्करोतीति भावः। अन्यच्च—'विहायसि त्रिदशानां मिथुनक्रीडातल्पे सुखसंमर्दनधुतानां स्रजां भागस्य श्रीभरं ग्रहसंग्रहो गाहते। विधुस्त्वखण्डो मृदुतरकराकारैस्तूलोत्करैरुदरंभरिर्गण्डोपधानविधां न परिहरति। (नै. १६. ६)। अर्थान्नभसि ग्रहनक्षत्राणि तल्प मालापुष्पाणीव चन्द्रस्तु गण्डोपधानमिव वृत्तः पूर्णो मृदुश्चेतिभावः। चमत्कारकारी चान्योप्येको रूपकप्रयोगः—बालेन नक्तसमयेन मुक्तं रौप्यं डिम्बमेव (लट्टू) चन्द्रबिम्बम्। भ्रमिक्रमादुज्झितं पट्टसूत्रमेव रक्तिमा (नै. २२. ५६) अर्थात् चन्द्रबिम्बमेको भ्रमरकश्चन्द्रस्यरक्तिमारूपिपट्टसूत्रेण तद् वेष्टितम्। करान्मुक्तो भ्रमरको दोरकवेष्टनं मुञ्चति तथा चन्द्रो रक्तवर्णरूपिवेष्टनं मुञ्चति। अतो रौप्यवर्ण एव दृश्यते।

शक्यमोषधपतेर्नवोदयाः कर्णपूररचनाकृते तव।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसम्पुटैःकरैः॥ (कुमार ८.७२)

इत्यत्र कालिदासेन नूतनयवाङ्कुरा इव चन्द्रकिरणाः पार्वत्याः कर्णपूररचनायै नखैश्च्छेतुं शक्यमिति शङ्करवचनेन चन्द्रकिरणानामाभूषणत्वं प्रतिपादितम्। तथैव "प्रस्फुरद्भिरिवांशुभिर्हरियष्टिरचनां कर्तुं कुतूहलीव शशी कल्पवृक्षशिखरेष्वागतः (कुमार ८. ६८) इत्यत्रापि चन्द्रकिरणैर्हारयष्टिरचनोत्प्रेक्षिता। वृक्षच्छायैव नीलपट्टसूत्रं तयान्तर्गतकिरणानि मुक्ताफलानीति कल्पना। 'किरणौघैर्नभो दीपयन् कुङ्कुमारुणपयोधरगौरस्तुहिनांशुः शनकैः पूर्वपयोधेर्हेमकुम्भ इवोन्ममज्ज (किरात ९. २२) इत्यत्र चन्द्रो हेमकुम्भसदृशो दृष्टः।

## अनेके चन्द्राः

अनेकचन्द्राणां चन्द्रप्रतिबिम्बस्य च कल्पनाऽपि काव्येषु यत्र तत्र दृष्टिगोचरा भवति। तथा हि 'दोषावृत्तलोचनाभ्यां पृथग् विभिद्यमानः शशीव शरान् क्षिपन् अर्जुनो भ्रान्तानां द्विषामेकोप्यनेक इव दृष्टः (किरात १७.२१)।' नेत्रप्रान्तचिपटीकरणकारणाञ्जनस्य द्वौ चन्द्राविति भ्रान्तिः, नलविषये तु पञ्चत्वसंख्याबोध विषये निमित्तं नास्ति (नै. १३.५२।' इति

यथा नेत्रदोषेण तथैव प्रतिबिम्बेनापि चन्द्रस्यानेकीकरणं वर्णितम्। "गङ्गा तरङ्गप्रतिबिम्बितैः स्वैश्चलन्मरीचिप्रचयैर्बहूभवन्तं सुधांशुं शिरसोद्धरन् (कुमार. १२.११)" यथा वा 'चन्द्रतुल्ये सखीमुखे चन्द्राभमाभ्रं तिलकं कुर्वाणास्तिलके च स्वीयं चन्द्राभ्रतिलकमुखेन्दुमनुबिम्बितम्—प्रतिबिम्बितौ द्वौ चन्द्रौ पुनः प्रतिबिम्बतौ इत्यनवस्था कृता (नै. ६.६२) चन्द्रप्रतिबिम्बविषयेऽन्यापि कल्पना कविभिरुद्भाविताः। तद्यथा—'अपां कुक्षिषु प्रतिबिम्बितश्चन्द्र इव राजपत्नीनां कुक्षिषु विष्णुर्विभक्तात्मा बभूव (रघु. १०.६५)।' 'पक्वफलिनीफलत्विषा बिम्बेन लाञ्छितवियत्सरोम्भसा हिमांशुना विप्रकृष्टविवरं चक्रवाकमिथुनं प्रतार्यते (कुमार ८.६१)।' स्फटिकाचलेन्द्रे प्रतिबिम्बितस्य स्फटिकांशुगुप्तेश्चन्द्रस्य चिह्नप्रकरः पार्वत्या अर्पितस्य कस्तूरिकाशकलस्य लीलां करोति (कुमार ६.४१) इति कालिदासः। 'उज्ज्वलकपोलं मुखमिन्दुः प्रतिमाच्छलेनाविशत्' (शिशु. ६.४८) अमलात्मसु तरुणीकपोल-

फलकेषु मुहुः प्रतिफलन् इन्दुरुचां निकरः सान्द्रतरं विससार ( शिशु. ६.३७ ) इति शिशुपालवधे चन्द्रवर्णनम् । भीमभुवो विरहपाण्डुरे कपोले प्रतिबिम्बितश्चन्द्रो भैमीमुखेऽनुपलक्ष्यसितांशुतया कलङ्कमृगस्यार्पणान्मुखं निजसखं चकार ( नै. ४.२६ ) । पद्मचन्द्रौ स्वतातजलात् स्वमित्रदर्पणाच्च प्रतिबिम्बं याचित्वा याञ्चया प्राप्तं दमयन्तीमुखश्रीप्रतिबिम्बमेव विभूषणं दिने रात्रौ च धारयतः । ( नै. ७.४६ ) । 'दर्पणतले निजास्यप्रतिबिम्बदर्शिनी दमयन्ती विधोरदूरं स्वमुखं निधाय एतयोर्विशेषं निरूपयन्ती बभौ ( नै. १५.५० ) । विरहतप्ता दमयन्ती चन्द्रमसहमाना सखीं ब्रूते 'सखि, मुकुरं बहिः कुरुष्व यदा विधुस्तत्र विशति तदा गुरुमेकमयोघनं करे कृत्वा तमहितं द्रुतं जहि ( नै. ४.५७ ) । प्रतिदिनमुदयसमयेऽम्बुधेः कियन् स्तोकमुत्थितं तथा समुद्रजले जातेन स्वानुबिम्बेन मिलितं विधुं नलवदनेन्दुमण्डलं व्यडम्बयाञ्चकार ( नै १८.१०२ ) । क्रीडातडागे चन्द्रस्य प्रतिबिम्बमधिकृत्य वर्णनं रोचकमस्ति । तद्यथा—'इन्दुर्नलस्य कीर्तितडागस्य बिन्दुश्रियं प्राप्नोति । प्रतिबिम्बितः सन् जलं प्रविश्यादृश्योदयः स स्फाटिकानिर्मितो योगेश्वरः सन् जलदेवता जागर्ति ( नै. १२.३८ ) ।' नलस्य भैमीं प्रतीयमुक्तिर्यथा 'त्वमुच्चसौधे स्थित्वा सौख्येन लक्ष्ये केलिकुल्याम्बुनि पश्येन्दोर्बिम्बं यदिह निमज्ज्य राजहंसी चिरं सतः प्रियस्यं भ्रमेण चुम्बति ( नै. २२.१२० )' 'अथवा 'देवगणैरयंचन्द्रोऽमृतं निपीयाह्नि तुच्छः कृतः । निशि स तव क्रीडानद्यां प्रतिमाच्छलेन मग्नः पुनश्चामृतानां पूर्णः स्यात् । पुनः पानभयात् निलीन इति भावः ( नै. २२.१२१ ) । अन्यत्रापि राजहंसरूपेण कम्पितं चन्द्रप्रतिबिम्बं रमणीयं वर्णितम् । "भैमीस्वयंबर आगतस्यैकतमस्य राज्ञो वर्णने कथितं यत्" एतस्य राज्ञोऽरिनारी पर्वतकन्दरायामतिवाहितदिवसा रात्रौ बहिर्निःसरन्ती शिशुना क्रीडाहंसभ्रान्त्या 'उन्निद्रचन्द्रं देहीति' प्रार्थिता चन्द्रस्यानयने सामर्थ्याभावाद् बहु रोदिति । ततो बहुतरे नयनजले प्रतिबिम्बितस्य चन्द्रस्य सामीप्येन क्रीडाहंस आगत इति बुद्धया प्रहृष्यतस्तनयस्य हासैः सा निःश्वासममुञ्चत् ( नै. १२.२८ ) । एवमादिषु श्रीहर्षस्यातिरञ्जितकल्पना दृश्यन्ते ।

## चन्द्रस्य कलङ्कः

चन्द्रबिम्बे दृश्यमानं कलङ्कमधिकृत्य संस्कृतकाव्येषु विविधाः कल्पनाः प्रादुर्भूताः। प्रथमं तावत् कालिदासेन 'छाया हि भूमे शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः। (रघु. १४.४०) इति कथनेन कलङ्कः पृथिव्याश्च्छछायारूपेण भावितः। वस्तुतश्चन्द्रग्रहणसमये पृथिव्याश्छाया चन्द्रबिम्बे पततीति वैज्ञानिकः सिद्धान्तः। नैषधीयचरितेऽपि कालिदासस्य कल्पना पुनरुक्ता। तद्यथा—

क्षमैकस्मै कलङ्काय देवस्येवामृतधुनेः ( नै. १७.१३० ) अयं भावार्थ,—इन्द्रादि देवेषु सत्सु दमयन्ती नलं वृतवतीति देवादीनामयशः। क्षमां परित्यज्य दण्ड एव उचितः। यतः क्षमा एव तेषां कलङ्को यथा चन्द्रस्यापि क्षमा ( भूमिः ) एव कलङ्कः। अन्यत्रापि भूमिच्छाया चन्द्रस्य कलङ्क इति सूचितम्। हैमशैलो मेरुर्बहुना कालेन नीलमलसम्बन्धान्नीलो जात इति संभावितम्। अन्यथा यदि हेममयत्वात्पीन एव स्यात् स पीतो दृश्येत किन्तु मेरुप्रतिबिम्बभूत इन्दुकलङ्को नील एव ( नै. २२.६२ )। तथा च—

छायापदेशाद्वसुधा निमज्ज्य सुधाम्बुधावुज्झति खेदमत्र। (नै. २२.६१) अत्रापि भूमेश्छायैव चन्द्रे निमग्ना कलङ्क इव भासते इति सूचितम्।

प्रायश्चन्द्रस्य कलङ्को मृगरूपेण वर्णितः। यथा माघस्य प्रसिद्धोक्तौ—

'अङ्कारोपितमृगश्चन्द्रमा मृगलाञ्छनः।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः॥' ( शि. २.५३ ) यथा वा

नैषधीयचरिते—'शालभञ्जिकामुखचन्द्रेषु कलङ्कमृगाः सौधकन्दराहरिभिः कुक्षिगतीकृता इवेत्युत्प्रेक्षा। सिंहिकासूनुर्मृगस्य लोभान्मृगाङ्कं कवलीकरोति, स्वस्यापि दानादुत्सङ्गसुप्तं मृगं नोज्झन् अयं तेन पुण्येन मुदा मुच्यते ( नै. २२.६६ )' 'चन्द्रतुल्ये नलोद्याने कलिर्लाञ्छनमृगोऽभूत् ( नै. १७.२२० ), दक्षयज्ञे रुद्रस्येषुणा विद्रावितमार्तं तारारूपं मृगं व्योमनि वीक्ष्य बिभ्यद् एषु इन्दुमीशस्य चूडामणिं ज्ञात्वा शरणं विवेश ( नै. २२.७८ )' शिशौ चन्द्रे रङ्कुर्न स्थितः, किन्तु चन्द्रे प्रियाभिरौषधीभिररण्यसंदेश इव प्रेषितः प्रेयसीसंदेशरूपो रङ्कुर्वि-

धुनाऽङ्के स्थापितः ( नै. २२.७६ )। 'चन्द्रो गरुडश्च साम्यं समीक्ष्य विष्णुना नेत्रव्यापारे वाहनव्यापारे च नियुक्तौ तद् युक्तम्। द्वावपि हरिणाश्रितौ ( हरिण + आश्रितः, हरिणा + आश्रितः ), द्विजराजौ, द्वावपि पक्षौ भजतः ( नै. २२.८६ ), 'यदा मृगाङ्कः विष्णोर्नेत्रारविन्दत्वमगात् तदास्यकलङ्कः कनीनिकाया भ्रमरस्य सुन्दरत्वं जगाम ( नै. २२.८८ ),।

दमयन्तीमुखसाम्यनिमित्तरमणीयनेत्रत्रयसंपादनाय चन्द्र आहतः सन् रङ्कुमङ्के करोति ( नै. २२.१४१ ) एवमादिकल्पनाभिश्चन्द्रे मृगस्य स्थापनहेतुरुत्प्रेक्ष्यते। 'इन्दोर्मृगान् सारं दृशा वादाय दमयन्तींवक्त्रचन्द्रे निहिते। दमयन्तीवक्त्रे स्थितेऽनन्धो मृगो विधौ स्थितिं कुतो दध्याद् अतस्तस्य नेत्राहरणम् ( नै. २२. १४५ ) 'शशी पूजाश्रियमुन्निद्रकमलैर्नावापत् यतः स पद्मनिमीलिततेजाः, निजाङ्कभूतस्य रङ्कोरक्षिद्वयेनैवालङ्कृतस्तु तां पूजाश्रियमेति ( नै. २२.६३ )। 'चन्द्रस्य सेवार्थमुपगतानामौषधीनां पल्लवमास्वादयश्चन्द्रस्यैव सुधाजलानि श्रयन् एष कलङ्करङ्कुश्चन्द्रे सुखं वसति ( नै. २२.७७ ) "एष प्रवहाख्यानिलस्य वाहनरङ्कुः पिपासुर्गगनचारिरथाच्च्युतोऽनम्बुन्यम्बरे चन्द्रस्यामृतबिन्दुं पिबन् तस्याङ्के चिरं तिष्ठति' ( नै. २२.७५ ) राज्ञो यशोभिस्तुषारकिरणभासाममलानि कुलानि तृणीकृतानि ततो रङ्कुः सुधाम्बुनिधौ चन्द्रे तेषां कान्तितृणानामङ्कुराणां कवलाभिलाषात् तत्रवसति' ( नै. ११.६७ ) 'पण्डिता इन्दुं भैमीमुखाद् बहुतृणं गृणन्ति अतो मृगो मृगतृष्णयेव चन्द्रं न त्यजति। नै. ( २२.३५ ) विरहार्तदमयन्त्या सखीं प्रति वचनं 'सखि, श्रवणपूरतमालदलाङ्कुरं शशिकुरङ्गमुखे निक्षिप येन किमपि तुन्दिलितोऽमुं चन्द्रं स्थगयतु येन क्षणमुच्छ्वसिमि' ( नै. ४.५६ )। यथा तृणेन तथैव गीतेनापि मृगः समाकृष्टः इत्यपि विचारः प्रकटितः। तथाहि—'अयं मृगो दमयन्त्या आनने पूर्वभूतां गीतिं निपीय तदाकर्णनलोलुपस्तस्या वदनस्य भ्रमेण विधुं हातुं न स्पृहयति' ( नै. २२.१०६ ) अपिच 'इन्द्रोर्भ्रमेणोपगमाय योग्ये दमयन्त्या आस्ये जिह्वा, विधुवास्तुमृगं गीत्या कर्षतु ( नै. २२. १०७ )।

कलङ्कमृगस्य नाभिकस्तूरिका विषयेऽपि श्रीहर्षेण केचिद्विचारा उद्भाविताः। यथा—दलाकारकलाकलाप इन्दौ यदि केतकत्वमारोप्यते

तर्हि सौरभवासनाभिरङ्कमृगस्य नाभिकस्तूरिका संवदति ( नै. २२.८६ )। देवागारे कस्तूरीकर्दमेन सान्द्रं रजतभाजनान्यङ्करुङ्कुकलुषीकृतकुन्देर-मृतांशोः साम्यं भजन्ति' ( नै. २१. २३ ) तथा हि—

ताराविहारभुवि चन्द्रमयीं चकार यन्मण्डली हिमभुवं मृगनाभिवासं।
तेनैव तन्वि सुकृतेन मते जिनस्य स्वर्णैकलोकतिलत्वमवाप धाता ॥
( नै. २२.१३४ ) अर्थात् हे दमयन्ती धाता तराणां भुवि गगने चन्द्रमयी बिम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोरनुमत्या निर्ममे तेनैव सुकृतेन सुराणां मध्ये तिलकत्वं श्रेष्ठत्वमाप। श्लेषेणापरोऽर्थः—ताराया पूजास्थाने शीतलां कस्तूरीपरिमलमिश्रितां चन्द्रमयीं कर्पूरमयीं मण्डलीं यच्चकार तेनैव पुण्येन जिनस्य मते बौद्धदर्शने ब्रह्मा सुरश्रेष्ठत्वमधत्त। दमयन्तीविवाहे मृगमांसैः साधितस्य तेमनाख्यव्यञ्जनस्य मृदुत्वा द्रसातिशयत्वाच्च जन्यजनास्तर्कितवन्तो यत् निशाधवस्योत्तमाङ्गे वर्त-मानाद् हरिणात् पीयूषजलैः सह वर्तमानैर्मांसैरश्रावि किमिति चन्द्राङ्क-मृगमांसमधिकृत्यैका कल्पना ( नै. १६.७६ )।

चन्द्रस्य पृष्ठभागविषयकं कुतूहलमपि काविनाऽनेन प्रकटितम्। विधोरङ्क इव पृष्टभागेऽपि रङ्कुस्तिष्ठति किमिति शङ्क चेत् तर्हि तत्त्वाय नलमुखमेव पलायमानस्य चन्द्रस्य पृष्ठभागमपश्यत् ( नै. २२.१२३ )

चन्द्रस्य कलङ्को मृग इव शशोऽपि कल्पितः। कलङ्करूपं मृगं शशं वा स्वोदरे प्रक्षिप्य जातस्फीततनोर्हरेः ( सिंहस्येन्द्रस्य च ) पत्न्या प्राच्या दिशा सूतस्य हरेरक्षीभवच्चन्द्रस्य दमयन्तीवदनाम्बुजाद् भङ्गोऽ-जनि' ( नै. २२. ३७ )। 'एष शशः शशाङ्के जागर्ति, अत्र को बुध आश्चर्यं करोति। यत् एतत्पितुरम्बुराशेर्मध्ये तूच्चैश्रवस्तुरङ्ग ऐरावतो मतङ्गोऽ-प्यासीत् ( नै. २२.६४ )। अन्यत्रान्या कल्पना यथा 'व्याकरणाल्लोक-प्रयोग एव बलीयान् यतः शश अस्य अस्तीती यथाऽयं शशी तथो मृगोऽ-स्यास्तीति मृगीति नोक्तः (नै. २२.८२)।' पृष्ठभागविषयेऽप्यन्यद् अनुमानं यत् 'चन्द्राङ्कम् उत्तानं अर्थात् स्वर्गाभिमुखमेव, शशमस्माभिर्दृश्यमानं पृष्ठभागमाह। यदि शशकोऽस्मत सम्मुखऽनुत्तानोऽभविष्यत् तर्हि मध्यवर्ति शशकोदरस्य धवलत्वाच्चन्द्रमध्यभागोऽपि धवलोऽभवि-ष्यत्। असः शशक उत्तान एव ( नै. २२. ८० ) तथा च—

"दूरस्थैरस्माभीरक्तनीलमिश्रितवर्णे केवलो नीलिमा दृश्यते । तत् शशस्य पृष्ठवर्तिरोम्णां रक्तभागो दूरस्थानां परोक्षः, नीलिमा तु दृश्यते ( नै. २२. ८१ )। चन्द्रः स्वाङ्कगतशशस्य रक्षणेऽपितत्पर इत्येका कल्पना। 'नभसि ध्वान्तध्वांक्षाणां मारणे श्येनपक्षिरूपाणां सूर्यतेजसां प्राग्भावे क्रीडनैः खे श्येनपानां मृगयामवधारयन् शशी निजाङ्कवर्तिशशस्य विशसनभयाच्चरमामाशां ययौ। ( नै. १६. २२ )।' चन्द्रे शशस्य स्थापनार्थं हेतुरुत्प्रेक्षितो यथा—'पूर्वं चन्द्रो निष्कलङ्क आसीत् । किन्त्वतिसादृश्यात् प्रतिक्षणं दमयन्तीवक्त्रबिम्बस्य भ्रान्तिं च्छेत्तुं विधिरिन्दुं शशरूपेण कलङ्केनातङ्के ( नै. २०. २० ) ।

चन्द्रस्य कलङ्को न मृगो न वा शशः किन्तु तमोरूपोऽथवा नीलाकाशमेवेत्यपि कल्पना नैषधकाव्ये दृश्यते । तथा हि—'ब्रह्मणा दमयन्तीवदनं निर्मातुमिन्दुमण्डलात् सारं हृतमतो मध्ये संजाते बिले परस्थितस्याकाशस्य नीलिमा दृश्यते स एव कलङ्कः (नै. २.२५) ।' अथवा 'लोका रजनीभर्त्तुः षोडषमंशं कलामाभनन्ति । प्रतिपदाद्यारभ्य वधिष्णवः पञ्चदशैव ताः कला एनं वृत्तयन्ति—पूर्णवर्तुलाकारं कुर्वन्ति । तिथिं बिना या षोडषी कलावशिष्टा सा किं हरालंकृतिः ? तस्या उद्धृतायाः कलायाः स्थाने सश्यामिकं शून्यं बिलं तन्नीलं नभोभागमेव चन्द्रमण्डलमध्ये कलङ्कं पश्यामि' इति ( नै. २२. १४० )। 'नलस्य यशांसि द्विषतः सुधारुचोरिन्दोरङ्को नलस्याखिललोकधाविभिर्यशोभिर्भीता तामसीमसी किम्' ( नै०. १२. ८६ ) इत्यत्र कलङ्कस्तमोरूपेण कल्पितः ।

अन्येषामपि विविधवस्तूनामारोपणं चन्द्रकलङ्के कृतम् । तथाहि—'नलस्य दिग्विजययात्रासु तत्सैन्येनोद्धृतं रज एव सुधा समुद्रे पतितं पङ्कीभवन् । सुधाम्बुधेरुत्पन्ने चन्द्रे लग्नः स पङ्क एव सुधांशोः कलङ्कः ( नै. २. ८ । ) 'अल्पाङ्कपङ्क, पीयूषनीरा विधुमण्डली ( चन्द्रबिम्बं ) स्मरस्य सरसी' ( नै. २२. १२५ ) इत्यत्रश्लोकद्वये कलङ्कस्य पङ्कत्वम् । 'दमयन्तीमुखार्तिक्यार्थं विधिर्विधुं वर्धमानकं भ्रमयति तत्र कलङ्को गोमयरूपः ( नै. २. २७ )। "तनयैः पितृभ्यो यत् श्रद्धापवित्रं कृष्णतिलमिश्रितमम्भः स्वधाकृतं तत् पितृलोकभूतं चन्द्रमुपतस्थे तत्र श्राद्धजलं सुधा कृष्णतिला एव कलङ्कोजातः ( नै. २२. ११६ ) । अन्यत्र—'तामिस्रा

रात्रिगौरे प्रिये चन्द्रं भातितभाम्, ज्योत्स्नी रात्रिस्तु नीले चद्रे शोभते तस्माद् उभयोरपि दयितयोः शोभाप्तेर्लोभाचन्द्रः सितासितं मूर्तिं बिभर्ति (नै. २२. ८५) अतः कलङ्कश्चन्द्रस्यासिता मूर्तिरेव। 'बलविजयिन इन्द्रस्यैरावतस्य गण्डयोः पिण्डद्वयाद् दानद्रवलवस्य प्राचीदिशालग्नात् तद्दिशि विहरतोऽश्यामत्वैकमत्यस्थितसकलकलानिर्मितेर्निर्मलस्येन्दोरीन्दीवराभमङ्कपङ्के जातमिति शङ्के' (नै. २२. १३८)। अन्याप्येका कल्पना यथा—'यैः सरोजिन्या दाहरूपात् तुषारे ज्वलनोऽनुमायि तैर्हिमांशोः कलङ्केऽपि तदीयधूमौघतया समर्थितः' (नै. २२. ६०)। यथा वा 'पीतया वलभीपताक्या मिलितममृतद्युतिलक्ष्म पीतवाससः शेषशायिनः सखितामादित (नै. २. ७०)'।

चन्द्रस्याङ्कः वस्तुतस्तस्यायशोरूपी कालिमा कलङ्क एवेति मत्वा तत्कारणं कविनोत्प्रेक्ष्यते यथा—हरनेत्रहुताशनाज्ज्वलत् स्मरमुखं विधिना विधुं चक्रे, बहुविधेन वियोगिवधैनसा शशमिषाद् कालिकया च विधुरङ्कितः।' (नै. ४. ७३)। निजांशुदग्धदमयन्त्यङ्कभस्मभिर्विधुलाञ्छनमृजां मुधा वाञ्छति। यतस्तावतापि स नलास्यता नैव यास्यति वधूवधेनैव स पुनः कलङ्कनीलप्रभामिश्रविभाविभान्ति। (नै. २२. ७०) 'देवव्रतभोज्यर्द्धिः शुद्धा सुधादीधितिमण्डली सदेज्येव शोभते। साऽप्येकं मलिनं कलङ्कं बिभर्ति यथेज्या हिंसां बिभर्ति।' (नै. २२. ७४)। 'दशाननेन जगन्ति जित्वा पुरा योऽयं चन्द्रो जेतुं नापारि तस्य विधोरियं कलङ्करूपा ग्लानिर्युक्तैव यतो दमयन्त्या आननेन स नितरां जितः (नै. २२. १२६)। सर्वमात्रायश एव कलङ्क इति मतिः'। तथा हि—'इन्द्रादिदेवताभिर्नल इत्थं निन्दितः—तव वरो कलङ्कीन्दुरजनिष्ट। भवान् अपि कलङ्की माभूत् (नै. ५. ११६)।' यथा वा 'त्वं नल एव कलङ्की नेन्दुः। याचमानं प्रति याऽपदृष्टिर्या मुखमुद्रा याऽतुष्टिस्त्वादृशस्य सकलः स कलङ्कः। इति भासि शशकः केवलमङ्को न कलङ्कः (नै. ५. १२०)। 'यः शरद् ऋतुः पयोमुचां मेचकिमानमुच्चारयामास तेनापि विधिलाञ्छनकालिमा प्रोञ्छितुं नापारि (नै. २२. ११२)। इत्थं श्रीहर्षेण नैषधीयचरिते चन्द्रवर्णने चन्द्रकलङ्कमधिकृत्य विचित्रा नवकल्पना उद्भाविताः। भारविणाप्ययश एव लाञ्छनमिति सूचितम् तद्यथा 'यस्मिन्नरे कृच्छ्रेषु

भर्तुराज्ञया व्यर्थया भूयते स शशाङ्कस्य लाञ्छनमिवावदातवंशस्य लाञ्छनमस्ति ( किरात. ११. ७५ ) कालिदासोऽपि कलङ्कं दोषरूपं मन्यते यथा प्रसिद्धे तस्य श्लोके—

'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' (कुमार. १)

अन्यच्च—

'म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः' ( नै. १६. ५६ ) इति ।

चन्द्रकलानां वृद्धिक्षयक्रमोऽपि चन्द्रस्य वैशिष्ट्यम् । तदधिकृत्य कवीनां कल्पनाविलासो यत्र तत्र दृश्यते । कालिदासेन 'दिने दिने परिवर्धमाना चान्द्रमसी लेखेव पार्वती पूर्णतां ययौ' ( कुमार १. २५ ) । 'प्रवृद्धौ हीयते चन्द्रः ···तथा स राजा (रघु १७.७१) इत्युपमाद्वयं प्रयुक्तम् । चन्द्रस्य कलावृद्धिः सूर्यकिरणानुप्रवेशादिति मतं तेन प्रस्तुतम् ।

पितुः प्रयत्नात् स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ इति
रघुवर्णनम् । ( रघु. ३. २२ )

भारविणापि 'अर्जुनः शुचिभिर्गुणैरघमयं तमः शमयन् प्रतिवासरं कलाभिर्विमलः शशीव अभिववृधे' ( किरात. ६. २० ) 'स्वभावजं शिवं तेजो दधतं क्षणमपि सन्तं वृद्ध्यर्थमुत्थितं प्रतिपच्चन्द्रं प्रजाः प्रणमन्ति' ( किरात २. ११ )। इति चन्द्रस्य कलावृद्धेरुल्लेखः कृतः। यौवराज्यानन्तरं बालभाव एवाधिराज्यमवाप्य कुमारो राजाऽतिथी रेखाभावादर्धेन्दुमवाप्येव पूर्णतामुपारूढश्चन्द्रमा इव बभौ ( रघु. १७. ३० ) इति कालिदासः । 'लोका रजनीभर्तुः षोडशांशं कलामामनन्ति । किन्तु प्रतिपदाद्यारभ्य वर्धिष्णवः पञ्चदशकलास्तं चन्द्रं पूर्णवर्तुलाकारं कुर्वन्तीति ( नै. २२. १४० ) हर्षेणापि चन्द्रस्य कलावृद्धिः सूचिता ।

चन्द्रस्य कलाक्षयः सुरैः कलानां पानेन भवतीति सामान्यतः कविसम्मतिः । यथा कालिदासस्य प्रसिद्धे श्लोके—

'पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयःश्लाघ्यतरो हि वृद्धेः' (रघु. ५. १६)

नैषधीयचरिते विरहपीडिता दमयन्ती चन्द्रमसहमाना तं कालकूटं मत्वा निन्दति—'समुद्रोत्थितं कालकूटं शङ्करेण पीतं न पुनर्बभूव

किन्तु एतद् असितं कालकूटं (चन्द्रस्तु) सुरैर्निपीय जनितक्षयं पुनः स्वयमुदेति' । नै. ४. ६१ ) । अथवा अशेषकलं संपूर्णचन्द्रं विरहिणीवधवसाकुलं पापं कलय, सुरनिपीतसुधाकं त्वपापकं कलय, किन्तु ग्रहविदो विपरीतकथाकथम्' इति दमयन्तीवचः । अत्रापि सुरैर्निपीतसुधश्चन्द्रः क्षयं यातीति विचारः प्रकटितः । दक्षस्य शापश्चन्द्रक्षयस्य कारणमिति मतमपि कविषु प्रसिद्धमस्ति । तथा हि "दक्षस्य शापश्चन्द्रमिव रतिरागसम्भव आमयः क्षयरोगोऽग्निवर्णं राजानमक्षिणोत् (रघु. १६. ४८), 'दक्षस्य शापेन क्षयी शशीव विरूपं वपुर्वहन् वहिर्निर्जगाम (कुमार. ६ १७ ) इति कालिदासः । नैषधीयचरितेऽपि "ओषधयः स्वशक्त्या स्वपतिं क्षयिणं चन्द्रं भातुं न शेकुर्विप्रा मन्त्रेण द्विजराजं न, पयोधिः स्वपुत्रं मणिभिर्न सुधापि स्वाश्रयं चन्द्रं स्वप्रभावैस्त्रातुं न शशाक' (नै. २२. ६६)। ओषधीषु चन्द्रकलार्पणं कालिदासेन सूचितं तद्यथा—'दर्शो भुक्तसारां हिमांशोरन्त्यां कलामोषधीषु समर्पयति । तथा वाल्मीकिः शोकदीनां सीतां तापसीष्वर्पयामास ( रघु १४. ८० )' । चन्द्रस्य कलाक्षयविषय अन्यदप्युत्प्रेक्षितं तद्यथा—'द्विजराजः प्रतिमासं पूर्णां तनुं तनूकृत्य कुहूष्वदृश्यतां प्राप्य नलमुखस्यैक्यं गच्छति किम् (नै. ८. ३७)। अयं भावः—यथा ब्राह्मणश्चान्द्रमासादितपोभिः कृशो भूत्वा ब्रह्मसायुज्यं प्राप्नोति तथैव चन्द्रोऽपि नलमुखैक्यमवाप्तुं तप इव तपति । विधिर्मासि मासि कुहूरात्रिषु विधोर्बिम्बशतानि विलुप्य विलुप्याभङ्गुरश्रीकं दमयन्तीमुखेन्दुमस्थापयत् (नै. ७. ५४) शिशुपालवधे नवैका कल्पना—'उदितो हिमदीधितिः प्रथममेका कलामात्रमभवत् । ततोऽर्धचन्द्रस्तदनन्तरं महदभूत् । ध्रुवं द्युतिशालिनोऽपि क्रमश एवोपचयं दधाति न सहसा' ( शि. ६. २६ ) इत्यर्थान्तरन्यासेन स्पष्टीकृता ।

चन्द्रस्य *परिवेषोऽपि* काव्यालङ्कारेषु प्रयुक्तः । यथा माघेन शुक्लांशुभिरुपरचितानि रश्मिभिर्विततानि चन्द्राकृतीनि वेश्मानि गजमण्डलाभिर्नीलाभ्रपंक्तिभिरिव परिवेषमधिजग्मुः (शिशु. ५. ५२) । यथा वा श्रीहर्षेण—"भैमी विधुं सेवितुं लम्बमानो हंसः शशिपरिधिमिव मण्डलं तेने (नै. २. १०८) । 'अस्या मुखेन नित्यस्पर्धी चन्द्रः पराभूय प्रसह्य बध्यमान एवाधुनापि परिवेशपाशास्तिष्ठति (नै. ७.

५८ ) इत्यत्र परिवेशश्चन्द्रस्य बन्धनपाशः कल्पितः । 'सखीरूपे चन्द्रे स्वपाणिभ्यां कण्ठाश्लेषरूपः परिधिः ( नै. १६. ५६ )' नलानने शशाङ्काधिकरूपतां गते मातुमशक्नुवन् इव नलस्य भालो मणिपट्टिकामिषेण परिधिर्बभौ' ( नै. १५. ६१ ) । अत्र मणिकिरणानां मण्डलाकारत्वेन पट्टिकायाः परिवेषाकारत्वं युक्तम् । श्रीहर्षस्य परिवेषविषयेऽन्यैका कल्पना रोचका वर्तते । तथाहि—यदा यदा ब्रह्मा—"तदोजसस्तद्यशसः ०००

परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥
( नै. १. १४ )

नलप्रतापस्य नलयशस स्थितौ सूर्याचन्द्रमसौ निष्प्रयोजनाविति विधिवैयर्थ्यसूचकं रेखामण्डलं करोति तदेव परिवेषरूपेण तिष्ठतीति भावः ।

*चन्द्रवैरिणो राहोरपि* स्थानं चन्द्रवर्णनेऽपरिहार्यमस्ति—

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥
( रघु. २.३९ )

इति कालिदासेन राहोर्निर्देशः कृतः । 'चन्द्रस्येव निषधेन्द्रस्यामलं मण्डलं लोपयितुं पापः कलिः स्वर्भानुरिव प्राप ( नै. २२. १६१ ) इति श्रीहर्षेण । राहुश्चन्द्रं ग्रसतीति विचारः सर्वैः कविभिः प्रतिपादितः तथा हि—

'राहुरिन्दोर्भोगमिव सन्ध्याभ्रवत् कपिशो विराधराक्षसो रामस्य मार्गमावृत्यातिष्ठत्' ( रघु. १२. २८ ); 'असुरद्रुहां पुरः सैंहिकेयः सोमं क्लिश्नाति ( शिशु. २. ६४ ), "भैमीवदनाम्बुजाच्चन्द्रस्य भङ्गः, स सिंहिकासुतः पुनरस्य चन्द्रस्यैकः प्रतिभटः ( नै. २२. १३७ ) । 'परसायकेन लूनान् उच्चैर्द्यामुत्पतितान् रौद्राकारान् सैंहिकेयानुकारान् आननान् दृष्ट्वा मुग्धैरप्सरोवक्त्रचन्द्रैस्त्रेसे ( शि. १८. ५६ ) ।

चन्द्रग्रासे राहोर्दन्तपंक्तिरपि कविभिर्निर्दिष्टा तद्यथा—'अभिधित्सत् उत्तमौजसो राहुवदनविकृतं मुखमुपलसत् सितदन्तपंक्तिग्रस्तशशधरमिव व्यभाव्यत ( शिशु. १५. ५१ ) ।', अथवा—

स्वर्भानुप्रातिवारपारणमिलद्दन्तौघयन्त्रोद्भव—
श्वभ्रालीयनयासु दीधितिसुधासारस्तुषारद्युतिः । ( नै. २२. १४८ )

इत्यत्र चन्द्रस्य गिलने दन्तदशनकृतविवरेभ्यः किरणामृतस्यासारो भवतीति कल्पना। इत्थमेव राहोर्दन्तैश्चन्द्रस्य पेषणमन्यत्राप्युत्प्रेक्षितम्। "पूर्वं शशी यथा ज्योतिष्यं गोल आसीत्। दंष्ट्रायुगयन्त्रकृष्टपीयूषश्चिपटोऽभूत् ( नै. २२. ८४ )।

अपरं च राहुः पूर्णेन्दुमेव ग्रसतीति सूचितम्। तथाहि—

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये।
विधुर्विधुंतुदस्येव पूर्णस्तस्योत्सवाय सः ॥ ( शिशु. २. ६१ )

चन्द्रस्य प्रतिवासरं राहुणा पानमपि चित्रितम् 'स्वर्भानुप्रतिवारपारण...( नै. २२. १४८ ) इति श्लोके।

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ( शिशु. २. ४९ )

इत्यत्र चन्द्रस्य मृदुता एव राहुणा तद्ग्रासस्य कारणमिति प्रतिपादितम्। चन्द्र इव राहुरपि बहुश उपमानीकृतः। तथाहि 'चन्द्रस्य कलाविच्छेदरूपेण गिलितं चन्द्रकलाकलापं वमन् राहुरिव वने कोरकितोऽगस्त्यवृक्षः ( नै. १.६६ )। अत्र चन्द्रस्य कलाक्षयो राहुग्रासात् कल्पितः। राहुणा चन्द्रस्य ग्रहणे राहुरेव भूमेश्छाया इति कल्पना वैज्ञानिकविचारेण संवदति यथा—'एतस्य राज्ञः कीर्तिप्रतापैरेव विधुभिर्युद्धार्थमाहूयमानो राहुर्भियैव भूमण्डलच्छायायां तर्क्यकायो बभूव ( नै. १२. ६४ ) इति।

यथा सुधापानार्थं तथैव कलङ्कमृगलोभेन सिंहिकासुतो राहुर्मृगाङ्कं चन्द्रं कवलीकरोति किन्तु चन्द्रः स्वस्यापि दानादुत्संगसुप्तं मृगमनुज्झन् तेन पुण्येन मुच्यते ( नै. २२. ६६ ) इति। मुखचन्द्रयोः सादृश्यमपि राहुणा चन्द्रग्रहणस्य हेतुरूपेण प्रस्तुतम्। यथा—

यस्य 'किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥
( शिशु. १४. ७८ )

इति प्रत्यनीकालङ्कारेण कृष्णस्य सौंदर्यवर्णनम्। "भैमीमुखत्वं प्राप्य राहुभयस्य व्ययेन सुखीभवन् सुधांशुर्जयति। अतश्चन्द्रस्य बालकिरण-चक्रमधरोष्ठबिम्बलीलां दधार (नै. ७. ६१)। 'राहुग्रहपीडिताच्चन्द्रात् सारमुद्धृत्य देवा आत्मानं नलानुकल्पं कल्पयन्ति" यतो नलोऽपि प्रियावियोगात् साराकर्षणं प्राप्तवान् इव (नै. १०. २२)।

चन्द्रो विरहिजनानां पीडाकरः। अतः विरहिणश्चन्द्रग्रासकं राहु प्रशंसन्ति। यथा भैमी विधुं बहु निन्दितवती, विधुंतुदं स्तुतवती (नै. ४. ४३)। विधुंतुदो राहुश्चन्द्रं किं मुञ्चतीति तर्केण सह विषादोऽपि भैम्या प्रकटितः। 'किं विधुंतुदः स्वरिपुहरेस्तीक्ष्णसुदर्शनस्य विभ्रमात् विधुं न ग्रसते। अन्यथा वदने निपतितं बलिकरम्भनिभममुं स कथमुज्झति (नै. ४. ६४)। "राहुरसंशयं वदनगर्भगतं शशिनं निजेच्छया नोज्झति। अयं विधुरशित एव राहोर्गलनालबिलाध्वना स्वयं विना निःसरति (नै. ४. ६५)। 'ऋजुदृशः पुराविदो मधुभिदं राहुशिरश्छिदं कथयन्ति, विरहिमूर्धभिदं किं न निगदन्ति? यदि राहोर्जठरानलः स्यात्, क्व नु शशी? (नै. ४. ६६)। "यथा स्मरसखौ दिवो भिषजौ स्मरवैरिणा दलितं मखमृगस्य शिरः सपदि संदधतुस्तथा राहोः शिरोऽपि कः करोतु (नै. ४. ६७)। रणे नलविमस्तकितस्य मृतिभिया च भृशमुत्पततो रिपोः कबन्धगलेन तमोग्रहस्य राहोः शिरस्तदसृग्दृढबन्धनं न मिलति किम् (नै. ४. ६८)। मगधराजजरासंधस्य वपुर्दलयुग्मवत् कबन्धतां गतेन केतुना समं तमसो राहोः शिरो जरा किमिति न प्रतिसीव्यति (नै. ४. ६९) इत्येवमादि तर्कैर्यदि राहुः पूर्णशरीरो भवेत् तर्हि चन्द्रस्तस्य ग्रहणात् पुनर्न निःस्सरेदिति समर्थितम्। 'हे विधुन्तुद किं त्वं रिपुं चन्द्रं द्विजराजधिया त्यजसि? यदि स ईदृशो भवेत् तर्हि पतित एष वारुणीं निषेव्य पुनः किं दिवमेति? (नै. ४. ७०)।' यतः सुरापानं ब्राह्मणकृते पातकम्। 'अयं किल कण्ठं दहति तेन किं गरुडवद् द्विजवासनयोज्झितः? हे विधुन्तुद, मयि निरागस्यप्यस्य दाहिका, साऽस्य प्रकृतिरेव, तत्र का विप्रता (नै. ४. ७१) इति श्लोकद्वये चन्द्रस्य द्विजराज इति नाम्न आधारेण श्लेषोक्तिः। 'द्विजपतिग्रसनाहितपातकप्रभवकुष्ठसितीकृतविग्रहः विरहिणीवदनेन्दु-

जिघित्सयाऽयं स्फुरति राहुर्न निशाकरः ( नै. ४. ७४ ) इत्यत्र चन्द्र एव राहुरिति अपह्नुतिः।

## चन्द्र-समुद्र-सम्बन्धः

समुद्रमन्थनाद् उत्पन्नेषु चतुर्दशरत्नेष्वेकतमश्चन्द्र समुद्राज्जात इति प्रसिद्धिरस्ति। चन्द्रसागरयोरेष सम्बन्धः काव्येष्वपि निर्दिष्टः। रघुवंशे पुष्पकविमानेनायोध्यां प्रति विगाहमानो रामः समुद्रं वीक्ष्य सीतामुवाच 'प्रह्लादनं ज्योतिः ( चन्द्रो ) ऽजनि-अनेन' ( रघु. १३. ४ )। अन्यत्र च—

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनीधाविव ॥ ( रघु. १. १२ )

इति दिलीपजन्मवर्णनम्। चन्द्रः पूर्वसागराद् उदेतीति भारविणा किरातार्जुनीये—

दीपयन्नथ नभः किरणोघैः कुङ्कुमारुणपयोधरगौरः।
हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥
( किरा. ९. २३ )

यथा वा नैषधीयचरिते सागरस्थशैलात् चन्द्रोदयो वर्णितः—

असंशयं सागरभागुदस्थात् पृथ्वीधरादेव मथः पुरायम्।
अमुष्य यस्मादधुनापि सिन्धौ स्थितस्य शैलादुदयं प्रतीतः ॥
( नै. २२. ४३ )

ऐरावतोऽपि समुद्रमन्थने समुद्रादुत्थितः अतश्चन्द्रस्यानुजः कल्पितः। यथा—'प्राचीपतिवाहनेन निजानुजेनैरावतेन प्राचीदिशायामातिथ्यमुपेतश्चन्द्रः सिन्दूरसान्द्रमूर्धारुणश्रीरुदेति। ( नै. २२. ४४ )। 'समुद्रोत्थभ्रातुः कल्पवृक्षाच्चन्द्रस्य परोपकरणमल्पतरमेव ( नै. २२. ६३ ) इत्यत्र कल्पवृक्षोऽपि चन्द्रस्य भ्रातृत्वं भजते। "समुद्रसलिलादुत्थिता लक्ष्मीर्जाह्नवीजलजकौस्तुभ-चन्द्रान् पाद-पाणि-हृदय-ईक्षण-वृत्तीन् परिचितान् परिचिन्त्य त्वयि स्थिता" ( नै. २१. १०६ ) इति नलेन कृते विष्णुस्तुतौ चञ्चलापि लक्ष्मीः सागरे सहवासात् सञ्जातस्नेहान् विष्णो

स्थितान् दृष्ट्वा तत्रैव स्थिराऽभवत् । चन्द्रश्च विष्णोर्वामनेत्रे स्थित इत्याशयः । 'अयं चन्द्रः सागरान्मुनिलोचनाच्च जातः अतो द्विजः किम् ( नै. २२. १३३.)' इत्यत्र सागरादिवात्रिमुनिनेत्रादपि चन्द्रमसो जन्म सूचितं यथा कालिदासेनाऽपि रघुवंशे 'नयनसमुत्थं ज्योतिरत्रेरिव···' इति चन्द्रो वर्णितः । ( रघु. २. ७५ ) । 'जलमध्ये मुखं नम्रीकृत्य प्राणायामं कृतवतो नलस्य मुखसौन्दर्यं समुद्रमन्थनात् प्राक् समुद्रस्योदरे कृतवासस्य चन्द्रस्येवेति वर्णनेऽपि चन्द्रस्य समुद्रादुत्पत्तिः सूचिता ( नै. २१. २३ ) । 'शङ्खशब्दव्याजेन नलयशोवर्णनं प्रभाते वन्दिभिः कृतम् । तत्रापि चन्द्रः शङ्खसहोदरः प्रभाते दिवि लिखितोऽस्ति । निष्प्रभत्वाच्चित्रलिखित इव । चन्द्रस्य श्रद्धाकरं शङ्खसहोदरत्वं निश्चायकं करच्छेदमस्ति, अर्थात् शङ्ख इव चन्द्रेऽपि प्रत्यूषसमये किरणा न सन्ति ( नै. १६. ५६ ) अत्रापि शङ्खचन्द्रयोः सागराज्जन्म प्रतिपादितम् । द्वयोः किरणा न सन्ति द्वयोरुदरभागे श्यामत्वमतः सोदर्यत्वं निश्चितमिति भावः । 'नलस्य दिग्विजययात्रासु सैन्येनोद्धूतं रजः सुधासमुद्रे पतितं पङ्कीभूय सुधाम्बुधेरुत्पन्ने चन्द्रे लग्नं तस्य कलङ्कोऽभवत्' ( नै. १. ८ ), तडागः श्वेतनीलकमलच्छलेन निलीनयोश्चन्द्रकालकूटयोस्त्विषं विमुञ्चत् सागर इव' ( नै. १, ११३ ), 'स मन्दराद्रिः दमन्त्या आस्येन नीरार्धमन्थनोत्थमिन्दुं स्मरतु ( नै. ११. ६३ ). 'त्वां पीयूषमयूखं नलं कोऽसूत य उदन्वता सार्धं स्पर्धते ( नै. ७. ३०. ) इत्यादिषु तथैव विरहपीडिताया दमयन्त्या चन्द्रस्य भर्त्सनायामपि तस्य समुद्रमन्थनादुत्पत्तिः प्रतिपादिता । यथा—

अयि विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्ष्यत दाहवदान्यता ।
ग्लपितशम्भुगलाद् गरलात् त्वया किमुदधौ जड वा वडवानलात् ॥
( नै. ४. ४८ )

यथा वा

निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छन चूर्णितः ।
अपि मुनेर्जठरार्चिषि जीर्णतां वत गतोऽसि न पीतपयोनिधेः ॥
( नै. ४. ५१ )

इति मनोहारिणी कल्पना। भूयश्चन्द्रनिन्दायां भैम्या उक्तिः—

'न गणितं यदि जन्म पयोनिधौ हरशिरःस्थितिभूरपि विस्मृता।
उदर एव धृतः किमुदन्वता न विषमो वडवानलवद्विधुः॥ (नै. ४. ६०)

पितुः समुद्रस्य कतिपया धर्माश्चन्द्रेऽपि दृश्यन्त इत्युद्भावितं कविना श्रीहर्षेण। तथा हि—'सुधाभुजो देवा एनं चन्द्रं परिपीय तुच्छं (रिक्तं) कुर्वन्ति तदुचितमेव। पुरास्य पिता सिन्धुरपि कलशोद्भवेनागस्तिना निपीय रिक्तोऽकारि (नै. २२. ६७) 'शशः शशाङ्के जागर्तीति किमत्राश्चर्यम्। यत एतस्य पितुरम्बुराशेरन्तस्तुरङ्गो मतङ्गजोपि। (नै. २२.६४) सागरान्मन्थनेनोच्चैःश्रवा अश्व ऐरावतश्च गज उत्थितौ, तदेवाश्रित्येयं कल्पना। तथा च—

गुणौ पयोधेर्निजकारणस्य न हानिवृद्धी कथमेतु चन्द्रः।
चिरेण सोऽयं भजते तु यत्ते न नित्यमम्भोधिरिवात्र चित्रम्॥
(नै. २२. ७४)

हानिवृद्धी पितुः समुद्रस्य गुणौ चन्द्रः प्राप्नोतीत्यत्र नाश्चर्यम्। किन्तु समुद्रवदस्य हानिवृद्धी न प्रतिदिनमपितु चिरेण पक्षान्तपरिमितेन कालेनेति चित्रमिति भावः।

अब्धिना कियत्कलश्चन्द्रः प्रासावि किं पूर्ण उतापूर्ण एतद्विषयेऽपि तर्कोऽयं प्रस्तुतो नैषधीयचरिते। यावन्तमिन्दुं प्रतिपत् प्रसूते तावत्प्रमाणमेककलमेव तमब्धिः प्रसूते। यतस्तत्काल एव हरेण मूर्ध्नि धृतः। ईशमूर्ध्नि धृतस्य चन्द्रस्याणीयस्त्वमेवैककलत्वे ज्ञापकं लिङ्गमस्ति (नै. २२. ८३) इति। पयोधिः स्वमणिभिरपि स्वपुत्रं चन्द्रं क्षयात् त्रातुं न शशाक (नै. २२. ६६) इत्यत्रापि पयोधेश्चन्द्रं प्रति पुत्रस्नेहः सूचितः। 'चान्द्रिकायामेव क्षीरसागरबुद्ध्या चन्द्रः पितृवियोगदुःखं परित्यजति (नै. २२. ६८) इति चन्द्रस्यापि पितरं सागरं प्रति स्नेहः कल्पितः।

चन्द्रसमुद्रयोरैक्यं रघुवंश उपमालङ्कारेण प्रकटितम्। यथा—रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्च वातवह्न्योरिव चन्द्रसमुद्रयोरिवैक्यं न बिभेद (रघु० १०. ८२)

चन्द्रेण समुद्रस्याकर्षणमुल्लसनं वा काव्येष्वलङ्काराणामुपायभूतम्। यथा—

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूरमिवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि॥
(रघु. ३. १७)

इति कालिदासस्योपमा।

तृप्तियोगः परेणापि महिम्ना न महात्मनाम्।
पूर्णश्चन्द्रोदयाकांक्षी दृष्टान्तोऽत्र महार्णवः॥ (शिशु. २. ३१)

इति पूर्णः समुद्रोऽपि वृद्ध्यर्थं चन्द्रोदयमाकांक्षति इत्यनेन दृष्टान्तेन प्रस्तुतम्। तथा च 'उपगूढवेषं सरितामधीशमपि रजनीकरोऽलघूर्मिभुजैः क्षोभयति। यदुरागिणामनङ्गलघुं गणं सोऽचुक्षुभदिति किं चित्रम् (शिशु. ९. ३८) जलनिधिनातिमात्रं पीत्वा वृद्धिं गतेप्यात्मनि नैव मातीरिन्दो रुचयोऽधिवेषं क्षिप्ता मुक्तावलीराकलयांचकार (शिशु. ३. ७३) इत्यत्रापि चन्द्रोदये सागरस्य वृद्धिश्चन्द्रकिरणाश्च मुक्तावलीरिति प्रस्तावः।

'इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति॥
(नै. ३. ११६)

इति दृष्टान्तेन वैदर्भ्या गुणैर्नैषधः समाकृष्ट इति नैषधीयचरिते दमयन्त्या स्तुतिः। 'दमयन्त्या आननचन्द्रभासा समुल्लसितो नलो भैमीं बिभ्रद् धरां धारयन् समुद्र इव (नै. २१. १०६) इत्यत्रापि चन्द्रभासा समुद्रस्योल्लसनं स्पष्टमेव निर्दिष्टम्। यथा वा "नलस्य दृशौ भैमीमुखेन्दोरालोकपीयूषरसेन पृथुं वेलामतिक्रम्य रागाम्बुनिधौ विवृद्धे सति तस्यास्तुङ्गौ कुचावाश्रयतः (नै. ७. ४)'। 'विधोः पुत्री चन्द्रिका सागरस्य ताण्डविका (नै. २२. ६६)

कियान् यथानेन वियद्विभागस्तमोनिरासाद्विशदीकृतोऽयम्।
अद्भिस्तथा लावणसैन्धवीभिरुल्लासिताभिः शितिरप्यकारि॥
(नै. २२. ७१

इत्यत्र तमोनिरासेन यथाकाशादेशश्चन्द्रेण धवलीकृतस्तथैवोल्लासितैर्नीलैः समुद्रजलैर्नीलोऽपि कृत इति कल्पना। अन्यच्च—'अयं विधुः पयोधेः पूरं विवर्धयितुमेणाङ्कमणिं ( चन्द्रकान्तमणिं ) कियन्ति पयांसि दोग्धि प्रियवियोगेन सशोकायाश्चक्रवाक्या नयने कियन्ति जलानि दोग्धि ( नै. २२. ५६ ) इति समुद्रपूरणार्थं चन्द्रस्य साधनान्यपि तर्कितानि।

समुद्रः स्वोर्मिभिः सहर्षं चन्द्रे प्रत्युद्गच्छतीति कल्पनाया विस्तारो दृश्यते निम्नाङ्कितेषु—

तं तस्थिवासं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली॥ ( रघु. ५. ६१ )

अत्रेन्दुमतीभ्रात्राऽजस्य स्वागतं वर्णितम्। "अन्तिकमायान्तं सुधाकरं प्रतीचीसिन्धुवीचीव भैमी नलमायान्तं प्रत्युज्जगाम'। ( नै. २०. २ ) इत्यत्र कल्पनासादृश्यम्।

चन्द्रः समुद्रं वेलां नयतीति घटनाऽप्युपमालङ्कारे प्रयुक्ता—

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिवचन्द्रपादैः॥ ( रघु ७. १६ )

इति विवाहसमयेऽजस्य वर्णनम्। कुमारसंभवे हरवर्णनेऽपि शब्दश एव एष श्लोकः पुनरुक्तः कालिदासेन ( कुमार ७. ७३ ) 'आतपत्रमण्डलेन पूर्वनिवासभूमिं प्रस्थापितो बलौघ उदितेन चन्द्रेण वेलां नीयमान उदन्वान् इव बभौ ( रघु. १६. २७ ) अत्र वरवर्णनसदृशमेव सैन्यस्यापि वर्णनम्। परवर्तिभिरपि कविभिरेषा कल्पना न प्रयुक्तेति चित्रम्। तथापि अन्यैवेका नवकल्पना शिशुपालवधे दृश्यते यथा—

उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः।
घनवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः॥ (शिशु.६.६०)

यथा कोऽपि वणिक् पण्यवीथ्यां कस्यचिद् धनिकवणिजो मूलधनवृद्धीः स्वसमृद्ध्ये सेवते तद्वत् समुद्रोऽपि चन्द्रस्य कलाः सेवते लाभं च प्राप्नोति भावः।

( अपूर्णोऽयं लेखः। आगाम्यङ्केऽवशिष्टभागः प्रकाश्यते )

# मध्यकालीन-संस्कृत-रूपकाणां परिसंख्यानम्

कु० कुसुम-भरिया

"भवभूतिपर्यन्तमेव संस्कृत-नाट्य साहित्यस्य स्वर्णयुगमस्ति भवभूतेः पश्चाद्वर्तिनाट्यकारेषु न किमपि विशिष्टं तत्त्वमुल्लेखनीयं अपि च तेषु नित्यनवोन्मेषशालिप्रतिभाया अभावोऽस्ति" इति सामान्यत आलोचकानां धारणा। वैदेशिकोपनेत्रधारिणस्ते आलोचका अस्माकं मध्ययुगीन-साहित्यिक-निधिना सह पूर्णतो न्यायं नाकुर्वन्नित्यस्माकं प्रतिपाद्यम्। यतो हि नाम किंचिदुत्कृष्टं तत्त्वमेतेषु नाटकेषु वरीवर्तीति स्वसर्वजनात्मकोपलब्धेरियं परम्परा रक्षणीया विद्यते।

भारतस्य सहस्राब्दानां साहित्यिकनिधौ संस्कृत-वाण्या अनुपमं योगदानं विद्यते। समस्त-भारतस्य सर्वेषां साम्प्रदायिक-सांस्कृतिक-वर्गाणां विचारधाराया महास्रोतः संस्कृत-साहित्यमस्ति, यस्मिन् महा-कालस्याजस्र-लीलाविलासो विद्यते। संस्कृत-साहित्यस्य प्रतिपद-साधनायाः पूर्णपरिकल्पनं ते तत्त्वान्वेषिणः करिष्यन्त्येव ये समग्र-भारतं ज्ञातुकामाः सन्ति सर्वासु दिशासु चास्याकांक्षाणामुपलब्धीनां च, अथवा त्रुटीनां ज्ञानं कृत्वा समदृष्टि-प्राप्त्यर्थमिच्छुकाः सन्ति येन विना ज्ञानविज्ञानयोः परिनिष्ठितसाधना न सम्भवति।

अस्माकं परमसौभाग्यमस्ति यत् सहस्रवर्षाणां लघु-गुरु-मनीषिणां कृतीनामादर्शा न विनष्टाः सन्ति। पूर्वजास्तेषां रक्षामेव स्वामरत्वमम-न्यन्त।

मध्ययुगस्य परवर्ति-संस्कृत-रचनासु अथवान्यभाषायां विरचितेषु मध्ययुगीनार्वाचीन-साहित्येषु वा संस्कृतस्य प्रभावः स्वभावतोऽस्त्येव। संस्कृतस्य छत्रच्छायायामेव संस्कृतेतर-भाषाणामुद्भवो विकासश्चा-भवताम्। अनया दृष्ट्यापि मध्ययुगस्याथवाधुनिकयुगस्य संस्कृत-साहित्यं भारतभारत्याः सारस्वत-वरदानमिति मन्तव्यम्।

मध्ययुगे सहस्रप्राय-रूपकाणां प्रणयनमभवद्, येषु प्रायो द्विशती

प्राप्यते। एतेषामध्ययनेन निष्कर्षो भवति यत् तेषु रूपकेषु नाट्य-शास्त्रीय-विकासस्य प्रचुरसामग्र्या तद्युगीनसामाजिकैतिहासिक-सांस्कृतिक-स्थितीनां प्रत्यक्षं चित्रं ग्रहणीयम्, नान्यथा। एतेषु कतिपय-रूपकाणि कीथमहोदयेन प्रशंसितानि। तथा हि, पार्थपराक्रम-व्यायोगस्य रचयितारं प्रह्लादनदेवं प्रति तस्य प्रशंसोक्तिर्विद्यते—

"Prahlādanadeva wrote other works of which some verses are preserved in the anthologies and must have been a man of considerable ability and merit." इति।

कतिपय-नाटकानि कला-दृष्ट्यानुत्तमानि सन्ति। रामभद्रमुनेर्द्वादश-शताब्द्याः प्रकरणं प्रबुद्धरौहिणेयं कला-दृष्ट्या विश्वसाहित्ये प्रथमश्रेण्यां स्थानमर्हति। अस्याभिनयः कथाप्रपञ्चकौशलं चातिमनोरमे रसमये च स्तः। तथैव भगवदज्जुकीये प्रकरणे कविः सामाजिकान् रसविलासे निमग्नान् कुर्वन् मनोरञ्जनस्यापूर्वं प्रवाहं प्रवर्तयति स्म।

अनेक-नाटकेषु भारतीय-चरित्रनिर्माणस्योपादानानि कलात्मकसौरभेण सुवासितानि सन्ति। महाकवि-क्षेमीश्वरस्य चण्डकौशिको हरिश्चन्द्रस्य सत्याभिनिवेशचित्रणेन सहृदयस्योदयोन्मुखं मनोबलं रसास्वादपूर्णविधिना द्विगुणीकरोति।

मध्ययुगं भारतस्य सामाजिक-राजनीतिक-विघटनस्य विप्लवस्य च युगमासीत्। अस्मिन् युगे शूरान् प्रोत्साह्य संस्कृतेः समाजस्य च विघटनकर्तृभिः सह युद्धस्य प्रेरणाप्रदातृ-बहुशो डिमव्यायोग-समवकाराश्च रचिताः। अनया दृष्ट्या महाकवि-वत्सराजस्य प्रयासः प्रशस्तोऽस्ति। तस्य त्रिपुरदाह-किरातार्जुनीय व्यायोग-समुद्रमथनानि च निष्प्राणेष्वपि राष्ट्ररक्षाभियोगस्य स्फूर्तिं निर्भरं कर्तुं समर्थानि सन्ति। आक्रमणकारिजनैः सह योद्धुं राजानः संघं निर्मितवन्तः। तदा युद्धघोषोऽभवत्—

एकः करः कलयति स्फटिकाक्षमालां
घोरं धनुस्तदितरश्च बिभर्ति हस्तः।
धर्मः कठोरकलिकालकदर्थ्यमानः
सत्क्षत्रियस्य शरणं किमिवानुयातः॥ इति

अयं संदेशो वत्सराजेन सामाजिकेभ्यो दत्तो राजभ्यश्च मन्त्रितम्—

"औदार्यशौर्यरसिकाः सुखयन्तु भूपाः ।"

देशस्य संस्कृतेश्च रक्षार्थमात्मबलिदानस्य सन्देशोऽनेकेषु रूपकेषु स्थाने स्थाने प्राप्यते । तेन सहैव तेषां जन्तूनामपि परिचयो निभालितो यानि स्वतुच्छस्वार्थमधिकृत्य देशस्य स्वतन्त्रताया बलिं कुर्वन्ति स्म । तेषां महामानवानामादर्शोऽनेकनाटकेषु निबद्धोऽभवत् येषां पराक्रमेण शौर्यगाथया च भारतमाता कृतार्थाभवत् तेषु दिवसेषु । जैन-कवि-वीरसूरेः हम्मीरमदमर्दनमेकान्या रचनास्ति अस्याः कोटेः । एतदनुसारेण—

त्रस्तेषु तेषु सुभटेषु विभौ च भग्ने
मग्नासु कीर्तिषु निरीक्ष्य जनं भयार्तम् ।
यो मित्रबान्धववधूजनवारितोऽपि
वल्गत्यरीन् प्रति रसेन स एव वीरः ॥

संस्कृतस्य पूर्ववर्ति-नाटकेषु यासां कलात्मक-प्रवृत्तीनां बीजाधानमीषद्विकासश्चाभवत् तासां पूर्वविकासो मध्ययुगस्यैतासु कृतिषु विद्यते । यथा, यस्य छायानाटकस्य बीजाधानं भासेन स्वप्नवासवदत्ते प्रतिमानाटके च कृतं यस्येषद्विकासश्च कुन्दमालायामुत्तररामचरिते च प्राप्यते तस्य पूर्णविकासो धर्माभ्युदयोल्लाघराघव-दूताङ्गदादि-रूपकेषु दर्शनीयोऽस्ति । तथैवास्ति कपटनाटकं कूटघटनानां कूटपात्राणां च नियोजनं तत् मध्ययुगीन-नाटकेषु विशेषकौशलपूर्वकं सन्निवेशितं विद्यते । अश्वघोषेण प्रवर्तितानां प्रतीकनाटकानां सम्यग्विकासोऽपि अस्य युगस्य प्रबोधचन्द्रोदय-मोहराजपराजयादि-रूपकेषु प्राप्यते । वयं यदि युगस्यास्य कृतीः प्रमादवशादुपेक्षामहे, तर्हि उपर्युक्त-विकासस्य कलात्मक-विलासानात्मसात्कर्तुं नान्यथा समर्था भवेम ।

मध्ययुगस्यैतेषु रूपकेष्वैतिहासिककृतीनां विशेषं स्थानं विद्यते । प्रायशः समसामयिक-रचयितारः प्रत्यक्षघटनानां चित्रणं कुर्वन्ति स्म तासु कृतिषु । इतिहासस्य प्रामाणिक-सामग्रीसंयोजनार्थं कृतीनां [illegible]त्त्वमस्ति कौमुदीमहोत्सव-विद्धशालभञ्जिका-कर्णसुन्दरी-

ललितविग्रहराज-मोहराजपराजय-पारिजातमञ्जरी-हम्मीरमदमर्दनाद्युल्लेखनीया रचनाः सन्त्यनया दृष्ट्या ।

मध्ययुगस्यैतेषु नाटकेष्वभिनव-संविधानं नूतन-नाटकीयविधा नूतन-प्रयोगाश्च प्राप्यन्ते । हनुमन्नाटक-बालरामायणानर्घराघव-वीणावासवदत्तादयःस्वकोटेः सर्वप्रथमा रचनाः सन्ति यासां छत्रच्छाया भारतीय-साहित्ये शाश्वतरूपेण समाश्रयणीया मध्ययुगे कतिपय-प्राचीन-नाट्य-विधानामुदाहरणानि प्राप्यन्ते । यथा, वत्सराजविरचित-समवकारो डिम ईहामृगश्च । नैतद्विधानि नाट्यानि पूर्वतः संगृहीतान्यधुनोपलभ्यानि सन्ति ।

आधुनिक-चलचित्र-जगति काचिदनुपमा सामग्री नाटकेष्वैतेष्वनुहरणीया विद्यते । रामचन्द्रस्य कौमुदीमित्रानन्देऽथवा रामभद्रस्य प्रबुद्धरौहिणेये चलचित्राणां प्रवृत्तीनां मूलं द्रष्टुं पार्यते ।

तत्राधोलिखिता विद्यते विविधनाट्यविधानां वर्गीकृतसामग्री सार-रूपेण संगृहीता—

*महानाटकानि*

१. हनुमन्नाटकम्
२. बालरामायणम्
३. बालभारतम्
४. संकल्पसूर्योदयम्

*नाटकानि*

१. कौमुदी-महोत्सवम्
२. तापसवत्सराजम्
३. आश्चर्यचूडामणिः
४. अनर्घराघवम्
५. तपतीसंवरणम्
६. सुभद्राधनञ्जयम्
७. चण्डकौशिकम्
८. ललितविग्रहराजम्
९. हरकेलिनाटकम्
१०. नलविलासम्
११. सत्यहरिश्चन्द्रम्
१२. रघुविलासम्
१३. ययातिचरितम्
१४. वीणावासवदत्तम्
१५. हम्मीरमदमर्दनम्
१६. प्रसन्नराघवम्
१७. उल्लाघराघवम्
१८. प्रतापरुद्रकल्याणम्
१९. विक्रान्तकौरवम्
२०. मैथिलीकल्याणम्
२१. अञ्जनापवनञ्जयम्
२२. प्रद्युम्नाभ्युदयम्
२३. भैरवानन्दम्
२४. ज्योतिःप्रभाकल्याणम्

२५. पार्वतीपरिणयम्
२६. गङ्गादास-प्रतापविलासम्
२७. भर्तृहरिनिर्वेदम्
२८. मुरारिविजयम्
२६. वसुमतीमानविक्रमम्

*प्रतीक-नाटकानि*

१. प्रबोधचन्द्रोदयम्
२. मोहराजपराजयम्
३. सङ्कल्पसूर्योदयम्

*प्रकरणानि*

१. चन्द्रप्रभाविजयम्
२. कौमुदीमित्रानन्दम्
३. मल्लिकामकरन्दम्
४. प्रबुद्धरौहिणेयम्
५. मल्लिकामारुतम्

*व्यायोगाः*

१. कल्याण-सौगन्धिकम्
२. निर्भयभीमम्
३. पार्थपराक्रमम्
४. धनञ्जयविजयम्
५. किरातार्जुनीयम्
६. शंखपराभवम्
७. सौगन्धिकाहरणम्
८. भीमविक्रमम्
९. नरकासुरविजयम्

*प्रहसनानि*

१. भगवदज्जुकीयम्
२. लटकमेलकम्
३. हास्यचूडामणिम्
४. धूर्तसमागमम्

*भाणाः*

१. कर्पूरचरितम्
२. विटनिद्राम्
३. शृङ्गारभूषणम्

*ईहामृगाः*

रुक्मिणीहरणम्

*डिमाः*

त्रिपुरदाहम्

*समवकाराः*

समुद्रमथनम्

*नाटिकाः*

१. विद्धशालभञ्जिकाम्
२. कर्णसुन्दरी
३. उषारागोदयाम्
४. पारिजातमञ्जरी
५. सुभद्राम्
६. रम्भामञ्जरी
७. कुवलयावली
८. चन्द्रकलाम्
९. कनकलेखाम्
१०. वृषभानुजाम्

*उपरूपकाणि*

१. विबुधानन्दम्
२. धर्माभ्युदयम् ( श्रीगदितम् )
३. करुणावज्रायुधम्
४. द्रौपदी-स्वयंवरम्
५. पारिजातहरणम् ( किरतनिया )
६. उन्मत्तराघवम् ( प्रेक्षणकम् )
भास्करकविकृतम्
७. गोरक्षनाटकम् ( किरतनिया )
८. उन्मत्तराघव विरूपाक्षकृतम्

*ऐतिहासिकरूपकाणि*

१. कौमुदीमहोत्सवम्

२. विद्धशालभञ्जिका
३. कर्णसुन्दरी
४. ललितविग्रहराजम्
५. मोहराजपराजयम्
६. पारिजातमञ्जरी
७. हम्मीरमदमर्दनम्
८. शंखपराभवम्
९. प्रतापरुद्रकल्याणम्
१०. गंगादासप्रतापविलासम्
११. वसुमतीमानविक्रमम्

*छायानाटकानि*

१. हनुमन्नाटकम्
२. धर्माभ्युदयम्
३. दूताङ्गदम्
४. उल्लाघराघवम्
५. कमलिनीराजहंसम्
६. सुभद्रापरिणयम्
७. रामाभ्युदयम्
८. पाण्डवाभ्युदयम्
९. शमामृतम्



# संस्कृतसाहित्ये प्रभातवर्णनम्

*कु० मुकुल रानी त्रिपाठी*

अखिलः स्थावरजङ्गमात्मकः लोकः काव्यस्य विषयत्वेन स्वीक्रियते। मानव इव प्रकृतिरपि अपूर्वे काव्यसंसारे विविधरूपतां भजमाना आदिकालतः एव सहृदयमनोमिलिन्दमाह्लादयन्ती विराजते। अन्यक्षेत्रेषु इव प्राकृतिकसुषमाक्षेत्रेऽपि भारतवर्षस्य महिमा नितरामतिशायी। फलतः पुराकालादेव संस्कृतसाहित्ये प्राकृतिकसुषमा वर्ण्यमाना राजते। संस्कृतसाहित्यस्य पर्यवेक्षणेन तथ्यमिदं सुतरां स्पष्टं भवति यत् तस्मिन् अन्यानि प्रकृतिदृश्यानि इव प्रभातदृश्यमपि कविभिः स्वीयकाव्येषु प्रचुरतया उपवर्णितम्। प्रभातकालः दिवसस्य समारम्भकालः। तस्मिन्नेव काले दिग्वधूवदनावगुण्ठनभूतं गहनं तमः भगवान् भास्करः स्वकिरणकरैः अपसारयति स्वपावनदर्शनेन च संसारं पुनाति तदा प्रकाशमाने च दिवसे न केवलं मानवाः, अपितु समस्ताः जीवाः निजालस्यं विहाय प्राभातिकीं मनोहारिणीं छटां विलोक्य अपूर्वमाह्लादमाप्नुवन्ति स्वस्वकर्मसु निरताः च जायन्ते।

प्रभातस्य ईदृशं महात्म्यमाकलय्य वैदिकाः ऋषयोऽपि तस्य सातिशयं गुणगानं कृतवन्तः। ते प्रकृत्याः सान्निध्यं प्राप्य तस्याः प्रत्येकपक्षस्य सूक्ष्मदर्शनं कृतवन्तः। ते बालसारल्येन प्रकृतिं जिज्ञासया अपश्यन्। तस्याः सौन्दर्येण विस्मिताः भूत्वा ते ताम् अलौकिकशक्तिरूपां च मत्वा तस्याः अर्चनां विदधुः। प्रत्यूषवेलायाम् भगवतः भास्करस्योदयकाले आर्यजनैः उषोरूपेण एकां देवीं कल्पयित्वा तस्याः अर्चनायाम् अनेकानि सूक्तानि प्रणीतानि। तेषां मते उषाः एका शैलूषी एव विभ्राजितैः वस्त्रैः अलंकृता सती प्राच्यां दिशायां प्रादुर्भवति। मृणालगौरी सा दीप्तिधाराभिः स्नाता इव यामिनीकामिन्याः श्यामपरिधानम् अपसारयति। समागतायां तस्यां नभोमण्डलम् अपूर्वदीप्तिं धरते। तया एव प्रेरिताः सन्तः मनुष्याः पशुपक्षिणश्च स्वदैनन्दिनकार्येषु व्यस्ताः भवन्ति—

आ धा योषेव सूनर्युषा याति प्रभुञ्जती।
जरयन्ती वृजन पद्वदीयत उत्पातयति पक्षिणः ॥ उषसूक्त ऋ०

ऋतावरी इयम् उषा न लङ्घयते निसर्गनियमान्। सा विबोध्य देवोपासकान् उपासनार्थं प्रेरयते। रोचनशीलया रमणीयदर्शनया उषसा स्वपरिरम्भणपाशेन तिमिरे गृह्यमाणे सकलपदार्थाः भासमानाः जायन्ते–

"अवस्यूमेव चिन्वतीमघोन्युषा याति स्वसरस्य पत्नी।" उषसूक्त ऋ०

वैदिकसाहित्यस्य ऋषयः इव लौकिकसंस्कृतसाहित्यस्य कवयोऽपि प्रभातकालिकरमणीयदृश्यैः चकिताः मुग्धाः प्रभाविताश्च जाताः। फलतः तद्विरचितेषु काव्येषु प्राभातिकदृश्यसम्बद्धान्यनेकानि चित्राणि प्राप्यन्ते यैः भावुकाः समाह्लादिताः भवन्ति। अत्र प्रभातवर्णनसम्बद्धाः कतिचित् प्रसङ्गाः प्रस्तूयन्ते। सर्वप्रथमं तु अवलोक्यतां महाकविमाघस्य प्रभातमाश्रित्य कविता-वनिता-विलासम्। संस्कृतकविषु महाकवि माघः स्वप्रभातवर्णनेन दिनमणिरिव स्वकाव्यदीप्त्या सर्वानतिशेते, इति विदितमेव सुविदुषाम्।

एकतः शीतांशोः स्वरश्मिसङ्कोचम्, अपरतः अनूरुसारथेः आगमनम्। ईदृश्यां सन्धिवेलायां माघस्य प्रतिभा भूरिशः प्रकाशते। रैवतकपर्वतस्य एकपार्श्वे उदीयमानं भास्वन्तम् अपरपार्श्वे अस्ताचलं व्रजन्तम् ओषधिपतिं चावलोक्य महाकविमाघायेत्थं प्रतिभाति यत् अयं रैवतकः पर्वतः विलम्बमानघण्टायुग्मधारी कश्चित् गजेन्द्रः इव विराजमानः सहृदयहृदयमावर्जयति—

उदयति विततोर्ध्वरश्मिरज्ज्वावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बि-घण्टा-द्वय-परिवारितवारणेन्द्र-लीलाम्॥[1]

तदा यामिनी गतप्राया। प्रभातकालिकसन्ध्या अपि शनैः शनैः तामनुसरन्ती परिलक्ष्यते। कविकल्पनायाम् इयं पूर्वसन्ध्या तमस्विन्याः 'मधुपमालाकज्जलेन्दीवराक्षी' अल्पवयस्का सुतेव पतत्रिकुलकूजनकपटेन कलकलं विदधती स्वजननीं रजनीमनुधावन्तीव विराजतेतराम्—

---

१. शिशुपालवध, ४।२०

अरुणजलजराजी मुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्यासुतेव ॥[1]

माघस्य आभिः पङ्क्तिभिः एका चटुला दुर्ललिता शिशुबालिका नयन-गोचरतां गतेव कमपि भावुकम् समाह्लादयितुं सामर्थ्यमेति।

कुमुदकुसुमानि अर्द्धनिमीलितानि कमलानि च अर्द्धविकसितानि सन्ति। अस्मिन् सन्धिकाले पुष्पद्वयं समानशोभां श्रयते। अतएव तु पुष्परसपानचतुरचञ्चरीकाः समानानुरागेण कुमुदकमले आश्लिष्य स्वकूजितालापव्याजेन तयोः स्तुतिं कुर्वाणाः इव शोभन्ते—

दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः।
कलरवमुपगीते षट्पदौघेन धत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥[2]

अस्मिन् नयनाभिरामकाले पत्रिणां निनादः कर्णशष्कुलीं पूरयतीव। कविः चिन्तयति यत् दिग्वधूभिः प्राच्यपयोधेः सूर्यबिम्बरूपघटं समाकृष्यते रविरश्मिरेव, तासां कर्षणरज्जुः। विहङ्गालापा एव घटाकर्षण-समये तासां कलकलनिनादाः—

विततपृथुलवस्त्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान्दिग्भिराकृष्यमाणः।
कृतचपलविहङ्गालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥[3]

अस्तङ्गतस्य चन्द्रस्य अथ च प्राप्तोदयस्य सूर्यस्य तेजोमिश्रण-सम्भूत-वर्णक्रीडा गद्यकवित्रिविक्रमभट्टम् अभिनवरूपेण समानन्दयति। तस्य 'नलचम्पू'नामधेयग्रन्थे एतत्सम्बन्धिनी उद्भावना दृश्यताम्—एकतः

---

१. शिशुपालवध, ११।४०

२. शिशुपालवध, ११।१५

३. शिशुपालवध, ११।४४

उद्याचले अरुणोद्यस्य प्रकाशः, अपरतः दूरं व्रजन्त्याः रजन्याः स्वल्पश्यामान्धकारं दृश्यते गगनाजिरे। उभयोः सम्मिश्रणेन सम्भूतां नूतनदीप्तिधारां विलोक्य इत्थं प्रतीयते यत् स्वच्छतोयाया गङ्गायाः दुग्धधवलनीरेषु कालिन्द्याः इन्दीवरसदृशनीलं नीरं मिश्रितम्—

उदयगिरिगतायां प्राक् प्रभापाण्डुताया-
मनुसरति निशीथे शृङ्गमस्ताचलस्य।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनं च ॥[१]

अतः परं प्रकृतिपर्यवेक्षणप्रवीणेन बाणभट्टेन चित्रितां प्रभातसुषमाम् अवलोकयन्तु। तेन स्वकाव्येषु प्रकृतिचित्राङ्कनं केवलं कल्पनया एव न कृतम्, अपितु, अनुभूतिप्राप्तचिन्तनमाकलय्य निबद्धम्। तस्य यथार्थप्रत्यूषवर्णनम् अन्यप्राकृतिकवर्णनेन सदृशं सहृदयचक्षुषां समक्षे यथार्थबिम्बं प्रस्तौति येन तेषां मनस्सु प्रमोदोद्भवः भवति। पश्यन्तु—अलक्तकदीप्तिसूर्यस्य रश्मयः पद्मरागमणिनिर्मितशलाकासम्मार्जन्यः इव प्रतिभान्ति, याः आदाय सूर्यः विकीर्णतारक कुसुमानि अवचिनोति—

"गजरुधिर-रक्तहरिसटा-लोहिनीभिः प्रतप्तलाक्षिकतन्तुपाटलाभिरायामिनीभिः अशिशिरकिरणदीधितिभिः पद्मरागशलाकासम्मार्जनीभिरिव समुत्सार्य्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे······"[२]

ईदृक् प्रभातवेला धार्मिकानुष्ठानार्थं सर्वथोपयुक्ता। तस्यां पूतमन्त्रगुञ्जिततपोवनानि हवनधूमधूमायितानि वृक्षशिखराणि कस्य मनः न पावनं कुर्वन्ति? शिरीषपुष्पपेशलकविहृदयस्य तु कथैव अन्या। बाणभट्टस्य तपोवनाग्निहोत्रधूमरेखायाः शोभां विलोकयन्तु—

"रासभरोमधूसरासु वनदेवताप्रासादानाम् तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु······"[३]

१. नलचम्पू ६।१
२–३. कादम्बरी पूर्वार्द्ध

संस्कृतकविषु कालिदासः प्रकृतिं पूर्णां सजीवां च मन्यते। तस्य इयमेव मान्यता यत् प्रकृतिः मनुष्येण साकं तादात्म्यभावेन सम्बद्धा। प्रकृतिं विना मनुष्यस्य अथ च मनुष्यं विना प्रकृत्याः कल्पना मिथ्या एव। अतएव अन्यप्राकृतिकदृश्यसदृशं प्राभातिकदृश्यमपि सः स्वतन्त्ररूपेण न ददर्श। तस्य काव्येषु प्रकृतिः सान्द्रमानवीयभावैः सम्पृक्ता चित्रिता। यथा—मञ्जिष्ठारागलोहितरविकिरणैः पादपपत्राणि रक्तदीप्तिं भजन्ते। तेषु रक्तवर्णपत्रेषु पतिता मुक्तामणिरिव नीहार-कणिका तथैव आभाति यथा अजस्य स्मितिकाले तस्य पाटलाधरपटले पतिता श्वेतदन्तज्योत्स्ना—

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः।
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम्॥[1]

सुखदुःखचक्रमारूढोऽयं संसारः। अनेन तु कारणेन असौ प्राभातिक-समयोऽपि कालिदासं जीवनस्योत्थानपतनयोः अपरिहार्यतां शाश्वततां च बोधयन्निव परिदृश्यते। पर्य्यालोच्यताम् इदं तथ्यं शाकुन्तलस्य चतुर्थाङ्कस्य श्लोकेऽस्मिन्—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु॥

धीरसमीरस्पर्शेन मन्दमन्दमान्दोल्यमानायां लतायां सत्यां कुसुमानि भूमौ पतन्ति। अम्भोजखण्डानि विकम्पितानि जातानि। कीदृशी रामणीयकी इयं शोभा—

वृन्ताच्छ्लथं हरतिपुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः।

1. रघुवंश ५।७०

स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥[1]

नदीपुलिनस्थपादपानाम् पत्रेभ्यः अवश्यायसीकराः निपतन्ति, पक्षिणश्च कूजन्ति । कवेरुद्भावना इयम् यत् अस्तङ्गते प्रियचन्द्रे विषण्णमानसां कुमुदिनीं दृष्ट्वा नदीतीरस्थतरुभिरपि न पार्यते निरोद्धुं नयनबाष्पाणि । पश्यतु, भट्टिकविः किं कथयति—

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः ।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥[2]

अतएव कमनीयवेलायाम् अस्यां यदि माघस्य द्वारपालः मुहुर्मुहुर्विबोध्यमानोऽपि चिररात्राय स्वनिद्रां न जहाति, तर्हि न किमप्याश्चर्यम् । स अस्पष्टं वाचमुदीर्य पुनः पुनः स्वपिति—

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रयाशून्यशून्यां
ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥[3]

इत्थं सुष्ठु विलोकयितुं शक्यते यत् अखिले संस्कृतसाहित्ये प्रत्यूषदृश्यानि कविभिः चारुतया चित्रितानि भूत्वा सहृदयजनकोमलचित्तानि अलौकिकानन्दाम्बुधौ हठात् निर्माज्जतानि विदधति । वस्तुतः संस्कृतसाहित्यस्य प्राभातिकदृश्यमेकमनुपममङ्गमस्ति, नास्त्यत्र संदेहलेशावसरः ।



---

१. रघुवंश ५।६९

२. भट्टिकाव्य २।४

३. शिशुपालवध ११।४

# प्रधानं हि श्रुतिषडङ्गेषु पाणिनीयव्याकरणम्

*गणपतिमिश्रः*

अथाहमिह स्मारंस्मारं भगवन्तमीशानं भवानीजानिं सम्पूज्य पूज्यगुरुपितृपादौ च सर्वादौ लिलेखिषामि देववाणीमुखेन श्रुतिषडङ्गप्रामुख्येण वैदिकलौकिकोभयविधशब्दसाधुत्वशरणं पाणिनीयव्याकरणम्। इह हि महोदधिमेखलामण्डिते महीमण्डले, पारस्परिकान्तरिकविचारविरोधिस्वभावे कामक्रोधमोहेर्ष्यादिप्रभावेऽनवरतनियमानौचित्यनिरतनये विकासाभिनये, विषमविषमयविषयवशीकृतया कथङ्कथमपि विप्रकृष्टीकर्तुमशक्यया कयाचिल्लौकिककाङ्क्षया परकीयोन्नतिमसहमाने स्वोत्साहाभिमाने, दुस्साधमपि स्वार्थं साधयितुं दुःखगाधा, अपि बाधा अवगणय्य परकीयविभवपराभवभावनया स्वकीयकल्पनाकलितकोटिकोटिसङ्कलनकामनया पतङ्गतां लभमाने, कामिनीकमनीयकलेवराकलितललितलीलालावण्यलौलुपतया निर्बाधं नरके निमज्यमाने, अविगीतशिष्टाचारविचारप्रचारेऽविचारेणैव मनोनुकूलतया प्रतीयमानेऽसमाने प्रत्यूहव्यूहे प्रवर्तमाने, कर्मनिबन्धनाधाने, धर्मार्थकाममोक्षाभिधेयपुरुषार्थचतुष्टयफलप्रधानेऽस्मिन्न विश्वस्मिन् सुतरां समाहारितशोके नावलोके त्रिविधदुःखात्यन्तिकनिवृत्त्युपायमनपायमाम्नायमन्तरा। अतः "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" श्रुतिवाक्यं नाप्रत्यक्षं प्रेक्षावतां विपश्चिताम् द्विजातिभिः साङ्गवेदाध्ययनं विधेयमिति विधानम्।

सदाऽऽभारते भारते, विपुलकाये चार्यसंस्कृतिनिकाये, श्रुतिकुलायत्तया च धार्मिकव्यवस्थामूलतया विदितचरमेव समेषामेषामशेषविशेषशेमुषीजुषां विदुषां श्रुतिततीनां माहात्म्यम्। स्वतन्त्रतया च धार्मिकव्यवस्था-व्यवस्थापकतन्त्रतया श्रुतीनां प्रामाण्यम्, स्मृतिततीनान्तु तन्मूलकतयाऽततयैव। तथा चोक्तं भूरिधन्येन सूरिमूर्धन्येन शब्दशास्त्राटवीविहरणकेशरिणा भर्तृहरिणा—

स्मृतयो वेदपाश्चेतिदृष्टादृष्टप्रयोजनाः।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः॥ वा० प० १।७

अपरमपि श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी इति वचनं श्रूयत एव श्रुतिश्रवणसंरक्षणसक्षणैर्विलक्षणैर्विचक्षणैः। न केवलं धर्ममूलतयैव श्रुतयः समादृता अपितु सर्वसमीचीनपरमप्राचीनरहस्यरत्ननवनीतमन्थनतया ग्रन्थतयाऽपि। एतदीयसकलसाहित्यिक-धार्मिकसामाजिक-राजनीतिकादिव्यावहारिकपक्षप्रवणीयतया रमणीयतयाऽन्तरा नितरां न प्रसीदति कस्य सचेतसश्चेतः?

तर्हि को नाम वेदपदार्थः? इति चेच्छृण्वन्तु "विद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः" इति बह्वृक्प्रतिशाख्यम्। "अपौरुषेयं वाक्यं वेदः" "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायं यो वेदयति स वेदः इति" ऋग्वेदभाष्यभूमिका। किञ्च प्रत्यक्षानुमानोपमानेतित्रिविधप्रमाणागोचरस्याप्युपायस्य विज्ञापकत्वेन वेदत्वं प्रतिपादितम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥ इति

इयञ्च भगवती श्रुतिः परमपुरुषार्थभूतब्रह्मज्ञान-साधनभूतधर्मज्ञानहेतुत्वाद्बोधैः प्रोच्यते [1]"पराऽपराविद्या" इति संज्ञया।

तदङ्गानि तु—छन्दः, कल्पः, ज्यौतिषम्, निरुक्तम्, शिक्षा, व्याकरणम्।

यथाः—

छन्दः पादो तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्यौतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षाघ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

पा० शि० श्लो० ४१-४२

---

१. द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च। तत्रापरा—ऋग्वेदोयजुर्वेदःसामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणम् निरुक्तं छन्दो ज्यौतिषमिति। अथ परा—यया तदक्षरमधिगम्यते (मु० उ० १।१।४।५) इति।

अत्रेत्थमवगन्तव्यम्—यथा समग्रसचेतनजगतः पादौ विना पूर्वदेशात उत्तरदेशसंयोगादिक्रिया कर्तुमशक्या तथैव रीत्या वेदेष्वपि मन्त्राणां गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्तच्छन्दसामाच्छादकत्वात्पादत्वं कल्पनीयम्। "तस्मात्सप्तचतुरुत्तराणि च्छन्दांसि प्रातरनुवाकेऽनूच्यन्ते" इति ( तै० ब्रा० १।५।१२।१ ) तत्र चतुर्विंशत्यक्षरं गायत्रीच्छन्दः। चतुरक्षरैरधिकमष्टाविंशत्यक्षरमुष्णिक् छन्दः। एवमेवाग्रे चतुरक्षराधिकान्यनुष्टुबादीन्यप्यवगन्तव्यानि । "गायत्रीभिर्ब्राह्मणस्यादध्यात्, त्रिष्टुब्भी राजन्यस्य, जगतीभिर्वैश्यस्य" इति ( तै० ब्रा० १।१।६।६।७ ) मन्त्रेषु मगणयगणादिव्यवस्था न छन्दोग्रन्थमन्तरा।

कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्त्या यागप्रयोगप्रकारप्रतिपादकत्वेनाश्वलायनापस्तम्बबोधायनादिकल्पसूत्राणां सकलसांसारिककार्यकरत्वात्सचेतनकरवत्करत्वम्। यथा—"यत्स्वाध्यायमधीयीत कामप्यृचं यजुः साम वा तद् ब्रह्मयज्ञम्" ( तै० आ० २।१० ) "दर्शपौर्णमासौ तु पूर्वं व्याख्यास्यामः" ( आ० श्रौ० सू० १।१ )

लोके यथा "दृष्टिपूतं न्यसेत्पादम्" इत्याद्युक्तिभिर्यानायानविधाने पथि दृष्टिं निक्षिप्य पादसन्धाने पादयोर्न कण्टकादिसङ्क्रमणापत्तिस्तथैव रीत्या वैदिकयागाद्यनुष्ठानेष्वपि शुभसमयं निरीक्ष्य यजनेऽपूर्वपूर्वतया मनोरथसिद्धिः। अतो ज्यौतिषोपयोगिताविषये "यज्ञकालार्थसिद्धये ( वेदाङ्गज्यौतिषम् ३ ) इत्यभाणि। कालविशेषाविषयोऽपि श्रूयन्ते यागादिविषये।" सम्वत्सरमेतद्व्रतञ्चरेत् (तै० आ० १।३२।१) इति सम्वत्सरविधिः। "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत" ( तै० ब्रा० १।१।२ ) इति—ऋतुविधिः। "मासि सत्रपृष्ठानिउपयन्ति, मासि अतिग्राह्या गृह्यन्ते" ( तै० सं० ७।५।१।५ ) इति मासविधिः। "यं कामये तवसीयान् स्यादिति तं पूर्वपक्षे योजयेत" (तै० सं० २।२।३।१) इति पक्षविधिः। "एकाष्टकायां दीक्षेरन्" ( तै० सं० ७।४।८।१ ) इति तिथिविधिः। "प्रातर्जुहोति सायं जुहोति" ( तै० ब्रा० २।१।२ ) इति-प्रातःसायङ्कालादिविधिः। "कृत्तिका स्वग्निमादधीत" ( तै० ब्रा० १।१।२।१ ) इति नक्षत्रविधिः। इमे सम्वत्सरादिनक्षत्रान्ता-

विधयो यागादेर्ज्यौतिषायत्ता एवेति लोकलोचनवदेष्वपि ज्यौतिषस्य नेत्रत्वाद्वेदाङ्गत्वम् ।

निरुच्यते निःशेषेणोपदिश्यते निर्वचनविधया तत्तदर्थबोधनाय पदजातं यत्र तन्निरुक्तम् । वस्तुतस्तुनिर्नैरपेक्ष्ये । अतोऽर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तन्तन्निरुक्तम् । यथा "गौः, ग्मा, ज्मा, क्ष्मा, क्षा, क्षमेत्यारम्भबसवः, बाजिनः, देवपत्न्यो देवपत्न्यः" इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते । एतावन्त्यमुकनामान्येतावन्त्यमुकनामानीति तत्र स्पष्टमभिहितत्वात् । एतन्निरुक्तन्त्रिष्प्रकारकमनुक्रमणिकाभाष्ये प्रदर्शितम् । यथा "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमन्तथा । तृतीयं दैवतञ्चेति समाम्नायस्त्रिधा-भवेत्" यद्यपि व्याकरणेनापि पदार्थावगतिर्भवति किन्तु न साकल्येनातः "निरुक्तेनैवार्था निर्वक्तव्याः" इति सद्राद्धान्तः । तथा च "निरुक्तं विद्यास्थानं व्याकरणस्य कात्स्न्र्येन स्वार्थसाधकञ्चेति—तस्मादपरिसमाप्तमेव व्याकरणं यावन्निरुक्तं नाधिगतम्" ( नि० १।५ ) अतः श्रोत्रेन्द्रियस्य मुखैकदेशवन्निरुक्तमपि व्याकरणस्यैकदेश एव । एतदन्तरा व्याकरणमपूर्णमेव । यथा श्रोत्रेन्द्रियमन्तरा मुखं कैवल्येन सौन्दर्यवर्धकमेव ।

सांसारिकप्राणिनां घ्राणेन्द्रियं यथा समग्रवस्तुषु विद्यमानं गन्धं समादाय वस्तूनां गुणदोषान् प्रकटयति तथैव शिक्षाशास्त्रमपि वैदिकमन्त्रेषु लौकिकभाषाव्यवहारेषु वा वर्णानां कण्ठाद्युच्चारणस्थानानि गुणदोषाँश्चाविर्भावयति" वर्णाद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षेति-ऋग्वेदभाष्यभूमिकाप्रणयनपरायणः सायणः । "अथ शिक्षां व्याख्यास्यामः" ( तै० उ० १।१ ) वर्णोऽकारादिः । आदिपदेन स्वर-मात्रा-स्थान-प्रयत्न-दोष-गुण-सन्धीनां परिग्रहः । तत्र वर्णास्त्रिषष्टिश्चतुष्षष्टिसंख्याका वा । यथा :—

त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाश्शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ पा० शि० ३
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ पा० शि० ४

अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ ।
दुःस्पष्टश्चेति विज्ञेयः लृकारः प्लुत एव च ॥ पा० शि० ५ ॥

स्वरश्चोदात्तादिर्मात्रा ह्रस्वादिः—

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वौ दीर्घः प्लुत इति कालतो नियमा अचि ॥ पा० शि० ११

स्थानप्रयत्नाश्च—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥
ओभावश्च विवृत्तिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ पा० शि० १३, १४
अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषास्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ पा० शि० ३८

लिख्यन्ते दोषा गुणाश्च—

गीती शिघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥
माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थञ्च षडेते पाठका गुणाः ॥ पा० शि० ३२, ३३

अपि च—

उपांशुदष्टं त्वरितं निरस्तं बिलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्नदीनं न तु सानुनास्यम् ॥
पा० शि० ३५

सन्धिर्यथा—"वायवायाहि" (ऋ० सं० १।२।१) इत्यत्रावादेशः ।[1] इन्द्राग्नी आगतम्" (ऋ० सं० ३।१२।१) अत्र प्रकृतिभावः ।[2] शिक्ष्यमाणवर्णानामुच्चारणजन्यवैकल्ये बाधो यथा :—

---

१. "एचोऽयवायावः" पा० सू० ६।१।७८

२. "ईदूदेद्द्विवचनं प्रगृह्यम्" (पा० सू० १।१।११) इति प्रगृह्यत्वे "प्लुतप्रगृह्या अचि नित्यम्" (पा० सू० ६।१।१२५) इति प्रकृतिभावः ।

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
पा० शि० ५२

"इन्द्रशत्रुर्वर्धस्व" (तै० सं० २।४।१२।१) इति मन्त्रे—इन्द्रस्य शत्रु घातक इति—विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्य" (पा० सू० ६।१।२२३) इति सूत्रेण तत्पुरुषत्वादन्तोदात्तेन भवितव्यम् । आद्युदात्त स्तु युक्तः, तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वादिन्द्रो घातको यस्येत्यर्थः सम्पन्नः । अतएव वैदिकमन्त्रेषु स्वरवर्णाद्यपराधपरिहाराय शिक्षाशास्त्रमपेक्षितम् , तस्य वेदाङ्गत्वञ्चाप्रतिहतम् ।

शरीरावयवेषु मुखमिवोक्तेष्वङ्गेषु प्रधानमङ्गं व्याकरणम् । व्याक्रियन्ते व्युत्पाद्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्ते साधुशब्दा अनेनेति व्याकरणम् । व्याङ्पूर्वककृधातोः करणल्युडन्ततया सामानाधिकरण्याच्छब्दानुशासनमित्यप्यस्यैवान्वर्थं नाम । अतः "प्रधानञ्च षडङ्गेषु व्याकरणम्" इत्यभिहितवान् भगवान् पतञ्जलिः साञ्जलिः प्राञ्जलया गिराऽऽह्निके पस्पशाख्ये व्याकरणमहाभाष्ये । किञ्चभाष्यरहस्यविदा प्रदीपदीपकेन वैयटात्मजकैयटेनापि प्रतिपादितम्" पदपदाय विगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद् वाक्यवाक्यार्थावसायस्येतिभावः" । ऋग्वेदभाष्यभूमिकाप्रणेता सायणोऽपि "व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते" इति भणितिं भणितवान् ।

तत्रार्थमात्रसापेक्षं प्रकृतिप्रत्ययादिकल्पनासम्भूतं निर्वचनं निरुक्तम् । प्रकृतिप्रत्ययविभागेन साधुशब्दान् विज्ञाय वाचमसाधुशब्देभ्यः पृथक् कृत्य व्याकृतिसाधकं निर्वचनं व्याकरणम् । विभिन्नासु भाषासु प्रचलितानां शब्दानां विशेषेणोद्भवागमादिरूपेण विश्लेषणं भाषाविज्ञानम् । अनुशिष्यन्तेऽपशब्देभ्यो विविच्य कथ्यन्ते परिनिष्ठितशब्दा अनेनेत्यनुशासनम् । चतुर्णामप्येतेषां वैयाकरणनिकाये निरूढानां शब्दानां विश्लेषणरूपकमेव तात्पर्यम् । समेषां शब्दानां विभिन्नरूपेण विश्लेषणमेव सम्प्रति भाषाविज्ञानपदेन विज्ञायते । वस्तुतस्तु भाषाविज्ञानमपि व्याकरणमेव । विश्लेषणव्याकृतिशब्दौ निदर्शनरूपौ न तु परिगणनस्व-

रूपौ वैदिकशब्देतरस्यापि निर्वचनविषयत्वात्परिगणनयेयत्ताऽसम्भवाच्च—"एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालस्तथापि नान्तं जगाम, किम्पुनरद्यत्वे यः सर्वथा चिरञ्जीवति स वर्षशतं जीवति। तस्मादनभ्युपाय एष शब्दज्ञाने" इति पस्पशाह्निकमहाभाष्ये।

कस्याश्चिदपि भाषाया नियामकतया नियन्त्रकतया च समग्रकारणेषु व्याकरणमेव प्राथम्यं भजते। किञ्च व्याकरणं विना वाणी तथैव शोभते यथा व्यञ्जनं लवणं विना। अपि च समस्तलौकिकालौकिकवयवहारेषु शब्दार्थयोः परिज्ञानं नितान्तमावश्यकन्तच्च व्याकरणाधीनमितिकृत्वेतदधीत्यैव शास्त्रान्तरेषु प्रवेष्टुमन्वेष्टुं वाऽर्हन्ति जनाः।[1] तदुट्टङ्कितं श्रीमद्भिर्भास्कराचार्यैः—

> यो वेद वेदवदनं सदनं हि सम्यग्
> ब्राह्मण्याः स वेदमपि वेद किमन्यशास्त्रम्।
> यस्मादतः प्रथममेतदधीत्य विद्वान्,
> शास्त्रान्तरेषु भवति श्रवणेऽधिकारी॥

अर्थाभिव्यक्तय एव शब्दाः प्रयुज्यन्ते, अर्थनिश्चयमन्तरा न कोऽपि व्यवहार उपयुज्यते, स चार्थनिश्चयो व्याकरणसाहाय्येनेव। यथा—"व्याकरणमर्थविशेषमाश्रित्य पदमन्वावक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकारकं विद्यास्थानम्" (आ० ध० सू०, उज्ज्वलाटीका २।४।८।११) तथा चोक्तं वैयाकरणारण्यहरिणा भर्तृहरिणा—

> आसन्नं ब्रह्मणस्तस्य तपसामुत्तमन्तपः।
> प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः॥ (वा० प० १।११)

शब्दस्य द्वे स्वरूपेऽस्तः, एकं शब्दत्वरूपमपरं साधुत्वरूपं, परिनिष्ठितरूपम्वा। तत्र शब्दत्वरूपस्य श्रोत्रेन्द्रियग्राह्यत्वेऽपि—अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तत्वरूपं द्वितीयं न व्याकरणादृते। अन्यथाऽ-

---

१. "पुराकल्पे एतदासीत् संस्कारोत्तरकालं ब्राह्मणाव्याकरणं स्माधीयते" व्या० म० भा० पस्प।

वैयाकरणा अपि गोशब्द-गोणीशब्दयोर्गोत्वजातिरूपप्रवृत्तिनिमित्तेन साधुत्वासाधुत्वपरिज्ञानं कुर्युः। किञ्चायं शिष्टः साधुशब्दप्रयोक्तृत्वादित्याद्यनुमात्यवहारश्च दुष्टतामापद्येत। अतएवः—

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥
तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥
यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः।
तथैव लोके शब्दानामेषाविद्यापरायणम्॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥
(वा० प० १।१२,१३,१४)

गुणतो गरिष्ठस्य दुर्मेधसोदविष्ठस्य मुख्यतया श्रुतिषडङ्गेषु प्राप्तप्रतिष्ठस्यास्य व्याकरणस्य सर्वैरपि विपश्चिदपश्चिमैर्विद्वन्मानसमरालैः प्राथम्यमूरीक्रियते। एतच्चाभिनन्दन् महर्षिपतञ्जलिर्व्याहार्षीत्" सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितश्च वेदितव्यो ब्रह्मराशिः सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति। अथापि—

"एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति" इति श्रुतिः। सम्यग्ज्ञातत्वञ्च—"प्रकृतिप्रत्ययस्वरादिविशिष्टज्ञानविषयिताशालित्वम्" अतः शास्त्रान्वितत्वं सुप्रयुक्तत्वञ्चेत्युभयमप्युद्दिश्यैव कामधुक्त्वस्य विधानात्। वेदोऽप्यत्र प्रामाण्यमादधाति—"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रमत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि"[1] इति। साहित्यमर्मज्ञैर्मम्मटभट्टैरपि वैयाकरणप्रशस्तौ बुधैर्वैयाकरणैः (का० प्र०, प्र० उ०) इत्युक्तम्। अधीतव्याकरणा जना भृशं प्रशंसनीया अभिनन्दनीया वा।

---

१. ऋ० १०।७१।२

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥
रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥ ( म० भा० पस्प० )

पर्वतनन्दिन्याः पार्वत्याः शापमवाप्य सकलगुणगरिष्ठः पुष्पदन्ताभिधानो गन्धर्वराजोऽपि व्याकरणस्योत्कृष्टतां प्रकृष्टतया प्रकटयति ।

यथा—

[1]भ्रष्टः शापेन देव्या शिवपुरवसतेर्वन्द्यहं मन्दभाग्यो
भाव्यं मे जन्मना वै यदि मलकलिले मर्त्यलोके सशोके ।
स्निग्धाभिर्दुग्धधाराऽमलमधुरसुधाबिन्दुं निःस्यन्दिनीभिः
कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्णः ॥

कस्यचिज्जनकस्य स्वजन्यं प्रति कथनमिदं व्याकरणाध्ययनप्रवृत्तिविषयकं कमप्यमन्दमानन्दमुत्पादयति—

यद्यपि बहुनाधीषे तथापि पठ पुत्र ! व्याकरणम् ।
स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥ इति ॥

एतदन्तरा न स्वजन-श्वजनादिस्थलेषु भेदः कर्तुं शक्यते । आभिर्भणितिभिर्वेदानां समभ्यर्हितार्थप्रतिपादकस्य व्याकरणस्याध्ययनं नित्यं कर्मोथ काम्यमिति जिज्ञासायामाह "कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" । तच्च प्रयोजनमष्टादशविधन्तथाहि—वेदरक्षा, ऊहः, आगमः, लाघवम् , असन्देहः, अम्लेच्छतासम्पत्तिः स्वरवर्णदोषराहित्यम् , सार्थकवेदज्ञानम् , साधुशब्दापशब्दयोर्धर्माधर्मबोधः, प्रत्यभिवादे नाम्नि प्लुतिज्ञानम् , विध्यादिवाक्यघटकविभक्तिपदार्थादिज्ञानम् , पदाक्षरादिविभागज्ञानम् , चतुर्विधपदजातकालव्यङ्ग्यव्यञ्जकविभक्तिस्थानज्ञानम् , वाग्विस्तारसम्पत्तिः, असाधुशब्देभ्यो विविच्य साधुशब्दज्ञानम् , अपशब्दप्रयोगजन्यप्रत्यवायपरिहारकप्रायश्चित्ता-

१. अयं श्लोको न्यायमञ्जर्यां व्याकरणस्यावश्यमध्येयत्वनिरूपणप्रसङ्गे उद्धृतः ।

भावज्ञानम् , नामकरणेषु विहितनामस्वरूपज्ञानम् , सर्वविभक्त्यन्तानां सम्यगुच्चारणम् ।

*१—वेदरक्षा*—यथा भद्रंकर्णेभिः इति मन्त्रे, लौकिकप्रयोगे कर्णैः इति प्रयोगदर्शकोऽवैयाकरणः सान्दिहानः सन् कथं "कर्णेभिः" इति भ्राम्येत् । वैयाकरणस्तु न भ्रमति । अथ च देवा अदुह्र, उद्गाभं निग्राभमित्यादौ क्रमशस्तलोपरुडागमभकारादेशान् दृष्ट्वा भ्राम्येदवैयाकरणस्तद्विपरीतस्तु न भ्रमति ।

*२—ऊहः*—न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्तेचावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । यथाग्नेययागे मन्त्रोस्ति अग्नये त्वा जुष्टं निर्वपामि इति 'तत्र' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः इति विधेः सूर्योद्देश्यताकत्वविवक्षायां सौर्ये चरौ मन्त्र ऊह्यते सूर्याय त्वा जुष्टं निर्वपामीतिविभक्तिव्यत्यासरूपं विपरिणामरूपं वोहज्ञानं वैयाकरणाधीनमेव ।

*३—आगमः*—वाक्यार्थज्ञानोपयोगिपदार्थे ज्ञानप्रयोजकव्याकरणज्ञानस्यासत्त्वे वेदार्थानवगमात प्राप्तप्रत्यवायपरिहारकतया ब्राह्मणेन निष्कारणो धर्मः—इति, 'देवासो ब्राह्मणासः' इत्यत्र 'देवा ब्राह्मणाः' इति लौकिकप्रयोगविपरीतासुगागम[1] इति चागमज्ञानं व्याकरणाधीनम् ।

*४—लाघवम्*—ब्राह्मणस्याध्यापनं धर्मस्तच्च वैदुष्यायत्तं तच्च शब्दार्थादिषु साध्वसाधुत्वप्रतियोगिकभेदज्ञानाधीनम् , तच्च शब्दादीनामानन्त्याद् गुरुभूतप्रतिपदपाठापेक्षया व्याकरणाधीनप्रकृतिप्रत्ययविभागेन शब्दज्ञाने लाघवतया लाघवम् ।

*५—असन्देहः*—यथा स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां सन्देहः स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीत्यत्र कर्मधारयस्तत्पुरुषो वा समास इति सन्देहनिराकरणं व्याकरणज्ञानाधीनस्वरज्ञानाधीनमित्यसन्देहः । एवमेव स्वर-

---

१. आज्जसेरसुक् पा० सू० ७।१।५०

दोषराहित्यादीनां व्याख्यानं श्रीमद्भिर्भाष्यकृद्भिर्महाभाष्ये विस्तरेण प्रपञ्चितम् ।

एतच्छास्त्रं शब्दसाधुत्वप्रतिपादनपरं धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयप्रधानीभूतमोक्षकरमुररीकृतं विपश्चिदपश्चिमैर्भर्तृहर्यादिभिः । अतो नास्ति षडङ्गेषु व्याकरणप्रामुख्ये सन्देहावसरः । कैश्चिन्नवैर्मानवैः इत्थमाशङ्क्यते यत् काचिद् भाषाप्रकृत्यैव परिष्कृता परिनिष्ठिता वा चेत्तर्हि शब्दपरिष्कारकारकस्य व्याकरणस्य काऽऽवश्यकतेति ब्रुवन्तो भवन्तो मात्सर्यमुत्सार्य विचार्यकार्यमार्याः समर्यादं मौनमाकलयन्त्विति । अत्रेत्थमवगन्तव्यम्—यथा पयः पूरितं पात्रं विनैव मुखोपधानमाधीयते जलप्रवाहे तर्हि पात्रस्थं सर्वं दुग्धं बहिर्निर्गच्छति जलानि च पात्रे प्रविशन्ति । एवं सति दुग्धस्य स्वरूपेणापि नावस्थीयते । किन्तु यदि पयःपूरितपात्रं पिधानपिहितं जलनिवहे प्रवाह्यते तर्हि नेयमापत्तिः । जलामिश्रितं सद्दुग्धमपि शुद्धं पूर्ववदेव । जलमपि बहिर्गतमेव न तु पात्रान्तर्गतम् । तथैव रीत्या व्याकरणं पात्रपिधानवन्नियन्त्रणं विदधाति भाषायाः । कथञ्चैवानादिकालादविच्छिन्नरूपेण व्यवह्रियमाणाया वृन्दारकवृन्दवाण्याः परिनिष्ठितं परिष्कृतं च यत्स्वरूपं निर्दोषं सरोषं श्रूयते दरीदृश्यते च सुधाधुरीणैः ? किमर्थमभारतीया अपि भारतीयान् भजन्तेऽहर्निशमित्यादिसन्देहहेत्वेषणागवेषणाप्रसङ्गे प्रधानं कारणं व्याकरणमेव । शब्दार्थविश्लेषणकरणस्य व्याकरणदिनकरस्योदयो वसुन्धराऽन्तराले भारतदेशे एव । अस्य साक्षात्सम्बन्धो वेदैः । यतो हि वैदिकस्थलेषु बह्व्यो व्युत्पत्तय[1] एवमुपलभ्यन्ते याभिर्व्याकरणस्य प्राचीनत्वं समीचीनत्वं च प्रमाणीभवति । भगवता भाष्यकृता पतञ्जलिनाऽपि व्याकरणमहाभाषीयानुषङ्गिकप्रयोजननिर्वचनावसरेऽनेका ऋचः[2] उद्धृता । यासां व्याकरणघटितोऽर्थोऽपि प्रकटीकृतः । अतएव व्याकरणशास्त्रस्य प्राचीनत्वं वेदनिर्दिष्टत्वं वेदाङ्गमुख्यत्वञ्च स्पष्टतः प्रमाणितम् ।

---

१. (क) ये सहांसि सहसा सहन्ते, ऋ० ६।६६।९

(ख) धान्यमसि धिनुहि देवान्, यजु० १।२०

२. चत्वारि शृङ्गा त्रयोऽस्य पादाः, ऋ० ४।५८।३

चत्वारिवाक्परिमिता पदानि ऋ० १।१६४।४५

इत्थं पूर्वयुक्तिभिः साधुशब्दोच्चारणे पुण्यजनकताऽवच्छेदकतया क्षणभङ्गुरायामिहावनौ जनाः साधुशब्दान् प्रयोक्तुमीहन्ते यतन्ते च। न हि व्याकरणज्ञानं विना साधुशब्दान् व्यवहर्तुं शक्नुवन्तीति निश्चप्रचमतो व्याकरणमित्यस्य कः पदार्थः सूत्रमिति चेत्? न; व्याकरणस्य सूत्रमित्यत्र भेदाभावेन षष्ठ्यर्थानुपपत्तेः। अयम्भावः—नद्या जलम्, वनस्य वृक्ष इतिवद् व्याकरणस्य सूत्रमित्युपपन्नम्। आहोस्वित् कल्पितं भेदमादाय षष्ठ्यां सत्या राहोः शिर इतिवद्व्यपदेशिवद्भावेन व्याकरणस्य सूत्रमिति व्यवहारः। अतएवास्तु सूत्रं व्याकरणपदार्थः। तत्त्वञ्च "अल्पाक्षरत्वे सति बह्वर्थबोधकत्वम्"। किमेतत् सूत्रोच्चारणमदृष्टार्थमेव उताहो दृष्टार्थमपीति चेच्छृण्वन्तु[1] सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यादिति। अपरञ्च प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयतिस्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण ( व्या० म० भा० १।१।१ )। अनयोक्त्या कैमुतिकन्यायेन सूत्रवैयर्थ्यकल्पनाया अत्यन्ताभावः प्रतीयते। दृष्टादृष्टोभयफलेषु किमपि फलमस्त्येव। न सर्वथा निरर्थकं किमपि सूत्रम्। अष्टाध्याय्या आद्यन्तावच्छेदेनाध्ययनकर्तुर्हृदयाकाशे समवायसम्बन्धेन पुण्यजनकमदृष्टमुत्पद्यते। एतच्च व्याकरणं यद्यपि—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्॥

इति रीत्या नवविधम्, तथाप्येतेषु पौराणिकप्रसङ्गात् पाणिनीयतीव्रतरतपस्सन्तोषितमहेश्वरवरसमवाप्तप्रसादत्वाद्धि पाणिनीयव्याकरणमेव सर्वातिशायि मूर्धन्यञ्चेति निश्चप्रचम्। सर्वाणि भाष्यप्रतिपादितप्रयोजनान्यपि पाणिनीयव्याकरणानुसारीण्येव। कैवल्येन लौकिकशब्दव्युत्पादकत्वान्नैन्द्रादिव्याकरणानां वेदाङ्गत्वमपि तु सर्वलौकिकालौकिकशब्दव्युत्पादकपाणिनीयव्याकरणस्यैव। पाणिनीयव्याकरणप्रशस्तौ तन्त्रव्याकरणेऽपि—"इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्य-

१. इकोयणचिसूत्रभाष्ये।

स्तं खल्विममक्षरसमाम्नायमित्याचक्षते" इति। "वेदानां वेदः" इत्युक्त्येवाक्षरसमाम्नाय इति व्यवहारोऽप्यस्य विषये।

किञ्च—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

इत्याप्तोक्तिरपि प्रमाणयतीति। अस्य वैशिष्ट्यं ध्वनन्नाहभाष्यकारः "तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किमुनरियता सूत्रेण। वैयाकरणवादीभाः भट्टोजिदीक्षितनागेशभट्टादयश्च वैयाकरणचूडामणय एतद्व्याकरणमेवाधिकृत्य स्वलेखनीं प्रावर्तयन्नित्यपि विनिगमकमत्र। शाब्दिकसमुदाये प्रायशः समेऽपि राद्धान्ताः पाणिनीयव्याकरणोपजीव्यभूतं भाष्यमेवानुसृत्य सङ्गच्छन्ते।

किम्बहुना समीक्षणेन विपक्षपक्षक्षयदक्षाः पाश्चात्या अपि पाणिनीयव्याकरणस्य सर्वातिशायित्वमामनन्ति—

१—चीनदेशनिवासी प्रवासी ह्वेनसाङ्गनामको विद्वान् वदति यत् 'महर्षिपाणिनिः शब्दभाण्डारस्थशब्दानां चयनं विधाय सहस्रचतुष्टयसूत्रेषु समस्तशब्दव्युत्पत्तिं समाप्तिमनयत्। एषु प्राच्यनव्यशब्दज्ञानराशिः परिसमाप्तः'

( ह्वे० सा० प्र० भा० हि० अ० आधृत्य )

२—प्रो० मोनियर विलियममहोदयमते—संस्कृतस्याष्टाध्यायीव्याकरणं मानवमस्तिष्कप्रतिभायास्तादृश आश्चर्यतमभागोऽस्ति यादृशो मानवमस्तिष्कसमक्षमायातः'

( कैम्ब्रिज हिस्ट्री आफ इण्डिया भा० १ )

३—डा० डब्ल्यू डब्ल्यू हण्टरमहोदयमते—मानवमस्तिष्कस्यातीवमहत्त्वपूर्णश्चाविष्कार इयं व्याकरणाष्टाध्यायी।

४—प्रो० टी० शैरवात्स्कीमहोदयमते—'इयमष्टाध्यायी मानवमस्तिष्कस्य श्रेष्ठरचनाऽस्ति।

भगवन्तो भाष्यकारास्तु 'सामर्थ्ययोगान्न हि किंचिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इति प्रसंशितवन्तः। श्रीजयादित्याचार्यास्तु 'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्ये'त्युदगीरन्। किमधिकेनाभिरामोक्तिभिः पाणिनीयव्याकरणमेवाखिलेषु व्याकरणेषु सर्वोत्कृष्टव्याकरणमिति निश्चितमित्यलं पल्लवितेन।



# पौराणिकदृष्ट्या मोक्षसाधनम्

*डा० श्रीकृष्णमणित्रिपाठी*

इह हि संसारे सुखमेव मे शाश्वतं स्याद् दुःखलेशोऽपि कदाचन मा भूदितिधिया दुःखं परिहातुं सुखञ्चोपलब्धुं सततमभिलषति प्राणिमात्रम् ।[१] नहि कोऽपि विवेकी स्वल्पे सुखमनुभवति, सर्वोऽपि जनो निरन्तरमधिकादपि अधिकं सुखमेवाभिवाञ्छति ।[२] जीवो यावदनन्तं सुखं न लभते तावत् प्रयतमान एव तिष्ठति । तथा चाह भगवती छान्दोग्यश्रुतिः—यो वै भूमा तत् सुखम् नाल्पे सुखमस्ति, भूमैव सुखम् , भूमा त्वेव विजिज्ञासितव्यः ।[३]

एवञ्च भगवत्तत्त्वसाक्षात्कारस्वरूपमेवात्यन्तिकमनन्तं सुखमेव जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्यं मानवशरीरलाभस्य च फलमस्ति । आत्यन्तिकं निरतिशयं नित्यञ्च सुखमेव मोक्षः, मुक्तिः, परमपुरुषार्थः अपवर्गः, कैवल्यम् , निर्वाणम् , निःश्रेयसञ्चोच्यते । एतदेव लब्ध्वा जीवः कृतकृत्यो जायते, न तस्य किञ्चिदवाप्तव्यमवशिष्यते । एतदेव सुखस्य चरमा सीमा परमा च गतिरस्ति । तथा चोक्तं भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ।।[४]

---

१. (क) चराचरे जगत्यस्मिन् सर्वो वाञ्छति मानवः ।
सुखी स्यान्न तु दुःखीति कृत्वा मनसि कल्पनाम् ।। वे० च० ७

(ख) दुःखादुद्विजते जन्तुः सर्वस्य सुखमिप्सितम् ।
म० भा० शा० प० १२९।६१

२. इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षी कोटिं च कोटिशः क्रमशः सर्वमीहते ।। ग० पु० प्रे० क० २।४

३. छान्दोग्योपनिषद् ७।२३।१।

४. गीता ६।२२

यद्यपि 'अपाम सोमममृता अभूम' ( ५।३।११ ) इति छान्दोग्यश्रुत्या सोमपानादिभिर्लभ्यस्य स्वर्गादेरपि सुखसाधनत्वं प्रतीयते तथापि 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' ( ६।२१ ) इति गीतावचनानुसारं भोगेन पुण्यक्षयानन्तरं स्वर्गाच्च्युतिदर्शनान्न तदात्यन्तिकं सुखं मन्यन्ते विद्वांसः। वेदान्तसिद्धान्तानुसारमभेदोपासनया निरतिशयानन्दात्मकं पूर्णसुखस्वरूपञ्च ब्रह्मसाक्षात्कृत्यैव जीवः सर्वदुःखविनिर्मुक्तो भूत्वा परमानन्दं विन्दते शाश्वतीञ्च शान्तिं लभते। परं पुराणानुसारं भेदोपासनया परमात्मनः साक्षात्कारं सम्पाद्य जन्म-मृत्युबन्धनक्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत्सान्निध्यसुखमनुभवति। अतो भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यन्यदस्ति वास्तविकं सुखम्।

मोक्षस्वरूपविषये तत्साधनसम्बन्धे च चार्वाकादारभ्य शङ्कराचार्यपर्यन्तं तत्तद्दर्शनकाराणां विद्यते दृढतरो मतभेदः। दार्शनिकनिकाये सत्यपि साध्यसाधनविषयेऽनेके मतभेदे सर्वसाधनानां संक्षेपेण संग्रहो भक्तवरमुद्धवमुपदिशता भगवता श्रीकृष्णेनैकस्मिन् श्रीमद्भागवतीये पद्ये कृतोऽस्ति—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्॥११।२०।१

अत्र ज्ञानपदेन मुक्तिप्राप्तेः साधनभूताः सर्वेऽपि ज्ञानप्रकाराः ससाधना गृह्यन्ते, कर्मपदेन च मोक्षोपलब्धेः कर्मकाण्डान्तर्गताः सन्ध्यावन्दनादिप्रकाराः तथा हठ-राज-मन्त्र-लययोगादयः साधनसहिताः स्वीक्रियन्ते। एवं भक्तिपदेन श्रवण-कीर्तन-स्मरणार्चननामग्रहणप्रभृतयः सर्वे गौणमुख्यभक्तिप्रकारा अभिप्रेयन्ते। एवञ्च संक्षेपतो मोक्षार्थं दर्शनभेदेन प्रोक्तानामुपायानां संग्रहोऽत्र सम्पादित एव प्रतिभाति। शिवपुराणस्योमासंहितायामपि—

ज्ञानयोगः क्रियायोगो भक्तियोगस्तथैव च।
त्रयो मार्गाः समाख्याताः श्रीमातुर्भुक्तिमुक्तिदा॥ ५१।७

## भक्तेः सर्वसुलभत्वं श्रेष्ठत्वञ्च

वस्तुतो मार्गत्रयव्यतिरिक्तो नान्यः कोऽपि पन्था विद्यते, येन स्वीयपरमप्रेमास्पदाच्चिरवियुक्तमित्रात् श्रीमद्भगवतः, अनन्तेभ्यः कालेभ्योऽनन्तासु योनिषु बम्भ्रम्यमाणः जन्ममरणानामवर्णनीयक्लेशपरम्परां सहमानो जीवः पुनरनन्तासीमानन्दमयस्य करुणावरुणालयस्य प्रभोश्चरणसरसीरुहमधिगन्तुमर्हेत् । विशेषतः कलिकालेऽत्राल्पप्राणायुर्मेधसां मानवानां भगवद्भक्तिरेवैकमात्रं सरलं सुगमं सुखसाध्यञ्चावलम्बनमास्ते । अत्र भक्तिमार्गे वर्णाश्रमाधिकारादीनां नास्त्यपेक्षा, बाला वृद्धाः, स्त्रियः पुमांसोऽन्त्यजा अप्यधिकृताः सन्ति । सर्वेषां कृते भगवद्भक्तिः सुखाधायिका हितकरी च विद्यते ।

वेदान्तादिसाधनेषु प्रोक्तकठिनसाधनचतुष्टयसम्पत्तिस्तु न सर्वैः प्राप्तुं शक्या, परःसहस्रेषु केनचिदेकेन यथार्थतः साधनचतुष्टयसम्पत्तिद्वारा मुक्तिप्राप्तिः कृता स्यात् । एवं योगादिकर्मद्वारापि त्रिपुट्यादिलयपूर्वकासम्प्रज्ञातसमाधिना परमपदप्राप्तिरपि प्राचीनकाले कैश्चिदेव कृता श्रूयते । अस्मिन् कराले कलिकाले तु क्षीणवीर्याणामल्पशक्तिमतां जीवानां कुटुम्बभरणादिचिन्ताग्रस्तानां दुःखिनां जनानां च कृते भगवद्गुणश्रवणादिसाधनं विना नान्य उपायो विद्यते । अत एव श्रीमद्भागवते वैयासकिना शुकेन भक्तिरूपः सुलभ उपायः सर्वसाधकानां कृते सिद्धान्तितः—

> अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
> तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥ २।३।१०

तथा गीतायां भङ्ग्यन्तरेणान्योपायानां कठिनत्वं प्रतिपादितं भगवता श्रीकृष्णेन—

> मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
> यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ७।३

अतः सर्वदर्शनोक्तेषु साधनेषु सुलभसाधनरूपभक्तेः संग्रहः केनाप्यंशेन

सर्वैः दर्शनकारैः कृत एव। पूज्यपादैर्भगवच्छ्रीशङ्कराचार्यैरपि मोक्षसाधन-सामग्र्यां भक्तेरेव गरीयस्त्वं प्रोक्तम्—

मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी। वि० चू० १५

देवर्षिर्नारदस्तु भक्त्यैव मुक्तिः सिध्यति, न तु तत्र मध्ये ज्ञानादिरूपः कश्चनावान्तरव्यापारोऽपेक्ष्यते इति स्पष्टं प्रतिपादयति—

सा तु कर्मज्ञानयोगेभ्योऽधिकतरा। ना० भ० सू० २५

एवं कर्म-ज्ञानयोगापेक्षया भक्तेः श्रेष्ठत्वं प्रतिपाद्य कर्मज्ञानयोगानां सा फलरूपेति प्रोक्तवान् सः—फलरूपत्वात्। २६

महर्षिः शाण्डिल्योऽपि कर्म-ज्ञान-योगापेक्षया भक्तेः श्रेष्ठत्वं बोधयितुं गीतायाः श्लोकद्वयं भङ्ग्यन्तरेण सूत्रयति—"तदेव कर्मि-ज्ञानि-योगिभ्य आधिक्यं शब्दात्" (१।२।२२)

गीतास्थं श्लोकद्वयञ्च—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्जुनः॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥

एवं भक्तेः सुलभत्वं भक्तानाञ्च श्रेष्ठत्वं प्रतिपाद्याक्षरविदां कष्टत्वं प्रदिपादितम्—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ गीता ६।४६

भक्तिरसायनकारो मधुसूदनसरस्वत्यपि निम्नाङ्कितगीतापद्याधारेण भक्तेर्ज्ञानवच्छ्रेष्ठत्वं निर्दिशति। अत एवाद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्व-ज्ञानं द्रुतचित्तस्य च भगवल्लीलाकथाश्रवणादिश्रद्धापूर्विका भक्तिरित्यवधि-त्वेन द्वयमप्युपात्तं वर्तते—

तावत् कर्माणि कुर्वीत नो निर्विद्येत यावता।
मत्कथा-श्रवणादौ वा श्रद्धा यावन्न जायते॥ श्री०भा०११।२०।६

अन्यत्रापि समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्-भक्तस्य संसारमोक्षस्यावश्यकत्वाद् मोक्षान्तर्गतो वा भक्तियोगः। पुरुषान्तर्गतत्वेन स्वातन्त्र्येण वा भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्विवादम्। इत्यादिना भक्तियोगं परमं पुरुषार्थं निर्णीतवान् यतिवर्यः। अत एव जीवन्मुक्तानाममलात्मनामपि ज्ञानिनां भक्तिरावश्यकत्वेनानिवार्योऽभिप्रेता—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥ श्री०भा० १।७।१०

## भक्तेर्वैशिष्ट्यम्

तरति शोकमात्मवित्—छा० उ० (७।१।३), आत्मेत्येवोपासीत (बृ० उ० ३. १।४।७), तदात्मानमेवेत (कौ० उ० ३. ४।२), तमेव विदित्वाऽतिमृत्युमेति (श्वे० उ० ३।४।१५) इत्यादिश्रौतवचःसमूहचारितार्थ्यहेतवे सिद्धान्तितमिदं "यत् परस्परसम्बद्धानि वैदिकदर्शनानि मुमुक्षूणां कृते सन्ति दिव्यनेत्रस्वरूपाणि। स्थावरजङ्गमात्मके विशाले जगत्यत्रोच्चावचेषु संख्यातीतेषूद्भिज्जेषु ततश्च स्वेदजेषु तदनन्तरमण्डजेषु ततोऽनु जरायुजेषु शरीरेषु बम्भ्रम्यमाणो जीवः प्रकृतिमातुरनुकम्पया क्रमोन्नतिं लभमानोऽन्ते मानवदेहमाश्रयति—"चतुरशीतिलक्षान्ते मानवः॥" एवञ्च चतुरशीतियोनिषु जन्ममरणपरम्परादुःसहदुःखमनुभूयानेकजन्मार्जितपुण्यपुञ्जप्रभावैः मनुष्यशरीरमासादयति जीवलोकः—

कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्। श्री० भा० ७।४।२२

तदिदमतिदुर्लभं मानवशरीरमवाप्यापि जीवो जन्मजरामरणस्वरूपकठोरदुःखचक्रं परित्यक्तुं न शक्नोति। स च वासनाजालनिगडितो जन्ममृत्युरूपसंसारप्रवाहेऽनवरतं प्रवहति। केवलमुपासनयैवात्मसाक्षात्कारं विधायासौ परमानन्दस्वरूपं मुक्तिपदमधिगन्तुमर्हति। उपासनया योगसाधनेन वा चित्तवृत्तीनां निरोधपूर्वकमन्तःकरणं विघ्नेभ्यः परिरक्षन् साधको भक्तेरमृतमयेन प्रभावेण प्रभावितोऽन्तर्जगति प्रविश्य भगवत्सान्निध्यं लभमान आत्मज्ञानमधिगत्य निर्वाणपदं

प्राप्नोति। अपौरुषेयवेदोपासनाकाण्डपरिपुष्ट्ये मुक्तिद्वारमुद्घाट्य निर्वाणस्वरूपं परमानन्दपदमासादयितुं पूज्यपादैर्देवर्षिनारद-महर्षि-शाण्डिल्य-प्रभृतिभिः महता कौशलेन सर्वकल्याणकारकं सर्वसाधारणं सरलं सुगमं सुबोधं च भक्तिशास्त्रमाविष्कृतम्।

तत्तत्पुराणेषु भगवतो भक्तिर्भक्तान् दुःखबहुलादस्मात् संसारात् परमानन्दपूर्णस्थितौ समुपस्थापयितुमेकमात्रं सर्वसुलभं साधनं निर्दिष्टमस्ति। तत्त्वस्यास्य प्रतिपादनं तु प्रायः प्रतिपुराणं प्राप्यत एव, अथापि पुराणमूर्धन्ये सर्ववेदान्तसारे वैष्णवकुलतिलके श्रीमद्भागवते महापुराणे भक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। तदनुसारं प्रेमपयोधौ पूर्णात्मनि परमात्मनि संसक्तया भक्त्या समः कल्याणकारी कश्चनान्यो मार्गो न दृष्टिगोचरतामायाति।

तदुक्तं—

न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥ ३।२५।१९

भक्त्या भक्तो यावत् पुलकिताङ्गो द्रवीभूतहृदयो विगलिताश्रुविन्दुश्च न भवति तावद् आन्तरिकीं पवित्रतां नासादयति। यथा समाधिद्वारा चेतसः समताधिगमाद् मानसिको भावो विषयेभ्यः समूलं दूरीभवति तथैव भगवद्भक्त्या साकं परमानन्दसम्बन्धसत्त्वात् पापराशिः प्रणश्यति। तदनन्तरमग्निना दग्धं निर्मलं सुवर्णमिव जीवः भगवद्भक्त्या गलितमलिनसंस्कारः सन् नैजं स्वाभाविकं स्वरूपमासाद्य शाश्वतीं शान्तिमनुभवति तथा चोक्तं श्रीमद्भागवते—

तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः।
निर्दग्धबीजानुशयो महीयसा भक्तिप्रभावेण समेत्यधोक्षजम्॥
अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम्।
तद् ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम्॥
७।७।३६.३७

एवं पुराणानुसारं भगवत्तत्त्वप्राप्तये भक्तेर्महत् किमपि साधनं न

विद्यते। भक्तितुलनायां धर्मार्थकामानां किमपि मूल्यं नास्ति। यदा भक्तिसाधनद्वारा सर्वोत्तमं परमात्मतत्त्वमपि सर्वतोभावेन साधकस्याधिकारे समागच्छति तदा किं पुनरवशिष्यते। तस्मात्पुराणानां मतेन भक्तिः परमपदप्राप्तये सर्वश्रेष्ठमस्ति साधनम्। अतएव सिद्धान्तितं विष्णुपुराणे—

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि॥ १।२०।२७

अतो भक्त्या भगवतो वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थं निर्वाणपदं प्राप्तुं शक्यत इत्यत्र नास्ति कश्चन सन्देहलेशः। तथा चाभिहितं स्वयमेव भगवता श्रीकृष्णेन गीतायाम्—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ १८।५५
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!॥ ११।५४

अतएव सर्वशास्त्रेषु सर्वसम्प्रदायेषु चाविरोधतया भगवद्भक्तेः प्राशस्त्यमुक्तमस्ति। तस्माद् भक्तिः परमतत्त्वप्राप्तये परमं सुलभं च साधनमित्यनवद्यम्।

यथा पदार्थवादिनी न्यायवैशेषिकदर्शने पदार्थज्ञानद्वारा निःश्रेयसपदं प्रदर्शयतः, योगदर्शनञ्च जीवेश्वरयोरेकत्वाधिगमपूर्वकं समाधिना कैवल्यपदं प्रतिपादयति, सांख्यदर्शनं विविधदुःखात्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषयोर्विवेकात्मकज्ञानेन मुक्तिमार्गमुपदिशति, मीमांसादर्शनमपि वैदिकैः कर्मभिः संस्कारशुद्ध्या निर्वाणोपलब्धिं निर्दिशति, वेदान्तदर्शनञ्चाद्वयब्रह्मज्ञानेन मोक्षाधिगममुद्बोधयति तथैव भगवत्सान्निध्योपलब्धिहेतुभूतं भक्तिदर्शनमपि श्रीमद्भगवत्तत्त्वसाक्षात्कारद्वाराऽपवर्गद्वारमुद्घाट्य परमं पदं प्रापयति भक्तप्रवरानिति निष्प्रपञ्चम्।

यथान्तर्बाह्यराज्येऽवस्थितत्वाद् योगदर्शनं निर्विरोधि सर्वहितसाधकमस्ति तथैव कर्मकाण्डज्ञानकाण्डमध्यवर्ति भक्तिदर्शनमपि सर्वाविरुद्ध-

मखिलहितसाधकञ्च विद्यते। किमपि दर्शनशास्त्रं स्वकीयज्ञानभूमेरनुरोधतोऽन्यदर्शनमतं यदि खण्डयति तर्हि हानिकारकं नास्ति। यथा समतलभूमिपर्यटनपरायणः पथिको यदि पर्वतप्रदेशभ्रमणशीलक्रियाकौशलं निन्दन् समतलभूभ्रमणकौशलमेव प्रशंसति यद्वा पर्वतमार्गविचरणशीलः पथिकः स्वीयं भ्रमणकौशलं बहु मन्यमानः समतलभूमिभ्रमणपरायणं मानवं निन्दति, तदानीं न कापि हानिः, प्रत्युत देशकालस्थलयात्रानुसारेण तदुपकारकमेव तथैव यद्येकं दर्शनविज्ञानं दर्शनान्तरमतस्य कुत्रचित् सिद्धान्ते दोषमारोपयति सिद्धान्तं वा खण्डयति तदा नैतद्दोषायावधेयम्। यत्र दर्शने यस्या ज्ञानभूमेरधिगतये यद्धि विज्ञानं विवक्षितं तत्र तस्यैव प्रौढिः सम्पादिता भवति। अतस्तत्खण्डनं न दोषाधायकम्। भक्तिदर्शने न कापि खण्डन-मण्डने-प्रणाली क्वचिदप्यवलम्बितास्ति। अतएव तस्य सार्वभौमदृष्टिः सर्वथा सर्वाभ्यर्हिता मान्या समादरणीयाऽनुष्ठेया च वर्तते।

यथा कर्ममीमांसा दर्शनाश्रयणमन्तरेण विचित्रविशालदुरूहकर्मरहस्यं न हृदयङ्गमं कर्तुं शक्यते तथैव भक्तिशास्त्रानुसारं भक्तिदर्शनस्य विज्ञानमपि हृदयङ्गमं विधातुमसमर्थस्य कस्याप्युपासकस्य न साफल्यप्राप्तिः सम्भवति। अत एव कर्ममीमांसादर्शनं यथा सकलशाखिनां सर्वसाम्प्रदायिकानां च कल्पसूत्रभूतं परमं सहायकं वा वर्तते तथैव भक्तिदर्शनमपि सर्वविधोपासकानां निखिलसाम्प्रदायिकानाञ्च परमाश्रयस्वरूपं विद्यते। अतएवोक्तं श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशोमुरारेः।
अवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद् विपदां न तेषाम्॥

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष-
कामास्तपः समचरन् भगवत्प्रपन्नाः।
सा श्रीः स्ववासमरविन्दवनं विहाय
यत्पादसौभगमलं भजतेऽनुरक्ता॥

